THE

# HAMSASANDESA

BY

SRI VEDANTACHARYA

WITH A COMMENTARY BY

SRI KRISHNA-BRAHMATANTRA PARAKALASWAMIN

WITH NOTES BY THE LATE

PANDITARATNAM KASTURI RANGACHARYA



PUBLISHED BY THE CURATOR, GOVERNMENT ORIENTAL LIBRARY
MYSORE, UNDER THE ORDER OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJA OF MYSORE

MYSORE:
PRINTED AT THE GOVERNMENT BRANCH PRESS
1913

Price Rs. 3-8-0

श्रीरस्तु

# हंससंदेशः

श्रीमद्भिः वेदान्ताचार्यैः प्रणीतः.

श्रीमद्भिः श्रीकृष्ण ब्रह्मतन्त्रपरकाल संयमीन्द्रैः
विरचितया रसास्वादिन्या व्याख्यया

श्रीमत्पण्डितरत्न कस्तूरिरंगाचार्य संकलितया
रसास्वादिनीपादुकाख्यया
टिप्पण्या च सहितः.



महीशूर संस्थान राजकीय मुद्राक्षरशालायां मुद्रापितः

विजयताम्.

१९१३

# भूमिका.

---

सुविदितमेव किलेदं प्रायस्सर्वस्यापि यदेतत् हंससंदेशाभिधानं विषयादिविविधवैलक्षण्योपलक्षितं किं चन काव्यमपि प्राणैषिषुः तत्रभवन्तः भगवन्तः श्रीमन्तो वेदान्ताचार्याः वेंकटेशाभिधानाः कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रादिविरुदभाजः विशिष्टाद्वैतसिद्धान्तपरमाचार्याः प्रवर्तयितारः सर्वतोमुखं श्रीभगवद्रामानुजसिद्धान्तं प्रणेतारो यादवाभ्युदयसंकल्पसूर्योदयाद्यनेककाव्यकलापं विरचयितारः तत्त्वमुक्ताकलापसर्वार्थसिद्धिशतदूषणीप्रमुखवेदान्तग्रन्थजातं व्याकर्तारश्च श्रीयामुनाचार्यश्रीमद्रामानुजाचार्यप्रमुखपूर्वाचार्यप्रबन्धसन्दोहं द्विनवत्युत्तरैकादशशतपरिमितशालिवाहशकपरिकीर्मिते शुक्लसंवत्सरे समवतीर्णाः विश्वामित्रान्ववायसुघोदन्वद्राकासुधाकरायमाणाः श्रीमदनन्तसूरिसुकृतसुरतरुमहाफलायमानाः स्वावतारपवित्रीकृततुण्डीरमण्डलमण्डनायमानकाञ्चीनगरोदञ्चिततूप्पिलग्रहाराः सुप्रसिद्धवेंकटेशघण्टावताराः श्रीब्रह्मतन्त्रस्वतन्त्रयतीन्द्राणामाचार्या अपीति ।

ये किल श्रीब्रह्मतन्त्रस्वतन्त्रयतीन्द्राः साम्प्रतं महीशूरनगरीमधितिष्ठतां श्रीब्रह्मतन्त्रपरकालश्रीमठस्थानाधिपत्यप्रथितानां यतीन्द्राणामादिमाः । येषां चास्थानसाम्राज्यं महीशूरास्थानसाम्राज्यं च स्वस्वास्थानकूटस्थश्रीब्रह्मतन्त्रस्वतन्त्रयतीन्द्र-श्रीयदुरायमहाराजप्रभृत्याचार्यशिष्यभावादिबहुविधोपजीव्योपजीविकभावपारम्पर्येणानवच्छिन्नमद्यापि विजयते । येषामेवास्थानपरंपरायामेकात्रिंशत्तमां संख्यां कृतार्थीकुर्वन्तः अतएव हंससंदेशव्याख्यानौपयिकविविधौचित्यवन्तः अनुपदमेव प्रचिकटयिषितास्ते महाभागाः ॥

HAMSA.

तदेतन्महाकाव्यरत्नं प्राचीनैरर्वाचीनैश्च विवृतपदपदार्थवाक्यार्थमपि व्यवारिषत श्रीमदाचार्यदिव्यसूक्तिसुधारसमास्विादयिषूणां महापुरुषाणां मनोरथमापूरयन्तः श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्राः श्रीब्रह्मतन्त्रपरकालमहास्थानमूर्धाभिषिक्ताः महीशूरमहाराजकुलगुरवः निरन्तरानिरन्तरायाविविधसमर्चनगोचरीकृतहयवदनाः श्रीनिगमान्तदेशिकमणिप्रणीतविविधप्रबन्धसंततसंशीलनसमुपजातमहाविश्वाससमुल्लासिततदीयहृदयसर्वस्वाः परश्शतप्रबन्धनिर्माणधुरंधराः विद्यानगरवनपर्तिगल्लालात्मकूरुकोल्लापुरप्रमुखास्थानाधिपति नरपतिविरचितबहुमतिसमतिवाहितपूर्वाश्रमाः कर्णाटकदेशावतंसमहीशूरजनपदान्तर्गताभिनवदुर्गादिप्रदेशालंकारभूतस्वीयशैशवाः स्वावतारपवित्रीकृतषष्ठ्यधिकसप्तदशशतपरिमितशालिवाहशकसमधिगतविकारिसमासमयाः किं बहुना महीशूरमहास्थानाधिपतिमहाराजश्रीकृष्णराजसार्वभौमतत्परिपालितसाधुजनसौभाग्यराशयश्च ॥

अस्यां च व्याख्यायां रसास्वादिनीसमाख्यायां प्रत्यक्षरं प्रयोगनिदानं समीचीनमाचार्यहृदयं प्रकाशितमित्यतिरोहितमेवापातप्रतीतिमतामपि । परं तु सम्यङ्निर्धारितमिह बहोः कालात् बहुषु ग्रन्थेषु बहुभिः बहुधा च ममींसितं प्रचुरप्रयोगगोचरीभूतकतिपयशब्दसौष्ठवम् । राशीकृता चैकत्र कोशसंपत्तिः । व्याञ्जितं च कृत्स्नशः श्रीमद्रामायणादिसामरस्यम् । व्याख्याता च सलक्षणं सप्रमाणं च शब्दशब्दार्थवाक्यवाक्यार्थविवरणरीतिः । संशोधिता खलु प्राच्यैः प्रतीच्यैश्चालंकारिकैः बहुधा विप्रतिपत्तिविषयीकृता शब्दार्थालंकारसरणिः । संगृहीतं चैकत्र त्रिविधध्वनिगुणवृत्तिविभावानुभावादिभावितरसादिभेदभिन्नं सम्यक्साहित्यसर्वस्वम् । आविष्कृतं च प्रायः वेदान्तसिद्धान्तरहस्यम् । किं बहुना अनेनैकेन ग्रन्थेनावलोकितेन अनवलोकितं सर्वमवलोकितं भवति विविधग्रन्थबृन्दमितीदमप्येकमुदाहरणमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्येति ॥

एतेनापातावलोकनवतां सहसा समुदीयमानाऽत्र ग्रन्थगौरवशङ्काऽपि युक्ततमैवेति मन्यन्ते विवेचकाः, यतः शब्दतोऽर्थत अलंकारतः रसतः विष-

यत: विचारत: कारणतः फलत: अधिकारित: इति बहुविधहेतुत: गौरवं बहुप्रकारं प्रत्यक्षमीक्ष्यते परीक्षकैरिति ॥

किंच-एतादृश्या टीकया हंससंदेशरसमास्वादयतामपि सतामन्तरायतयाऽऽविर्भूतया प्रकाशनामिकया कयाचन टीकया पानकरसयवसन्यायेनोत्थापितोपप्लवस्य निष्कासिकया श्रीमत्तर्कतीर्थपण्डितरत्नकस्तूरीरङ्गाचार्यवर्यैः सुगृहीतनामधेयैरस्मद्गुरुचरणैः प्रणीतया रसास्वदिनीपादुकानामिकया टिप्पण्या बहुविधविशयनिर्णायिकया च संभूषिता सेयं रसास्वादिनी भवतु महतो मोदस्य हेतुर्विदुषां सर्वेषामपीति भद्रम्—

श्रीकृष्णभूपोत्तमशासनेन प्रकाशिता सर्वहिताय भूयः ॥
श्रीकृष्णयोगीन्द्रकृतिर्विशुद्धा गङ्गेव लोकान् सकलान्पुनातु ॥

## अस्मिंश्च काव्ये विशिष्य विषयविभागो यथा—

## अथ व्याख्यायां विशिष्य विशोधिता मुख्यविषयाः.

### तत्र पदविचारे.



### पदार्थविचारे.

## विग्रहविचारे.

## अलंकारविचारे.



## दर्शनविचारे



## पौराणिककथाविचारे.

## तत्रैव टिप्पणस्थाः विशेषविषयाः.



एवं संगृह्य प्रेक्षावतां प्रदर्शनार्थं केचन विषयास्सूचिताः शिष्टमवलोकयतां स्पष्टमित्यावेदयति.

सज्जनविधेयः,

लक्ष्मीपुरं श्रीनिवासाचार्यः.

शुभमस्तु.




श्रीहयग्रीवाय नमः.

रसास्वादिन्याख्यव्याख्यासहितः

# श्रीहंससंदेशः.

वरगुणमणिगणभरितं स्फुरतुतरां मनसि मम शुभदचरितम् ॥
उरगवरधरणिधरपतिपरिचुम्बि रमाकुटुम्बि तद्ब्रह्म ॥ १ ॥

मुनिजनमानसहंसं नाम्ना हंसं रमाब्जिनीहंसम् ।
कलये वर्षीयांसं तुरगं तं सन्ततं महीयांसम् ॥ २ ॥

भजतां किमपि विधानं जगतामेषां भवाप्ययनिदानम् ।
लसताच्छ्रियं ददानं लक्ष्मीनारायणाभिधनिधानम् ॥ ३ ॥

हंसान्वयावतंसं परं पुमांसं श्रये वरीयांसम् ।
संसारभारहिंसासंसादननिपुणगुणगरीयांसम् ॥ ४ ॥

लगतु हृदि विमतमूर्छितजगदगदंकारसुगुणगणमनघम् ।
निगमान्तदेशिकाख्यं प्रगुणितयतिपतिमतं परं दैवम् ॥ ५ ॥

आचार्यकौपयिकसर्वगुणैकधाम
धामाद्भुतं किमपि मे हृदयेऽस्तु नाम ।

श्रीब्रह्मतन्त्रकलिवैरिपदावतंस-
श्रीवासनाम गतसीम महार्घभूम ॥ ६ ॥

श्रीब्रह्मतन्त्रपरकालपदाञ्चलश्री-
श्रीदेशिकेन्द्रगुरुवर्यमहार्घरत्नम् ।
चित्ताब्जसीमनि चिरं मम संनिधत्तां
यत्तादृशी प्रविदधाति समृद्धिमत्ताम् ॥ ७ ॥

अनवद्यनिखिलविद्याविहरणशरणं वृणीमहे शरणम् ।
गुरुमिह जगदाभरणं रङ्गेन्द्रब्रह्मतन्त्रकलिहरणम् ॥ ८ ॥

रङ्गेन्द्रब्रह्मतन्त्रोत्तमगुरुकृपया श्रीमहीशूरनाथ
श्रीमच्चामेन्द्रभूमीपतिकुलगुरुतां प्राप्तवान् लोकमान्याम् ।
श्रीकृष्णब्रह्मतन्त्रादिमपदकलिजित्संयमी काव्यरत्नं
व्यख्यात्याम्नायचूडागुरुवररचितं हंससंदेशनाम ॥ ९ ॥

वक्ता श्रीनिगमान्तदेशिकमणिर्नेता तु सीतापतिः
प्राधान्यादिह विप्रलम्भमधुरश्शृङ्गारनामा रसः ।
संदेशो विषयोऽस्य तस्य च फलं सीतासमाश्वासनं
व्याख्येयं तदिदं चिरादुपनतं भाग्यं कियत्स्यान्मम ॥ १० ॥

क्वाहं कोमलधीर्गभीरहृदया क्वाचार्यसूक्तिश्च सा
व्याख्याकौशलचापलं मम कथं स्याद्वा सतां पेशलम् ।
यद्यप्येवमथापि साहसवशात्तत्र प्रवृत्तोऽभवं
यत्नोऽयं कृपयैव देशिकमणेस्साफल्यमापद्यताम् ॥ ११ ॥

आचार्यसूक्तिव्यतिषङ्गभूम्ना
व्याख्या मदीया ननु नीरसाऽपि ।

तत्पादपद्मव्यतिषङ्गभूम्ना
मान्या भवेद्दारुमयीव पादूः ॥ १२ ॥

अनपेक्षितविस्तीर्णामपेक्षितार्थेऽपि चातिसंकुचिताम् ।
व्याख्यां न विद्म्मो वयमपि तु यथोचितमिमां निबध्नीमः ॥१३॥

यज्जल्पति सदसद्वा व्याख्यातृत्वप्रथामसौ काङ्क्षन् ।
सोढव्यं तत्सर्वं सद्यैर्व्याख्येयगौरवात्सद्भिः ॥ १४ ॥

**वंशे जातस्सवितुरनघे मानयन्मानुषत्वं**
**देवश्श्रीमान्जनकतनयान्वेषणे जागरूकः ।**
**प्रत्यायाते पवनतनये निश्चितार्थस्स कामी**
**कल्पाकारां कथमपि निशामाविभातं विषेहे॥ १**

अथ भगवान् श्रीकवितार्किकासिंहस्सर्वतन्त्रस्वतन्त्रः श्रीमद्वेङ्कट-नाथार्यनामा वेदान्तदेशिकमणिः—

'अभिप्रियाणि काव्या विश्वा चक्षाणो अर्षति'

अदोषं सगुणं काव्यमलङ्कारैरलंकृतम् ।
रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥

इत्यादिश्रुतिस्मृतिभिः

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये' ।

इत्याद्यालङ्कारिकवाक्यैश्च काव्यस्य सर्वविधश्रेयस्साधनतां निर्धारयन्

'तं धीरासः कवय उन्नयन्ति' ।

स्वरूपरूपविभव गुणकर्माणि शार्ङ्गिणः ।
व्याचक्षीत निबध्नीयाच्छृणुयाद्विलिखेत्पठेत् ॥

इति सत्काव्यकर्तव्यताविधायकविशेषवचनदर्शनेन

'काव्यालापांश्च वर्जयेत्' इति सामान्यनिषेधस्यासत्काव्यविषयतां च निश्चिन्वन्

वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिह ॥

इत्युक्तरीत्या

अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।

इत्युक्तप्रकारप्रतिज्ञापूर्वकचतुर्मुखसर्गविलक्षणभुवनान्तरसर्जनविचक्षणतपोधनधुरीणाभिजनजननानुरूपां वृत्तिमाचरन् चिरंतनानेकविद्वत्कविनिवहप्रणीतप्रबन्धविलक्षणान्निर्मिमाणो बहून्प्रबन्धांस्तत्र च सकलकविकुलावतंसकाळिदासमहाकविप्रणीतस्य कल्पितेतिवृत्तनायकस्य मेघसंदेशस्य प्रतिद्वन्द्वितया कल्पितत्वेऽपीतिवृत्तस्य

सांकेत्यं पारिहास्यं वा स्तोभं हेळनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥

स वाग्विसर्गो जनताघविप्लवो
यस्मिन्प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि य-
च्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥

इत्याद्युक्तप्रक्रियया निखिलदुरितनिश्शेषनिवर्तनपूर्वकनिश्श्रेयसपर्यन्तसर्वविधश्रेयोविधाननिदानतया भगवद्विषयत्वमेव वरमिति प्राचेतसादिमहाकविमूर्धन्यप्रणीतप्रबन्धपरिमळितवैभवं भगवन्तं श्रीजानकीजा-

निमेवाधिकृत्य हंससंदेशनामभव्यं महाकाव्यमारभमाणो निरन्तराय-श्रीकान्तानुचिन्तनसंततसमधिगतान्तरायविरहोऽपि व्याख्यातृध्येतॄणां व्याख्यानाध्ययनप्रचयगमनार्थं 'मङ्गळादीनि मङ्गळमध्यानि' इत्यादि भगवद्भाष्यकारवचनं,

आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम् ।

इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वप्रतिपादकमाचार्यदण्डिवाक्य-मपि प्रमाणयन् पवनतनयमुखवचनविदितजनकनन्दिनीवृत्तान्तस्य तस्यैव श्रीमतो रघुनन्दनस्य प्राणप्रियासमागमौत्सुक्यमधुरावस्थान-रूपं वस्तु[1] निर्दिशन् मङ्गळमाचरति—**वंश इति** ॥ श्रीरस्यास्तीति **श्रीमान्** । नित्ययोगे मतुप् । यदाहुः—

---

यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजकोपाधी ।
तं नमिकर्मीकुर्मः श्रीकृष्णब्रह्मतन्त्रगुरुवर्यम् ॥ १ ॥

रसात्रसास्त्रादनटीकया सत्स्वास्वादयत्स्वेव तदन्तरायः ।
यः प्रोद्यतः काश इतीह कश्चित्तस्यात्र निष्कासनमाचरामः ॥ २ ॥

मूलं नस्सुकृतैकमूलममलं श्रीहंससंदेश इ-
त्याख्यं काव्यमदस्सदक्समधिकश्रीर्वा रसास्वादिनी ।
व्याख्या चेत्युभयं त्विहाभवदहो व्याख्येयतायाः पदं
प्रत्याख्येयपदं प्रकाशविवृतिस्वारस्यवाग्गुम्बरः ॥ ३ ॥

श्रीहंससंदेशरसास्वादिनी पादुकामिमाम् ।
विक्रमेत समारुह्य विष्वग्विहतकण्टकाम् ॥ ४ ॥

[1] इह किल प्रथमपद्यस्य मङ्गलरूपत्वं द्वितीयपद्यस्य सन्देशोपोद्घातरूपत्वं चाभिसंधाय सांप्रदायिकनीत्याऽवतारितमाचार्यैः—'वस्तु निर्दिशन्मङ्गलमाचरति—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ इति ।

सः[1] सर्वकारणत्वेन सर्वेश्वरत्वेन च निखिलनिगमान्तप्रसिद्ध इत्यर्थः । अतएव नास्य यद्वृत्तापेक्षा । तदुक्तं काव्यप्रकाशे—'प्रक्रान्तप्रसि

---

वंश इतीति' ॥ **यत्तु**—'मङ्गलं निबध्नन् संदेशोपोद्घातमारभते' इति प्रथमपद्यस्यास्यार्वाचीनावतरणं—**तन्न**, अत्र प्राधान्येन प्रतिपिपादयिषितस्य तत्तत्कारकादिविशिष्टस्य विषहनस्य संदेशानौपयिकतयाऽस्य सन्देशोपोद्घातत्वासम्भवात् । विभातकालिकममर्षणं तु संदेशौपयिकं भवदपि नैतत्पद्यार्थः । इष्टोपायोद्यमवर्णनपरद्वितियपद्यार्थत्वात्तस्य । कामित्वं तु कल्पाकारताहेतुतयोपात्तं पदार्थमात्ररूपं नोपोद्घाततां प्रतिपद्यते । तस्मात्संदेशानन्तरकालिकसकलेतिवृत्तसंग्रहपरम् 'संदिश्यैवं' इत्यादिकमुपान्त्यं पद्यमिव संदेशपौर्वकालिकावतारप्रभृति कृत्स्नेतिवृत्तस्य वस्तुनस्संगृह्य निर्देशरूपं सन्मङ्गलात्मकमेवेदमाद्यं पद्यमित्यवधेयम् ॥ किञ्च—मङ्गलोपोद्घातयोरौत्सर्गिको भेदनियमोपि नात्र सति सम्भवे परित्यक्तुमुचितः । अत एव—'नियतिकृत' इत्यादिप्रथमपद्यस्य मङ्गलमात्ररूपतैव व्याख्यातृभिः काव्यप्रकाशादौ वर्णिता । अन्यथा कविभारतीसद्भावस्य काव्यनिरूपणौपयिकतया तदुपोद्घातत्वस्यापत्तेः । अत एव च—श्रीमति रहस्यत्रयसारे गुरुपरंपराप्रणतिरूपमङ्गलपद्याक्षेपसमाधानात्मकतया वा शारीरकमहाशास्त्रसङ्गोपितशरणागतिनिरूपणपरमहत्तमशास्त्रारम्भसमुचितसकलगुरुस्मरणात्मकदीर्घमङ्गलात्मकतया वा मङ्गलमात्रपर्यवसन्नो गुरुपरंपरासार उपोद्घाताधिकारात्पृथगेव निर्दिश्यते । 'आशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्काव्यादौ यक्षस्य गिरिनिवासरूपं वस्तु निर्दिशति' इत्येवं मेघसंदेशाद्यपद्यं व्याचक्षाणो मल्लिनाथोऽप्यत्रैवानुकूल इति दिक् ॥

[1] 'सः सर्वकारणत्वेन सर्वेश्वरत्वेन च प्रसिद्ध इत्यर्थः'—इति रसास्वादिनी । **यत्तु**—**स इत्यस्य** विशेष्यपरत्वं देव इत्यस्य तद्विशेषणपरत्वं चाश्रि-

द्धार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते' इति । **देवः**[1] नारायण इत्यर्थः । क्रीडार्थकाद्दीव्यतेर्निष्पन्नोऽयं शब्दः । देवश्श्रीमानित्याभ्यां पदाभ्यां

---

त्यावार्चीनव्याख्यानं—**तन्न**, देवपदस्य देवतापदपर्यायस्य देवनकर्तृदेवतात्वजातिविशिष्टे योगरूढतया प्रसिद्धार्थकस्य स इत्यस्य च प्रसिद्धिमात्रप्रवृत्तिनिमित्तकतया च तत्र जातिवाचिनो देवपदस्यैव विशेष्यपरताया न्याय्यत्वात् । जातितद्भिन्नप्रवृत्तिनिमित्तकयोः पदयोर्जातिप्रवृत्तिनिमित्तकस्यैव हि विशेष्यपरता सम्मन्यते सर्वैरपि तांत्रिकैः । स्पष्टं चेदं 'विशेषणं विशेष्येण बहुलम्' इति सूत्रपदमञ्जरीमनोरमादौ । न चात्र देवपदं केवलयौगिकमिति शङ्कनीयम् । रूढिपरित्यागे मानाभावात् । प्रसिद्धार्थकं तु तत्पदं क्वचिदपि विशेष्यपरं नोपलभामहे ॥ किन्तु—'येषां स सगरो नाम' 'कला च सा कान्तिमती' इत्यादौ विशेषणपरतयैव तद्विवृतम् । प्रसिद्ध इत्युक्ते हि विशेष्याकाङ्क्षा नियमेन जायते इति दिक् ॥

[1]'देवः नारायण इत्यर्थः' इति रसास्वादिनी । **श्रीमान् स देव** इत्युद्देश्यम्. (अत एव देवनशीलत्वात्) **मानुषत्वं मानयन् अनघेसवितुर्वंशे जातः** (अत एव मानुषत्वमाननानुरोधात्) **प्रत्यायाये पवनतनये निश्चितार्थस्सन्** अत एव **कामी** सन् **कल्पाकारां कथमपि निशामाविभातं विषेहे** इत्येवमितरत्सर्वं विधेयमित्यभिसन्धाय तत्क्रमेणैव पदानां विवरणं कृतमाचार्यैः ॥ **यत्तु**—वंशे जात इत्यादीनां प्रथमान्तानां सर्वेषामुद्देश्यविशेषणतां स इत्येतस्य उद्देश्यतां धात्वर्थमात्रस्य विधेयतां चाभिसंधाय तत्क्रमानुसारेणार्वाचीनविवरणम्—तन्न,

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ॥
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥

'भवान्नारायणो देवश्श्रीमांश्चक्रायुधो हरिः ।'

इति युद्धकाण्डे ब्रह्मस्तुतावुक्तं पदद्वयं प्रत्यभिज्ञापितम् । वक्ष्यमाणसीताविश्लेषदीनत्वादिकं सर्वमपि लीलामात्रमिति च व्यञ्जितम् । मनोरपत्यं पुमान्मानुषः । 'मनोर्जातावञ्यतौ षुक्च' इति जातार्थप्रत्येऽर्थे अञि षुगागमः 'तद्धितेष्वचामादेः' इत्यादेरचो वृद्धिः । तस्य भावः **मानुषत्वं** तत् **मानयन्**[1] पूजयन् 'मान पूजायाम्'[2] अस्माच्चौरादिकाच्छता । 'तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् । अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ नाकीर्तयदवज्ञानात्तद्रक्षोमानुषांस्तदा ॥' इत्युक्तरीत्या दशग्रीवो यन्मानुष्यकमवाजानात्तदेव 'त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया । राज्ञो दशरथस्य त्वमयोध्याधिपतेः प्रभोः ॥ धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः । तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ॥ वि-

---

इत्यादौ अतिविततत्वमरुदुल्लासितसौरभत्वयोरिव प्रकृते सवितृवंशजातत्वादेर्विशेषणस्यानुपादानेऽपि विवक्षितविषहनक्रियारूपविधेयबाधाभावेन अपुष्टार्थत्वदोषापत्तेः । पुष्टत्वं विवक्षितार्थबाधप्रयोजकानुपादानकत्वम्, तद्विरहश्चापुष्टत्वं दोष इति स्पष्टं लक्षणनिबन्धेषु । अस्माकं तु सवितृवंशजातत्वादीनामपि विधेयतया विवक्षितत्वान्नासौ दोषः । श्रीमत्त्वं कारणत्वादिना श्रुतिप्रसिद्धत्वं च देवविशेषणं मानुपत्वमाननपुरस्सरावतरणादिशक्तितात्पर्यकमिति नतत्राप्यपुष्टार्थत्वमस्मन्मते शङ्कनीयम् ॥

[1]मानयन् पूजयन्निति रसास्वादिनी । **यत्तु**—'स्वस्य मानुषत्वं मानयन् लोकं ज्ञापयन्' इत्यर्वाचीनव्याख्यानम्—**तन्न**, तथासति 'स्वस्य लोकम्' इति पदद्वयाध्याहारप्रसङ्गेन न्यूनपदत्वदोषापातात् ॥

[2]मान पूजायामित्यस्माच्चौरादिकाच्छता—इति रसास्वादिनी। जनिक्रियाहेताविल्यादिः, मानयन् जात इत्यनेनावतारे स्वेच्छामात्रकृतत्वव्यञ्जनोक्तेरग्रिमाया अनुरोधात् । **यत्तु-**

ष्णो पुत्रत्वमागच्छ कृत्वाऽऽत्मानं चतुर्विधम् । तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् । अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥" इत्यादित्रिदशप्रार्थनाऽनुगुणं 'वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम्' इति वरदानपूर्वकं संभावयन्निति भावः। अविद्यमानं अघं दुरितादिदोषो यस्य स तथोक्तः तस्मिन् । 'अनेकमन्यपदार्थे' इति समासे 'नलोपो नञः' इति नलोपे 'नञोऽस्त्य-

---

'सन्ब्राह्मण इत्यादिवत् । 'लटश्शतृशानचौ' इत्यनेन प्रथमासामानाधिकरण्येऽपि शता' इति—तन्न, उक्तरीत्या हेतुत्वविवक्षया 'लक्षणहेत्वोः' इत्यनेन शतुस्सिद्धौ संभवन्त्यां विधेयक्रियान्तरसमभिहारस्थलेऽगतिकप्रथमासमानाधिकरणशतृस्वीकारस्यायुक्तत्वात् ॥

किंच—विधेयक्रियान्तरसमभिव्याहारस्थलेऽपि लक्षणहेत्वन्यतररूपत्वविवक्षां विनैव शतृशानचोस्साधुत्वस्वीकारे 'लटश्शतृ' इति सूत्रभाष्यसंदर्भविरोधः। तत्र हि 'तिष्ठन्मूत्रयति, गच्छन्भक्षयति, शयाना वर्धते दूर्वा, आसीनं वर्धते बिसम्' इत्यादौ स्थानगमनशयनासनक्रियाणां मूत्रणभक्षणवर्धनक्रियाः प्रति लक्षणादिरूपत्वविरहेण शतृशानचोरुपपत्तये वार्तिकान्तरारम्भं प्रतिज्ञाय तत्रापि यथाकथञ्चिल्लक्षणादिरूपत्वविवक्षया तत्तत्प्रयोगोपपत्तेर्वार्तिकप्रत्याख्यानमुपसंहृतम् । अत एव काव्यप्रदीपे—

काचित्कीर्णा रजोभिर्दिवमनु विदधौ मन्दवक्त्रेन्दुलक्ष्मीः
अश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यश्शशंसुः ॥

इति पद्ये "कम्पमाना इति च कम्पमापुरिति पठनीयं शतृशानचोर्गुणीभूतक्रियान्तराभिधायकत्वनियमात्" इत्यभिहितम् ॥

र्थानां वोत्तरपदलोपः' इति विद्यमानशब्दलोपः, ततो नुट्। 'अंहोदुःखव्यसनेष्वघम्' इत्यमरः । **सवितुः** भानोः **वंशे** अन्वये । 'सैषा त्रय्येव विद्या तपति' इत्यादिश्रुतत्रयीमयमूर्तिसवितृसंबन्धितया वंशस्यानघत्वमिति भावः । वंशस्यानघत्वविशेषणेन—

आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ।
इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ॥

इति बालकाण्डोक्तरीत्या,

'इदं वो याज्यानामुदितमुदितं यत्कुलमभूत्'

इत्यनर्घराघवोक्तरीत्या चोदितोदितत्वं द्योतितम् । तेन च भगवदवताराईत्तमत्वं व्यञ्जितम् । अत एवोच्यते बालकाण्डे—

एवं दत्वा वरं देवो देवानां विष्णुरात्मवान् ।
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥

ततः पद्मपलाशाक्षः कृत्वाऽऽत्मानं चतुर्विधम् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥

इति ॥ केचित्तु–'सवितुर्वंशस्यानघत्वं रामावतारात्' इति व्याचक्षते । तदस्वरसं—भगवदवतारयोग्यताप्रयोजकेऽनघत्वे तदवतारहेतुकत्ववर्णनस्यायुक्तत्वात् ॥

**जातः** अवतीर्णः । 'स देवो मानुषत्वं मानयन् जातः' इत्य-

नेन—'अजायमानो बहुधा विजायते' 'इच्छागृहीताभिमतोरुदेहः' इत्याद्युक्तरीत्याऽवतारस्स्वेच्छानिबन्धन एव न तु कर्मनिमित्तक इति द्योत्यते। अत्र—

स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः।
अर्थितो मानुषे लोके जज्ञे विष्णुस्सनातनः॥

इत्येतदप्यनुसंधेयम्॥ केचित्तु—सवितुर्वंशे जातो मानुषत्वं मानयन्निति योजयित्वा मानयन् बहुमन्यमानः। अनेन 'आत्मानं मानुषं मन्ये' इति वचनं स्मारितम्'—इति व्याचक्षते।

देवश्श्रीमानित्याभ्यां शरण्यत्वौपयिकं परत्वं, मानुषत्वं मानयन्नित्यनेन सौलभ्यं च दर्शितम्। परत्वेऽप्यसुलभानां सुमेरुप्रभृतीनां सौलभ्येऽप्यनिष्टानां लोष्टादीनां चानुपादेयत्वादुभे अप्यवश्यापेक्षिते। एते ह्याश्रितरक्षणोपयुक्तेषु गुणेषु मूर्धन्यौ गुणौ। **जनकतनयायाः** 'राघवत्वेऽभवत्सीता' इत्युक्तप्रकारेण सीतात्वे-

---

[1]'स देवो मानुषत्वं मानयन् जात इत्यनेन'—इत्यादिरसास्वादिनी॥

यत्तु—'स्वतस्सिद्धं जगतामाद्यं कारणं देवो जयतीत्यादौ विशेषणेऽपि कारणपदार्थे स्वतस्सिद्धपदार्थान्वयवत् प्रकृते विशेषणेऽपि देवपदार्थे जातत्वमानयितृत्वयोरन्वयस्सम्भवति' इत्युपपत्तिप्रदर्शनम्। तन्न, तत्र विभिन्नलिङ्गकतया स्वतस्सिद्धपदार्थस्य विशेष्येऽन्वयासंभवेन विशेषणेऽन्वयाङ्गीकारेऽपि प्रकृते भवद्रीत्या विशेष्यभूते स इत्यत्रैव तयोरन्वये बाधकविरहेण तत्परित्यागानौचित्यात्॥ वस्तुतस्तु—देवपदस्यैव विशेष्यपरत्वं प्रागेवास्माभिः स्थापितामित्यवधेयम्॥

नावतीर्णायाश्शिश्रय इत्यर्थः । **अन्वेषणे** गवेषणे, अनुपूर्वकादिष्य-तेर्भावे ल्युट् । 'अन्वेषणा च गवेषणा' इत्यमरः । यातुधानाधि-नाथेन तस्यां प्रमुषितायामिति भावः । **जागरूकः** निर्निद्रः । बद्धादर इति यावत् । 'जागुरूकः' इति सूत्रेण जागर्तेः कर्तर्यूक-प्रत्ययः । 'जागरूको जागरिता' इत्यमरः । जनकशब्देन 'जनको ह वैदेह आसां चक्रे' इति श्रुतिप्रत्यभिज्ञापकेन तस्य ब्रह्मविदग्रेस-रतां द्योतयता सीताया विशुद्धाभिजनजनितत्वं व्यञ्जितम् । तेन—

अचिन्त्यान्यप्रमेयानि कुलानि नरपुङ्गव ।
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥

इत्याद्युक्तरीत्या अन्योन्यसदृशवंशोदिततया 'तुल्याभिजनलक्षणाम्' इत्युक्तपरस्पराभिजनाद्यानुरूप्यं द्योतितम् । तेन च—

यदि रामरसमुद्भ्रान्तां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥

इत्युक्तरीत्या रामस्य तदर्थे जगदधरोत्तरीकरणस्यापि युक्तत्वे तदन्वेषणैकाग्रत्वं किमाश्चर्यमिति द्योत्यते ॥ **पवनतनये** हनूमति **प्रत्यायाते** लङ्कामुपेत्योपलभ्य सीताप्रवृत्तिं प्रत्यावृत्ते सतीत्यर्थः । अनेन—

मारुतस्यौरसः पुत्रो गमने चापि तत्समः ।

इत्युक्तरीत्या मारुतस्येवास्यापि गतिशैघ्र्यं 'वायुर्यथैको भुवनं

प्रविष्टः, वायुस्सर्वत्रगो महान्' इत्याद्युक्तरीत्या दुर्गतमेऽपि प्रदेशे प्रवेशक्षमत्वं च द्योतयता लङ्काऽन्तर्निरुद्धजनकतनयाऽन्वेषणजागरूकताकूलंकषते द्योतिते । अत्र—

उत्पतन्निपतंश्चापि तिष्ठन्गच्छन्पुनःपुनः ।
अपावृण्वंश्च द्वाराणि कवाटान्यवघाटयन् ॥

प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्नपि ।
सर्वमप्यवकाशं च विचचार महाकपिः ॥

चतुरङ्गुलमात्रोऽपि नावकाशस्स विद्यते ।
रावणान्तःपुरे तस्मिन्यं कपिर्न जगाम सः ॥

प्राकारान्तररथ्याश्च वेदिकाश्चैत्यसंश्रयाः ।
श्वभ्राश्च पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥

इत्यादिकं स्मर्तव्यम् । अत एव तस्मिन् प्रत्यायाते सति, निश्चितः निर्णीतः, अर्थः सीताप्रत्यानयनार्थकर्तव्यविषयो येन स तथोक्तः ।

अर्थः प्रकारे विषये व्यवहारे प्रयोजने ।

इति रत्नमाला । अत एव **कामी** सीताविषयेऽतिशयितकामः । अतिशायने मत्वर्थीय इनिः । यद्यपि 'स कामिनं दीनमदीनसत्त्वम्' इत्याद्युक्तेः हनूमत्प्रत्यागमनात्पूर्वमपि कामित्वं सिद्धमेव । तथाऽपि प्रेयसीप्रवृत्त्युपलम्भेन तल्लाभस्य प्रत्यासन्नतया भावनात्स एव का-

मोऽतिभूमिं गत इति प्रकृते तदुक्तिरिति ध्येयम् । अनुभूयते हि सर्वैरप्यभीप्सितवस्तुलाभे दवीयसि किंचिन्मन्दरोऽप्यभिलाषस्तस्मिन्नेव नेदीयसि—

'आयाते दयिते मनोरथशतैर्नीत्वा कथंचिद्दिवा'

इत्युक्तरीत्या कातर्यवशात्तीव्रतमः । कामीत्यनेन रामस्य सीतैकचिन्तनव्यासङ्गित्वं द्योतितम् । यथोच्यते हनुमता—

नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यच्चिन्तयते किंचित्स तु कामवशं गतः ॥

इति । अनेनैव सीताविषयककामातिशयसूचकेन तस्या अत्यन्तप्रियत्वमपि ध्वनितम् । तदप्युच्यते तेनैव—

इयं सा यत्कृते रामश्चतुर्भिः परितप्यते ।
कारुण्येनानृशंस्येन शोकेन मदनेन च ॥

स्त्री प्रणष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः ।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥

इति । **कल्पसंवर्तः** 'संवर्तः प्रलयः कल्पः' इत्यमरः । **तस्याकार** इवाकारो यस्यास्तां तथोक्तां प्रलयसमयवत्सुदुस्सहामिति भावः। यद्वा—कल्पो दैवयुगसहस्रात्मकब्राह्मदिनम्—

दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ।

इत्यमरः ।

कल्पश्शास्त्रे विधौ माने संवर्ते ब्रह्मणो दिने ।

इति कोशान्तरं च । तदाकारां तत्सदृशीं 'त्रुटियुगायते त्वामपश्यताम्' इत्याद्युक्तरीत्या मुहुस्सहविश्लेषवेदनातिभूम्नाऽतितरां द्राघीयसीमिति भावः । तदेतदुक्तमरण्यकाण्डे रामचन्द्रेणैव—

ज्ञातिपक्षविहीनस्य राजपुत्रीमपश्यतः ।
मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ॥

इति ॥ यद्वा—उपलब्धायां प्रेयसीप्रवृत्तौ—

कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् ।
सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥

कदा नु खलु मां साध्वी सीता सुरसुतोपमा ।
सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं पयः ॥

कदा शोकमिमं घोरं मैथिलीविप्रयोगजम् ।
सहसा विप्रमोक्ष्यामि वासश्शुक्लेतरं यथा ॥

इत्युक्तौत्सुक्यातिरेकेण त्रिंशद्घटिकात्मिकामपि कल्पकल्पतया संवृत्तामिति भावः । **निशां** हनूमदागमनदिनयामिनीमित्यर्थः । आ विभातात् **आविभातम्** । 'आङ्मर्यादावचने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यमादेशः । प्रभातपर्यन्तमित्यर्थः । विभातशब्दः प्रभातवाची 'भ्रमर इव विभाति कुन्दमन्तस्तुषारम्' इत्यादिकालिदासादिप्रयोगात् 'कल्यमुषः

प्रत्यूषं प्गे प्रभातं भवेद्विभातं च' इति हलायुधः । **कथमपि** महता प्रयत्नेनेत्यर्थः ।

ज्ञातहेतुविवक्षायामप्यादि कथमव्ययम् ।
कथमादि तथाऽप्यन्तं यत्नगौरवबाढयोः ॥

इत्युत्पलमालायाम् । **विषेहे** विशेषेण मर्षितवान् ॥ [1]न ह्यल्पीयसा सहनेनेदं रात्रियापनं सुकरमिति भावः । 'षह मर्षणे' अस्माद्विपूर्वकात्परोक्षे लिटि प्रथमपुरुषैकवचनम् । 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ । 'परिनिविभ्यस्सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इति षत्वम् । अत्रानवत्वरूपवंशविशेषणस्यो-

[1]'न ह्यल्पीयसा सहनेनेदं रात्रियापनं सुकरमिति भावः' इति रसास्वादिनी ॥ एतेन कालरूपकर्मसमभिव्याहारे विषहतेर्यापनमर्थः । तत्कर्मत्वं च "शेषान्मासान्गमय चतुरो लोचने मीलयित्वा" "संवेशेन श्रममपनयन् शर्वरीं यापयेथाः" इत्यादिवत्कालस्योपपन्नमेवेति सूचितम् ।

यत्तु—निशाया विरहदुःखप्रचुरतया सहनकर्मत्वम् ॥ इति—तन्न सहनकर्मतायां दुःखप्रचुरत्वस्याप्रयोजकत्वात । सहनं हि यद्यत्राप्रतिकूलत्वभावनं तदा तत्कर्मत्वं तद्विषयत्वादेवोपपादनीयम् । न हि दुःखमयस्यैव तत्कर्मत्वनियमः । 'मुनिर्द्वन्द्वानि सहते, सुजनः परगुणान् सहते' इत्यादावनैकान्त्यात् । इत्थमेव 'सहस्व कतिचिन्मासान्, किं चातकः फलमपेक्ष्य स वज्रपातां पौरन्दरीं विषहते नववारिधाराम्' इत्यादावप्यप्रतिकूलत्वभावनाविषयत्वादेव सहनकर्मत्वं वेदितव्यम् । किं बहुना—दुःखप्रचुरत्वमसहनरूपद्वेषकर्मतायामेव प्रयोजकं सहनकर्मताप्रयोजकतया कथयन्तो नूनं विस्मयावहा इति विभावयन्तु विचक्षणाः ॥

क्तरीत्या उदितोदिततत्त्वभगवदवतारार्हत्वाभिप्रायगर्भत्वेन परिकरालङ्कारः—

अलङ्कारः परिकरस्साभिप्राये विशेषणे ।

इति लक्षणात् ॥

[1]देव इति विशेष्यस्योक्तरीत्या सीताविश्लेषदीनत्वादेर्लीलैकप्रयोजनकत्वाभिप्रायगर्भत्वात्परिकराङ्कुरः—

साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।

इति लक्षणात् ॥ पवनतनयप्रत्यागमनस्य निश्चितार्थतां प्रति हेतुत्वात्काव्यलिङ्गम्—

समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।

इति लक्षणात् ॥ निश्चितार्थत्वस्यातिशयितकामत्वं प्रति विशे

---

[1]देव इति विशेष्यस्योक्तरीत्या...... लीलैकप्रयोजनकत्वाभिप्रायगर्भत्वात्परिकराङ्कुरः इति रसास्वादिनी ॥ यत्तु—'देव इति विशेषणस्य सीताविश्लेषदीनत्वादिलीलामात्रत्वाभिप्रायगर्भत्वात्परिकरालङ्कारः'—इति—तत् देवपदस्य विशेष्यपरताया एव प्रागवयवस्थापितत्वादयुक्तं वेदितव्यम् ॥ यदपि—श्रीमानित्यनेन सीताविग्रहादिकं व्यज्यत इति—तन्न, श्रीमानित्यत्र मतुपो नित्ययोगपरतया स्वयमपि विवृततया श्रीनित्ययोगस्य कादाचित्कं सीताविवाहादिकं प्रति व्यञ्जकत्वासंभवात् । जातपदेनैव सहधर्मचारिणीसंयोगान्तानां संस्काराणामुपलक्षिततया सीताविवाहानुक्तिकृताऽपि न्यूनता न शङ्कनीया ॥

षणगत्या हेतुत्वात्पदार्थहेतुकमन्यत्काव्यलिङ्गम् । कामित्वस्य निशाकल्पाकारत्वं प्रति हेतुत्वादितरत्काव्यलिङ्गम् । कल्पाकारामित्यत्र दुस्सहत्वदीर्घत्वादिधर्मस्य इवादिवाचकस्य उपमानभूताकारशब्दस्य च लोपाद्धर्मवाचकोपमानलुप्तोपमा । अत्र धर्मवाचकयोर्गम्यमानत्वाल्लुप्तत्वम् । उपमानस्य तु वार्तिकात् । तथाहि—'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इति वार्तिकम् । अस्यार्थः—सप्तम्यन्तं तावदास्ताम् । उपमानं पूर्वपदं यस्य समासस्य तस्य शब्दान्तरेण बहुव्रीहिः । पूर्वसमासावयवस्योत्तरपदस्य लोपश्चेति । एतेनेदं फलितम्—अत्रोपमानशब्देन मुख्योपमानभूतस्य कल्पाकारस्याश्रयः कल्पो लक्ष्यते । अत एव 'उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः' इति प्रकृतवार्तिकोदाहरणभाष्यप्रतीकमादाय 'अवयवधर्मेण समुदायस्य व्यपदेशादुष्ट्रस्योपमानतेत्युपमानपूर्व उष्ट्रमुखशब्दः' इति कैयटेन विवृतम् । तत्पूर्वपदस्य कल्पाकार इत्यस्य समासस्योपमेयवाचिना आकारशब्देन बहुव्रीहिः । कल्पाकार इव दुस्सहो द्राघीयान्वा आकारो यस्या इति । ततः पूर्वसमासावयवस्योत्तरपदस्य मुख्योपमानाकारशब्दस्य लोप इति । तेन धर्मवाचकोपमानानां लोपात्त्रिलोपवती समासगा सेयमिति । प्रथमकाव्यलिङ्गप्रभृत्येतावत्पर्यन्तमलङ्काराणां क्रमेणाङ्गाङ्गिभावसङ्करः । परिकरपरिकराङ्कुरयोरेतेषां च संसृष्टिः । तकारमकारादीनां व्यञ्जनानां पुनरुक्तेर्वृत्त्यनुप्रासश्शब्दालङ्कारः ॥

एकद्विप्रभृतीनां तु व्यञ्जनानां यदा भवेत् ।
पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते ॥

इति तल्लक्षणम् । उक्तार्थालङ्काराणामस्य च यथायोगमेकवाचकानुप्रवेशसंकरः । शब्दार्थालङ्कारयोरेकवाचकानुप्रवेशसद्भावविचारस्त्वस्मत्प्रणीतायां लक्ष्मीसहस्त्ररत्नप्रकाशिकायां द्रष्टव्यः ॥

किंच—'सवितुरनघे वंशे जातः' इत्यनेन काव्यनेतुः श्रीमतो दाशरथेर्महाकुलीनत्वं सूचितम् ॥

कुले महति संभूतिः कुलीनत्वमुदाहृतम् ।

इति लक्षणात् ॥ अनेनैव तेजस्वित्वशुचित्वे अपि व्यञ्जिते । 'मानुषत्वं मानयन्' इत्यनेनाविकत्थनत्वं, विनीतत्वं च द्योतितम् । 'देवश्श्रीमान्' इत्यनेन महाभाग्यवत्ता व्यञ्जिता—

सर्वातिशायिभाग्यत्वं महाभाग्यमुदाहृतम् ।

इति लक्षणात् ॥ अनेनैवौज्ज्वल्यमपि द्योतितम् ।

औज्ज्वल्यं नयनानन्दकारित्वं कथ्यते बुधैः ।

इति लक्षणात् ॥ 'जनकतनयाऽन्वेषणे जागरूकः' इत्यनेन दृढव्रतत्वदयालुत्वे व्यञ्जिते । 'निश्चितार्थः' इत्यनेन नयज्ञत्वं द्योत्यते—

सामाद्युपायचातुर्यं नयज्ञत्वमुदाहृतम् ।

इति तल्लक्षणम् ॥ 'कथमपि निशां विषेहे' इत्यनेन सर्वात्मना तितिक्षुत्वं सूचितम् । एतैश्च गुणैरनुक्तगुणान्तरोपलक्षकैः—

तत्र नायको गुणवान्पुमान् ।
तद्गुणास्तु महाभाग्यमौदार्यं स्थैर्यदक्षते ॥
औज्ज्वल्यं धार्मिकत्वं च कुलीनत्वं च वाग्मिता ।

कृतज्ञत्वं नयज्ञत्वं शुचिता मानशालिता ॥
तेजस्विता कलावत्त्वं प्रजारञ्जकतादयः ।
एते साधारणाः प्रोक्ता नायकस्य गुणा बुधैः ॥

इत्युक्तरीत्या उत्तमनायकत्वम्, तत्रापि—

दयावानतिगम्भीरो विनीतस्सत्त्वसारवान् ।
दृढव्रतस्तितिक्षावानात्मश्लाघापराङ्मुखः ॥
निगूढाहंकृतिर्धीरो धीरोदात्त उदाहृतः ॥

इत्युक्तलक्षणधीरोदात्तत्वं च व्यज्यत इति वस्तुना वस्तुध्वनिः । अनेनैव मेघसंदेशकाव्यप्रतिपाद्याप्रसिद्धनायकापेक्षयाऽस्य नायकस्य वैलक्षण्यप्रतीतिस्तेनैव तत्काव्यापेक्षयैतत्काव्यस्य वैशिष्ट्याभिव्यक्तेश्च वस्तुना व्यतिरेकालङ्कारध्वनिः—

व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।

इति तल्लक्षणम् ॥ नायकस्य नायिकायाश्च सवितृवंशजत्वजनककुलीनत्ववर्णनेनानुरूपवस्तुवर्णनात्मकसमालङ्कारो व्यज्यत इत्यन्योऽपि वस्तुनाऽलङ्कारध्वनिः—

समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ।

इति लक्षणात् ॥ 'वंशे जातः' इत्यत्र वंशशब्दप्रयोगमहिम्ना श्रीरामस्य मौक्तिकमणिसाधर्म्यप्रतीतेरुपमालङ्कारो व्यज्यत इत्यपरोऽपि वस्तुनाऽलङ्कारध्वनिः । तेन तस्य लावण्यादिकं द्योत्यते । 'श्रीमान् जनकतनयाऽन्वेषणे जागरूकः' इत्यनेन श्रिया नित्ययोगेऽपि तदन्वेषणप्रवृत्तत्वरूपविरोधप्रतीतेर्विरोधाभासो व्यज्यत इत्यपि वस्तुनाऽलङ्कारध्वनिः—

आभासत्वे विरोधस्य विरोधाभास इष्यते ।

इति लक्षणात् ॥ किंचात्र विप्रलम्भावश्यंभाविनीषु

दृङ्मनस्सङ्गसंकल्पा जागरः कृशताऽरतिः ।
ह्रीत्यागोन्मादमूर्छान्ता इत्यनङ्गदशा दश ॥

इत्युक्तासु दशासु मन्मथावस्थासु 'जनकतनयाऽन्वेषणे जागरूकः' 'निश्चितार्थः' इत्याभ्यां मनस्सङ्गसंकल्पौ । 'कल्पाकाराम्' इत्यादिना जागरश्चेत्येतदवस्थात्रयं द्योत्यते—

मनस्सङ्गस्तु मनसस्तदेकायत्तता सदा । इति,
सततं तद्गतां चिन्तां संकल्पं संप्रचक्षते ॥ इति,

प्रजागरस्तु चिन्ताभिर्निद्राक्षतिरहर्निशम् ।

इति च तल्लक्षणानि ॥ 'कल्पाकारां कथमपि निशाम्' इत्यादिना औत्सुक्यं चिन्ता वा संचारी व्यज्यते—

कालाक्षमत्वमौत्सुक्यमभिलाषादिहेतुभिः। इति,

इष्टानिष्टागमाद्ध्यानं चिन्ताशून्यत्वतापकृत् ॥

इति च तल्लक्षणे ॥ अत्र विश्लिष्टजानकीरूपालम्बनेन शरत्समयविजनस्थानावस्थानादिभिः प्रस्तुतैरुद्दीपनैश्च विभावितश्शय्यापरिवर्तनादिभिर्गम्यमानैरनुभावितः चिन्तौत्सुक्याभ्यां संचारितः रोमाञ्चस्वेदवैवर्ण्यादिभिस्सात्त्विकैर्भावितः श्रीरामचन्द्रगतो रतिर्नाम स्थायीभावः परिपोषित इति शृङ्गाररसो व्यज्यते स च विप्रलम्भ इति ध्येयम्। तथा चोक्तं रसार्णवसुधाकरे—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
नीता सदस्यरस्यत्वं रतिश्शृङ्गार उच्यते ॥
स विप्रलम्भस्संभोग इति द्वेधा निगद्यते।
अयुक्तयोस्तरुणयोर्योऽनुरागः परस्परम् ॥
अभीष्टालिङ्गनादीनामनवाप्तौ प्रकृष्यते।
स विप्रलम्भो विज्ञेयस्स चतुर्धा निगद्यते।
पूर्वानुरागमानौ च प्रवासकरुणाविति ॥

इति। अयं च विप्रलम्भः प्रवाससंज्ञकः पूर्वसंगतयोरेव सीतारामयोर्देशान्तरव्यवधानेन प्रवृत्तत्वात्। तदप्युक्तं तत्रैव—

पूर्वसंगतयोरेव यूनोर्देशान्तरादिभिः।
रमणव्यवधानं चेत्स प्रवास इतीरितः ॥
तज्जन्यो विप्रलम्भोऽपि प्रवासत्वेन संमतः।

गर्वहर्षमदव्रीडा वर्जयित्वा समीरिताः ।
शृङ्गारयोग्यास्सर्वेऽपि प्रवासे व्यभिचारिणः ॥ इति ॥

सरस्वतीकण्ठाभरणे च—

चिन्तोत्कण्ठादिभिश्चेतो भृशं वासयतीह यः ।
प्रवासयति वा यूनस्स प्रवासो निरुच्यते ॥ इति ॥

अस्मिन् काव्येऽयमेव मुख्यो रस इत्यवोचाम । एवं वस्त्वलङ्काररसभेदेन त्रिधा ध्वनिरिति ध्वनिप्रस्थाननिष्णातानां संभ्रमः । इदं च काव्यं वाच्यातिशायिव्यङ्ग्यत्वादुत्तमम् । तदुक्तं काव्यप्रकाशे—

इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥ इति॥

अत्र श्लोके पदानां प्रसिद्धार्थत्वात्प्रसादो नाम गुणः । तल्लक्षणमुक्तं सरस्वतीकण्ठाभरणे—

प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यते ॥ इति ॥

पाठकालेऽपि वाक्ये पृथक्पदत्वस्य प्रतीतेर्माधुर्यं नाम गुणः—

या पृथक्पदता वाक्ये माधुर्यं तन्निगद्यते ॥

इति लक्षणात् ॥ रामायणकथायास्संक्षिप्तत्वात्संक्षेपो नाम गुणः—

समासेनाभिधानं यत्स संक्षेप उदाहृतः ।

इति लक्षणम् ॥ एवमन्येऽपि गुणा यथासंभवमूहनीया बुद्धिमद्भिः । एतादृशगुणवत्तायामेव काव्यस्य श्राव्यता । नान्यथा सालङ्कारत्वेऽपि । तदपि तत्रैवोक्तम्—

अलङ्कृतमपि श्राव्यं न काव्यं गुणवर्जितम् ।

गुणयोगस्तयोर्मुख्यो गुणालङ्कारयोगयोः ॥ इति ॥

वृत्तिस्तु मध्यमकैशिकी सुकुमारार्थेऽनतिप्रौढबन्धत्वात्—

मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी ।

इति सा लक्ष्यते ॥ न चास्याः—

अत्यन्तसुकुमारौ द्वौ शृङ्गारकरुणौ मतौ ॥

इत्युक्तेः प्रकृतवर्णनीयशृङ्गाररसाविरुद्धतेति शङ्क्यम् । शृङ्गारकरुणयोरतिप्रौढसन्दर्भस्यैव दुष्टत्वेनाल्पप्रौढसन्दर्भस्यादोषात् । अतएवेयं सर्वरससाधारणीत्युच्यते—

मध्यमारभटी त्वन्या तथा मध्यमकैशिकी ।
वृत्ती इमे उभे सर्वरससाधारणे मते ॥

इति । एवं रीत्यादयोऽप्युन्नेयाः । अस्मिन्काव्ये सर्वत्र मन्दाक्रान्तावृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति लक्षणात् ॥ मगणोपक्रमाद्गणशुद्धिः । वकारोपक्रमात्तत्रापि सानुस्वारत्वेन वकारस्यामृतबीजत्वाच्च वर्णशुद्धिश्च निर्विवादैव । 'मोभूमिस्त्रिगुरुश्श्रियं वितनुते' इति रत्नाकरोक्तेः । 'वकारस्तु वागारोग्यायुषां खनिः' इति लक्षणदीपिकाद्युक्तेश्च । अत्र प्रसिद्धमपीतिवृत्तमंशे कल्पितत्वात्संकीर्णमित्यवगन्तव्यम् । तदुक्तं रसार्णवसुधाकरे—

इतिवृत्तकथावस्तुशब्दाः पर्यायवाचकाः ।
इतिवृत्तं प्रबन्धस्य शरीरं त्रिविधं हि तत् ॥
ख्यातं कल्प्यं च संकीर्णं ख्यातं रामायणादिकम् ।

कविबुद्धिकृतं कल्प्यं माधवादिविचेष्टितम् ।
संकीर्णमुभयायत्तं नळराघवचेष्टितम् ॥ इति ॥

नच रूपकेष्वेव कल्पितमिश्रेतिवृत्तकत्वं न काव्येष्विति भ्रमितव्यम् । मेघसंदेशकिरातार्जुनीयादौ तत्प्रसिद्धेरिति विस्तरभयादुपरम्यते ॥ अत्र तत्रतत्र नगरार्णवशैलर्तूद्यानादीनां लेशतो वर्णनान्महाकाव्यत्वमक्षतमित्यवगन्तव्यम् । तल्लक्षणं तु प्राप्तावसरे प्रदर्शयिष्यामः ॥ १ ॥

एवं निश्चितार्थस्य श्रीरघुनन्दनस्यौत्सुक्यभूम्ना कथमपि निशानयनमभिधाय—

नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥

एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् ।
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥

मङ्गळाद्यप्रयोगं च प्रत्युत्थानं च सर्वशः ।
कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ॥

इति दीर्घसूत्रतानिश्चितार्थानारम्भयोस्स्वेनैव राजदोषताकथनान्निश्चितसीताप्रत्यानयनार्थकर्तव्यकार्यस्याकरणविलम्बाभ्यां स्वस्यैव दोषो मा प्रसाङ्क्षीदिति तदर्थं सद्यो वाहिनीमुद्योजयिष्यतस्तस्यैव वक्ष्य-

माणसीतासमाश्वासनार्थसंदेशोपोद्धातरूपमपरेद्युरुषसि क्वचित्सरसि राजहंसदर्शनवृत्तान्तं तावदाह[1]—

[1] संदेशोपोद्धातरूपमपरेद्युरुषसि क्वचित्सरसि राजहंससदर्शनवृत्तान्तं तावदाह—काल्य इति ॥ इति रसास्वादिनी ॥ यत्तु—अथ निश्चितार्थे विलम्बाभावं संदेशोपोद्धातं च वदन्......आह—इति द्वितीयपद्यस्यास्यावतारणं—तन्न-निश्चितार्थविलम्बाभावस्येह सन्देशोपोद्धातान्तःपातितयैव वर्णनीयतया तयोस्समुच्चित्यवदनकर्मत्वाभिधानासंगतेः । चित्रमिदं यत्प्रथमपद्यमप्युपोद्धातीकुर्वद्भिर्द्वितीयपद्यैकदेशस्योपोद्धाताद्बहिष्करणमिति ॥

यदपि—'इयं च नलिनी रम्या फुल्लपङ्कजमण्डिता' इति श्रीरामायणोक्ते कमलसरसि प्रभाते कंचिद्राजहंसं ददर्शेत्याह इति—तदसत्, कमलसरसो मूले क्वापीत्यनिर्दिष्टत्वाभिधानासंगतेः ॥

इयं च नलिनी रम्या फुल्लपङ्कजमण्डिता ।
नातिदूरे गुहाया नौ भविष्यति नृपात्मज ॥

इति विशिष्य निर्दिष्टाया नलिन्यास्स्वावासगुहानेदीयस्त्वेन विशेषत एवात्र निर्देशौचित्यात् । अत एव हि—'नेदीयस्यामधिगतरसो दीर्घिकायाम्' इत्यग्रे 'कृत्रिमां दीर्घिकां चापि' इति विशिष्य श्रीमद्रामायणनिर्दिष्टा दीर्घिका नेदीयस्त्वेनैव निर्दिष्टाऽऽचार्यैर्मूले । तस्माद्विशेषतोऽनिर्दिष्टमेव किंचित्सरो मूले विवक्षितमित्येव युक्तमाश्रयितुम् ॥ न च 'इयं च नलिनी' इत्युक्तादन्यत्कमलसरः प्रस्रवणप्रान्ते नासीदिति शङ्कनीयम् ॥

वित्रास्य कारण्डवचक्रवाका महारवैर्भिन्नकटा गजेन्द्राः ।
सरस्सु बद्धाम्बुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥
प्रसन्नसलिलास्सौम्य कुररीभिर्विनादिताः ।
चक्रवाकगणाकीर्णा विभान्ति सलिलाशयाः ॥

इत्येवं तत्रैव बहूनां कमलसरसां भगवता वर्णितत्वात् ॥

**काल्ये सेनां कपिकुलपतेस्तूर्णमुद्योजयिष्यन्**
**दूरीभावाज्जनकदुहितुर्दूयमानान्तरात्मा ।**
**क्रीडाखेलं कमलसरसि क्वापि कालोपयातं**
**राकाचन्द्रद्युतिसहचरं राजहंसं ददर्श ॥ २ ॥**

**काल्य इति** ॥ [1]अत्र स इत्यध्याहार्यम् । **सः** रघुनन्दनः **काल्ये** अन्येद्युरुषसि 'प्रत्यूषोऽहर्मुखं काल्यम्' इत्यमरः । यद्यपि 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्येव पाठः ।

कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्छ्रुतिवर्जिते ।
सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ॥

---

[1]'अत्र स इत्यध्याहार्यम्'—इति रसास्वादिनी ॥ यत्तु—अत्रापि स इति कर्तृवाचकं पदं वर्तते इति स इत्यस्यानुवृत्तिकथनं—तन्न, प्रसिद्धार्थकस्य स इत्यस्यात्रानुवृत्तौ तस्य विशेष्यपरत्वासंभवस्य प्रागेवोक्तत्वादस्माभिः । देवपदस्यानुवृत्तौ तु को वा देव इति विशेषाकाङ्क्षा न निवर्तेत झडिति । श्रीमान्स देव इत्युद्देश्यांशस्यानुवृत्तौ तु रामावतारदशायां वाऽन्यदा वेति संदेहो झडिति न निवर्तेत । इतरेषामपि प्रथमान्तपदानामनुवृत्त्यङ्गीकारे महद्गौरवम् । तस्माद्वरं लाघवेन प्रक्रान्तार्थकस्यैकस्यैव स इत्यस्याध्याहरणम् । तथा च सति य एव सवितृवंशजातत्वादिविशेषितो देव आविभातं विरेहे स एव विभाते राजहंसं ददर्शेत्यर्थैक्यस्यैकेनैव पदेन लाभान्न पूर्वोक्तशङ्काऽवतारसंभवः । यद्यपि—स्याच्चैकस्य ब्रह्मशब्दवदित्यादिन्यायेन प्रसिद्धार्थकस्यानुवृत्तावप्यनुषङ्गदशायां प्रक्रान्तार्थकत्वं संभाव्यते । तथाऽपि एकस्यैवोपादानानुषङ्गदशयोर्भिन्नार्थतायाः काव्यसरणावनाश्रितत्वात् सकलतान्त्रिकाननुमतत्वाच्चेहाध्याहारस्सर्वानुमत आदृत इति ध्येयम् ॥

इति मेदिन्यादिकोशेष्वपि तथैव दर्शनात् । तथाऽपि कलयति चेष्टामिति कल्यं 'अघ्न्यादयश्च' इति कलेर्यक् । ततः प्रज्ञाद्यणि काल्यमपीति सुधायां व्याख्यातत्वात्काल्यमित्यपि पाठो दृश्यत इति बोध्यम् । **कपीनां कुलस्य**[1] यूथस्य 'सजातीयैः कुलम्' इत्यमरः । पतिर्नाथः तस्य 'पतिस्समास एव' इति घिसंज्ञायां 'घेर्ङिति' इति गुणः । अनेन

महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च ।
मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥

इत्यादिना—

पृथिव्यां वानरास्सर्वे शासनादुपयान्ति ते । इत्यन्तेन ।
ख्यातकर्मापदानाश्च बलवन्तो जितक्लमाः ॥

---

[1] कपीनां कुलस्य यूथस्य 'सजातीयैः कुलम्' इत्यमरः । इति रसास्वादिनी । सजातीयैरित्यस्य प्राक्तनेन जन्तुभिरित्यनेनान्वितस्यापीहानुपयुक्तस्योपादान पादादित्वात् । कुलमितीदं तु "कुलं यूथं तिरश्चां पुन्नपुंसकम्" इत्यंशप्रतीकं वेदितव्यम् ॥

यत्तु—कुलस्य सजातीयजन्तुसमुदायरूपस्य इति व्याख्याय "जन्तुभिः। सजातीयैः कुलमित्यमरः" इति कोशोदाहरणं—तन्न, कुलयूथपदे हि पर्यायभूते तिर्यक्समुदायवाचकतया नियमिते अमरसिंहेन । यदा तु—जन्तुभिस्सजातीयैः कुलमित्यन्वयपक्षोऽमरसुधाकारदर्शित आश्रीयते तदा प्रकृते एतत्कोशोदाहरणमसम्बद्धमेव स्याद्भवताम् । सुधाकृत्पक्षे 'यूथं तिरश्चाम्' इत्यनेन तिर्यक्समुदाये यूथपदनियमनेन "जन्तुभिस्सजातीयैः कुलम्" इत्यस्य तिर्यगतिरिक्तजन्तुपरताया एवावश्याश्रयणीयत्वात् ॥

पराक्रमेषु विख्याता व्यवसायेषु चोत्तमाः ।
पृथिव्यम्बुचरारामनानानगनिवासिनः ॥
कोट्यग्रत इमे प्राप्ता वानरास्तव किङ्कराः ।
निदेशवर्तिनस्सर्वे सर्वे गुरुहिते रताः ॥

इति चोक्तप्रकारेण न कश्चिदपि प्लवङ्गमेषु तच्छासनातिवर्ती वर्तत इति द्योत्यते । **सेनां** चमूं **तूर्णं** शीघ्रं, न तु मन्दम् ।

कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम् ।
क्षिप्रमारभसे कच्चिन्न दीर्घयसि राघव ॥

इति भरतं प्रत्युपदेष्टा न हि स्वयं निश्चितेऽर्थे विलम्बेतेति भावः । **उद्योजयिष्यन्**—

एतद्धि कृत्यं घोरं नो विक्रमेण प्रयुज्यताम् ।
सागरौघनिभं भीममग्रानीकं महाबलाः ॥
कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥

इत्याद्युक्तप्रकारेण लङ्कां निरोद्धुं वर्मादिधारणव्यूहनादिभिरुद्युक्तं करिष्यन् । उत्पूर्वकाण्ण्यन्ताद्युजेः 'ऌटस्सद्वा' इति शता । एतेन सर्वाभिसारेणाभिषिषेणयिषा व्यज्यते । **जनकदुहितुः** सीतायाः **दूरीभावात्** दूरशब्दस्सत्ववचनत्वाद्विशेष्यनिघ्नः । अत एव 'स्याद्दूरं विप्रकृष्टकम्' इति विशेष्यनिघ्नेष्वमरः । अदूराया दूरायास्संपद्यमानाया भावो दूरीभावः तस्मात् प्रकृताद्विप्रकर्षादित्यर्थः

'कृभ्वस्तियोगे संपद्यकर्तरि च्विः । अभूततद्भाव इति वक्तव्यम्' इति च्विप्रत्यये 'अस्य च्वौ' इत्यकारस्य ईदादेशः । दूयमानः परितपन् अन्तरात्मा यस्य स तथोक्तस्सन् 'दूङ् परितापे' अस्माद्दैवादिकात्कर्तरि शानच् ॥ अन्तरात्मशब्दोऽत्र मनोवाची न त्वन्तर्यामिवाची, 'अन्तरात्मा हि मे[1] शुद्धः' इत्यादिप्रयोगात् । सर्वान्तरात्मनोऽन्तर्याम्यन्तरा संभवाच्च ॥ अयं भावः—यद्यप्यहं रिपुविजयपूर्वकं जानकीप्रत्यानयनाय तूर्णमेवोद्योजयिष्यामि वानरवाहिनीम् । तथाऽपि विपुलतरवनगिरिनदीनदीशादिव्यवधानभूयस्त्वेन दवीयस्त्वान्मार्गस्य

इदं ब्रूयाश्च मे नाथं शूरं रामं पुनःपुनः ।
जीवितं धारयिष्यामि मासं दशरथात्मज ।
ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ॥

---

[1] अन्तरात्मशब्दोऽत्र मनोवाची......अन्तरात्मा हि मे शुद्ध इत्यादि प्रयोगात् इति रसास्वादिनी । यत्तु—'आत्मा यत्नधृति' इत्यादिकोशोदाहरणं, तदसंबद्धं मूले अन्तरात्मपदस्यैव वर्तमानत्वात् । यदपि—आत्मशब्दस्यैव मनःपरत्वेऽप्यन्तश्शब्दोऽत्र शरीरव्यावृत्तिपरो बोध्य इति—तदपि "आत्मा यत्नधृतिस्वान्त" इत्यादिकोशेन यत्नधृतिस्वान्तादौ यत्नत्वादिपुरस्कारेण प्रत्येकं नानाशक्तिबोधनेन प्रकृते चात्मपदस्य मनस्त्वावच्छिन्नवाचकस्य विवक्षायां तदर्थस्य मनसस्स्वत एव शरीराद्व्यावृत्ततया व्यावर्तकाकारान्तरानपेक्षणात् । दूयमानपदेनैव प्रकृते शरीरव्यावृत्तिसंभवेन अन्तःपदवैयर्थ्यस्य दुर्वारत्वात् । तस्मादात्मशब्दवदन्तरात्मशब्दोपि मनस्त्वावच्छिन्नवाचकः प्रयोगबलात् पर्यायभूतशिवसदाशिवादिशब्दवदित्येव युक्तमित्यवधेयम् ॥

इति प्रेयसीप्रतिज्ञातजीवितधारणसमयानुल्लङ्घनेन तत्सन्निकर्षगमनं घटेत वा न वा तावत्तदाश्वासनं कथमिव संपद्येतेति वितर्केण परितपदन्तरङ्ग इति ॥ **क्वापि** कस्मिंश्चिदित्यर्थः । कमलानां सरः **कमलसरः** तस्मिन्, **काले** परितापतुल्यकाले इत्यर्थः । यद्वा—**काले** शरत्काले **उपयातं** मानसादुपागतं शरत्समयो हि हंसानां वैजननसदृशः । यद्यपि फाल्गुने लङ्कां प्रति सेनाप्रस्थापनमिति व्याख्यातृभिः कालस्य निर्णीतत्वेन तदा शरत्कालो न संभवत्येव । तथाऽपीतिवृत्तस्य मिश्रत्वेन शरत्काल एव तदुद्योजनमिति कल्पने न कश्चिद्दोषः । खेलतीति खेलः, खेलतेश्चलनार्थकाड्डौवादिकात्पचाद्यच् । क्रीडया खेलः **क्रीडाखेलः**, तं तथोक्तं सविलासमन्दगमनमित्यर्थः ॥ लीलासुभगमिति केचित् । **राका** समग्रकलापरिपूर्णचन्द्रमण्डलवती पूर्णिमा।

पौर्णिमासी तु पूर्णिमा ।
कलाहीने साऽनुमतिः पूर्णे राका निशाकरे ॥

इत्यमरः ॥ तस्यां यश्चन्द्रः तस्य **द्युतेः** कान्तेः चन्द्रिकाया इत्यर्थः ॥ [1]सहचरं तद्वद्धवळमिति यावत् । अनेन विरहोद्दीप-

[1] सहचरं तद्वद्धवळमिति यावत् इति रसास्वादिनी ॥ यत्तु—न च स्त्रीलिङ्गद्युतिशब्दोपादानाद्भिन्नलिङ्गत्वमुपमादोष इति भ्रमितव्यम् इत्याशङ्कनं—तन्न, भिन्नलिङ्गवचनकत्वरूपोपमादोषस्य असंभवद्धर्मान्वयकोपमानोपमेयकत्वप्रयुक्तभग्नप्रक्रमतायामेव काव्यप्रकाशकारादिभिरन्तर्भावितत्वात् समासगतायामुपमायां तद्दोषशङ्काया एवानुत्थानात् ॥

कत्वं द्योतितम् । हंसानां राजा राजहंसः हंसविशेषः तम् । राजदन्तादित्वाद्धंसशब्दस्य परनिपात इत्यमरसुधायाम् ॥

राजहंसास्तु ते चञ्चुचरणैर्लोहितैस्सिताः । इत्यमरः ॥

राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे । इति मेदिनी च ।

**ददर्श** आलुलोके ॥ 'दृशिर् प्रेक्षणे' । लिट् । अत्र ककारादीनां व्यञ्जनानां पुनरुक्तेर्वृत्त्यनुप्रासश्शब्दालङ्कारः । राकाचन्द्रद्युतिसहचरमित्यत्र राजहंसस्योपमेयस्य राकाचन्द्रद्युतेरुपमानस्य

---

यदपि—नैर्मल्यातिशयद्योतकत्वेन अनुद्वेजकत्वादिति तत्समाधानम् तदपि न—अर्थविशेषद्योतकताया उक्तोपमादोषापवादकत्वासम्भवात् । इत्थं हि तदपवादः काव्यप्रकाशे दृश्यते—यत्र तु नानात्वेऽपि लिङ्गवचनयोस्सामान्याभिधायि पदं स्वरूपभेदं नापद्यते न तत्रैतद्दूषणावतारः उभयथाऽप्यस्यानुगमक्षमस्वभावत्वात् ॥ यथा

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ।
तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ॥
दधते स्म परां शोभां तदीया विभ्रमा इव ।

इति । अनेन च सन्दर्भेण 'यत्रोद्वेगो न धीमताम्' इत्येतदपि सम्भवद्धर्मान्वयकोपमानोपमेयद्वयकत्व एव पर्यवसितीकृतमिति धीमदुद्वेगानुद्वेगयोर्नोपमादोषतदपवादौ प्रति स्वातन्त्र्यमित्यवधेयम् ॥

यदपि—राकाचन्द्रद्युतीति स्त्रीलिङ्गनिर्देशप्रियार्थकसहचरशब्दोपादानहेतुकसंयुक्ताभिरूपमिथुनप्रतीतिजनकत्वेन अनुद्वेजकत्वाभिधानम् तदपि न—द्युतिपदस्त्रीत्वेन द्युतौ स्त्रीत्वविवक्षायां चन्द्रपदपुंस्त्वेन चन्द्रेऽपि पुंस्त्वप्रतीतेरावश्यकत्वेन योषिद्बहुसक्तिमूलकरसाभासापत्त्या मिथुनप्रतीतेरत्र विवक्षितुमयुक्तत्वात् ॥ २ ॥

सहचरमिति वाचकस्य चोपादानाद्धर्मस्य धावल्यादेरनुपादानाच्च धर्मलुप्तोपमा समासगा आर्थी। साक्षात्सादृश्यप्रतिपादकयथेवादिशब्दानां प्रयोगे श्रौती। धर्मिव्यवधानेन सादृश्यप्रतिपादकानां सदृशसंकाशादिशब्दानां प्रयोगे आर्थीति विभागः। किंच—तूर्णं सेनामुद्योजयिष्यन्नित्यनेनौत्सुक्यमावेगो हर्षामर्षौ च संचारिणो व्यज्यन्ते॥ औत्सुक्यलक्षणमवोचाम। आवेगलक्षणं तु रसार्णवसुधाकरे—

चित्तस्य संभ्रमो यस्स्यादावेगोऽयं स चाष्टधा।
उत्पातवातवर्षाग्निमत्तकुञ्जरदर्शनात्॥
प्रियाप्रियश्रुतेश्चापि शात्रवव्यसनादपि।

इति॥ अयं चावेगश्शात्रवव्यसनजः। तदनुभावा अपि तत्रैवोक्ताः—

चेष्टास्तु शात्रवावेगे वर्मशस्त्रादिधारणम्।
रथवाजिगजारोहसहसापक्रमादयः॥

इति। हर्षामर्षलक्षणे तु—

मनःप्रसादो हर्षस्स्यादत्र नेत्रास्यफुल्लता।
प्रियाभाषणमालापः पुलकानां प्ररोहणम्॥
स्वेदोद्गमश्च हस्तेन हस्तसन्ताडनादयः॥ इति॥
अधिक्षेपावमानाद्यैः क्रोधोऽमर्ष इतीरितः।
अत्र स्वेदशिरःकम्पावाधोमुख्यविचिन्तने॥
उपायान्वेषणोपायव्यवसायादयः क्रियाः॥ इति च॥

दूरीभावादित्यादिना दूयमानान्तरङ्ग इत्यन्तेन शङ्काचिन्तास्मृतिविषादास्संचारिणो व्यज्यन्ते ।

अनिष्टाभ्यागमोत्प्रेक्षा शङ्का लज्जादिसंभवा । इति

इष्टानभिगमाद्ध्यानं चिन्ताशून्यत्वतापकृत् । इति

स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ॥ इति

विषादश्चेतसो भङ्ग उपायापायचिन्तनैः ।

इति च क्रमात्तेषां लक्षणानि ॥ अत्र वीररससंचारिणामौत्सुक्यावेगहर्षामर्षाणां विप्रलम्भशृङ्गारसंचारिणां शङ्काचिन्तास्मृतिविषादानां च तुल्यबलानामन्योन्यानुपमर्देन संभूय व्यङ्ग्यत्वाद्भावसन्धिः । तल्लक्षणं तु काव्यदर्पणे—भावसन्धिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि ॥ इति ॥ अत्र औत्सुक्यादीनां वीररससंचारिणां शङ्कादीनां विप्रलम्भशृङ्गारसंचारिणां च प्रत्येकमेकव्यञ्जकानुप्रवेशेन भावसंकराख्योऽपरोपि प्रकारस्संभवतीति ध्येयम् । नन्वत्र मुख्ययोर्वीरशृङ्गारा ख्ययोः रसयोरपि व्यङ्ग्यत्वसंभवात्कथं भावमात्रस्य प्राधान्येन व्यङ्ग्यत्वमिति चेत्—मुख्यत्वेऽपि रसयोर्भावानामेवात्र चमत्कारातिशयहेतुत्वादित्यवधेहि । उक्तंच काव्यदर्पणे—

मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।

यथैव राजानुगता भृत्याः परिणयोन्मुखाः ॥ इति ॥

अस्यार्थः—ते भावशान्त्यादयो रसे मुख्येऽप्यङ्गित्वं प्राधान्यं प्राप्नुवन्ति । कदाचन तादृशचमत्कारे लब्धे न तु सर्वदा ॥ नच कथमिदमु-

च्यते रसोऽपि मुख्यो भावशान्त्यादयोऽप्यङ्गिन इति, यस्मादेकतरप्राधान्यमन्यतरगुणीभावव्याप्तमिति वाच्यम् यथा राजानुगता विवाहप्रवृत्ता भृत्या राजनि मुख्येऽपि कदाचित्प्राधान्यमवलम्बन्ते तद्वदविरोधात् । ततश्च विभावादिसंवलनात्पूर्वं भावशान्त्यादीनां प्राधान्यम् तत्संवलने तु रसस्यैवेति तात्पर्यमित्यनवद्यमिति ॥ अत्र च विभावाद्यसंवलिततयैव चमत्कारकारितया भावसन्धेः प्राधान्यमिति सावधानं सहृदयैर्विभावनीयमिति संक्षेपः ॥ २ ॥

अथ राजहंसदर्शनसमनन्तरभाविनीं रघुनन्दनस्यावस्थामाह—

**तस्मिन्सीतागतिमनुगते तद्दुकूलाङ्कमूर्तौ**
**तन्मञ्जीरप्रतिमनिनदे न्यस्तनिस्पन्ददृष्टिः ।**
**वीरश्चेतोविलयमगमत्तन्मयात्मा मुहूर्तं**
**शङ्के तीव्रं भवति समये शासनं मीनकेतोः ॥**

तस्मिन्निति ॥ [1]**वीरः** दाशरथिः सीतायाः गतिं गमनं अनुगते अनुसृते जानकीगमनानुसारिणि तत्सदृशसविलाससंचार इत्यर्थः । अनुगत इत्यत्र 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च' इति कर्तरि क्तः । तस्यास्सीतायाः दुकूलं क्षौमं **अङ्कः** समीपवर्ति

[1] वीरः दाशरथिः इत्यादि रसास्वादिनी ॥ यत्तु—पूर्वार्धस्य वीरपदविवरणात्पूर्वं विवरणम्—तन्न, तन्मयात्मत्वस्येव तस्यापि विधेयविधया विशेषणत्वौचित्येन विशेष्यवाचकवीरपदविवरणानन्तरमेव तद्विवरणौचित्यात् । अन्यथा तन्मयात्मत्वस्याप्युद्देश्यविशेषणत्वापत्तिरेकतरमात्रविशेषस्य दुर्निरूपत्वात् ॥

यस्यास्सा तद्दुकूलाङ्का, तद्दुकूलानुचरी, तत्सदृशी, तद्धवलेति यावत्। तादृशीमूर्तिर्यस्य तस्मिन्, 'क्षौमं दुकूलम्' इत्यमरः।

अङ्को रूपकभेदाङ्कचिह्नरेखाजिभूषणे।
रूपकांशान्तिकोत्सङ्गस्थानेऽङ्कं पापदुःखयोः॥

इति मेदिनी॥ अथवा—तद्दुकूलस्य अङ्कः चिह्नभूतो भूषणभूतो वा, तद्दुकूलाङ्कभूतो हंस इति यावत्। तस्य मूर्तिरिव मूर्तिर्यस्य सः तथोक्ते तस्मिन् तत्कौशेयस्य सौवर्णतन्तुव्यतिस्यूतराजहंसप्रतिमाचित्रितत्वादिति भावः। वक्ष्यते चात्रैव प्रबन्धे हंसं प्रति दाशरथिना—'अमितस्त्वत्प्रियारूपचिह्नं चारु वासो वसानाम्' इति॥ 'सप्तम्युपमान' इत्यादिना समास उत्तरपदलोपश्च। 'तद्दुकूलस्याङ्कमूर्तौ चिह्नभूतशरीरवतीम्' इति व्याख्यानं तु नातीव स्वरसम्। पूर्वोत्तरविशेषणगतवक्ष्यमाणालङ्कारस्यात्र विशेषणे वैधुर्यप्रसङ्गेन क्रमभ्रंशदोषापातात्॥ [1]तस्याः मञ्जीरो नूपुरः प्रतिमा उपमा यस्य सः तादृशो निनदो यस्य तस्मि-

---

[1]तस्याः मञ्जीरो नूपुरः प्रतिमा उपमा यस्य स इत्यादि—रसास्वादिनी। यत्तु—मञ्जीरो नूपुरनिनदः प्रतिमा यस्येति विवरणम्—तन्न, उष्ट्रमुख इत्यादिबहुव्रीहौ उष्ट्रादिपदस्य तदवयवलाक्षणिकतायां 'सप्तम्युपमान' इत्याद्यनुशासनस्येव प्रकृते मञ्जीरादिपदानां तद्धर्मनिनदादिलाक्षणिकतायामनुशासनविरहेण तथा विवरणासम्भवात्। तस्माद्धर्मधर्म्यभेदाश्रयणेनैव मञ्जीरस्येहोपमानतामभ्युपगम्य मञ्जीरो नूपुर इति विवरणमेव युक्तम्॥ युक्तं चात एव धर्मलुप्तोपमायाः स्वीकरणमेव तन्मञ्जीरप्रतिमनिनदपदे, न तूपमानलुप्तायाः॥ न चैवमत्र धर्मधर्म्यभेदविवक्षया मञ्जीरस्यैव निनदोपमानतास्वीकारे उष्ट्रमुख इत्यादावपि तद्विवक्षयोष्ट्रादेरुपमानत्वं स्यादिति वाच्यम्। तथाविवक्षायामिष्टत्वात्।

स्तथोक्ते इति बहुव्रीहिगर्भितबहुव्रीहिः । 'मञ्जीरो नूपुरोऽस्त्रियाम् ।' 'प्रतिमा प्रतियातना प्रतिच्छाया' इति चामरः ॥ **तस्मिन्** पूर्वं यदृच्छया दृष्टे राजहंसे । स्पन्दः किंचिच्चलनं 'स्पदि किंचिच्चलने' घञ्, निवृत्तस्स्पन्दो यस्यास्सा निस्पन्दा न्यस्ता निक्षिप्ता निस्पन्दा अत्यन्तनिश्चला, दृष्टिर्येन स तथोक्तस्सन् । प्राणप्रेयसीस्मारकत्वादिति भावः । निष्पन्देति षत्वसहितपाठस्तु लेखकप्रमादकृतः अषोपदेशत्वेन षत्वाप्राप्तेः षत्वविधायकेषु 'उपसर्गात्सुनोति' इत्यादिषु सूत्रेषु स्पन्दतेः क्वाप्यपरिगणनाच्च । अथ यदि षत्वसहितपाठ एव प्रामाणिक इत्यभिमानः तदा

---

परं तु—धर्मधर्म्यभेदाद्यविवक्षया उष्ट्रमुखस्यैव यदोपमानत्वं विवक्ष्यते तदानीमपि उष्ट्रमुख इत्यादिप्रयोगसाधुतामाकलयता वार्तिककृता सप्तम्युपमानेत्यादि वार्तिकं तत्साधुतोपपत्तये समारब्धमिति न तद्वैयर्थ्यमाशङ्कनीयम् । उष्ट्रमुख इत्यादेरुपमानलुप्तोदाहरणताऽपि तद्वार्तिकविषयत्व एव । अत एव काव्यप्रकाशे— "मृगनयना हरते मुनेर्मनः' इति त्रिलुप्तामुदाहृत्य 'अत्र सप्तम्युपमान' इत्यादिना यदा समासलोपौ भवतः तदेदमुदाहरणम्" इति व्यवस्थापितम् । क्वचित्तु ईदृशस्थलेषु धर्मिवाचकपदस्य धर्मपर्यन्ततावर्णनं केषांचित्पर्यवसितार्थतात्पर्यकमेव ध्येयम् । उक्तरीत्या धर्मिणोपि धर्मोपमानत्वसम्भवात् ॥ अत एव—गजेन तुल्यगमन इत्यादौ उपमानलुप्ता नाश्रीयते आलङ्कारिकैः काव्यप्रकाशकारादिभिः ॥ किं बहुना—'तेन तुल्यम्' इत्यनुशिष्टवतिप्रत्ययस्थलेऽपि उपमानलुप्ता नैवाश्रिता तैः ।

हेमाचलवदौन्नत्ये गाम्भीर्ये क्षीरसिन्धुवत् ।
प्रतापे भानुवद्भाति वीररुद्रनरेश्वरः ॥

इत्यादौ तद्धितगायाः पूर्णोपमाया एवोदाहरणात् विद्यानाथादिभिः ॥ तस्मादीदृशस्थलेषु मञ्जीरादिपदानि यथाश्रुतार्थकान्येवेत्यालंङ्कारिकाणां सिद्धान्त इति दिक् ॥

सुषामादेराकृतिगणत्वेन कथंचिन्निर्वाह्यः । वस्तुतस्त्वत्र नाद्रियन्ते षत्वं प्रामाणिकाः । तथा च वामनः—'निष्पन्द इति षत्वं चिन्त्यं लक्षणादर्शनात्' इति । लक्षणं शास्त्रं तददर्शनादिति तदर्थः । अत एव तन्मयस्तत्प्रचुरः आत्मा मनो यस्य स तथोक्तस्सन् तदेकायत्तचित्तस्सान्नित्यर्थः । 'आत्मा यत्नधृतिस्वान्तस्वभावपरमात्मसु । जीवबुद्धिशरीरेषु' इति रत्नमाला । मुहूर्तं घटिकाद्वयात्मकं अल्पपरिमाणं वा कालम् । 'मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति शब्दार्णवे । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । चेतसः चित्तस्य विलयं 'मूर्छा त्वाभ्यन्तरेऽवृत्तिर्बाह्येन्द्रियनिमीलनात्' इति लक्षणलक्षितां मूर्च्छामित्यर्थः । 'बाह्येन्द्रियाणां चक्षुरादीनां निमीलनं स्वस्वविषयग्रहणाभावः अत एवाभ्यन्तरे अवृत्तिः शून्यान्तःकरणमित्यर्थः' इति रत्नापणे । अगमत् । 'गम्लृ गतौ' इत्यस्माद्धातोः लुङि लृदित्त्वात् 'पुषादिद्युतादिलृदितः परस्मैपदेषु' इति च्लेरङ् । एषा च 'दृङ्मनस्सङ्गे' इत्याद्युक्तासु मान्मथीष्ववस्थासु मूर्छा नामावस्था । कथमीदृशी वीरस्याप्यवस्थेत्यत्राह—**शङ्के इति** ॥ शङ्के इत्येतत् जाने मन्ये इति वद्वाक्योपन्यासेऽव्ययमित्येके । वक्ष्यमाणवाक्यार्थकर्मकमाख्यातमेवेत्यन्ये । प्रथमपक्षे शङ्के इत्यस्य तथाहीत्यर्थः । **समये** प्राप्तेऽवसर इत्यर्थः । [1]मीन. केतोः कन्दर्पस्य 'प्रद्युम्नो मीनकेतनः' इत्यमरः । **शासनं** आज्ञा

[1] मीनकेतोः कन्दर्पस्येति रसास्वादिनी ॥ यत्तु—मीनकेतोरित्यत्र

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

इत्युक्तेर्मीनशब्दात्प्रतिकृतौ कनो लोप इति—तन्न, गरुडध्वजकपिध्वजादि·

निग्रहो वा । 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु' इति मेदिनी। 'शासनं निष्करग्रामे निग्रहे वेदशास्त्रयोः । वाङ्नियोगे प्रहरणे स्याल्लेखे कर्मवाक्ययोः' इति रत्नमाला च । तीव्रं दारुणं भवति अप्रती कारं भवतीति यावत् । 'समय एव करोति बलाबलम्' इति न्यायेन वीरस्यापि दाशरथेस्सीताविश्लेषविक्लबत्वेन कुसुमायुधस्यैव बलीयस्तया विजृम्भणादीदृगवस्था प्राप्तेति भावः । 'तीव्रः कटु भृशोष्णयोः' इति रत्नमाला । द्वितीयपक्षे तु समये मीनकेतोश्शासनं तीव्रं भवतीति शङ्के इति योजना । शङ्के संभावये इत्यर्थः ।

अत्र सीतागत्यादीन्प्रति प्रसिद्धोपमानानां हंसगमनादीनामुपमेयभावकल्पनेन प्रतीपालङ्कारत्रयम् । 'प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम्' इति लक्षणात् । तत्र सीतागतिमनुगत इत्यत्रानुक्तमान्द्यादिधर्मा वाक्यगा आर्थी तद्दुकूलाङ्कमूर्ताविंत्यत्रानुक्तधर्मा आर्थी समासगा प्राथमिकव्याख्यापक्षे । द्वितीयव्याख्यानपक्षे तु अनुक्तधर्मवाचकोपमाना समासगा । तन्मञ्जीरप्रतिमनिनदेत्यत्रानुपात्तरामणीयकादिधर्मा आर्थी समासगोपमेति वैलक्षण्यं बोध्यम् । एतेषां त्रयाणामन्योन्यनैरपेक्ष्येण स्फुटा-

वद्वस्तुतो मीनस्यैवात्र ध्वजत्वे बाधकविरहेण प्रतिकूलस्यार्थस्वीकारासंगतेः । मीनः मत्स्यः केतुर्ध्वजो यस्येति स्वकृतव्याख्ययैव व्याघाताच्च ॥ 'पूज्यप्रतिमाचित्रनटध्वजप्रतिमासु शिवाद्यभेदबुद्धिरेव न त्विवार्थप्रतीतिरिति न तत्र कन्प्रत्ययः' इति मञ्जूषाविरोधाच्च ॥ न च गरुडध्वजादिपदेऽपि कन्प्रत्ययलोपश्शङ्कनीयः । बहुतरप्रमाणव्याकोपात् । 'दासस्सखा वाहनमासनं ध्वजः' 'लङ्कादहनवानरध्वजः' इत्याद्याचार्यसूक्तिविरोधाच्च ॥

वगम्यमानभेदत्वात्सजातीयसंसृष्टिः। तल्लक्षणमुक्तं विद्यानाथेन—'तिलतण्डुलसंश्लेषन्यायाद्यत्रपरस्परम्। संश्लिष्येयुरलङ्कारास्सा संसृष्टिर्निगद्यते' इति। सीतागत्यनुगतत्वादीनां विशेषणगत्या निस्पन्ददृष्टिन्यसनलक्षणपदार्थं प्रति हेतुत्वात्काव्यलिङ्गभेदः 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमलङ्कृतिः' इति लक्षणात्। तस्य तन्मयात्मत्वं प्रति तस्य च चेतोविलयप्राप्तिं प्रत्युक्तरीत्या हेतुत्वादपरे द्वे काव्यलिङ्गे। [1]चेतोविलयरूपविशेषस्य शङ्क इत्यादिसामान्येन समर्थनादर्थान्तरन्यासालङ्कारः। 'उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयोः' इति लक्षणात्। तत्र प्राथमिककाव्यलिङ्गस्य निरुक्तसंसृष्टप्रतीपमुखप्रोक्षितया विजातीयाङ्गाङ्गिभावसंकरः। अन्ययोः काव्यलिङ्गयोस्तु क्रमेण पूर्वपूर्वसापेक्षत्वात्सजातीयाङ्गाङ्गिभावसंकर इति दिक्। संकरलक्षणं तु—'क्षीरनीरनयाद्यत्र संबन्धस्स्यात्परस्परम्। अलङ्कृतीनामेतासां संकरस्स उदाहृतः' इति। प्रतीपालङ्कारत्रयेण सीतासंबन्धिगत्यादि स्मरणपूर्वकं तत् स्मरणप्रतीतेः स्मरणालङ्कारो व्यज्यत इत्यलङ्कारैरलङ्कारध्वनिः। 'सदृशानुभ-

---

[1]चेतोविलयरूपविशेषस्य शङ्क इत्यादिसामान्येन समर्थनादर्थान्तरन्यासालङ्कार इति रसास्वादिनी॥ अयं भावः—वीरोपि मुहूर्तं तन्मयात्मा चेतोविलयमगमदित्यनेन विशेषपरेण तादृशचेतोविलयकारणे भगवद्दाशरथिकर्मकमीनकेतुकर्तृकशासने प्रकृते तीव्रत्वं गम्यते। तच्च तीव्रत्वं विशेषरूपं मीनकेतुकर्तृकशासनसामान्यगततीव्रत्वरूपसामान्येन समर्थ्यत इति मीनकेतुकर्तृकशासनसामान्यं समये तीव्रं भवति। अधुना च दाशरथिविषये कृतं मीनकेतोरिदं शासनमपि तीव्रम्। अत एव वीरो दाशरथिः चेतोविलयं मुहूर्तमगमदिति हि वाक्यार्थः। यथा—

वादन्यस्मृतिः स्मरणमुच्यते' इति लक्षणात् । उक्तेन वाक्यार्थेन दाशरथेर्जानकीविषयकः प्रेमा निरवधिक इति प्रतीतेर्वस्तुना वस्तु-ध्वनिः । किंच—सीतागमनादितुल्यगमनादिके राजहंसे निस्पन्ददृष्टि-न्यसनेन चेतोविलयगमनेन चानुभावेन स्तम्भप्रलयौ सात्त्विकभावौ व्यज्येते । 'स्तम्भो रागादिसंभूतं निष्क्रियाङ्गत्वमुच्यते । प्रल-यस्सुखदुःखाद्यैरन्तरिन्द्रियमूर्छनम्' इति तल्लक्षणे । आभ्यामेव स्मृत्यालस्यमोहजाड्याख्यास्संचारिणोऽपि व्यज्यन्ते । 'स्मृतिः पूर्वा-नुभूतार्थविषयं ज्ञानमुच्यते । क्रियासु मान्द्यमालस्यं सुखदुःखमदा-दिभिः ॥ मोहस्तु मूर्छनं भीतिदुःखावेशादिचिन्तनैः । जाड्य-मप्रतिपत्तिस्स्यादिष्टानिष्टागमादिभिः' इति क्रमात्तल्लक्षणानि ॥ एतैः सीताविषयकरामचन्द्रगतरतिभावस्य स्थायिनः परिपोषणादसंलक्ष्य-क्रमो विप्रलम्भशृङ्गाररसो व्यज्यते ॥ असंलक्ष्यक्रमव्यङ्ग्यस्तु रसा-दिध्वनिर्भवति । तदुक्तं शृङ्गारतिलके—'रसभावतदाभासभावशान्त्या-

---

हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥

इत्यादौ महात्मनां सर्वं सुकरम् । इदं चाब्धितरणं सर्वान्तर्गतं महात्मविशे-षस्य हनूमतस्सुकरं ; अत एव तदब्धितरणं हनूमानकरोदिति वाक्यार्थः । यत्तु—

भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ।
पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥

इत्यत्रेव विश्वव्यापिना सामान्येन वीरश्चितोविलयमगमादिति विशेषसमर्थनादर्थान्तर-न्यास इति—तन्न. दृष्टान्ते नियत्यनतिलङ्घ्यत्वस्य सामान्यस्य विश्वव्यापित्वसंभवे-ऽपि दार्ष्टान्तिके प्रकृते मीनकेतुकर्तृकशासनतीव्रत्वरूपसामान्यस्य विश्वव्यापित्वासं-भवात् ॥ ३ ॥

दिरक्रमः । भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः' इति । एवमत्र वस्त्वलङ्काररसभेदाभिदुरस्त्रिविधो ध्वनिरप्यनुसन्धेयस्सहृदयशिरोमणिभिरित्यलं बहुना ॥ ३ ॥

अथ कथंचित्पर्यवस्थापितात्मनस्तावत्सन्देशेन जानकीं जीवयिष्यतो दाशरथेस्संदेशहरत्वेनाभिमतं राजहंसमुद्दिश्य सपर्याचर्यामाह—

**लब्धाश्वासः कथमपि तदा लक्ष्मणस्याग्रजन्मा**
**संदेशेन प्रणयमहता मैथिलीं जीवयिष्यन् ।**
**चक्रे तस्मै सरसिजदलैस्सोपचारां सपर्यां**
**कान्ताश्लेषादधिकसुभगः कामिनां दूतलाभः ॥**

**लब्धेति** ॥ **तदा** तस्मिन्काले, लक्ष्मीरस्यास्तीति लक्ष्मणः पामादिगणपठितेन 'लक्ष्म्या अच्च' इत्यनेन मत्वर्थीये नप्रत्यये लक्ष्मीशब्देकारस्य अत्, 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वम् । अनेन 'अहं सर्वं करिष्यामि जाग्रतस्स्वपतश्च ते' इत्याद्युक्तप्रकारेण सर्वदेशसर्वकालसर्वावस्थोचिताशेषशेषतैकरतिरूपलक्ष्मीवत्त्वमुक्तम् । अत एवोक्तं ते—'लक्ष्मणो लक्ष्मिसंपन्नः' इति । तस्य सौमित्रेरित्यर्थः। अग्रे जन्म यस्य सः **अग्रजन्मा** । 'सप्तमी विशेषणे बहुव्रीहौ' इत्यनुशासनेन बहुव्रीहौ सप्तम्यन्तपदस्य पूर्वनिपातः। एतेन व्यधिकरणबहुव्रीहिदोषसंभावनाया नावकाशः । वामनेनापि सूत्रितं 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे' इति ॥ **कथमपि** महीयसा प्रयत्नेनेत्यर्थः । लब्धः प्राप्तः

आश्वासः चित्तसमाधानं येन सः तथाभूतस्सन् । लक्ष्मणस्याग्रजन्मा-लब्धाश्वास इत्यनेन 'नष्टायामपि वैदेह्यां हृतायामपि चानघ । शोचितुं नार्हसे वीर यथाऽन्यः प्राकृतस्तथा ॥ त्वद्विधा न हि शोचन्ति सततं समदर्शनाः । सुमहत्स्वपि कृच्छ्रेषु राम निर्विण्णदर्शनाः ॥ तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय । बुद्ध्या युक्ता महाप्राज्ञ विजानन्ति शुभाशुभे ॥ मामेव हि पुरा राम त्वमेव बहुशोऽन्वशाः । अनुशिष्याद्धि को नु त्वामपि साक्षाद्बृहस्पतिः ॥ बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया । शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥' इत्याद्युक्तरीत्या बहुधा पूर्वं लक्ष्मणेन समाश्वासितत्वं द्योतयता इदानीमपि तदाश्वासितत्वं वा, तयैव वासनया स्वयमेव कथंचिदधिगताश्वासत्वं वा द्योत्यते । प्रणयेन प्रेम्णा महता पूज्येन बहुमाननीयेनेत्यर्थः । मह्यते पूज्यत इति महान् । 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इति निपातनात्साधुः । न हि प्रणयविधुरस्संदेशो गरीयानपि रोचेत प्रेयसीचेतसे निर्व्यञ्जन इव स्वादीयानप्योदन इति भावः । तदेतदुक्तम्—'प्रेमपूर्वं तु वाङ्मात्रमपि ता बहु मन्वते । अन्यथा नैव राज्यं वा ललनाः प्रेमजीविताः' इति । 'प्रणयस्स्यात्परिचये विस्रम्भे प्रेमयाच्ञयोः' इति रत्नमाला । **संदेशेन** स्ववार्ताप्रेषणेन । अयं च 'भावं मनोगतं साक्षात्स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः । ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसंभवाः' इति कथितेषु चतुर्विधेष्वनुभावेषु 'आलापश्च विलापश्च संलापश्च

प्रलापकः। अनुलापापलापौ च संदेशश्चातिदेशकः ॥ निर्देशश्चापदेशश्चोपदेशो व्यपदेशकः। एवं द्वादशधा प्रोक्तो वागारम्भो विचक्षणैः ॥' इत्युक्तस्य द्वादशभेदभिदुरस्य वागारम्भानुभावस्यावान्तरविशेष इति ध्येयम्॥ तल्लक्षणं तु—'संदेशस्तु प्रोषितस्य स्ववार्ताप्रेषणं भवेत्' इति। अत एवास्य प्रबन्धस्य संदेशसंज्ञेत्यग्रे वक्ष्यते। मैथिलस्यापत्यं स्त्री मैथिली तां। 'तस्यापत्यम्' इत्यर्थे अत इञि 'इतो मनुष्यजातेः' इति ङीष्। **जीवयिष्यन्** प्राणयिष्यन्। अयं भावः—सर्वावस्थानुगतेन 'भावज्ञेन कृतज्ञेन धर्मज्ञेन महात्मना। त्वया लक्ष्मण नाथेन न संवृत्तः पिता मम' इत्यादिना पितृतुल्ययोगक्षेमतया स्वेनैव बहुधा प्रशस्तेन प्राणेभ्योऽपि गरीयसा भ्रात्रा 'संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम। नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम् ॥ स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने। अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्राऽपि दह्यते ॥ स्वास्थ्यं भद्रं भजत्वार्यस्त्यज्यतां कृपणा मतिः। अर्थो विनष्टकार्यार्थैर्नायत्नेनाधिगम्यते ॥ उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम्। सोत्साहस्यास्ति लोकेऽस्मिन्न किंचिदपि दुर्लभम् ॥ उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु। उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम् ॥ त्यज्यतां कामवृत्तत्वं शोकं संन्यस्य पृष्ठतः। महात्मानं कृतात्मानमात्मानं किं न बुद्ध्यसे ॥' इत्यादिसान्त्ववचनैरसमाश्वासितस्याप्यनुपदं ममैव गतिरीदृशी सा तु निसर्गतो भीरुरपश्यन्ती कमपि सन्निहितं प्रियं जनं प्रत्युत निसर्गनिष्ठुराभिर्निशाचरीभिरनुनिमिषमपि 'इमां हरिणलोलाक्षीं त्रासोत्कम्पिपयोधराम्।

रावणेन हृतां दृष्ट्वा दौहृदो मे महानभूत् ॥ यकृत् प्लीहमथोत्पीडं हृदयं च सबन्धनम्। आन्त्राण्यपि च शीर्षं च खादेयमिति मे मतिः ॥ कण्ठमस्या नृशंसायाः पीडयाम किमास्यते' इत्यादिभिर्घोरतमैर्वचनैस्संभर्त्स्यमाना स्वगणेन हीना श्वगणाभिवृतेव मृगी त्रासोत्फुल्ललोचना 'गते हि हरिशार्दूल पुनरागमनाय तु। प्राणानामपि संदेहो मम स्यान्नात्र संशयः' इति हनूमत्प्रत्यावर्तनावसर एव निवेदितवती स्वामवस्थां इदानीं पुनर्मत्प्रवृत्त्यपरिज्ञाने न जाने कां नु नाम भजेत वाऽवस्थां ; या हि 'तावत्त्वहं वीर जिजीविषेयं यावत्प्रवृत्तिं शृणुयां प्रियस्य।' इति मदुदन्तानुपलम्भे न जीविष्याम्येवेति संदिदेश हनुमन्मुखेन । तदवश्यमप्रमादेनैव तावत्संदेशेन जीवनीयेति तदर्थमुद्युञ्जानः—इति। अत एव **तस्मै** राजहंसाय, **सरसिजदलैः** कमलपलाशैः तस्य तत्प्रियत्वादिति भावः। उपचारैस्सह वर्तत इति सोपचारा तां तथोक्ताम्। 'तेन सहेति तुल्ययोगे' इत्यनेन बहुव्रीहौ 'वोपसर्जनस्य' इति सहशब्दस्य सभावः। यथास्पृहं सादरसत्कार उपचारः। **सपर्यां** पूजां 'पूजा नमस्याऽपचितिस्सपर्याऽर्चाऽर्हणास्समाः' इत्यमरः। **चक्रे** विदधे। अनेन राजहंसेन प्रेयसीं प्रति संदेशः प्रापणीय इत्यभिप्रायेण तं पुरस्करोतिस्मेत्यर्थः । ननु—'वासोऽङ्गरागाभरणमालाशय्यासनादिषु । यत्रयत्र स्पृहा तत्तद्देशकालानुरूपतः ॥ अत्यादरेण सत्कार उपचार इतीर्यते' इत्युक्तलक्षणोपचारसहिता 'पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा । पूज्या लालयितव्याश्च बहुक-

ल्याणमीप्सुभिः' इति मनूक्तप्रकारा पूजा प्रेयसीविषयोचिता कथमिव कस्मिंश्चित्पतत्रिमात्रे प्रयुक्तेत्यत्राह—कान्तेति। **कामिनां** अतिशयितकामानां दूतस्य संदेशहरस्य लाभः प्राप्तिः। 'स्यात्संदेशहरो दूतः' इत्यमरः। कान्तायाः कमनीयायाः न तु स्त्रीमात्रस्येति भावः। 'विशेषास्त्वङ्गना भीरुः' इत्युपक्रम्य 'प्रमदा मानिनी कान्ता' इति स्त्रीविशेषवाचिष्वमरः। आश्लेषात् परिरम्भात् 'आलिङ्गनमुपगूहनमाहुः परिरम्भणं परिष्वङ्गम्। आश्लेषमङ्कपाळीं क्रोडीकरणं च तुल्यार्थम्' इति हलायुधः। **अधिकसुभगः** अधिकसौभाग्यवान्खलु। निरतिशयानन्दावह इति भावः। अधिकं सुभगोऽधिकसुभग इति समासः। अधिकमित्यस्य सुभगत्वविशेषणतया विस्पष्टपटुरित्यादाविवावयवद्वारकं सामर्थ्यं बोध्यम्। अत्र च 'विस्पष्टादीनि गुणवचनेषु' इत्येतद्गमकम्। तत्र हि 'विस्पष्टमित्यादिपटुत्वादिविशेषणम्' इति कैयटे स्पष्टम्। 'महाकविर्महोदारः' इत्यादयः प्रयोगा एवमेव शब्दविद्भिर्निर्व्यूढाः। आश्लेषादित्यत्र 'यस्मादधिकम्' इति सौत्रनिर्देशेनाधिकशब्दयोगात्पञ्चमी। अत्युद्वेलकामानां संदेशहरस्य यस्य कस्यचिल्लाभोऽपि निरन्तरकान्तासंभोगवृत्तान्तामृतास्वादमेदुरीकरणैकताननतयाऽतिवेलसंमोहावहत्वेन 'तद्यथा प्रियया स्त्रिया परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति विगलितवेद्यान्तरानन्दावहतया श्रूयमाणात्साक्षात्कान्तापरिष्वङ्गादप्यतिशयितं सौभाग्यं पुष्णातीत्यतो दूतत्वेन नियोक्ष्यमाणे तिर्यङ्मात्रेऽपि तस्मिन् सोपचारा युक्तैव सपर्येति भावः॥

अत्र लक्ष्मणस्याग्रजन्मेत्यस्य विशेष्यस्य बहुधा तदाश्वासितत्वाद्यभिप्रायगर्भत्वात्परिकराङ्कुरः 'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः' इति लक्षणात् । मैथिलीं जीवयिष्यन्नित्यस्य हंसाभ्यर्हणं प्रति हेतुत्वात्काव्यलिङ्गमित्येते संसृज्येते ।[1] हंसाभ्यर्हणरूपविशेषस्य कान्ताऽऽश्लेषादित्यादिसामान्येन समर्थनादर्थान्तरन्यासश्च । किंच—संदेशप्रवृत्त्यादिभिरनुभावैस्तदभिव्यङ्ग्यैश्शङ्कात्रासावेगादिभिस्संचारिभिश्च परिपोषितत्वेन रसतया परिणममानाया रामगतायास्सीताविषयकरतेस्स्थायिभावस्य तद्गतराजहंसविषयकभावं प्रत्यङ्गत्वात् 'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदास्स्मृताः' इत्युक्तेषु गुणीभूतव्यङ्ग्येषु रसवन्नामापराङ्गव्यङ्ग्यभेदः 'रसे रसाङ्गे भावाङ्गेऽप्येषु स्याद्रसवद्द्विधा' इति लक्षणात् । इममेव रसवदलङ्कार इत्याचक्षते ॥ अत एवेदं पद्यं मध्यमकाव्यम् । तदुक्तं काव्यदर्पणे—'काव्यं तु मध्यमं व्यङ्ग्ये वाच्यादनतिशायिनि । एतदेव गुणीभूतव्यङ्ग्यमित्युच्यते बुधैः'

---

[1] हंसाभ्यर्हणरूपविशेषस्य कान्ताऽऽश्लेषादिति सामान्येन समर्थनादर्थान्तरन्यास इति रसास्वादिनी । चक्रे इत्यादिना सन्देशहरहंसलाभस्य वैदेहीलाभाधिकसुभगत्वमाक्षिप्यते । तद्रूपस्य विशेषस्य सन्देशहरलाभगतकान्ताऽऽश्लेषाधिकसुभगत्वरूपसामान्येन समर्थनमत्र क्रियते । कामिनां दूतलाभः कान्ताऽऽश्लेषाधिकसुभगः । अयं च कामिनो दाशरथेः हंसरूपदूतलाभः वैदेहीसमाश्लेषाधिकसुभगः । अत एव कामी सः तदभ्यर्हणं कृतवानिति हि वाक्यार्थ इति भावः ॥

इति ॥ अत्र सपर्याचर्यादिभिरनुभावैरभिव्यज्यमाना रामचन्द्रगता रतिरेव भाव इत्युच्यते, 'मध्ये केचिद्वयमिह सखे' इति वक्ष्यमाणत्वात्सुग्रीवादिवन्मित्रतया संभावितं हंसं विषयीकृत्य प्रवृत्तत्वात् । तथाचोक्तं काव्यदर्पणे—'रतिर्देवादिविषया व्यञ्जिता भाव उच्यते' इति । 'आदिशब्देन मुनिपुत्रगुरुमित्रादयो गृह्यन्ते' इति तद्व्याख्यानम् । [1]यद्वा—उन्मादवशेन तिर्यग्विषयतयाऽनौचित्यप्रवृत्तत्वादयं भावाभासः । तदप्युक्तं तत्रैव—'भावाभासस्तु भावानामनौचित्यप्रवर्तने' इति । न चास्मिन्पक्षे विप्रलम्भशृङ्गारस्य भावाभासाङ्गतया ऊर्जस्विनामापराङ्गव्यङ्ग्यं स्यादिति भ्रमितव्यम् । रसाभासभावाभासान्यतरस्य भावाङ्गतायामेव हि तदवतारः न तु रस-

[1]यद्वा—वियोगज उन्मादाख्यस्संचारिभाव एवायं साक्षान्निर्दिश्यत इति रसास्वादिनी । एतेन संचारिभावध्वनेर्नायं विषयः संचारिभावस्येह स्वपदेन साक्षान्निर्देशादिति सूचितम् । न च व्यभिचारिभावस्य स्वपदेनोपादानमत्र दोष इति शङ्क्यम् । तस्य प्राधान्येनास्वाद्यतायामेव तद्दोषप्रसरस्य काव्यप्रकाशव्याख्याकारादिभिर्विवृतत्वात् । अत्र तु 'दूरादुत्सुकमागते' इत्यादावौत्सुक्याद्यभिव्यक्तरसस्येव उन्मादादिभिरभिव्यक्तस्य विप्रलम्भशृङ्गारस्य हंसविषयकभावाङ्गतया आस्वाद्यताया विवक्षितत्वात् तद्दोषाप्रसरात् । अत एव रसवन्नामापराङ्गव्यङ्ग्यमाचार्यैरत्र वर्णितम् ॥ यत्तु अनुभावमुखेन प्रकाशनं यत्र नोचितं तत्र न दोषः । प्रकृते तिर्यगालापमात्रेणोन्मादप्रकाशने तिर्यगालापादेरत्यन्ताज्ञानादिसाधारणतया झडित्युन्मादप्रतीतिर्न स्यादिति तथा न कृतं, इति तद्दोषसमाधानं—तन्न. भगवद्दाशरथिरूपवक्तृवैशिष्ट्यादित एव अत्यन्ताज्ञानादिसाधारण्यशङ्काया अत्रानवतारात् तिर्यगालापाद्यनुभावमुखेनैव उन्मादाभिव्यञ्जनसंभवात् । विश्लेषेत्याद्यर्थान्तरन्यासोपीह नत्साधारण्यशङ्कां वारयति निबद्ध इत्यपि बोद्धव्यम् ॥४॥

भावयोर्भावाभासाङ्गतायामपि ॥ तदप्युक्तं तत्रैव—' रसाभासोऽथवा भावाभासो भावाङ्गतां यदि । अश्नुवीत तदोर्जस्वि नाम स्यादपराङ्गकम् ॥ ' इत्यलं प्रपञ्चेन ॥ ४ ॥

अथ राजहंसविषये रामस्य याच्ञाप्रवृत्तिप्रकारमाह—

**कृत्वा तस्मिन्बहुमतिमसौ भूयसीमाञ्जनेयात्**
**गाढोन्मादः प्रणयपदवीं प्राप वार्ताऽनभिज्ञे[1]।**
**विश्लेषेण क्षुभितमनसां मेघशैलद्रुमादौ**
**याच्ञादैन्यं भवति किमुत क्वापि संवेदनार्हे ॥**

---

[1]वार्ताऽनभिज्ञ इति मूलम् ॥ वार्ताऽनभिज्ञत्वं चात्र कव्यभिमतं न तु संदेशकर्तृदाशरथ्यभिमतम् । अतो न भगवतस्संदेशप्रवृत्त्यनुपपत्तिरित्यवधेयम् ॥ यत्तु—यद्यपि 'प्रागप्येवं परिणतगुणां नैषधे वीक्ष्य वार्ताम् ' इति वक्ष्यमाणेन वार्तानभिज्ञत्वोक्तेर्विरोध इव दृश्यते इत्याशङ्कनम्—तन्न, दूत्यनियोजनादिना समनन्तरश्लोकादौ वक्ष्यमाणेनापि विरोधशङ्कायास्संभवेन सन्देशोपसंहारपद्यपर्यन्तानुधावनासङ्गतेः ॥ यदपि—तथाऽप्यत्र कवेरुक्तया नलसन्दिष्टहंसादन्यस्य प्राकृतहंसस्य विषयत्वेन च न विरोधः । रामभद्रस्य उन्मादावस्थया तस्यैव हंसस्य विश्वमूर्तिवंशजत्वं ब्रह्मौपवाह्यत्वं नलसन्दिष्टत्वं च कथ्यमानं संगच्छत इति बोध्यमिति समाधानम्—तदपि न—' प्रागप्येवं परिणतगुणां नैषधे वीक्ष्य वार्तामार्तत्राणं व्रतमिति विदुर्हंसशुद्धात्मनां वः । ' इत्यस्मिन् रामभद्रवचनेऽपि प्रकृतहंसस्य नलसंदिष्टहंसादन्यत्वस्यैव व इति बहुवचनेनावगमात् ॥ विश्वमूर्तिवंशजत्वब्रह्मौपवाह्यत्वयोरपि ' यैः कृतस्सर्वभक्षोऽग्निरपेयश्च महोदधिः । क्षयी चाप्यायितस्सोमः को न नश्येत्प्रकोप्य तान् ॥ ' इत्यादाविव सामान्याभिप्रायेण स्तुतये निर्देशोपपत्तेर्न तत्कथनस्योन्मादावस्थैकान्तिकत्वं युक्तमाश्रयितुमिति दिक् ॥

**कृत्वेति** ॥ असौ श्रीरघुनन्दनः गाढः तीव्रः उन्मस्तक इति यावत् ॥ उन्मादश्चित्तविभ्रमो यस्य स तथोक्तस्सन् 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च । क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां भेद्यगामि यत् ॥' 'उन्मादश्चित्तविभ्रमः' इति चामरः । अनेन 'दृङ्मनस्सङ्ग' इत्याद्युक्तासु मन्मथावस्थासून्मादाख्याऽवस्थोक्ता । तल्लक्षणमुक्तं विद्यानाथेन—'उन्मादस्तुल्यवृत्तित्वं चेतनाचेतनेष्वपि' इति । 'भयसंनिपातेष्टवियोगधननाशादिभिश्चित्तविभ्रान्तिरुन्माद इत्यर्थः' इति रत्नापणकृत् । यद्वा—वियोगज उन्मादाख्यस्संचारिभाव एवायं साक्षान्निर्दिश्यते । तल्लक्षणं तूक्तं भूपालेन—'उन्मादश्चित्तविभ्रान्तिर्वियोगादिष्टनाशतः । वियोगजे तु चेष्टास्सुचर्धावनं परिदेवनम् ॥ असंबद्धप्रलपनं शयनं सहसोत्थितिः । अचेतनैस्सहालापो निर्निमित्तस्मितादयः' इति ॥ ननु कथमुन्मादस्यावस्थात्वं संचारित्वं चेति चेत् स्थायिभावसहकारित्वेनोपाधिना संचारित्वं रसास्वादनिमित्तेनोपाधिनाऽवस्थात्वं चेति ध्येयम् ॥ एतच्च रत्नापणे स्पष्टम् । अत एव अभिजानातीत्यभिज्ञः । 'आतश्चोपसर्गे' इति कः । ततो नञ्तत्पुरुषे अनभिज्ञः वार्ताया अनभिज्ञः वार्ताऽनभिज्ञस्तथोक्ते । 'दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम्' इत्याद्युक्तसर्वशास्त्राभिज्ञत्वादिकं तावदास्तां दूरतः, न त्वाबालगोपालसाधारणं लोकवृत्तान्तमपि वक्तुं ज्ञातुं वा समर्थ इति भावः । **तस्मिन्** राजहंसे । अञ्जनाया अपत्यं आञ्जनेयः, तस्मात् तदपेक्षयेत्यर्थः । **भूयसीं** अतिशयेन बह्वीम् । बहुशब्दादीयसुनि 'बहोर्लोपो भू च

बहोः' इति बहुशब्दस्य भू इत्यादेशः, 'उगितश्च' इति ङीप्। **बहुमतिं** संमाननाम्। हनूमति यादृशी संमानना तदपेक्षयाऽतिमात्रमतिशयितामिति भावः। **कृत्वा** विधाय **प्रणयपदवीं** याच्ञासरणिं 'प्रणयस्सचात्परिचये विस्रम्भे प्रेमयाच्ञयोः' इति रत्नमाला॥ 'प्रणयः प्रश्रये प्रेम्णि याच्ञाविस्रम्भयोरपि' इति मेदिनी च॥ **प्राप** प्रेयसीं प्रति स्ववार्ताप्रापणाय याचितुं प्रवृत्त इत्यर्थः॥ 'प्रणयपदवीं प्रेमसरणिं प्राप' इति व्याख्यानं तु वक्ष्यमाणार्थान्तरन्यासाननुगुणत्वादसुन्दरम्॥ इदं खलून्मादसौभाग्यसाम्राज्यम्—यदिह—'अभिभाषस्व सौमित्रे सुग्रीवसचिवं कपिम्। वाक्यज्ञं मधुरैर्वाक्यैस्स्नेहयुक्तमरिंदम॥ नानृग्वेदविनीतस्य नायजुर्वेदधारिणः। नासामवेदविदुषश्शक्यमेवं प्रभाषितुम्॥ नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्। बहुव्याहरताऽनेन न किंचिदपशब्दितम्॥ न मुखे नेत्रयोर्वाऽपि ललाटे च भ्रुवोस्तथा। अन्येष्वपि च सर्वेषु दोषस्संविदितः क्वचित्॥ अविस्तरमसंदिग्धमविलम्बितमद्रुतम्। उरस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे॥ संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम्। उच्चारयति कल्याणीं वाचं हृदयहारिणीम्॥ अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया। कस्य नाराध्यते चित्तमुद्यतासेररेरपि॥ एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु। सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ॥ एवं गुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः। तस्य सिध्यन्ति सर्वार्था दूतवाक्यप्रचोदिताः' इत्यादिभूयसा स्वेनैव श्ला-

षिते हनूमति स्वसंदेशमादाय लङ्कां प्रति प्रस्थिते 'तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् । कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः' इत्युक्तरीत्याऽभिनन्दनमात्रं, प्रवृत्तिमुपलभ्य प्रत्यायातेऽपि तस्मिन् 'प्रीत्या च रममाणोऽथ राघवः परवीरहा । बहुमानेन महता हनूमन्तमवैक्षत' इति 'एष सर्वस्वभूतोऽस्तु परिष्वङ्गो हनूमतः । मया कालमिमं प्राप्य दत्तस्त्वस्य महात्मनः ॥ इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे । हनूमन्तं महात्मानं कृतकार्यमुपागतम्' इति चोक्तरीत्या सुहृज्जनसाधारणसबहुमानावलोकनालिङ्गनदानं चेत्येतावन्मात्रमेव निर्वर्तितम् । अस्मिंस्तु पामरवार्तामात्रस्याप्यनभिज्ञेऽत्यलसगमने अप्राप्तसंवासे अविज्ञातशीले अनिष्पादितकार्यनिर्वहणोचितप्रत्यये अगृहीतस्वहृदये अनभ्युपगतदूत्ये अज्ञातनामनि यतोजाते पतत्रिणि प्रेयसीजनतुल्यकक्ष्यतयाऽनितरसाधारणसोपचारसपर्याकरणपूर्वकं स्ववार्ताप्रापणाय याचितुमपि प्रवृत्तिरिति ॥ न खल्वेतदप्युपेयुषि परमां काष्ठामुन्माददौर्ललित्ये विस्मयस्थानमित्याह—विश्लेषेणेति ॥ **विश्लेषेण** कान्ताविप्रयोगेण क्षुभितं संचलितं अनवस्थितमित्यर्थः । 'क्षुभ संचलने' कर्तरि क्तः । तादृशं मनो येषां ते तथोक्तानां जनानां **मेघशैलद्रुमादौ** जलधरमहीधरमहीरुहादौ संवेदनाकथानभिज्ञ इति भावः । [1]याच्ञया अर्थनया दैन्यं दीनता 'याच्ञाभिक्षार्थनार्दना'

---

[1]याच्ञया अर्थनया दैन्यमिति—रसास्वादिनी ॥ यत्तु—याच्ञारूपं दैन्यमित्येव युक्तं प्रणयपदवीमित्यस्य विशेषस्यानुरोधादिति—तन्न—वार्ताऽनभिज्ञविष-

इत्यमरः । **भवति** यथा यक्षस्य मेघे 'धूमज्योतिस्सलिलमरुतां संनिपातः क्व मेघ स्संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः । इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥' इत्यादौ । यथा च शैलद्रुमादौ तस्यैव दाशरथेः 'कच्चित्क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी । रामा रम्ये वनोद्देशे मया विरहिता त्वया ॥ यदि ताळ त्वया दृष्टा पक्वतालफलस्तनी । कथयस्व वरारोहां कारुण्यं यदि ते मयि ॥' इत्यादौ । द्रुमादावित्यत्रादिशब्देन लतानद्यादीनां ग्रहणम् । संवेदनायास्सुखदुःखानुभवस्य अर्हे योग्ये 'संवेदो वेदना नना' इत्यमरः । **कापि** यथाकथंचिच्चेतनमात्र इत्यर्थः । **किमुत** याच्ञादैन्यं भवतीति किमु वक्तव्यमित्यर्थः । विरहविह्वलतयाऽत्या-

---

यकयाच्ञया पूर्वार्धवर्णितया तत्कार्यदैन्यस्याक्षिप्तस्य विशेषरूपस्य उत्तरार्धवर्णितेन सामान्येन विश्लेषक्षुभितमानसलोकव्यापियाच्ञाप्रयुक्तदैन्येन समर्थनोपपत्तेः । याच्ञया दैन्यमिति विग्रहपक्षेऽपि विशेषानुरोधाव्याघातात् । 'शङ्के तीव्रम्' 'कान्ताऽऽश्लेषात्' इत्यादावित्थमेव हि आक्षिप्तार्थमादायैव सामान्यविशेषभावस्समर्थनीयस्सर्वैरपि ॥ 'दौर्गत्यादेरनौजस्यं दैन्यं मलिनतादिकृत्' इति लक्षितस्यानौजस्यरूपदैन्यस्य याच्ञारूपत्वासम्भवोऽप्यत्र बोध्यः ॥ एतेनैव—मेघसंदेशे 'गुह्यकस्तं ययाचे' इत्युक्तस्य विशेषस्य 'कामार्ता हि प्रकृतिकृपणाः' इत्यनेन समर्थनं कृतम् । तस्मात् दैन्यविशेष एव याच्ञा – इत्यपि परास्तं वेदितव्यम् । तत्पद्येऽपि कृपणपदस्य याचकवाचकत्वविरहेण दीनवाचकतया मल्लिनाथविवृतत्वेन च तृतीयपादाक्षिप्तस्य दैन्यस्य विशेषरूपस्य तुरीयपादेन समर्थनमाश्रयणीयमित्यस्मन्मत एव तत्पद्यानुरूप्योपपत्तेश्च ॥ ५ ॥

रूढोन्मादानामचेतनेष्वपि याच्ञादैन्यप्रकाशनस्याविस्मयावहत्वे यत्र क्वचिच्चेतनमात्रे तत्प्रदर्शनं नतरां विस्मयनीयमिति भावः। अत्र गाढोन्माद इत्यस्य पदार्थस्य समर्हणपूर्वकहंसाविषयकयाच्ञाप्रवृत्तिरूपवाक्यार्थं प्रति हेतुतया काव्यलिङ्गभेदः। ईदृशविशेषस्य कैमुत्यन्यायगर्भेण सामान्येन समर्थनात्काव्यार्थापत्तिगर्भितोऽर्थान्तरन्यास इति सङ्करः। 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति काव्यार्थापत्तिलक्षणं पूर्वश्लोकवदेव रसवन्नामापराङ्गव्यङ्ग्यं च द्रष्टव्यम् ॥ ९ ॥

ननु कथं वार्तानभिज्ञस्य मम संदेशहरणयोग्यतेति हंसस्य तत्पराङ्मुखतां संभाव्य दूत्यमभ्युपगमयितुं 'दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम्। इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ अनुरक्तश्शुचिर्दक्षस्स्मृतिमान्देशकालवित्। वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥' इति मनूक्तदूतगुणवत्तामारोप्य दाशरथिना कृतां तत्प्रशंसामाह—

**वेदोदन्वद्विभजनविदो वंशजं विश्वमूर्तेः**
**आहुस्सिद्धाः कमलवसतेरौपवाह्यं भवन्तम्।**
**लब्धं येन प्रगुणगतिना तत्प्रियायास्सकाशात्**
**तत्सावर्ण्यं श्रवणरसनास्वादयोग्या सुधा च ॥**

वेदेति ॥ सिद्धाः योगिनः देवयोनिविशेषा वा 'सिद्धो ना व्यासादौ भेदे योगस्य देवयोनेश्च' इति मेदिनी ॥ वेदः उदन्वा-




निवेत्युपमितसमासः । न तु वेद एवोदन्वानिति मयूरव्यंसकादिसमासः । तथा सति तस्योत्तरपदार्थप्रधानतया उदन्वत एव विभजनकर्मता स्यात् न तु वेदस्य । तथा सति विवक्षितहानिस्स्यात् । न ह्यत्रोदन्वतो विभजनं विवक्षितं किं तु वेदस्यैव । एतेन—“वेद एव उदन्वान्” इति समासप्रदर्शनेन व्याख्यानमनुचितमेवेति ध्येयम् । ‘उदन्वानुदधौ च’ इति निपातनात्साधुः । तस्य विभजनं विभागः तं वेत्तीति वेदोदन्वद्विभजनवित् तस्य, विदेः क्विप् । यद्वा—वेत्तीति विदः । इगुपधलक्षणः कः । वेदोदन्वद्विभजनस्य विदः वेदोदन्वद्विभजनविदः । तं करोति वेदोदन्वद्विभजनविदयति । ततः क्विप् । चतुर्मुखाय वेदोदन्वद्विभागं दर्शितवानित्यर्थः । तस्य विश्वं सर्वं मूर्तिश्शरीरं यस्य स विश्वमूर्तिर्नारायणः तस्य । ‘यस्य पृथिवी शरीरम्’ इत्याद्यन्तर्यामिब्राह्मणं ‘सर्वं खल्विदं ब्रह्म’ इत्यादिश्रुतयः ‘जगत्सर्वं शरीरं ते’ इत्यादिस्मृतयश्चेहानुसंधेयाः । इह वेदोदन्वद्विभजनविद् इति विशेषणमखिलवेदविभजनस्य क्षीरनीरविभजनतौल्यं द्योतयत् भगवतो हंसरूपत्वमभिप्रैति ॥ अत्र ‘तस्मिंश्चतुर्मुखो ब्रह्मा संकल्पात्परमात्मनः । समष्टिस्सर्वलोकानामासील्लोकपितामहः ॥ स जातमात्रस्तत्रैव नान्यत्किंचिदवैक्षत । एकाकी स भयाविष्टो न किंचित्प्रत्यपद्यत ॥ शकुनिं ब्रह्मनामानं स तु हंसं हिरण्मयम् । आदित्यवर्चसं देवं प्रेरकं परमाद्भुतम् ॥ वरेण्यं भर्गसंज्ञं च धीतत्त्वस्य प्रचोदकम् । अपश्यदतितेजिष्ठमाविर्भूतं यदृच्छया’ इत्युपक्रम्य—‘स हंसरूपी भगवानोमित्युक्त्वा तिरोदधे’ इत्यादिब्रह्माण्डपुराणोक्ता हंसावतारकथा एतदुपबृंहिता ‘ततो ह जज्ञे भु-

वनस्य गोपाः हिरण्मयश्शकुनिर्ब्रह्मनाम। येन सूर्यस्तपति तेजसेद्धः पिता पुत्रेण मतिमान्योनियोनौ। नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं सांपराये' इत्यादिश्रुतिश्चानुसंधेया। वंशे जात इति वंशजः। 'सप्तम्यां जनेर्डः' इति डप्रत्ययः 'उपपदमतिङ्' इति समासः॥ अत्र वंशशब्दस्य नित्यसापेक्षत्वान्न समासानुपपत्तिः। तदुक्तं हरिणा—'संबन्धिशब्दस्सापेक्षो नित्यं सर्वस्समस्यते। वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' इति। विश्वमूर्तेर्वंशजमित्यनेन उदाहृतस्मृत्युक्तेषु दूतगुणेषु हंसस्य कुलीनत्वं सूचितम्। वेदोदन्वद्विभजनविद् इति कूटस्थविश्वमूर्तिविशेषणेन विवेचकत्वापरपर्यायं देशकालविभागवित्त्वं सर्वशास्त्रविशारदत्वं च व्यञ्जितम्। अनुवर्तन्ते हि कार्येषु कारणगुणाः। **भवन्तं** त्वां कमलं वसतिः उत्पत्तिस्थानं यस्य सः। 'वसती रात्रिवेश्मनोः' इत्यमरः। अनेन चतुर्मुखस्य भगवन्नाभीपद्मजन्यत्वमुक्तं 'पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि। प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितम्' इत्युत्तरश्रीरामायणे ब्रह्मोक्तेः॥ अत्र 'प्रजापतिः पुष्करपर्णे समभवत्' 'तस्य सुप्तस्य मे देवि नाभौ पद्मं व्यजायत' इति श्रुतिस्मृतिशतान्यनुसंधेयानि॥ तस्य चतुर्मुखस्य न तु यस्य कस्यचिदज्ञातनामधेयस्येति भावः। **औपवाह्यं** राजवाह्ययानमिति यावत्। 'राजवाह्यस्त्वौपवाह्यः' इति गजनामानुशासनप्रकरणेऽमरः। न तु सामान्यं यानमिति भावः। **आहुः** ब्रुवन्ति। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति ब्रूञो लट आहादेशे णलादौ च झेरुस्। भगवत इव गरुत्मन्तं ब्रह्मणो भवन्तमौपवाह्यं वदन्तीति भावः।

अनेन क्वचित्सत्कुलीनस्याप्यसत्संसर्गकृतमालिन्यमपि कस्यचित्स्यात्तव तु हंसरूपिणो भगवतो वंशजस्य तत्सूनुचतुर्मुखवाहनतावाप्त्या कुलानुरूपसत्सङ्गत्यादिवृत्त्याचरणमप्यस्तीति द्योतितम् । अत्र 'वयसः कर्मणोऽर्थस्य' इत्यादिमनुवचनं स्मर्तव्यम् । तेन 'सत्सङ्गाच्छुचितामियात्' इत्युक्तरीत्या शुचित्वं व्यञ्जितम् । किंच कमलवसतेरौपवाह्यामित्यनेन विविधभुवनसर्जनसाम्राज्यव्यग्रचतुर्मुखाजस्रसांनिध्यादिङ्गिताकारचेष्टज्ञत्वदक्षत्वादिकं द्योत्यते । पुनस्तमेव विशिनष्टि—लब्धमित्यादिना । [1]प्रकृष्टो गुणो मान्द्यरामणीयकादिर्यस्याः सा तथोक्ता ऋज्वी वा गतिर्गमनं यस्य तथोक्तेन 'ऋजावजिह्मप्रगुणौ' इत्यमरः ॥ पक्षे प्रकृष्टो गुणः प्रगुणः 'प्रादयो गताद्यर्थे प्रथमया' इति समासः ॥ गम्यत इति गतिः प्रगुणो गतिर्गम्यो यस्य सः प्रगुणगतिः, प्रगुणे गतिः प्राप्तिर्यस्येति वा तथोक्तेन उत्कृष्टपरगतगुणग्रहणशालिनेत्यर्थः । अने-

[1]प्रकृष्टो गुणो मान्द्यरामणीयकादिः यस्यास्सा ऋज्वी वा गतिर्गमनं यस्य पक्षे प्रकृष्टो गुणः गतिर्गम्यो यस्य सः....प्रगुणे गतिः प्राप्तिर्यस्येति वा तथोक्तेन उत्कृष्टपरगतगुणग्रहणशालिना । अनेनास्य वक्ष्यमाणसरस्वतीवर्णग्रहणयोग्यत्वं दर्शितम् । प्रगुणा गतिः ज्ञानं यस्येत्यप्यर्थो गम्यते ॥ अनेन वक्ष्यमाणमधुरवचनग्रहणक्षमत्वं दर्शितम्—इति रसास्वादिनी ॥ यत्तु—ईदृशीं व्युत्पत्तिमुपेक्ष्य 'पक्षे प्रकृष्टा गुणा ग्रहणादयः ग्रहणं धारणं चेत्युक्ताः यस्यास्तादृशी बुद्धिर्यस्य' इत्येवंविधव्युत्पत्तिमात्रस्य एतत्काव्यान्तिमश्लोके रसास्वादिनीप्रदर्शितस्य प्रदर्शनम्—तन्न बुद्धिमत्त्वस्य धावल्यरूपसावर्ण्यलाभे अनुपयुक्ततया अपुष्टार्थत्वदोषापत्तेः ॥

नास्य वक्ष्यमाणसरस्वतीवर्णग्रहणयोग्यत्वं द्योतितम् । प्रगुणा गतिः ज्ञानं यस्येत्यप्यर्थो गम्यते । अनेन वक्ष्यमाणमधुरवचनग्रहणक्षमत्वं द्योतितम् । 'गतिर्मार्गे दशायां च ज्ञाने पात्राभ्युपाययोः' इति विश्वः । **येन** राजहंसेन तस्य ब्रह्मणः प्रियायाः दयितायास्सरस्वत्याः "या कुन्देन्दुतुषारहारधवला" इत्याद्युक्तरीत्या प्रसन्नविशदवर्णाया वाचामधिदेवतायास्स्वेनानवरतमुपासितायाश्चेतिभावः। **सकाशात्** सांनिध्यात् समानो वर्णो यस्य सः सवर्णः । 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु' इति समानशब्दस्य सभावः । तस्य भावस्सावर्ण्यं, तस्यास्सरस्वत्याः, सावर्ण्यं तुल्यवर्णता धवलतेत्यर्थः । श्रवणं श्रोत्रमेव रसना जिह्वा 'रसज्ञा रसना जिह्वा' इत्यमरः । आस्वादस्य पानस्य योग्या अर्हा श्रवणरसनाया आस्वादयोग्या **सुधा** अमृतत्वेनाध्यवसितो मधुरध्वनिश्च **लब्धं** प्राप्तम् । लब्धं च लब्धा चेति विग्रहे 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेषैकवद्भावौ । अनेन यथाक्रतुन्यायेन तद्गुणलाभस्सूचितः । तत्सावर्ण्यं लब्धमित्यनेन 'सत्संनिकर्षे परिवर्तितव्यं विद्याधिकाश्चापि निषेवणीयाः । सवर्णतां गच्छति सन्निकर्षान्नीलः खगो मेरुमिवाश्रयन्वै' इति भारतोक्तरीत्या तुल्यवर्णताऽवाप्तिकथनेन वपुष्मत्त्वं द्योत्यते । न हि श्लाघ्यवर्णवत्त्वं विना प्रशस्तवपुष्ट्वं संभवति । तेनोपादेयवचनत्वं व्यञ्जितम् । श्रवणरसनास्वादयोग्या सुधा लब्धेत्यनेन वाग्मित्वं द्योत्यते । वाग्मित्वं च प्रशस्तवाक्त्वम् । तेन च

संस्कृताद्युक्तिक्षमत्वं व्यज्यते ॥ किञ्च—वाचस्सुधात्वेनाध्यवसानात् 'संस्कारक्रमसंपन्नामद्रुतामविलम्बिताम् । उच्चारयति कल्याणीं वाचं हृदयहारिणीम्' इत्याद्युक्तरीत्या रामणीयकातिशयद्योतनेन 'अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया । कस्य नाराध्यते चित्तमुद्यतासेररेरपि' इत्युक्तप्रकारेण प्रत्यर्थिहृदयानामपि द्रवीकरणे निपुणत्वं द्योतितम् । सत्यामपि पूर्वोक्तगुणसामग्र्यां वाङ्माधुर्यवैधुर्ये सुहृदामप्यप्रियतैव स्यात्किमुत दुर्हृदाम् । तदुक्तं 'प्रियोऽपि भवति द्वेष्यः परुषां गिरमीरयन् । मधुरां त्वीरयन्वाचमपि शत्रुः प्रियो भवेत्' इति ॥ 'वाङ्माधुर्यात्सर्वलोकप्रियत्वं वाक्पारुष्यात्सर्वलोकाप्रियत्वम् । को वा लोके कोकिलस्योपकारः को वा लोके गर्दभस्यापकारः' इत्यादिकमपीह भाव्यम् । [1]अनेनैव वाचस्सुधात्वाध्यवसानेन स्वविश्लेषपरितप्तजानकीसंजीवनत्वमपि द्योतितम् । अतस्त्वय्येव जागरूकत्वात्सर्वेषां दूतगुणानां त्वमेव संदेशहरणायार्हत्तम इति भावः । अत्र प्रथमे

---

[1]अनेनैव वाचस्सुधात्वाध्यवसानेन स्वविश्लेषपरितप्तजानकीसंजीवनत्वमपि द्योतितम्—इति रसास्वादिनी ॥ यत्तु—तत्सावर्ण्यमित्यनेन सर्वविद्यापारंगतत्वरूपं हंसस्य सरस्वतीसादृश्यं व्यज्यते—इति व्यञ्जनाभिधानम्—तन्न सरस्वतीहंसयोर्गुरुशिष्यव्यवहारसमारोपात्समासोक्तेस्स्वेनैव वर्णिततया तत्र च सर्वविद्यापारगतत्वस्य शिष्यगतस्यैव प्रतीयमानतया हंसे सर्वविद्यापारगतत्वव्यञ्जनाभिधानस्यासमञ्जसत्वात् ॥ यदपि—सुधा चेत्यनेन मधुरवाक्त्वं च व्यज्यत इति तन्न—सुधात्वेन मधुरवचनस्यैवाध्यवसिततया रूपकातिशयोक्तेस्स्वेनापि वर्णिततया साध्यवसानलक्षणागोचरे अभिधालक्षणावृत्तिदवीयस्या व्यञ्जनावृत्तेरनवतारात् ॥

पादे वेदोदन्वदित्यत्र अनुक्तधर्मवाचका समासगोपमा। वेदोदन्वद्विभजन विद् इत्यस्य भगवतो हंसावतारत्वाभिप्रायगर्भविशेषणतायां चेत्सं-रम्भस्तदा परिकरालंकारे विश्रान्तिः। यदि गम्यस्य हंसावता-रत्वस्य भङ्ग्यन्तरेण वर्णनायां तदा पर्यायोक्ते विश्रान्तिरित्यु-भयथाऽपि संभावनीयत्वादनयोस्संदेहसंकरः 'पर्यायोक्तं तु गम्य-स्य वचो भङ्ग्यन्तराश्रयम्' इति लक्षणात्। पूर्वोक्तोपमा-लंकारस्यास्य चैकवाचकानुप्रवेशलक्षणस्संकरः अभिन्नपदबोध्यनाना-लंकारघटितत्वात्। हंसस्यैवंविधभगवद्वंशजत्वासंबन्धेऽपि तत्संबन्धो-क्तेरतिशयोक्तिविशेषः 'संबन्धातिशयोक्तिस्स्यादयोगे योगकल्पनम्' इति लक्षणात्। उक्तानां संकीर्णालंकाराणामस्याश्च स्फुटावगम्य-मानभेदत्वात्संसृष्टिः। द्वितीयपादे तु—अस्य हंसस्य साक्षाच्चतु-र्मुखौपवाह्यत्वायोगेऽपि तद्योगकल्पने चेत्तात्पर्यं तदा पूर्वोक्ताति-शयोक्तिः। अथ विषयस्य राजहंसस्य विषयिभूतचतुर्मुखौपवा-ह्याभेदपर्यवसाने तदा 'अयं हि धूर्जटिस्साक्षात्' 'स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम्' इत्यादाविवानुभयाभेदरूपकमि-त्यनध्यवसायादनयोस्संदेहसंकरः। [1]उत्तरार्धे प्रगुणगतिनेति विशेष-

[1]उत्तरार्धे प्रगुणगतिनेति विशेषणस्य सरस्वतीसावर्ण्याद्युत्तमगुणलाभयो-ग्यताभिप्रायगर्भत्वात्साभिप्रायविशेषणलक्षणपरिकरालङ्कारः—इति रसास्वादिनी॥ यत्तु—प्रगुणगतिनेति पदार्थस्य श्लेषभित्तिकयाऽभेदेनाध्यवसितस्य सरस्वतीसका-शलब्धतत्सदृशत्वादिकं प्रति हेतुत्वात्काव्यलिङ्गमिति—तन्न—सरस्वतीसदृशत्वस्यात्र धावल्यरूपत्वे तत्रभवदुपदर्शितस्य प्रगुणगतिपदार्थद्वयस्याप्यप्रयोजकत्वात्। सर्व-

णस्य सरस्वतीसावर्ण्याद्युत्तमगुणलाभयोग्यताऽभिप्रायगर्भत्वात्साभिप्राय-विशेषणलक्षणपरिकरालंकारः। स च पूर्वोक्तप्रगुणगतिशब्दवाच्या-नेकार्थश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणितः इत्येतेषां क्रमेणाङ्गाङ्गिभावसंकरः। हंसस्य विशदवर्णत्वसुधात्वाध्यवसितमधुरवचन-योस्सरस्वतीसकाशाल्लब्धत्वासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिविशेषः। सरस्वतीसावर्ण्यसुधात्वाध्यवसितमधुरवचनयोर्वर्ण्ययोरेव लाभरूपध-र्मैक्यात्तुल्ययोगिता 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति लक्षणात् एषा चोक्तातिशयोक्त्युत्तम्भितेत्यनयोरङ्गाङ्गिभावसंकरः। ध्वनिरूपं विषयं निगीर्य तस्य सुधेति विषयिवाचकपदेनोल्लेखना-द्रूपकातिशयोक्तिः 'रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानतः' इति लक्षणात्। अनया च रूपकातिशयोक्त्या श्रवणे रसनात्वारोप-रूपरूपकमुत्तम्भ्यत इत्यनयोरङ्गाङ्गिभावसंकरः। अयं च संकर उक्ततुल्ययोगितया संसृज्यते। किंच—सरस्वतीसकाशलब्धतत्सा-वर्ण्यादिकस्य हंसस्य वृत्तान्ते प्रस्तुते आचार्यसकाशाधिगतविद्य-मेधाविच्छात्रवृत्तान्तस्याप्रस्तुतस्य प्रतीतेस्समासोक्तिः। इयं च प्रगुण-गतिनेत्यादिपूर्वोक्तपरिकरादिभिरेकवाचकानुप्रविष्टतया संकीर्यते॥ प्र-थमपादोक्तसंदेहैकवाचकानुप्रवेशसंकरातिशयोक्तिसंसृष्टेः। द्वितीयपादो-क्तसंदेहसंकरस्य उत्तरार्धोक्ताङ्गाङ्गिभावसंकरतुल्ययोगितासंसृष्टेचकवा-चकानुप्रवेशसंकराणां पुनस्संसृष्टिरिति नरसिंहाकारेषु पञ्चस्वलंकारेषु

---

विद्यापारगत्वरूपत्वे तु तस्य व्यङ्ग्यताया एव भवदुक्तत्वेन न काव्यलिङ्गावता-रसंभवः उपपादकस्येवोपपाद्यस्यापि वाच्यतायामेव तदवतारात्॥ ६॥

चत्वारो भेदास्तत्संकरसंसृष्टयश्च यथायोगं निरूपिता इति सूक्ष्मया दृशा सावधानं विभावनीयमलंकारमार्गनिष्णातैरित्यलं बहुना ॥ एतैरलंकारैः स्मृत्युक्तदूतगुणाभिव्यक्तेर्वस्तुध्वनिः । अस्य हंसस्य लोकासिद्धहंसवैलक्षण्यप्रतीतेर्व्यतिरेकालंकारध्वनिः । तत्सावर्ण्यं लब्ध-मित्यनेन तद्गुणालंकारध्वनिश्च । श्रीरामचन्द्रगतस्य हंसविषयकस्य भावस्य भावाभासस्य वा व्यङ्ग्यत्वात्तदन्यतरध्वनिरित्येवं त्रिविधोऽपि ध्वनिर्द्रष्टव्यो रसिकशिरोमणिभिः ॥ ६ ॥

एवं राजहंसं प्रशस्य स्वविनयं प्रदर्शयन्विवक्षितदूत्यकरणं तम-भ्यर्थयते दाशरथिः—

**मध्ये केचिद्वयमिह सखे केवलं मानुषाणां**
**व्यक्तोत्कर्षो महति भुवने व्योमगानां पतिस्त्वम्**
**स्थाने दूत्यं तदपि भवतस्संश्रितत्राणहेतोः**
**विश्वस्रष्टा विधिरपि यतस्सारथित्वेन तस्थौ ॥**

**मध्य इति** ॥ हे **सखे**! राजहंस! अनेन 'दुःखितस्सुखितो वाऽपि सख्युर्नित्यं सखा गतिः । आढ्यो वाऽपि दरिद्रो वा दुःखितस्सुखितोऽपि वा ॥ निर्दोषो वा सदोषो वा वयस्यः परमा गतिः' इत्याद्युक्तरीत्या त्वमेवास्माकं शरणमिति द्योति-तम् । तेन च वक्ष्यमाणदूत्यकरणप्रार्थनमप्रत्याख्येयमेवेत्यभि-व्यज्यते । इह भूमौ **वयं** [1]**केवलंमानुषाणां** शौर्यधैर्यसाहसादि-

[1] केवलं मानुषाणां शौर्यधैर्यसाहसादिविधुरतया मनुष्याकारमात्रभाजाम् ।

विधुरतया मनुष्याकारमात्रभाजामिति भावः । **मध्ये** अन्तरे **केचित्** अभवामेति शेषः । तेष्वप्यप्रसिद्धा इति भावः । यद्वा मानुषाणां मध्ये केवलं केचिदिति योजना । मानुषाणां मध्य एवाप्रसिद्धा वयं का वा देवादीनां मध्येऽस्माकमस्ति प्रशस्तिरिति भावः । केचित्केवलमिति वा योजना । तदा अप्रसिद्धा इति निर्णीतमेवेत्यर्थः । 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः । न च वयमित्यत्र 'अस्मदो द्वयोश्च' इत्येकत्वविवक्षायामेव वैकल्पिकं बहुवचनमिति भ्रमितव्यम् । केचिदिति विशेषणसद्भावेन 'सविशेषणस्य प्रतिषेधः' इति तन्नि-

---

यद्वा—मनुष्याणां मध्ये केवलं केचित्...मानुषाणां मध्य एवाप्रसिद्धा वयम् । केचित्केवलमिति वा योजना ॥ तदा अप्रसिद्धा इति निर्णीतमेवेत्यर्थः ॥ निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोरित्यमर इति रसास्वादिनी ॥ यत्तु—केवलमिति मान्ताव्ययम् निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोरित्यमरकोशे इतिकरणदर्शनात् । नपुंसकत्वे निर्णीते केवलं क्लीबे इत्येव वक्तुमुचितमिति—तन्न टीकासर्वस्वे 'निर्णीते केवलं क्लीबे' इत्येव प्रतीकं धृत्वा विवरणकरणदर्शनात् 'निर्णीते केवलं क्लीबं त्रिलिङ्गं त्वेककृत्स्नयोः' इति नानार्थरत्नमालायामनव्ययवर्ग एव पाठाच्च निर्णीतार्थकस्य केवलशब्दस्य अव्ययत्वासिद्धेः ॥ यदपि—अत एव मानुषाणामित्यनेन विशेषणविशेष्यभावोपि । अन्यथा विभक्तिभेदेन विशेषणविशेष्यभावो दुर्घट इति—तदपि 'केवलं मानुषाणां मनुष्याणामेव' इति स्वकृतव्याख्यानेनैव विरुद्धम् ॥ तत्र केवलपदस्येतरव्यवच्छेदपरताया एव स्वीकारेण केवलमानुषपदयोस्सामानाधिकरण्यासम्भवात् । व्यवच्छेदपरतायामुदाहृतामरकोशोदाहरणासंगतेश्चेति ॥ प्रत्युत आकारान्तरव्यवच्छेदपरः केवलशब्दोऽव्ययमपि प्रयोगानुसारादिहैवास्थेयमिति दिक् ॥

षेधात् । किं तु 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः' इत्यादाविव स्वघटिते उद्भूतावयवभेदे समुदाये लक्षणेति ध्येयम् । एतच्च लक्ष्मीसहस्ररत्नप्रकाशिकायां 'वियाता ग्रथ्नीमः' इत्यत्र विस्तरेण निरूपितमस्माभिः ॥ त्वं तु व्योम्नि गच्छन्तीति व्योमगाः सुकृतादिभूम्ना देवभूयंगता महात्मानः तेषां पतिः रक्षकः। पातेर्डतिः। न तु मानुषेषु वयमिव त्वं तेष्वप्रसिद्ध इति भावः। पतत्रिणां श्रेष्ठः इति वास्तवार्थः । अत एव, महति विशाले 'विशालं पृथुलं महत्' इत्यमरः । भुवने लोके न तु यत्र क्वचित्कोणे। यद्यपि भुवनशब्दो 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति छन्दसि क्युन्नन्तत्वेन व्युत्पादितः तथाऽपि बाहुलकत्वाद्भाषायामपीति व्याख्यातत्वाल्लोकेऽपि साधुरेवेति बोध्यम् । अत एव 'त्रिभुवनविधातुश्च कलहः, त्रिभुवनपुरशिल्पी, अखिलभुवनजन्म' इत्यादयो लौकिकाः प्रामाणिकप्रयोगाश्च संगच्छन्ते। व्यक्तः स्फुटः न तु सितासितः उत्कर्षः प्रभावो यस्य तथाभूतः 'स्फुटं प्रव्यक्तमुल्बणम्' इत्यमरः । अनेनोत्कर्षस्य सर्वस्मिन्नपि देशे तत्राप्यागोपालाविपालमितरोपदेशनैरपेक्ष्येण प्रख्यातत्वं सूचितम् । किंच क्वामी वयं भूमिष्ठा मानुषाः, येभ्योऽतितरां जुगुप्सन्ते त्रिदशपाशा अपि क्व भवान् दिविष्ठानामपि वरिष्ठः, स्पृहयन्ते यस्मै महान्तोऽपि वसन्तो भुवि मानुषा इति ध्वन्यते । अत एव विषमालङ्कारो व्यज्यते 'विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः' इति लक्षणात् ॥ किंच—वयमिति बहुवचनेन त्वमित्येकवचनेन

च सुलभाः खल्वस्मादृशा भूयांसो मानुषेषु व्योमचरेष्वपि त्वत्सदृशस्त्वमेवेति व्यज्यते ॥ ननु तर्हीदृशं मां कथमिव नियोजयसि निहीने दूतकर्मणीत्यत्र यद्यप्यस्मदुक्तमेतत्सत्यमेवेत्यङ्गीकृत्याह—स्थान इति । **तदपि** तथाऽपि अस्माकं तव च सत्यप्यन्तरे महतीत्यर्थः । संश्रितानां शरणागतानां सखीनां त्राणहेतोः त्राणमेव हेतुः तस्मात् । हेतुरिह फलमिति ध्येयम् । रक्षणार्थमित्यर्थः । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति हेतुशब्दात्पञ्चमी षष्ठी वा । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीययोरेव निषेधात्पञ्चम्याष्षष्ठ्या वा नानुपपत्तिरिति ध्येयम् । **भवतः** तव दूतस्य भावः कर्म वा दूत्यं 'दूतवणिग्भ्यां च' इति यप्रत्ययः । दौत्यमित्यपि क्वचित्पाठो दृश्यते । तदा ब्राह्मणादेराकृतिगणत्वात् ष्यञ् बोध्यः । अत एव 'दूत्यं तद्भावकर्मणोः, इत्यत्र ब्राह्मणादित्वात् ष्यञि दौत्यमपीति व्याख्यासुधायां भानूक्तं संगच्छते। न च मूले वणिक्छब्दस्येव दूतशब्दस्यापि ब्राह्मणादित्वानुक्तेर्यप्रत्यय एव युक्तो न तु ष्यञिति वाच्यम् । तस्योपलक्षणतयाऽप्युपपत्तेः । सति च द्वयोरपि प्रयोगप्राचुर्यतौल्ये ब्राह्मणादिपाठकल्पनावश्यकतायामेकत्रैव पक्षपातस्य निर्निबन्धनत्वात् । वस्तुतस्तु 'दूतवणिग्भ्यां च' इत्यस्य भाष्यानारूढत्वादुक्तरीत्या ष्यञेवोचितः ॥ ननु तर्हि दूत्यवणिज्याशब्दौ प्रचुरप्रयोगगोचरौ कथमिव निरुह्येयातामिति चेदित्थं—तत्र दूतशब्दात् 'दूतस्य भागकर्मणी' इत्यनेन यति दूत्यमिति सिद्ध्यति ॥ अत एव "के-

चित्तु—'दूत्यं तड्डागकर्मणी' इति पाठं मन्यन्ते। तत्र 'दूतस्य भागकर्मणी' इत्यनेन यत्" इति सुधायामुक्तं संगच्छते। यद्यप्ययं छान्दसः। तथाऽपि अग्र्याग्रियाग्रीयादिशब्दवल्लोकेऽपि प्रचुरप्रयोगपदवीमध्यास्त इत्यदोषः। 'अग्राद्यत्। घच्छौ च' इत्यग्रशब्दाद्यदादयश्छन्दसि हि विधीयन्ते। वणिज्याशब्दस्तु 'तत्र साधुः' इति यता निर्वाह्यः। कर्मणोऽपि वणिक्षु साधुत्वात्कर्मरूपार्थलाभः, स्त्रीत्वं लोकादेव। अत एव 'भवेन्नृत्तं च नृत्यं च दूत्यं दौत्यं तथैव च' इति श्रीहर्षद्विरूपकोशोक्तिः 'वाणिज्यं तु वणिज्या स्यात्' इत्यमरसिंहोक्तिश्च संगच्छते॥ **स्थाने** युक्तं एदन्तमव्ययम्। 'युक्ते द्वे सांप्रतं स्थाने' इत्यव्ययेष्वमरः। 'श्रितार्थमुज्झन्ति घनास्स्वगौरवम्' इत्याद्युक्तरीत्या स्वमहत्तरत्वमाश्रितावरीणतामप्यवधीर्य निहीनमपि कर्म तद्रक्षणाय तदेकव्रतिभिः कार्यमेवेति भावः। कथमाश्रितत्राणार्थमपि महद्भिर्निहीनं कर्म कर्तव्यमित्यत्र तत्स्वामिनो हंसवाहनस्यैवाचारं प्रमाणयति—विश्वेति॥ **यतः** यस्मात् आश्रितत्राणहेतोरित्यर्थः। 'पञ्चम्यास्तसिल्'। विश्वस्य सर्वव्यष्टिप्रपञ्चस्य स्रष्टा निर्माता। 'त्रिभुवनविधातुः' इत्यत्रेव शेषिकषष्ठ्या समासः। अन्यथा 'तृजकाभ्यां कर्तरि' इति निषेधः प्रसजेत्। **विधिः** चतुर्मुखोऽपि विश्वस्रष्टेत्यनेन रुद्रस्यापि तत्सृष्टत्वं सूचितम्। तथाचोक्तं वैष्णवे पुराणे—'कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः। प्रादुरासीत्प्रभोरङ्के कुमारो नीललोहितः' इत्यादि। तेन रुद्रादप्यस्य वैशिष्ट्यं द्योतितम्॥ ए-

तच्चानुपदमेवोदाहरिष्यमाणमहाभारतवचनैस्स्फुटीभविष्यति । विश्वस्रष्टेति पदं च तद्वचनगतं लोकस्रष्टेतिपदं प्रत्यभिज्ञापयति ॥ **सारथित्वेन** सूतत्वेन त्रिपुरविजयावसरे रुद्रस्य स्वापेक्षया न्यूनस्यापीति भावः । **तस्थौ** स्थितवान् । तिष्ठतेर्लिटि प्रथमपुरुषैकवचनम् । 'आत औणलः' इति णल औत्वम् । यस्मादाश्रितत्राणहेतोर्विधिस्सारथितयाऽत्रतस्थे तस्मादेवाश्रितत्राणहेतोस्तवापि दौत्यं युक्तमेवेत्यर्थः। अतस्संश्रितरक्षणाय महद्भिः कृतेऽपि निहीने कर्मणि न किंचिदपि स्याल्लाघवं प्रत्युत प्रकाशितं भवति सौशील्यमेवेति न संदेग्धव्यं भवता दूत्यमभ्युपगन्तुमिति भावः ॥ अत्र 'हसन्निवाब्रवीद्देवस्सारथिः को भविष्यति । तमब्रुवन् देवगणा यं भवान् संनियोक्ष्यते । स भविष्यति देवेश सारथिस्ते न संशयः । तानब्रवीत्पुनर्देवो मत्तश्श्रेष्ठतरो हि यः । तं सारथिं कुरुध्वं मे स्वयं संचिन्त्य मा चिरम्' इत्युपक्रम्य 'ततस्स भगवान् देवो लोकस्रष्टा पितामहः । सारथ्ये कल्पितो देवैरीशानस्य महात्मनः । आरुह्य भगवान्देवो दीप्यमानस्स्वतेजसा । अभीशून्हि प्रतोदं च संजग्राह पितामहः' इति कर्णपर्वोक्ता त्रिपुरविजयकथाऽनुसंधेया । [1]अत्र आश्रितत्राणहेतुकविधिसारथ्यावस्थानरूपवाक्या-

---

[1]अत्र आश्रितत्राणहेतुकविधिसारथ्यावस्थानरूपवाक्यार्थेन तथाविधदौत्यकरणौचित्यरूपवाक्यार्थस्य समर्थनात्काव्यलिङ्गमिति रसास्वादिनी ॥ अत्र व्योमगानां पतिरित्यस्य व्यक्तोत्कर्षत्वं प्रति हेतुत्वेन काव्यलिङ्गन्तु नाभिहितम् । 'अत एव महति' इति पदार्थविवरणावसर एव तस्य सूचिततयातिस्फुट-

र्थेन तथाविधदौत्यकरणौचित्यरूपवाक्यार्थस्य समर्थनात्काव्यलिङ्गम्। यतः यस्मात् विधिस्सारथित्वेन तस्थौ अतो युक्तमिति दूत्यकरणौचित्यं प्रति हेतुतया यत इत्येतद्व्याचक्षाणानां पक्षे तु—हेतोरशाब्दतया 'भयानकत्वात्परिवर्जनीयो दयाश्रयत्वादसि देव सेव्यः' इत्यादाविव न काव्यलिङ्गं संभवति गम्यमानहेतुताकस्यैव हेतोस्सुन्दरत्वेनालंकारिकैः काव्यलिङ्गताऽभ्युपगमात्। अस्मद्व्याख्याने तु दूत्यौचित्यहेतोर्विधिसारथ्यावस्थानस्य गम्यमानहेतुताकत्वेनोक्तालंकारो निरर्गल एवेति दिक् ॥ भावध्वनिः पूर्ववदेव ॥ ७ ॥

ननु 'सर्वा पूर्वमियं येषामासीत्कृत्स्ना वसुंधरा। प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ इक्ष्वाकुकुलजातानां वीराणां

---

त्वात् ॥ वस्तुतस्तु—प्रथमपादे रामभद्रेणात्मनः अप्रसिद्धोत्कर्षत्वं केवलमित्यादिना शौर्यादिहीनकेवलमानुषान्तःपातित्वं चाभिहितम्। न तु तयोर्हेतुहेतुमद्भावोपि विवक्षितः। तथा च द्वितीयपादे तत्प्रतिनिर्देशरूपे हंसस्य व्योमगश्रेष्ठत्वं महाभुवनव्यक्तोत्कर्षत्वं च स्वातंत्र्येण प्रतिनिर्देश्यमित्याश्रयणीयम्। व्योमगश्रेष्ठा ब्रह्मरुद्रादयोपि आगोपालविपालविदिततया महाभुवनाव्यक्तोत्कर्षा अपि स्युः त्वं तु न तथाविध इति विवक्षया न हेतुहेतुमद्भावोत्र विवक्षित इत्यपि व्याख्यानं सम्भवतीति विचिन्त्य उक्तकाव्यलिङ्गोपेक्षणमित्यवधेयम् ॥ यत्तु—विश्वस्रष्टेति विशेषणस्य शिवं प्रत्यपि स्रष्टृत्वाभिप्रायकतया परिकर इति—तन्न शिवस्रष्टृत्वस्य विश्वस्रष्टृपदे वाच्यकक्ष्यापन्नस्य व्यंग्यत्वाभावात् ॥ भावेपि वा तस्य सारथित्वावस्थानरूपप्रकृतार्थानुपपादकतया परिकरालंकारानवतारात्। विशेषणस्य प्रकृतार्थोपपादकव्यञ्जकत्वे हि तदवतारः ॥ ७ ॥

सत्यवादिनाम्' इत्यादिप्रख्यातप्रभावानामिक्ष्वाकूणामपि किमीदृशं दैन्यं येन मादृशानपि साह्यमभ्यर्थयन्त इत्यत आह—

**इच्छामात्राज्जगदपरथा संविधातुं क्षमाणा-**
**मिक्ष्वाकूणां प्रकृतिमहतामीदृशीं प्रेक्ष्य वेळाम् ।**
**लक्ष्यालक्ष्ये जलधिपयसा लब्धसंस्थां त्रिकूटे**
**लङ्कांगन्तुं तवसमुचितं राक्षसीं राजधानीम् ॥८**

इच्छेति ॥ इच्छैव इच्छामात्रं मयूरव्यंसकादित्वात्समासः । तस्मात् काङ्क्षामात्रात् न तु प्रयत्नभूयस्त्वात् । **जगत्** भुवनं न तु यत्किञ्चित्प्रदेशं **अपरथा** विद्यमानप्रकारादन्येन प्रकारेण । 'प्रकारवचने थाल्' । **संविधातुं** सम्यङ्निर्मातुं न तु यथाकथंचिदन्यथा रचयितुं **क्षमाणां** शक्तानां न तु मनोरथमात्रपर्यवसायिकार्याणामिति भावः । 'युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः । अत एव प्रकृत्या स्वभावेनैव महतां पूज्यानाम् । अब्भक्ष इत्यादाविवावधारणगर्भस्समासः । 'संसिद्धिप्रकृती इमे । स्वरूपं च स्वभावश्च' इत्यमरः । अनधियातिशयो हि तेषां महिमेति भावः । इक्ष्वाकोरपत्यानि पुमांस इक्ष्वाकवः तेषाम् । 'जनपदशब्दात्क्षत्रियादञ्' इत्यपत्येऽर्थे अञि 'ते तद्राजाः' इति तद्राजसंज्ञायां 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यपत्यप्रत्ययस्य बहुषु लुक् । [1]यद्यपि

[1]यद्यपि जगदपरथाकरणक्षमत्वं पिशाचान्...इतिवदतो रामभद्रस्यैकस्यैव...तथापि छत्रिन्यायेन सर्वेषामपि तदस्तीत्यनुसंधायोक्तमिति रसास्वादिनी॥

जगदपरथा करणक्षमत्वं 'पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान्हन्यामिच्छन् हरिगणेश्वर ॥ सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम्' इति वदतो भगवतो रामचन्द्रस्यैकस्यैव सिद्धम् । प्रशस्यते च यः प्रतिपक्षैरपि 'असाध्यः कुपितो रामो विक्रमेण महायशाः' इत्युपक्रम्य 'संहृत्य हि पुनर्लोकान्विक्रमेण महायशाः । शक्तस्स पुरुषव्याघ्र स्स्रष्टुं पुनरपि प्रजाः' इत्यादिना । न तु सर्वेषामपीक्ष्वाकूणाम् । तथाऽपि छत्रिन्यायेन सर्वेषामपि तदस्तीत्यनुसंधायोक्तम् । इदं चानवसरे स्वेनैव स्वमाहात्म्यस्य वर्णनं जुगुप्सितमिति स्वकुलीनमहाराजप्रशंसयैवार्थात्तदाविष्करणमित्यवधेयम् । 'महासत्वोऽतिगम्भीरः कृपावानविकत्थनः' इत्याद्युक्तधीरोदात्तगुणोत्तरो ह्ययं दाशरथिः । इममिव पश्यतीतीदृशी तां तथोक्ताम् । 'त्यदादिषु दृशोऽनालोचने कञ्च' इतीदंशब्द उपपदे अज्ञानार्थकात् दृशेः कञ् 'इदं किमोरी-

यत्तु—तथाऽपि कार्यगुणानां कारणगुणपूर्वकत्वेन पूर्वेषामपीक्ष्वाकूणां तादृशं सामर्थ्यमस्तीति ज्ञापयितुं तथोक्तिरिति—प्रकारान्तरेण समाधानम्—तन्न अकारणगुणपूर्वकाणामपि गुणानां दर्शनेन कार्यगुणानां कारणगुणपूर्वकत्वनियमासिद्धेः सर्वेषामिक्ष्वाकूणां तादृशसामर्थ्यज्ञापनासम्भवात् ॥ तस्मादिहैकदेशमात्रवृत्तेरपीक्ष्वाकुसामान्यगतत्तयाभिधानं 'यैःकृतस्सर्वभक्षोऽग्निरपेयश्च महोदधिः । क्षयी चाप्यायितस्सोमः को न नश्येत्प्रकोप्य तान्' इत्यादाविव प्ररोचनार्थमेवेत्याश्रयणीयम् ॥ 'ईशादस्त्राण्यधिगतवताम्' इति पद्ये रसास्वादिन्यामाचार्योपदर्शितं बहुवचनोपपादकं छत्रिन्यायमेव स्वयं तदुपपादकत्वेनानुवदतामिह प्रकारान्तरानुधावनं किमर्थमिति न वयं विद्मः ॥

श्की' इतीदंशब्दस्य ईशादेशः 'टिड्ढाणञ्' इत्यादिना ङीप्। 'तादृशादयस्तु रूढशब्दत्वादसताऽप्यवयवार्थेन व्युत्पाद्यन्ते। अत एवाज्ञानार्थकात् दृशेरिति संगच्छते। भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता तमिवेमं पश्यन्ति जनास्स इवायं पश्यति ज्ञानविषयो भवतीत्यर्थात्। तत्र दृशेर्ज्ञानविषयत्वापत्तिमात्रविषयत्वेऽपि विषयीकरणावृत्तित्वादज्ञानार्थादिति संगच्छत इति मनोरमायां स्थितम्। ईदृशीमित्ययं साभिनयनिर्देशः। अनेन 'ईदृशीयं ममालक्ष्मीः शङ्के प्राप्तव्यमीदृशम्' इत्यादाविव दुर्वचदुरवस्थाभूयस्त्वं द्योत्यते। [1]वेलां समयम्। 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः। 'शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे। कालाभिपन्नास्सीदन्ति यथा वालुकसेतवः, कालो हि दुरतिक्रमः' इत्याद्युक्तरीत्या निसर्गतो महात्मनामपीक्ष्वाकूणां समयवशादीदृशं दैन्यमिति भावः। **प्रेक्ष्य** प्रकर्षेणालोच्य दूरं विमृश्य न त्वापाततोऽवगम्य तथासति महदमहत्तारतम्यविमर्शदौर्लभ्यात्प्रत्याख्यातुमस्मदभ्यर्थनां क्वचित्प्रवर्तेथा अपीति भावः। **जलधिपयसा** सागराम्भसा निरन्तरतरङ्गनमनोन्नमनद-

---

[1]वेलां समयं......निसर्गतो महात्मनामपीक्ष्वाकूणां समयवशादीदृशं दैन्य मिति भावः इति रसास्वादिनी ॥ यत्तु—वेलां प्रेक्ष्येत्यत्र कालस्य ग्रहणं जगदेकवीरस्य स्वस्य वचसा परिभवोद्घाटनानौचित्याभिप्रायेण इतिभावान्तरवर्णनम्—तत्र 'मध्ये केचिद्वयमिह सखे' इत्यादावात्मापकर्षस्यैव वास्तवस्य परिभवस्यापि सखायं हंसं प्रतिस्ववचसैवोद्घाटनेनौचित्यविरहात्तथाभिप्रायासंगतेः ॥ तस्माद्दैन्यभूयस्त्वद्योतकत्वमेव वेलाग्रहणस्याचार्योपदर्शितं युक्तमिति दिक् ॥

न्तुरंगेति भावः। लक्ष्यश्चासावलक्ष्यश्च लक्ष्यालक्ष्यः तथोक्ते तरङ्गावनाहोन्नाहावसरयोर्दूरस्थैर्दृश्यादृश्य इति भावः। अनेन 'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्' इति मनूक्तदुर्गविशेषेषु लङ्काया जलदुर्गमध्यस्थत्वं सूचितम्। त्रीणि कूटानि यस्य स त्रिकूटः तन्नामा गिरिः तस्मिन् अनेन गिरिदुर्गस्थत्वमपि सूचितम्। स्मर्यते हि गिरिदुर्गं विशिष्टं सर्वेभ्यो दुर्गेभ्यो मनुनैव—'सर्वेणापि प्रयत्नेन गिरिदुर्गं समाश्रयेत्। एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते' इति। [1]लब्धा प्राप्ता संस्था स्थितिर्यया तथोक्ताम्। **लङ्कां** तन्नाम्नीं—लब्धसंस्थां त्रिकूटे लङ्कामित्येतैः पदैः 'त्रिकूटशिखरे लङ्कां स्थितां स्वस्थो ददर्श ह' इत्येतत्प्रत्यभिज्ञाप्यते। 'शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिवि स्पृशम्' इत्युपक्रम्य 'श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं

---

[1]लब्धा प्राप्ता संस्था स्थितिर्यया तथोक्तामिति रसास्वादिनी॥ यत्तु—संस्थाशब्दस्य मृत्युपरत्वेनामङ्गलातङ्कदायित्वादश्लीलत्वमित्याशङ्कनम्—तन्न लब्धपदे आशंसायां भूतवच्चेत्यनुशिष्टाशंसार्थकनिष्ठांगीकारेणासन्नविनाशकत्वरूपस्यार्थान्तरस्य प्रतिपक्षराजधानीगतामङ्गलस्य नायकीयमङ्गलसाम्राज्यपरिपोषकस्य प्रत्यायकतया 'स्वस्था भवंतु कुरुराजसुतास्सभृत्याः' इत्यादाविव गुणत्वेन तदाशंकाया एवानवतारात्॥ एतेन—लोकपरिगृहीतत्वेन योनिलिङ्गादिशब्दवन्नाश्लीलत्वमिति तत्समाधानकल्पनमप्यपास्तम्। संस्थाशब्दे योनिलिंगादिशब्दतुल्यलोकपरिगृहीतिविरहाच्च। अत एव हि अमङ्गलातङ्कदायिरूपाश्लीलस्य संस्थितपदमेवोदाहरणं दर्शितं वामनेन। न खलु संस्थासंस्थितशब्दयोरास्ति कश्चिद्विशेषोऽमङ्गलार्थप्रत्यायकत्वे इति॥

शकुनैरपि । मनसाऽपि दुरारोहं किं पुनः कर्मणा जनैः ॥ निविष्टा तत्र शिखरे लङ्का रावणपालिता' इत्युक्तरीत्याऽतिश्लक्ष्णतया त्रिकूटशिखरस्य मनुजैर्मनसाऽपि दुरारोहत्वेन तत्र निविष्टाया लङ्काया दुष्प्रवेशत्वं किं पुनर्न्यायसिद्धमिति द्योत्यते । रक्षसामियं राक्षसी—अणणन्तलक्षणो ङीप् । राजानो धीयन्तेऽस्यामिति राजधानी—तां 'करणाधिकरणयोश्च' इति ल्युटि टित्त्वलक्षणो ङीप् । राजधानी हि लङ्का न तु या काचिदाभीरभिल्लादीनां पल्ली, तथा सति वा यथाकथंचिद्येन केनापि वा भवेत्प्रवेष्टुं शक्या तत्रापीयं राक्षसी 'न ह्यस्त्यविदितं किंचिद्राक्षसानां बलीयसाम् । वायुरप्यत्र न ज्ञातश्चरेदिति मतिर्मम' इत्युक्तप्रकारेण सर्वतोमुखमवहिततया रक्षद्भी रक्षोभिरनभिलक्षिततया दुश्शका प्रवेष्टुं तेनात्यवहितेन विदितराजनयसर्वस्वेनेङ्गिताकारचेष्टाद्यभिज्ञेन बुद्धिमत्तरेणैव प्रवेष्टव्या न तु येन केन चित्पृथग्जनेनेति ध्वन्यते । [1]गन्तुं

[1]गन्तुं यातुं......समुचितं सम्यगर्हमिति रसास्वादिनी ॥ अत्र योग्यादिपदोपेक्षणेन अर्हपदेन विवरणं शकादिसूत्रेणार्हार्थयोगाद्गन्तुमिति तुमुन उपपत्तिं व्यञ्जयितुम् ॥ अथ—'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति सूत्रे कौमुद्यां 'अर्थग्रहणमस्तिनैव सम्बध्यते अनन्तरत्वात्' इत्युक्तेः कथमिहार्हार्थकस्यापि समुचितशब्दस्य योगे तुमुनिति चेदुच्यते—तत्र शकादीनामस्त्यन्तानां द्वन्द्वस्य तदुत्तरश्रुतस्यार्थशब्दस्य स्वपूर्वश्रुतैस्सर्वैरेव पदैरन्वयस्य चाविशेषेण 'गतिबुद्धिप्रत्यवसानार्थ' 'क्रुधद्रुहेर्ष्यासूयार्थानाम्' इत्यादाविव स्वरसतः प्रतीतेरनन्तरत्वहेतोरप्रयोजकत्वात् ॥ उक्तं हि—तान्त्रिकैः—यस्य येनार्थसम्बन्धो दूरस्थेनापि तस्य सः । अर्थतस्तु व्यवेतानामानन्तर्यमकारणम् ॥ आकांक्षास-

यातुं तव जलचरतया खगतया च सलिलप्रवेशवैहायसोड्डयनाभ्यां गन्तुं समर्थस्य चतुर्मुखौपवाह्यतया विहगान्तरविलक्षणस्य पूर्वोक्त-

---

न्निधानं च योग्यता चेति च त्रयम् । सम्बन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः ॥ इति । एवमपि यदि वार्तिकभाष्यकारयोर्व्याख्यानरूपं प्रमाणं सूत्रवार्तिकभाष्यसन्दर्भा-संगतिरूपं बाधकं वोपलभ्येत तदा तदनुरोधेन अनन्तरेणैवास्तिनाऽर्थग्रहणस्य सम्बन्धस्स्वीक्रियेतापि स्वारसिकप्रतीतिश्च परित्यज्येतापि । न चेह तथाविधं किञ्चिदुपलभ्यते ॥ ननु अनन्तरत्वादिति प्रतीकमुपादाय 'अत्र व्याख्यानमेव शरणम्' इति शेखरकृतोक्तेर्व्याख्यानबलादेव स्वारसिकान्वयपरित्यागस्स्वीकार्य इति चेन्न शेखरकारोक्तेर्मूलकारोक्तिप्रतिकूलत्वात् ॥ भाष्ये शकादिसूत्रस्यैवा-धृततया भाष्यकारीयस्य तथाव्याख्यानस्य शशशृङ्गायमानत्वादुपदर्शितशेखरवाक्ये व्याख्यानपदस्य वार्तिकभाष्यकारकृतव्याख्यानपरत्वासम्भवेन तदर्वाचीनकृतव्या-ख्यानपरताया एवाश्रयणीयतया अर्वाचीनव्याख्यानानां च समीचीनयुक्तिसत्त्व एव प्रामाण्यात्तादृशयुक्तिविरहस्य एवकारेणैव स्फुटीकृततया च 'युक्तिविहीन-मर्वाचीनं व्याख्यानमेवात्र शरणं न पुनः किञ्चित्प्रमाणम्' इत्यर्थ एव उपद-र्शितशेखरवाक्यार्थपर्यवसानात् 'अर्थग्रहणमस्तिनैव सम्बध्यते' इति कौमुदीग्र-न्थश्शेखरकृता भङ्ग्यन्तरेण प्रत्यादिष्ट इत्येव ह्यत्रगम्यते ॥ अथ 'अत्रानन्त-रेणास्तिशब्देनैवार्थशब्दस्सम्बध्यते शकधृषज्ञानां घटार्हयोश्च पृथगुपादानात्' इति ज्ञापकरूपं प्रमाणमुपदर्शितं पदमञ्जर्यामिति चेच्छ्रूयताम्—'शक्लृ शक्तौ, ञि धृषा प्रा-गल्भ्ये, ज्ञा अवबोधने' इति पठितानां 'घट चेष्टायां, अर्ह पूजायां' इति पठि-तयोश्च परस्परं विभिन्नार्थकतया पृथग्ग्रहणस्य ज्ञापकत्वासम्भवात् ॥ न च शक्तिप्रागल्भ्ययोरभेदाच्छकिधृष्योः पर्यायता शङ्क्या ॥ शक्तिप्रागल्भ्ययोस्स्वरूप-योग्यत्वफलोपधायकत्वरूपतया तदपर्यायत्वोपपत्तेः ॥ 'धृषिशसी वैयात्ये' इत्य-नुशासनेन धृषेर्वैयात्यार्थकस्यापि सत्त्वेन तस्यैवेह ग्रहणोपपत्तेश्च ॥ अत एव 'शक्तस्त्वं परमाक्रोष्टुं न योद्धुं धृष्टता तव । जानासि स्तोतुमात्मानं गन्तुं

गुणशालिनश्च तवैव समुचितं सम्यगर्हं न त्वन्यस्य मानुषादेः 'हितं वयस्यभावेन ब्रूमि नोपदिशामि ते । कामं न त्वं स-

न घटसे युधम्' इति रावणार्जुनीयपद्येन वैयात्यार्थकस्यैव धृषेः शकादिसूत्रे ग्रहणं सूचितम् ॥ 'धृषिशसी वैयात्ये' इति वैयात्यार्थे हि धृषेरिडभावो निपात्यते ॥ यद्यपि—'शक्नोति भोक्तुं धृष्णोति जानातीति भोजने प्रावीण्यं गम्यते ग्लायति भोक्तुमित्यत्राशक्तिः । घटते अर्हतीति योग्यता आरभते प्रक्रमत इति भुजेरेवाद्यवस्था लभते भोक्तुमित्यप्रत्याख्यातं भोजनं लभत इत्यर्थः । उत्सहते भोक्तुमिति भोजने व्याप्रियत इत्यर्थः । अस्ति भोक्तुं भोजनमस्तीत्यर्थः' इत्यनेन पदमञ्जर्यां शकादीनां गम्यमानार्थमादायार्थैक्यमुपदर्शितम् ॥ तथाऽपि धातुपाठप्रयोगप्राचुर्यादितस्स्फुटे वाच्यार्थभेदे गम्यमानार्थैक्यतः पर्यायत्वापादनासम्भवोऽवगन्तव्यः ॥ आरभते प्रक्रमे इत्यनयोरारम्भार्थे पर्यायत्वदर्शनेऽपि 'वृत्तिसर्गतायनेषु क्रमः' इति सूत्रेण क्रमेरर्थान्तरवाचकताया अप्यवगमाद्रभिक्रम्योरिहापर्यायताऽवसेया ॥ अत एव—'असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनम् । तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्य चेतितः' ॥ इति भट्टिप्रयोग उपपद्यते ॥ तत्र हि वृत्तिरूपार्थस्य क्रमेस्तदुदाहरणे त्वत्कर्मकदर्शनेऽप्रतिहतोऽहं इत्यर्थः ॥ एवम् 'कथमिदं कर्तुं घटते' इत्यादौ घटतेरर्हार्थकत्वेऽपि प्रकृतसूत्रे चेष्टार्थकस्यैव तस्य ग्रहणादपौनरुक्त्यमवगन्तव्यम् ॥ अत एव—"जघटे तुरगाध्वरेण यष्टुं कृतसंभारविधिः पतिः प्रजानाम्' इति भट्टिप्रयोग उपपद्यते ॥ तत्र हि यष्टुं जघटे अचेष्टतेत्यर्थः ॥ तस्मात्पर्यायपृथग्ग्रहणरूपं ज्ञापकं हरदत्तोक्तमयुक्तमित्यालोच्यैवात्र शेखरकृता 'अत्र व्याख्यानमेव शरणम्' इत्यभिहितम् ॥ तदभिप्रायस्तु प्रागेव विवृतोऽस्माभिः ॥ अर्थपदस्यार्हपदेनाप्यन्वयमभिसंधायैव श्रीमत्यां तात्पर्यचन्द्रिकायाम् । 'श्रेयो भोक्तुं भैक्षमपीह लोके' इत्यत्र 'भोक्तुमिति भावमात्रार्थकस्तुमुन्' न तु क्रियार्थोपपदकः ॥ भोजनं प्रशस्तमित्यर्थः" इत्यन्वग्राहि ॥ अत्र हि प्रशस्तत्वमर्हतारूपमेवेत्यर्हार्थयोगादेव शकादिसूत्रेण तुमुनभिसं-

माधेयः पुरंदररथोचितः ॥ युयुत्सुरहमेकाग्रस्स्मारये त्वां न शिक्षये' इत्युक्तरीत्या हंसरूपभगवद्वंशजस्य सर्वस्रष्टृचतुर्मुखौपवाह्यस्य महाप्रा-

हितः शकादिसूत्रं हि 'अक्रियार्थोपपदार्थमिदं सूत्रम्' इत्यवतारितं वैयाकरणैः ॥ तदनुसारेण च तात्पर्यचन्द्रिकायां 'न तु क्रियार्थोपपदकः' इति पर्युदासबलात् शकादिसूत्रमेव तुमुनुपपादकतयाऽऽचार्यानुमतमित्यवधार्यते ॥ अर्थग्रहणस्यास्तिनैव सम्बन्धे तु तादृशतात्पर्यचन्द्रिकासूक्तेरसंगतिस्स्पष्टैव ॥ इत्थमर्थग्रहणस्यास्तीतरैरप्यन्वये सत्येव 'अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी । नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः' 'काव्यं कर्तुं विदन्ति जानन्तीति काव्यविदः' इत्यादिकाळिदासविद्याधरमल्लिनाथादिवाक्येषु ज्ञापर्यायस्य वेत्तेर्योगे 'हन्तुं क्रोधवशादीहां चक्राते तौ परस्परम्' इति भट्टिप्रयोगे घटतिपर्यायस्येहतेर्योगे च तुमुनुपपद्यते ॥ सांप्रतं युक्तमुचितं इत्याद्यर्हार्थकपदैर्योगे च परश्शतं तुमुन्प्रयोगा इत्थमेव साधवोऽवगन्तव्याः ॥ यद्यपि—अनभिहितसूत्रशेखरे 'परे तु—विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतमित्यत्र तुमुनस्साधुत्वायेष्यत इत्यध्याहार आवश्यकः अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच्च स दुर्लभः ॥ अध्याहारे तु इच्छार्थेषु तुमुनिति सुलभः । विषवृक्षोपि संवर्ध्यछेत्तुमिष्यत इति यत्तदसांप्रतमन्याय्यमित्यर्थः' इत्येवमध्याहारेणोपपत्तिर्वर्णिता तथाऽपि प्रागुपदर्शितशकादिसूत्रशेखरसंदर्भपर्यालोचनया शकादिसूत्रे अर्थग्रहणस्य शकादिभिस्सर्वैरेव सम्बन्धावश्यकत्वाभिसन्धेरेव शेखरकृतोऽवगमात् बहूनां प्रयोगाणां 'इष्यते इति यत्तत्' इत्यनेकपदाध्याहारवाक्यभेदकल्पनान्वयक्लेशाद्याश्रयणपरः अनभिहितसूत्रशेखरसन्दर्भः प्राचीनमताभिप्रायकतया संगमनीय इत्यवधेयम् ॥ यद्यपि—अर्थग्रहणस्य सर्वैस्संबन्धेऽभ्युपगम्यमाने शकादीनामस्त्यन्तानां प्रथमं द्वन्द्वोऽभ्युपगन्तव्यस्स्यात् । तथा च सति तत्र अस्तिपदस्य 'द्वन्द्वे घि' इत्यनेन पूर्वनिपातापत्तिः । तदकरणात्तु ज्ञापकादर्थग्रहणमस्तिनैव संबध्यत इत्यवगम्यते । इत्थं च शकादीना-

ज्ञस्य भवतो ज्ञापनमात्रमेवेदं न त्वाज्ञापनमिति भावः ॥ अनेनैव त्रिकूटशिखरस्य सामान्यपतत्त्रिदुष्प्रापत्वेऽपि त्वया दुष्प्रापत्वशङ्का न कार्येति च व्यज्यते ॥ अत्र सर्वेषामपीक्ष्वाकूणामिच्छामात्राज्जगदपरथानिर्माणक्षमत्वायोगेऽपि तद्योगोक्तेरतिशयोक्तिविशेषः इक्ष्वाकूणां दुरवस्थाभूयिष्ठसमयदर्शनस्य हेतोर्लङ्कागमनौचित्यरूपहेतुमता सह वर्णनाद्धेत्वलंकारः। जलधिपयसेति विशेष्यस्य त्रिकूटलक्ष्यालक्ष्यत्वौपयिकतरङ्गनमनोन्नमनदन्तुरत्वाभिप्रायगर्भत्वात् 'फणीन्द्रस्ते गुणान्वक्तुम्' इत्यादाविव परिकराङ्कुरः। तवेत्यस्य विशेष्यस्योक्तविधल-

---

मह्यन्तानां पदानां अस्त्यर्थपदस्य च द्वन्द्वे यथासूत्रमेव पाठ उपपद्यत इत्यभिहितं भैरवमिश्रीये। तदपि, न युक्तं—अस्त्यर्थपदान्तानां द्वन्द्वपक्षेऽपि ज्ञागा इत्यनयोरेवाल्पाच्तरत्वेन वागिन्द्रावित्यादौ वाक्छब्दस्येव पूर्वनिपातावश्यकत्वेन यथासूत्रपाठानुपपत्तेः "घ्यन्तादजाद्यदन्तं विप्रतिषेधेन। उभाभ्यामप्यल्पाच्तरम्" इति हि वार्तिकं भाष्ये पठ्यते। वस्तुतस्तु—"अस्त्यन्तानां द्वन्द्वे घि" इत्येतद्बाधित्वा विप्रतिषेधेन "लघ्वक्षरं पूर्वं" इति वार्तिकस्य प्रवृत्त्या शकपदस्यैव पूर्वनिपातोपपत्तेरस्मन्मतेऽपि यथासूत्रं पाठोपपत्तिः। उक्तं हि शेखर एव—'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन" इति वार्तिकप्रतीके "अजाद्यदन्ताच्चाल्पाच्तरं लघ्वक्षरम्। ऋतुनक्षत्राणाम्। अभ्यर्हितं चेति। भ्रातुर्ज्यायस इति च विप्रतिषेधेनेति" इति दिक् ॥ एतेन—'यद्यपि शकधृषेतिसूत्रेऽर्थग्रहणमस्तिनैव सम्बद्ध्यत इति व्याख्यातम्' इत्याशङ्कनम् 'उपनम्रमयाचितं प्रियं परिहर्तुं न तवापि सांप्रतम्' इत्यादिश्रीहर्षकालिदासादिप्रयोगानुरोधेन समुचितपदयोगेऽपि तुमुनस्साधुताकल्पनया 'प्रयोगशरणा निरङ्कुशाः कवयः' इत्युक्त्याच लक्षणविन्मूर्धन्यभगवन्मूलकारीयप्रयोगसाधुतासमर्थनं च न केवलं शाब्दिकसंप्रदायविरुद्धं अपि तु मूलकारस्यापि भगवतस्तात्पर्यचन्द्रिकागतोपदर्शितसूक्त्या विरुद्धमित्यवगन्तव्यम् ॥ ८ ॥

ङ्कागमनसामर्थ्याभिप्रायगर्भत्वादन्योऽपि परिकराङ्कुर इत्येतेषां संसृष्टिरिति दिक् ॥ ८ ॥

ननु प्रकृत्यैव सौकुमार्याद्युत्तमगुणमहीयांसं मां कथं दोषभूयिष्ठराक्षसराजधानीगमनाय नियोजयसि—का वा दिग्गन्तव्या। साऽपि बहुदोषदूषितैव स्यात्। यामध्यास्ते राक्षसराजधानी, किं वा तादृशं प्रयोजनं येन दोषोऽप्यवश्यं सोढव्य इत्यत अह—

**स्थानैर्दिव्यैरुपचितगुणां चन्दनारण्यरम्यां**
**मुक्तासूतिं मलयमरुतां मातरं दक्षिणाशाम्।**
**अस्मत्प्रीत्यै जनकतनया जीवितार्थं च गच्छ-**
**न्नेकं रक्षःपदमिति सखे दोषलेशं सहेथाः ॥**

**स्थानैरिति ॥ दिव्यैः स्थानैः** स्वयं प्रतिष्ठितैः श्रीरङ्गादिक्षेत्रैः ॥ तदेतदुक्तं श्रीमति गारुडे पुराणे—'स्वयं प्रतिष्ठितं दिव्यं तथा सिद्धप्रतिष्ठितम्। पौरुषं चेति त्रिविधां प्रतिष्ठां ब्रह्मणो विदुः॥ तत्संनिधानवैषम्यात्पूर्वं पूर्वं तु पूजितम्' इति ॥ देवप्रतिष्ठा त्रिविधा मुनिभिः परिकीर्तिता। स्वयं सिद्धप्रतिष्ठानं तृतीयं मानुषं स्मृतम् ॥ यत्र यत्र च देवेशो रमते च स्वयं हरिः। तत्ताद्दिव्यमधिष्ठानमिति विद्धि सनातनम् ॥ यथा क्षीरार्णवे तद्वत्स्वयं श्रीरङ्गधामनि। दिव्यप्रतिष्ठाविषयो मया ते परिकीर्तितः ॥ सिद्धमानुषयोरेव बिम्बक्लृप्तिस्तथेष्यते। स्वयं प्रतिष्ठिते

तावत्स्वस्वरूपेण संस्थितः ॥ एवं संस्थानभेदेन त्रिविधेन जनार्दनः । तत्र तत्र च विश्वात्मा पूजितस्स च संस्थितः ॥ प्रयच्छत्यखिलान्कामांत्सर्वेभ्यो राजसत्तम इति च ॥ उपचिताः अभिवृद्धाः गुणाः पावनत्वसमृद्ध्यादयो यस्यां तथाभूतां 'यत्रैकमपि वा क्षेत्रं हरेरभिमतं भवेत् । सर्वास्तत्र भविष्यन्ति देशे गुणसमृद्धयः ॥' इति भगवच्छास्त्रोक्तेरेकैकभगवत्क्षेत्रसद्भाव एव देशस्य गुणसमृद्धिमत्तायामनेकदिव्यक्षेत्रसद्भावे गुणसमृद्धेरुपचयः कैमुतिकन्यायसिद्ध इति भावः । यद्वा—स्वतस्सिद्धा एव वक्ष्यमाणा गुणा दिव्यक्षेत्र संबन्धवशादभिवर्धिता इति भावः । अनेन न केवलं मदुद्दिष्टदिग्गमनेन मदभीप्सितसाधनमात्रम् । अपि तु भगवदभिमतदेशनिर्वर्णनेन तवापि महती श्रेयस्सिद्धिरिति व्यज्यते । चन्दनारण्यैः श्रीगन्धवनैः । रम्यां रमणीयां—मलयगिरिनिवासभूमित्वादिति भावः । अनेन गन्तव्यादिशश्छायातरुशीतलत्वेन वियति सुदूरमुड्डीयमानस्य क्वचिद्दिनकरकरव्यतिकरवशात्तापसंभवेऽपि, तदपनोदनाय तत्रतत्र छायासु विश्रम्य विश्रम्य गन्तुमपि शक्यमिति ध्वन्यते । मुक्तानां मौक्तिकानां सूतिं प्रसवस्थानं—ताम्रपर्णीसनाथत्वादिति भावः । तस्यां हि षण्मासमौक्तिकानि जायन्त इति रत्नशास्त्रप्रसिद्धिः । एतच्चाग्रे ताम्रपर्णीवर्णनावसरे व्यक्तीभविष्यति ॥ अनेन चक्षुरानन्दसन्दायिप्रशस्तवस्तुभूयिष्ठतया राक्षसराजधानीसांनिध्यप्रयुक्ताचक्षुष्यतासंभावना न कार्येति व्यञ्जितम् । हंसानां मौक्तिकाशनत्वस्य 'श्वेतपक्षो मानसौका

मौक्तिकाशन इत्यपि' इत्यादिकेशवकोशादिषु प्रसिद्धतया तव भोज्यवस्तून्यपि समृद्धानीति सुदूरोड्डीयनश्रान्तिशान्तिरपि ते सुकरेति च व्यज्यते। मलयमरुतां मलयाद्रिसंबन्धिनां मारुतानां—अनेन चन्दनानुबन्धिमलयसंबन्धवत्त्वेन मरुतां शैत्यसौरभ्ये व्यज्येते। वदन्ति हि—'सुगन्धि शीतलं तिक्तम्' इति चन्दनगुणपाठेष्वायुर्वेदविदः। मातरं जनिस्थानमिति यावत्। मातृपदसमभिव्याहृतेन मरुतामिति पदेन तेषां शिशुत्वं द्योतयता मान्द्यमपि ध्वन्यते। तेन वक्ष्यमाणाया दिशस्सुदूरव्यायामोन्मिषितखेदनिराकरणधुरीणता व्यञ्जिता। मलयमरुतां मातरमित्यनेन सुशीतलस्वभावानेकापत्यजननीत्वेन दयाभूयिष्ठताव्यञ्जकेन नित्यसौम्यत्वसूचनात्स्वविषयमुपागतांस्त्वादृशानपि पुत्रवदेव लालयेत्। यातुधानराजधानीसंबन्धनिबन्धनवोरत्वशङ्काऽपि नातिमात्रं कार्येति व्यज्यते। दक्षिणाशां दक्षिणां दिशं संसिद्धिसरळतया सर्वानुकूलैषा दिक् न तु वामस्वभावेति भावः। 'दक्षिणस्सरळे याम्यदिक्स्थे छन्दानुवर्तिनि। अपसव्ये त्रिष्वयं तु देयभेदे दिशि स्त्रीयाम्'॥ इति रत्नमाला॥ एवं गन्तव्यदिशो गुणसमृद्धिरुक्ता॥ अथ गमनप्रयोजनं निर्दिशति—**अस्मदिति**॥ अस्माकं प्रीतिरस्मत्प्रीतिः तस्यैतदर्थं प्रीतिं संपादयितुमित्यर्थः 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी। न केवलं ममैकस्यैव प्रीतिः अपि त्विक्ष्वाकुकुलीनानां सर्वेषामपि प्रीतिर्भविष्यतीति भावः। न केवलमेतावदेवेत्याह—**जनकेति**॥ जनकतनयायाः सकलभुवनविदितम-

हामहिम्नो ब्रह्मविदामग्रेसरस्य महाराजर्षेर्जनकस्य दुहितुः न तु यस्याः कस्याश्चित्—जनकतनयाशब्देन 'मिथिलाधिपतिर्वीरो जनको नाम धर्मवित्' इत्युपक्रम्य 'अनपत्येन च स्नेहादङ्कमारोप्य च स्वयम् । ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः' इत्ययोध्याकाण्डे 'अपदेशेन जनकान्नोत्पत्तिर्वसुधातलात्' इति युद्धकाण्डे चोक्तरीत्या जनकतनयात्वमप्यस्या व्याजमात्रादेव न तु साक्षादिति ध्वन्यते ॥ जीवितार्थं प्राणधारणार्थं च 'उज्जीवयति यत्नेन यस्तु कृच्छ्रगतां सतीम् । तस्य पुण्यफलं वक्तुं नाहं शक्तो नराधिप' इत्युक्तरीत्या सामान्यतो यस्याः कस्याश्चित्साध्व्याः प्राणत्राणस्यैवापरिमितफलत्वे ईदृशजनकतनयोज्जीवने कियती स्याद्वा सुकृतसमृद्धिरिति भावः । गच्छन् सन् रक्षसां पदं स्थानमित्येकं दोषस्य लेशं कणं न त्वयमपि पर्याप्तो दोष इति भावः ॥ सहेथाः क्षमेथाः 'षह मर्षणे' प्रार्थनायां लिङ् मध्यमपुरुषैकवचनम् 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इत्युक्तरीत्या गुणानां भूयस्त्वे समग्र एकोऽपि दोषो नोन्मज्जति किंपुनस्तल्लेशः । यद्वा—'एको गुणः खलु निहन्ति समस्तदोषान्' इत्युक्तरीत्या एकस्यापि गुणस्य सर्वदोषक्षपणनिपुणत्वे भूयस्सु गुणेषु जाग्रत्सु कथमेको दोष उन्नमयितु शक्नुयान्मूर्धानम् । अथ कथंचिल्लेशतो मन्दरमुदश्चितोऽपि सोढव्यस्त्वयेति भावः ॥ किंच 'भूयांसोऽपि च सोढव्या दोषास्सत्फललिप्सुभिः । किंपुनर्लेशमात्रास्तु नाक्लेशाल्लभ्यते फलम्' इत्याद्युक्त-

रीत्या अस्मत्प्रीतिसंपादनजतकतनयोज्जीवनलक्षणमहत्तरफललाभावश्यंभावेनाल्पीयानयं दोषः क्षन्तुमुचित एवेति भावः। ननु कथमिममसुखाव हतया दुस्सहं दोषलेशमपि सहेयेत्यतस्संबोधयति सखे इति ॥ सखित्वादस्मदर्थं महत्यपि कृच्छ्रे सोढव्ये किमेतावद्दोषलेशमर्षणं दुष्करं स्यादिति भावः। यथोच्यते श्रीमति किष्किन्धाकाण्डे 'धनत्यागस्सुखत्यागो देहत्यागोऽपि वा पुनः। वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथागतम्' इति ॥ [1]अत्र स्थानैर्दिव्यैरुपचितगुणामित्यादिविशेषणानामुक्तरीत्या राक्षसराजधान्याश्रयत्वप्रयुक्तदुर्गमत्वादिशङ्कापरिहारपूर्वकगमनसौकर्याभिप्रायगर्भत्वात्परिकरालंकारः। किंच हंसगमनस्य हेतोरिक्ष्वाकुकुलीनप्रीतिसीतोज्जीवनरूपहेतुमत्साहित्येन वर्णनाद्धेत्वलंकारः 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति लक्षणात् ॥ ९ ॥

अथ 'प्रयाणोपक्रमे हर्षो मार्गे सर्वत्र सौख्यदः। मनःप्रसादः प्रथमं प्रस्थाने सिद्धिकारणम्' इत्याद्युक्तरीत्या प्रस्थितस्य तव सुखोदर्कस्सिद्धिसूचकः प्रहर्षः प्रथममेव संभविष्यतीत्याह रामभद्रः—

[1]अत्र स्थानैर्दिव्यैरित्यादिविशेषणानामुक्तरीत्या राक्षसराजधान्याश्रयत्वप्रयुक्तदुर्गमत्वादिशङ्कापरिहारपूर्वकगमनसौकर्याभिप्रायगर्भत्वात्परिकरालङ्कार इति रसास्वादिनी ॥ यत्तु—अत्रोपचितगुणत्वादीनां विशेषणानां दोषलेशसहनं प्रति हेतुतया काव्यलिङ्गमिति तदसत् उपचितगुणामित्यादिविशेषणानां विश्रान्तिस्थानवत्त्वदर्शनीयवस्तुसमृद्धिमत्त्वश्रमापनोदकवस्तुमत्त्वसर्वानुकूलत्वरूपप्रकृतार्थोपपादकार्थव्यञ्जकतायास्स्वयमेव वर्णिततया परिकरस्यैवावतारेण काव्यलिङ्गाभिधानस्य स्वोक्तिविरुद्धत्वात् साक्षादेव विशेषणस्योपपादकत्वे काव्यलिङ्गं प्रकृतार्थोपपादकार्थव्यञ्जकत्वे परिकर इति ह्यालंकारिकराद्धान्तः ॥ ९ ॥

**वाचालानामिव जडधियां सत्कवौ दूरयाते**
**कैलासाय त्वयि गतवति क्षीबतामाश्रितानाम् ।**
**संमोदस्ते पथि परिणमेच्चन्द्रकैरुज्झितानां**
**मेघापाये विपिनशिखिनां वीक्ष्य वाचंयमत्वम् ॥**

वाचालानामिति ॥ सन् प्रशस्तः कविस्सत्कविः अदोषसगुणसालंकारोत्तमकाव्यनिरर्गळनिबन्धनधुरंधरः तस्मिन् दूरं वृत्तान्तश्रवणस्याप्यनर्हं प्रदेशं याते गते सति यत्किंचिद्दूरस्थेऽपि पुनःपुनस्तदुदन्तश्रवणेन तत्स्मरणसान्तत्याद्भयोन्मेषस्य दुर्वारत्वात् 'निश्वासोऽपि न निर्याति बाणे हृदयवर्तिनि । किं पुनः प्रकटाटोपपदबन्धा सरस्वती' इत्युक्तरीत्या वक्ष्यमाणपृथग्जनानामसंबद्धाऽपि वाणी मुखान्न निस्सरेदिति भावः ॥ जडा स्तब्धा, धीः बुद्धिः, येषां ते जडधियः मूर्खाः तेषामिव धीरेव जडा क नु नाम सत्कविकुलैकार्हं प्रतिभाप्रभावविजृम्भितं विना येन नैवोन्मिषेत्कविता उन्मिषिताऽपि हासास्पदमेव भवेदिति भावः । एवं धीजाड्ये त्रिचतुरपदकसंदर्भोऽपि दुश्शकः किमुत बहुजन्मसंततिसंततसुकृतपरिणतिरूपसरसकवनकथास्मरणमपि नामेति द्योतितम् ॥ यदाहुः—'द्वे वर्त्मनी गिरां देव्याश्शास्त्रं च कविवर्त्म च । प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम् ॥ स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता ॥ प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः । तदनुप्राणनाज्जीवेद्वर्णनानिपुणः कविः ॥ सति वक्तरि सत्यर्थे सति

शब्दानुशासने। अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥ शक्तिः कवित्वबीजं हि प्राक्तनी काऽपि संस्क्रिया। यया विना न प्रसरेत्काव्यं शिक्षावतामपि ॥ व्युत्पत्तिगौरवबलाद्यदि किंचित्कथं चन। प्रसारितं परं तच्च हास्यमेव न संशयः' इति ॥ सत्कवावित्येतद्धंसस्य विशेषणमपि भवितुमर्हति। तदा सन् प्रशस्तः कविर्जलचरखगः तथोक्त इत्यर्थः 'कं शिरोऽम्बुनोः, विविष्किरपतत्रयः' इति चामरः ॥ त्वयि कैलासाय कैलासाद्रिमित्यर्थः। कैलासस्य गत्यर्थकर्मत्वात् ॥ 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इत्यनेन वैकल्पिकी चतुर्थी। गतवति सति 'संप्रस्थिता मानसवासलुब्धाः' इत्युक्तरीत्या मानससरोनिवासार्थं गते सतीत्यर्थः ॥ गच्छतेः क्तवतुः। कैलासे हि मानससरस्स्थितिः। तदुक्तं बालकाण्डे। 'कैलास पर्वते राम मनसा निर्मितं सरः। ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः' इति ॥ वाचालानां स्वेच्छया विकृतं नदतामिति यावत् जडधीपक्षे तु कुत्सितबहुभाषिणामित्यर्थः। वागेषामस्तीति वाचालाः। 'वाचो ग्मिनिः' इत्यतो वाच इत्यनुवृत्तौ 'आलजाटचौ बहुभाषिणि कुत्सित इति वक्तव्यम्' इति कुत्सितबहुभाषणार्थे मत्वर्थीय आलच् अपदत्वान्न कुत्वं 'स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्' इत्यमरः। जडधीत्वेन कथंचिदपि काव्याभासमात्रस्यापि ग्रथनेऽक्षमतया केवलवाक्कलकलेन पामरजनव्यामोहनाय प्रागल्भ्यं प्रथयतामिति भावः ॥ किंच—क्षीबतां घनागमवशान्मत्ततां 'मत्ते शौण्डोत्कटक्षिबाः' इत्यमरः। आश्रितानां प्राप्तानां पक्षे तावन्मात्रेणैवा-

सदृशम्मन्यतया निमीलिताक्षाणामिति भावः। मेघापाये जलधरविगमे सति शरत्काल इति यावत्। इदानीं त्वय्यागते सतीति भावः। मेघापायादिति पाठे मेघविगमाद्धेतोरित्यर्थः। चन्द्रकैः मेचकैः 'समौ चन्द्रकमेचकौ' इत्यमरः॥ बर्हैरिति व्याख्यानं तु मन्दं 'पिञ्छबर्हे नपुंसके' इति बर्हनाम्नश्चन्द्रकापेक्षया पृथगनुशासनात्॥ उज्झितानां त्यक्तानां 'त्यक्त्वा वराण्यात्मविभूषणानि बर्हाणि तीरोपगता नदीनाम्। निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमदा मयूराः' इत्युक्तावस्थां प्राप्तानामिति भावः। विपिनशिखिनां वनमयूराणां वाचंयमत्वं 'नभस्समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु। प्रियास्वसक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः' इत्युक्तरीत्या मौनव्रतवत्त्वं 'वाचि यमो व्रते' इति खच्। 'वाचंयमपुरंदरौ च' इति निपातनाद्वाक्छब्दस्यामन्तत्वं निष्कूजत्वमिति यावत्[1]

[1] वीक्ष्य विशेषेण दृष्ट्वा...गच्छत इत्यध्याहारेण वीक्षणगमनयोरेककर्तृकत्वलाभात्...क्त्वाप्रत्ययः....अन्यथा परिणमिवीक्ष्योरेककर्तृकत्वदौर्घट्यात् क्त्वाप्रत्ययानुपपत्तेः इति रसास्वादिनी॥ यत्तु सम्मोदक्रियया वीक्षणस्य समानकर्तृकत्वात् ल्यबिति—तन्न सन्ति हि भावकृदन्ताश्शब्दा द्विविधाः क्रियावचनाः यथा पाकादिशब्दाः तदवचनाश्च यथा संयोगविभागसुखदुःखहर्षप्रमोदादिशब्दाः॥ अत्र पाकादिशब्दानां आद्यविधानां योगे 'भुक्त्वा पाकः' इत्यादौ घञन्तपच्यादिप्रतिपाद्यपाकादिक्रियामादाय भुज्यादिस्समानकर्तृकतया क्त्वाप्रत्ययोपपादनं स्यात्साधीयः॥ द्वितीयविधानां संयोगविभागादिशब्दानां योगे तु न तदर्थक्रियामादाय समानकर्तृकतया क्त्वाप्रत्ययसंभवः तेषां शब्दानां क्रियावाचिताया एवाभावात्॥ संयोगविभागादिशब्दानां हि भावकृदन्तानां संयोगत्वादिरूपगुणगतजात्यवच्छिन्नवाचक-

वीक्ष्य विशेषेण दृष्ट्वा यावता हर्षः पर्याप्तिमापद्येत तावद्दृष्ट्वेति भावः । गच्छत इत्यध्याहारेण वीक्षणगमनयोरेककर्तृकत्वलाभात्पौर्व-

---

त्वेन 'जात्यवच्छिन्नसंकेतवती नैमित्तिकी मता' इत्युक्तनैमित्तिकसंज्ञात्वं स्थापितं गदाधरभट्टाचार्यादिभिः । शब्दरत्ने च परोक्तभावकृदन्तताकस्य रसशब्दस्य रथन्तरादिशब्दवद्रूढत्वमभिहितं यक्सूत्रे ॥ प्रमोदशब्दोपि च हर्षत्वरूपचेतनगुणगतजात्यवच्छिन्ने रूढ एव हर्षादिपदपर्यायत्वात् ॥ तस्य केवलयौगिकत्वे तु 'फलव्यापारयोर्धातुः' इत्युक्तेः हर्षरूपफलानुकूलव्यापारत्वेनैव व्यापारस्य ततः प्रत्ययस्स्यात्; न तु हर्षत्वजातिपुरस्कारेण चेतनगुणस्य प्रत्ययो लोकानुभवसिद्धः कोशसिद्धश्च ॥ किं बहुना—हर्षसुखदुःखादयश्शब्दाश्चेतनगतगुणवाचकत्वेन सकलशास्त्रप्रसिद्धा एव दुर्लभास्स्युः तेषामपि भावकृदन्तत्वेन क्रियावाचकत्वस्य भवद्रीत्या आवश्यकत्वात् ॥ एवं सुखदुःखतत्क्रियायामित्यस्माच्चौरादिकात्सुखशब्दो भावेऽचा निष्पादितस्सुधादौ ॥ 'सुखदुःखतत्क्रियायाम्' इत्यत्र च तत्पदेन सुखदुःखरूपप्रातिपदिकार्थो गृह्यत इति मनोरमाधातुवृत्त्यादौ व्यक्तम् ॥ एवञ्च सुखप्रातिपदिकार्थोऽक्रियारूपः सुखधात्वर्थस्तु तत्क्रियारूप इत्येतत्सुखपदस्य रूढिमन्तरा नव सिद्ध्यति ॥ तथाच 'मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसम्मदाः । स्यादानन्दथुरानन्दशर्मशातसुखानि च' इत्यादिकोशपर्यालोचनया सुखपर्यायतया अवगतस्य संमोदशब्दस्यापि चेतनगुणगतजातिविशेषावच्छिन्नवाचकतया क्रियावचनत्वाभावोऽकामेनापि स्वीकार्य इति तदर्थक्रियामादाय क्त्वाप्रत्ययोपपादनमसमञ्जसमेव ॥ तस्माद्गच्छत इत्यध्याहारेणैव तदुपपादनमाचार्यप्रदर्शितमादरणीयमीदृशस्थलेषु ॥ एतेन 'बाह्वोर्वीर्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः' 'इति मतिरुदयासीत्पक्षिणः प्रेक्ष्य भैमीम्" इत्यादयो भट्टनारायणश्रीहर्षादिप्रयोगा अपि व्याख्याताः ॥ तत्रापि दर्पमत्यादिपदानां चेतनगुणवाचितया प्रसिद्धानां दर्पत्वज्ञानत्वादिजात्यवच्छिन्नरूढानां क्रियावाचित्वाभावात् अध्याहारं विना उपपत्त्यसंभवात् अत एव—नैषधव्याख्याने मल्लिनाथस्य 'प्रेक्ष्य मतिः' इति मननक्रि-

कालिकादृशोः क्त्वाप्रत्ययो निर्वोढव्यः। अन्यथा परिणमिवीक्ष्योरेककर्तृकत्वदौर्घट्यात् क्त्वाप्रत्ययानुपपत्तेः॥ "समानकर्तृकयोः पूर्वकाले' इति हि स्मर्यते अत एव 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादौ समानकर्तृकतानिर्वाहार्थं स्थितस्येत्यादि यथासंभवमध्याहार्यम्" इति मनोरमाग्रन्थश्च संगच्छते॥ ते तव पथि मार्गे

यापेक्षया क्त्वाप्रत्ययोपपादनं प्रौढिवादेनेति ध्येयम्, तत्रैव नारायणीयव्याख्याने 'प्रेक्ष्येति भिन्नकर्तृकत्वात्क्त्वानुपपत्तौऽस्थितस्येत्यध्याहार्यम्' इति दर्शनात्॥ 'ज्ञात्वाऽऽरम्भ उपक्रमः' इत्यत्र तु आरम्भपदस्य पाकादिपदवत्क्रियामात्रवाचितया अनध्याहारेणैवोपपत्तिरिति तदुदाहरणमिहानुपयुक्तमेव। न चैवं गच्छतस्तिष्ठत इत्याद्यध्याहारेण क्त्वाप्रत्ययोपपादने न्यूनपदत्वरूपकाव्यदोषप्रसंग इति वाच्यं ईदृशस्थलेषु अपेक्षितपदस्य झडित्यध्याहरप्रतीतेस्तद्दोषानवतारात्॥ सप्तमोल्लासे हि काव्यप्रकाशादौ—'गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमासान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा। मा मा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किंनु मृता नुकिं मनसि मे लीना विलीना नु किम्' इत्यत्र मामेत्यत्र आयासयेत्यस्य माऽतीत्यत्र पीडयेत्यस्य चापेक्षितस्य झडित्यध्याहरप्रतीतेर्न तद्दोष इत्यभिहितम्॥ किंबहुना—'दूरे कृत्वा गुणवति मुहुर्दूयते जीवितं मे' इत्यत्र 'तिष्ठत इत्यध्याहारः अन्यथा दूरीकरणपरितापयोरसमानकर्तृकत्वेन क्त्वाप्रत्ययानुपपत्तेः' इति स्वकृतेनैव विवरणेन तत्रत्यरसास्वादिनीसन्दर्भानुवादपरेण विरुद्धमिहानध्याहारेणैव क्त्वाप्रत्ययोपपादनम्॥ तत्रापि भवद्रीत्या 'जीव बलप्राणधारणयोः' इति जीवनक्रिययैव समानकर्तृकत्वोपपादनसंभवात्॥ अस्मद्रीत्या तु—तत्र जीवितपदस्य रूढ्या प्राणपरतया आचार्यैर्व्याख्याततया तदर्थस्य द्रव्यरूपस्य क्रियात्वविरहेण तिष्ठत इत्यध्याहारापेक्षणं युक्तमेवेति विभावयन्तु विचक्षणाः॥ १०॥

संमोदः अतिशयितो हर्षः परिणमेत् परिपक्को भवेत् । परिपूर्वकान्न-मतेस्संभावनायां लिङ् 'उपसर्गादसमासेऽपिणोपदेशस्य' इति णत्वं स्वप्रत्यागमनमात्रेण निर्वीर्यतयाऽवस्थितानां जडधियां मौनमुद्रां वीक्ष्य महाकवेरिव विमुक्तबर्हाभरणगतोत्सवध्यानपरमयूरदर्शनेन तव महान्प्र-मोदः परिणमेदिति भावः । अत्रोपमानादीनां चतुर्णामप्युपादानाच्छ्रौती पूर्णोपमा । हंससंमोदपरिणतेर्मयूरमौनदर्शनहेतुकत्वात्काव्यलिङ्गं चे-त्येते संसृज्येते ॥ १० ॥

ननु नाहं सामान्यः खगः किंतु राजहंसो राजोपचारार्हः कथं पथि गच्छन्नेकाकी श्रमं सहेयेति हंसाभिप्रायं संभाव्य गच्छतस्तव पथि सर्वेऽप्युपचारा राजार्हा एव संभविष्यन्तीति वदन्नादौ गन्धवाहसेवां भाविनीं संभावयन्नाह—

**आरक्तानां नवमधुशनैरापिबन्पद्मिनीनां**
**कालोन्निद्रे कुवलयवने घूर्णमानस्सलीलम् ।**
**स्विन्नो दानैर्विपिनकरिणां सौम्य सेविष्यते त्वां**
**आमोदानामहमहमिकामादिशन्गन्धवाहाः ॥**

**आरक्तानामिति** ॥ हेसौम्य ! अनेन सेवनार्हत्वौपयिकप्र-सन्नतादिगुणसमृद्धिस्सूचिता । चण्डत्वे तु दुराराधतैव हि भवति यदुच्यते 'तीक्ष्णादुद्विजते लोकः' इति ॥ 'सर्वे चण्डस्य बिभ्यति' इति । गन्धं वहतीति गन्धवाहः 'कर्मण्यण्' मारुतः गन्धद्रव्यवान्क-श्चित्पुमांश्चेति व्यज्यते ॥ 'गन्धो गन्धक आमोदो लेशे संबन्धगर्वयोः ।

स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इति नैघण्टुकाः। आरक्तानां समन्तादरविन्दबन्धुरतया रक्तवर्णानां अनुरागवतीनां मदिरामदरागशालिनीनामिति च व्यज्यते ।[1] पद्मान्यासु सन्तीति पद्मिन्यस्तामरसलताः तासां 'नळिन्यां तु बिसिनीपद्मिनीमुखाः' इत्यमरः ॥ 'कमलमुकुळमृद्वी फुल्लराजीवगन्धिः' इत्यादिवक्ष्यमाणलक्षणपद्मिनीजातिललनानामिति च व्यज्यते ॥ यद्वा—पद्मिनीनां पद्मसंहतीनां "पद्मिनीपद्मसंघाते स्त्रीविशेषे सरोरुहे" इति मेदिनी, "पद्मिनी स्त्रीविशेषे स्यात्सरस्यामम्बुजेऽपि च" इति विश्वश्च तत्संबन्धीत्यर्थः।

[1] पद्मान्यासु सन्तीति पद्मिन्यस्तामरसलतास्तासामिति रसास्वादिनी ॥ यत्तु—पद्मिन्यः कमलिन्यस्तासां कमलसरसीनामिति विवरणम्—तन्न सरसीषु आरक्तानामिति विशेषणासंगतेः तामरसलतापरत्वे तत्संगतेश्च ॥ मधुनः लतासंबन्धस्यैव स्वरसत उपपत्तेश्च ॥ अत्र स्तुते मारुतवृत्तान्ते अप्रस्तुतमधुपानमत्तदक्षिणनायकवृत्तान्त-तीतेस्समासोक्तिरिति रसास्वादिनी ॥ यत्तु—आमोदानामहमहमिकादेशं प्रति आपिबन् घूर्णमानः स्विन्न इति विशेषणानां हेतुत्वात्काव्यलिङ्गमित्यलङ्कारान्तरस्यापि वर्णनं तन्न आपिबन्नित्यादीनां स्वरूपत आमोदाहमहमिकादेशहेतुत्वायोगेन विविधसौरभसमृद्धिमत्ताभिप्रायकतयैव तद्धेतुतायाः वक्तव्यतया काव्यलिङ्गानवतारात् ॥ परिकरालङ्कारस्तु वर्णयितुमत्र युक्तोपि स्फुटत्वादेवाचार्यैरुपेक्षितः ॥ वस्तुतस्तु—पादत्रयेऽत्र विशेषणानां समासोक्त्यर्थमेव निबद्धतया समासोक्तिमात्रमेवाभिहितमाचार्यैः ॥ अत एव एकान्तरितोत्तरश्लोके सूक्ष्माकारैरित्यादिविशेषणानां छत्रायैरभित्युपमोपपादकत्वेऽपि न काव्यलिङ्गं परिकरो वा भवद्भिरपि प्रदर्शितम्। उपमोपपादकानामप्युपमाशरीरप्रविष्टत्वेनैवोपपत्तेरिति दिक् ॥ ११ ॥

नवं प्रत्यग्रं मधु मकरन्दं नूतनमासवं च "मधु माध्वीकमद्ययोः" इत्यमरः। मधुनो नवत्वविशेषणेन रुच्यतिशयो मादकताऽतिशयश्च व्यज्येते। शनैः अद्रुतं—"अद्रुते शनैः" इत्यमरः। आपिबन् आचूषयन्नित्यर्थः। मारुतप्रसारे हि द्रवद्रव्यं शनैश्शोषमुपैति। पक्षे यावत्पर्याप्त्यास्वादयन्नित्यर्थः। माधुर्यातिशयेन सहसा पातुमशक्यतया शनैरापिबन्नित्युक्तं मधुपायिनश्शनैरेव मधु पिबन्तीति हि प्रसिद्धिः। पद्मिनीमधुसंबद्धत्वेन मारुतस्य शैत्यसौरभ्ये व्यञ्जिते—शनैरित्यनेन मान्द्यमुक्तं काले निशासमये उन्निद्रे उत्फुल्ले कुवलयवने सितासितादिभेदभिदुरोत्पलवने रात्रिविकासस्य सर्वसाधारण्यात्। "स्यादुत्पलं कुवलयम्" इत्युत्पलसामान्यवाचितया कुवलयशब्दोऽमरेणानुशिष्टः। सलीलं लीलाविशिष्टं यथा स्यात्तथा घूर्णमानः मण्डलाकारं भ्रमन् घूर्णतेर्भ्रमणार्थकाद्भौवादिकात्कर्तरि शानच्। अनेन मधुपाननिमित्तकमदाघूर्णितत्वं द्योत्यते। अत्रापि कुवलयवने इत्यनेन मारुतस्य शैत्यसौरभ्ये घूर्णमान इत्यनेन मान्द्यं च द्योत्यन्ते एवं श्लोकपादद्वयेन क्रमेणाह्नि रात्रौ च जलाशयप्रान्तगमनवसरेषु मारुतेन करिष्यमाणं सेवनमुक्तं अथ वनेषु गच्छतस्तस्य तत्करिष्यमाणं सेवनमाह—स्विन्न इति॥ विपिनकरिणां वनगजानां दानैः मदोदकैः "मदो दानम्" इत्यमरः॥ उभयत्र बहुवचनेन मदस्य निरवधिकत्वं द्योतितं स्विन्नः स्वेदयुक्तः आर्द्रीकृत इति यावत् स्विद्यतेरनिट्कारिकासु पठितान्निष्ठायां "रदाभ्यां निष्ठातो नःपूर्वस्य च दः" इति निष्ठातकारतत्पूर्वदकारयोर्नत्वम्। पक्षे मधुपा-

नमदप्रयुक्तस्वेदवत्त्वं सूचितम् । अत्रापि विपिनगजानुवृत्त्या मरुतो मान्द्यं दानभिन्नतोक्त्या शैत्यसौरभ्ये च व्यञ्जितानि अत एव आमोदानां अतिदूरव्यापिनां विमर्दोत्थजनमनोहरगन्धानां "विमर्दोत्थे परिमळो गन्धे जनमनोहरे । आमोदस्सोऽतिनिर्हारी" इत्यमरः। अतिनिर्हारी अतिदूरगामीत्यर्थः अनेन "आमोदानां समीपवर्त्यतिशयगन्धानाम्" इति व्याख्यानमपास्तम् ॥ अहमहमिकां अन्योन्यापेक्षया स्वस्वोत्कर्षप्रकाशनम् । अहमहमिति शब्दोऽस्यामस्तीत्यहमहमिका परस्पराहङ्कारप्रकाशिका क्रिया अहङ्कारवाचिनोऽहमित्यव्ययस्य वीप्सायां द्वित्वे व्रीह्यादित्वान्मत्वर्थीयष्ठन् बहिषष्टिलोपविधानसामर्थ्यादव्ययानां भमात्रेटिलोपोऽनित्य इति ध्येयम् ॥ "अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः" इत्यमरः । आदिशन् आज्ञापयन् प्रतिपादयन् सन्नित्यर्थः ॥ त्वां सेविष्यते भक्ष्यते । "सिषेवे च तदा वायू रामकार्यार्थसिद्धये" इत्युक्तरीत्या मदर्थं प्रस्थितं हनूमन्तमिव त्वामप्यवश्यं परिचरिष्यतीति भावः । अतस्तव व्यायामखेदलेशोऽपि न संभविष्यतीति द्योत्यते ॥ अत्र प्रस्तुते मारुतवृत्तान्ते अप्रस्तुतमधुपानमत्तदक्षिणनायकवृत्तान्तप्रतीतेस्समासोक्तिरलङ्कारः ॥ "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्" इति लक्षणात् ॥११॥

न केवलं मन्दमारुतस्स्वयमेव त्वामुपचरिष्यति किं त्वन्यानपि तवोपचारे प्रेरयिष्यतीति वदिष्यंस्तत्रादौ तत्प्रेरितैर्बन्धूकतरुभिः करिष्यमाणमुपचारं संभाव्याह—

पर्याप्तं ते पवनचलितैरङ्गरागं परागै
स्थाने कुर्युस्समसमुदयाद्बन्धवो बन्धुजीवाः ।
येनान्वि(न्वे)ष्यस्यचलतनयापादलाक्षानुषक्तं
चूडाचन्द्रं पुरविजयिनस्स्वर्णदीफेनपूर्णम् ॥

पर्याप्तमिति ॥ समसमुदयात् तुल्यकालोन्मिषितत्वात् तवेव तेषामपि शारदत्वादिति भावः ॥ बन्धवः स्वजनभूताः "सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनास्समाः" इत्यमरः ॥ [1]बन्धुजीवाः बन्धूककुसुमानि "बन्धूको बन्धुजीवकः" इत्यमरः ॥ बन्धुजीवानां विकारोऽवयवो वा बन्धुजीवाः "अवयवे च प्राण्योषधिवृक्षेभ्यः" इति विहितस्य वैकारिकाणः "पुष्पमूलेषु बहुळम्" इत्यनेन लुपि "लुपि युक्तवद्व्यक्तिवचने" इति प्रकृतिवल्लिङ्गवचने—बन्धून् जीवयन्ति बन्धुषु विषये जीवोऽसुधारणं येषामिति वा व्युत्पत्त्या तेषां त्वादृशबन्धुषु निरतिशयप्रीतिमत्ता नैसर्गिकीति द्योत्यते ॥ "जीवोऽसुधारणम्"

[1] बन्धुजीवाः बन्धूककुसुमानीति रसास्वादिनी ॥ यत्तु—बन्धुजीवा बन्धूकवृक्षा इति विवरणम्—तन्न समसमुदयादिति हेत्वसंगतेः बन्धूकवृक्षाणां सार्वकालिकत्वात् तत्कुसुमानामेव शारदत्वेन कुसुमपरत्व एव तत्संगतेश्च । ननु शारदत्वं शरत्कालभवत्वं तस्य च बन्धूककुसुमेषु सम्भवेऽपि हंसे तदभावात्कथं "तवेव तेषामपि शारदत्वादिति भावः" इति रसास्वादिनी संगच्छतामिति चेच्छ्रूयताम् । शारदशब्दस्यात्र प्रभवतीत्यर्थे अणा निष्पन्नत्वेन शरत्कालप्रभवार्थकत्वस्य निष्प्रत्यूहत्वात् तदर्थस्य चोभयत्राक्षतत्वादिति । प्रभवति प्रकाशत इत्यर्थः ॥

इत्यमरः ॥ स्थाने स्वस्वनिवासप्रदेशे पवनचलितैः मारुतनुन्नैः परागैः रजोभिः "परागस्सुमनोरजः" इत्यमरः ॥ ते पथिगच्छतस्तत्र पर्याप्तं परिपूर्णं न त्वप्रीतमनस्कतया विकलमिति भावः। रज्यतेऽनेनेति रागः करणे घञ् अङ्गस्य रागः अङ्गरागः अनुलेपनं तं कुर्युः रचयेयुः ॥ "पूजयेयुर्गृहस्थास्तु बान्धवान्गृहमागतान्" इत्युक्तरीत्या त्वामवश्यमुपचरेयुरिति भावः ॥ यद्वा—पर्याप्तमित्येतत्क्रियाविशेषणं स्थानैः इत्येतदेदन्तमव्ययं तदा पर्याप्तं यथा स्यात्तथा अङ्गरागं कुर्युरिति स्थाने इति योजना—उक्तरीत्या तेषां बन्धुत्वाद्बन्धुजीवत्वाच्चैवंजातीयकोपचारकरणं युक्तमित्यर्थः "युक्ते द्वे सांप्रतं स्थाने" इत्यमरः। अत एव समालङ्कारः। बन्धुजीवककरिष्यमाणाङ्गरागोपचारसमनन्तरभाविनीं हंसस्य विलक्षणशोभासंपदं संभावयन्नङ्गरागं विशिनष्टि ॥ येनेति येनाङ्गरागेण अचलतनयायाः पार्वत्याः पादयोर्लाक्षया अलक्तकरसेनेति यावत् अनुषक्तं रञ्जितमिति यावत्। मानापनोदनार्थप्रणामावसरेषु चन्द्रशेखरशिरसः पार्वतीचरणस्पर्शेन तत्रत्यचन्द्रमसस्तल्लाक्षारससंसर्गसंभवादिति भावः। पुरविजयिनः पिनाकिनः चूडाचन्द्रं शेखरभूतं बालचन्द्रं अन्विष्यसि अनुसरिष्यसि। तुलयिष्यसीति यावत्। गत्यर्थकादिष्यतेर्दैवादिकाद्वान्विष्यदर्थे "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट्। यद्यप्यनुपूर्वकस्येष्यतेः "अन्वेषणं गवेषणम्" इत्यादिकोशैः "एष्यन्त्यन्वेषकास्तस्याः—इयेष पदमन्वेष्टुं—अन्विष्य राक्षसां लङ्कां" इत्यादिप्रयोगैश्च गवेषणार्थकत्वमेव प्रसिद्ध्यति, न तूपमानार्थकत्वं, तथाऽपि कथंचिदुपमानार्थकत्वं नि-

र्वाह्यं अन्वेष्यसीति पाठस्तु स्वच्छः । अनुपूर्वकस्येणस्सादृश्यार्थकत्वस्य "यदिन्दोरन्वेति व्यसनमुदयं वा" इत्यादिप्रयोगैः "तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्य वाऽनुकरोतीति शब्दास्साधर्म्यवाचकाः" इति दण्डिवचनेन च निर्बाधत्वात् लृडन्तत्वेन विवक्षितभविष्यदर्थस्याक्लेशेनैव लाभाच्च । ननु राजहंसस्य पूर्णेन्दुसाधर्म्यमुचितं "सुप्तैकहंसं कुमुदैरुपेतं महाह्रदस्थं सलिलं विभाति ॥ घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवान्तरिक्षम्" इत्यादौ तथैव वर्णितत्वात्, तत्कथमिह बालचन्द्रसाधर्म्यमुच्यत इत्यत आह—स्वर्णदीति ॥ स्वर्णद्याः शिवशिरःस्थितायाः गङ्गायाः "गिरिनद्यादीनां वा" इति णत्वं [1]फेनेन डिण्डीरेण "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः ॥ पूर्णं पूर्णमण्डलमिति यावत् चूडाचन्द्रमन्वेष्यसीत्यन्वयः । अत्र पूर्वार्धे विशेषणविशेष्ययोर्बन्धुबन्धुजीवशब्दयोरङ्गरागार्पणोपचारकरणौचित्याभिप्रायगर्भत्वात्परिकरपरिकराङ्कुरौ संकीर्येते तदुत्तम्भितश्च समालंकारः तत्र परिकराङ्कुरस्योक्तरीत्या श्लेषोज्जीवितत्वं विशेषः । उत्तरार्धे तु बन्धु-

---

[1] फेनेन डिण्डीरेण—डिण्डीरोऽब्धिकफः फेनः इत्यमर इति रसास्वादिनी॥ यत्तु—"यद्यपि डिण्डीरोऽब्धिकफः फेन इति कोशेन फेनशब्दोऽब्धिकफवाची" इत्याशङ्क्य "तथाऽपि तत्तुल्यत्वादन्यत्रापि प्रयुज्यते" इति फेनशब्दस्यात्र गौणतया समाधानम्—तन्न अश्वकर्णादिशब्दवदब्धिकफशब्दस्य फेनत्वजात्यवच्छिन्ने केवलरूढतया फेनादिशब्दानामम्बुकफमात्रे मुख्यतयैवोपपत्तेः योगरूढत्वेऽपि अग्निहोत्रहलिप्रियादिपदवत् एकदेशवृत्तियोगेनापि तदुपपत्तेश्च ॥ अत एव वैजयन्त्यां जलाध्याये "डिण्डीरोऽम्बुकफः फेनः बुद्बुदस्थानकौ समौ" इत्येवं फेनडिण्डीरशब्दौ अम्बुकफसामान्यपर्यायतयैव पठ्येते ॥ १२ ॥

जीवकार्पितपरागाङ्गरागरञ्जितस्य राजहंसस्य पार्वतीपादलाक्षारसासिक्तस्व र्गदीफेनपरिपूर्णहरशिरश्चन्द्रसादृश्यवर्णनादुपमालङ्कारः । स च चन्द्रस्य पार्वतीपादलाक्षारसानुषङ्गासंबन्धेऽपि तत्संबन्धकल्पनात्मकातिशयोक्त्या हंसस्य तादृशाङ्गरागरञ्जितत्वासंबन्धेऽपि तत्संबन्धवर्णनात्मकातिशयोक्त्या चोत्तम्भितेन तयोस्स्वशुक्लगुणत्यागपूर्वकलाक्षारसाङ्गरागारुण्यगुणग्रहणवर्णनात् "तद्गुणस्स्वगुणत्यागादन्यदीयगुणग्रहः" इति लक्षितेन तद्गुणालङ्कारेण चन्द्रस्य स्वर्गदीफेनपूर्णत्वासंबन्धेऽपि तत्संबन्धकल्पनरूपातिशयोक्त्या चासादितवैभव इति संकरः । अनुषक्तमित्यस्य सर्वावयवरञ्जितत्वार्थेऽनभिसंधौ तु न तद्गुणालङ्कारोत्तम्भितत्वमुपमाया इति ध्येयम् । इमामभूतोपमेति केचिद्व्यवहरन्ति तथा च दण्डी—"सर्वपद्मप्रभासारस्समाहृत इव क्वचित् । त्वदाननं विभातीति तामभूतोपमां विदुः" इति ॥ इयमपि हंसस्य चन्द्रसाधर्म्योक्तौ येनेति हेतूपन्यासाद्धेतूपमारूपा । तल्लक्षणं चोक्तं तेनैव—"कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् । राजन्ननुकरोषीति सैषा हेतूपमा मता" इति पूर्वोत्तरार्धोक्तयोरलङ्कारयोस्संसृष्टिः । किंच—रागं परागैः समसमुदयान् इत्यत्र द्वयोर्द्वयोर्व्यञ्जनयोरावृत्त्या वर्णान्तरव्यवधानाव्यवधानसाधारण्येन व्यञ्जनद्वयद्वयावृत्तावपि छेकानुप्रासमभ्युपगच्छतां काव्यप्रकाशकृदादीनां मते छेकानुप्रासः "द्वयोर्द्वयोर्व्यञ्जनयोर्युग्मयोर्या निरन्तरा । आवृत्तिश्श्रूयते सोऽयं छेकानुप्रास इष्यते" इति वर्णान्तरनैरन्तर्येण व्यञ्जनद्वयद्वयावृत्तिमेव तमलङ्कारं लक्षयतां तथैवोदाहरतां धर्मसूरिविद्याना-

थादीनां मते तु वृत्त्यनुप्रास एव । एतत्सर्वं लक्ष्मीसहस्ररत्नप्रकाशिकायां प्रारम्भस्तबके "अभूगिरित्वद्भूमा" इति श्लोकव्याख्यानावसरे विस्तरेण निरूपितमस्माभिः ॥ १२ ॥

अथ मारुतप्रेरितैश्शारदनीरदैः करिष्यमाणमुपचारमाह—

**सूक्ष्माकारैर्दिनकरकरैः कल्पितान्तश्शलाकाः**
**शारोपान्ताश्शतमखधनुश्शेषचित्रांशुकेन ।**
**ऊढाः पश्चादुचितगतिना वायुना राजहंस-**
**च्छत्रायेरन्नभसि भवतश्शारदा वारिवाहाः॥ १३**

सूक्ष्मेति ॥ हे ! राजहंस! हंसानां राजा राजहंसः, तस्य संबुद्धिः राजदन्तादित्वात्परनिपात इत्यवोचाम । अनेनात्र वक्ष्यमाणच्छत्रोपचारार्हत्वं द्योत्यते । शरदि भवाः शारदाः "कालाठ्ठञ" इति भवार्थे प्राप्तठञोऽपवादः "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" इति विहित ऋत्वण् अनेन जलापायविपाण्डुरत्वं द्योतितं वारीणि वहन्तीति वारिवाहाः कर्मण्यण् भूयिष्ठवर्षावशिष्टजललववत्त्वद्योतकेनानेन शीतलत्वं तेन तापापनोदनौपयिकत्वं च द्योत्यते सूक्ष्मः श्लक्ष्णः आकारो येषां तथोक्तैः "स्तोकाल्पक्षुल्लकास्सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु" इत्यमरः । दिनकरकरैर्भानुकिरणैः विषयभूतदिनकरकराणां सूक्ष्माकारताविशेषणाद्विषयिभूतशलाकानामपि सूक्ष्माकारत्वं सूचितम् । तेन राजार्हशिल्पनैपुणं द्योत्यते । यथोच्यते—

श्रीरामायणे—"यत्रैतदिन्दुप्रतिमं विभाति छत्रं सितं सूक्ष्मशलाकमग्र्यम्" इति । दिनकरकराणां शलाकात्वरूपणाच्छलाकानां भूयस्त्वं सूचितम्—तेनापि राजोचितत्वं द्योतितम् । तदप्युच्यते तत्रैव—"न ते शतशलाकेन जलफेननिभेन च । आवृतं वदनं वल्गु छत्रेणातिविराजते" इति तेन मेघातपत्राणामतिविशङ्कटत्वद्योतनात्तत्रापि बहुवचनेनानन्त्यद्योतनादसूर्यंपश्यतयैव त्वया महाराजेनेव गन्तुं शक्यमिति ध्वन्यते । कल्पिताः विरचिताः अन्तश्शलाकाः विकासोत्तम्भनार्थशलाकाः येषां ते तथोक्ताः [1]दिनकरकरेषु शलाकात्वरूपणात्तासां शलाकानां हिरण्मयत्वं द्योत्यते। [2]शतमखधनुषः इन्द्रचापस्य शेषः अवशिष्टांश एव चित्रांशुकं नानावर्णाम्बरं तेन अत्र शेषशब्देन घनानां वर्षासमयव्यपायेन विरळतया विमुक्तावशिष्टयत्किञ्चित्सलिललेशगर्भतया च रविकिरणप्रतिबिम्बासामग्र्यवशादिन्द्रधनुषोऽसम्मूर्छितत्वेन खण्डतया तत्रतत्र प्र-

---

[1] दिनकरकरेषु शलाकात्वरूपणात्तासां शलाकानां हिरण्मयत्वं द्योत्यते—इति रसास्वादिनी ॥ यत्तु—हिरण्मयत्वद्योतनमुपेक्ष्य "अनेन शलाकानां भास्वरत्वं सूचितमित्युक्तम्—तन्न भास्वरत्वमात्रेण राजोचितत्वालाभेन तल्लाभार्थं हिरण्मयत्वद्योतनोक्तेरेव युक्तत्वात् ॥

[2] शतमखधनुषः इन्द्रचापस्येति रसास्वादिनी ॥ यत्तु—शतमखधनुषः इन्द्रचापस्य तन्नामकस्य कान्तिविशेषस्येत्यर्थं इति—तन्न "सूर्यस्य विविधवर्णाः" इत्यादौ सूर्यकिरणरूपताया एव इन्द्रधनुषो निरूपणात् न खलु किरणकान्त्योरभेदः किरणपर्यायेभ्यः पृथगेव "शोभा कान्तिर्द्युतिश्छविः" । इति कान्तिपर्यायपाठात् ॥

काशनं द्योतितम्। [1]शारः चित्रवर्णः उप न्त प्रान्तो येषां ते— तथोक्ताः "शारो वायौ स तु त्रिषु। कर्बुरे" इत्यमरः। प- श्चात् उचिता अनुकूला गतिर्गमनं यस्य तथोक्तेन यथा स्वो- ह्यमानमेघातपत्रावस्थानवैषम्येण तव दिनकरकरव्यतिकरलेशोऽपि न सं- भवेत्तथाऽवहितगमनेनेति भावः। वायुना मारुतेन अनेन "अनु- कूलो ववौ वायुः" इत्युक्तरीत्या प्रयाणमाङ्गल्यनिमि मानुकूल्यमपि द्योतितं ऊढाः प्रेरिताः धृताश्च सन्तः वहतेर्निष्ठायां "वचिस्वपिय- जादीनां किति" इति संप्रसारणे ढत्वधत्वष्टुत्वढलोपदीर्घाः। भवतः तव नभसि अन्तरिक्षे छत्रायेरन् श्वेतच्छत्राणीवाचरेयुः शारदनी- रदानां धवळत्वादिति भावः। छत्रशब्दादाचारार्थे "कर्तुः क्यङ् सलो- पश्च" इति क्यङि "सनाद्यन्ता धातवः" इति धातुत्वे ङित्त्वा- दात्मनेपदं "अकृत्सार्वधातुकयोः" इति दीर्घः संभावनायां लिङ्। अत्र दिनकरकरादेश्शलाकादित्वेन रूपणाद्रूपकालङ्कारः। स चानु

[1] शारः चित्रवर्ण इति रसास्वादिनी॥ यत्तु—शारः कर्बुरवर्णः कृ- ष्णरक्तसितरूप इति यावदिति व्याख्यानम्—तन्न दिनकरकराणां वर्णावान्तर- जातिभेदेन वैविध्यस्यागमसिद्धतया कृष्णरक्तसितपाटलादिविविधवर्णवत्त्वस्यैव वै- चित्र्यातिशयावगमकतया वक्तुमुचितत्वात् "सूर्यस्य विविधवर्णाः पवनेन विघ- ट्टितास्साभ्रे। वियति धनुस्संस्थाना ये दृश्यन्ते तदिन्द्रधनुः॥" इत्युपक्रम्य कृष्णरक्तसितपाटलपीतादिवर्णानामिन्द्रधनुषि बृहत्संहितायामुपवर्णितत्वात्। श्रीम- न्न्यायसिद्धाञ्जनेऽपि सितरक्तपीतकृष्णभेदेन रूपचातुर्विध्यमभिधाय प्रत्येकं तत्तद- वान्तरजातिभूयस्त्वमन्वग्राहि॥

भगताद्रूप्यरूपः "नद्या शेखरिणे दृशा तिलकिने" इत्यादाविव वैयधिकरण्येनोक्तः । तदुज्जीविता शारदनीरदेषु छत्रोपमानतावर्णनादुपमा, सा च धावल्यादिधर्मस्य इवाद्युपमानवाचकस्य चानुक्तत्वादनुक्तधर्मेवादिः कर्तृक्यङा लुप्तेति ध्येयम् । वृत्त्यनुप्रासेन चेयमेकवाचकानुप्रविष्टेन संकीर्यते ॥ १३ ॥

एवं राजोपचारवैभवानुभवसुखेनैव यापितमार्गस्सीतां द्रक्ष्यसीति [1]गमनस्य प्रधानं प्रयोजनमाह—

**द्रक्ष्यस्येवं प्रियसख सुखं लङ्घिताध्वा सखीं ते सीतां क्षेत्रे जनकनृपतेरुत्थितां सीरकृष्टे ।**
**गोपायन्ती तनुमपि निजां या कथंचिन्मदर्थं भूमौ लोके वहति महतीमेकपत्नीसमाख्याम् ॥ १४ ॥**

[1] गमनस्य प्रधानं प्रयोजनमाह— द्रक्ष्यसीति इति रसास्वादिनी ॥ यत्तु — गमनस्यावान्तरं प्रयोजनमाह इत्यवतारणम् —तन्न सीतादर्शनसन्देशार्पणसीताजीवनानां त्रयाणामपि गमनोद्देश्यतया प्रधानफलत्वात् । गमनकालिकभगवद्दिव्यायतनदर्शननिरुत्सुकमयूरानरीक्षणाधीनसम्मोदपरिणतिगन्धवाहसेवास्वीकरणबन्धुजीवकृतोपचारबहुमान वारिदच्छत्री-वनानुभवनान्येव हि "स्थानैः" इत्यादि श्लोकवर्णितानि गमनानुद्देश्यतयाऽवान्तरफलानि । अत एव अर्चिरादिगमनकालिकानां भोगानामेवानुषङ्गिकत्वं गमनसमनन्तरस्य परमपदारोहणपर्यङ्कारोहणादेरपि प्रधानफलत्वं च न्यायसिद्धाञ्जनादावाचार्यैस्स्वयमेवानुगृहीतं "फलं परमपदपर्यङ्कारोहणादिकम्" इत्यादौ संगच्छते ॥

द्रक्ष्यसीति ॥ प्रियश्चासौ सखा च प्रियसखः तस्य संबुद्धिः हे! प्रियसख! "राजाहस्सखिभ्यः" इति टच् अस्याश्च संबुद्धेः 'अच्छलं मित्रभावेन सतां दारावलोकनम्' इत्युक्तरीत्या प्रियसखत्वात्त्वं सीतामपि द्रष्टुमर्ह इत्यभिप्रायः। एवं पूर्वोक्तरीत्या सोपचारमिति भावः सुखं यथा स्यात्तथा न त्वल्पोऽपि क्लेशस्संभवेदिति भावः लङ्घितः एकोत्पतनेनैव यापितः अध्वा मार्गो येन तथोक्तस्सन् सुदूरोऽपि मार्गस्सुखवशादल्पीयानिव तव प्रतिभायादिति भावः, ते पूर्वोक्तगुणवत्तया मत्प्रियसखस्य तव सखीं त्वत्सखत्वान्मम मत्प्रियाऽपि तव सखीभवितुमर्हतीति भावः "सख्यशिश्वीतिभाषायम्" इति निपातनात्सखीशब्दस्साधुः। अर्हति चेयं विशुद्धाभिजनादिमतस्तव स्वतोऽपि सख्यमिति द्योतयंस्तां विशिनष्टि। क्षेत्र इति। सीरेण हलेन कृष्टे कर्षणं प्रापिते जनकनृपतेः मैथिलस्य यागभूमिं शोधयत इति भावः। क्षेत्रे यज्ञियक्षेत्रे उत्थितां स्वयमेवाविर्भूतामित्यर्थः। अनेनायोनिजत्वमुक्तम्। सीतां लाङ्गलपद्धति जन्यत्वात्सीतानाम्नीमित्यर्थः। "सीता लाङ्गलपद्धतिः" इत्यमरः। अनेन सीतामित्यादिश्लोकपादेन "इयं सा धर्मशीलस्य मैथिलस्य महात्मनः। सुता जनकराजस्य सीता भर्तृदृढव्रता। उत्थिता मेदिनीं भित्वा क्षेत्रे हलमुखक्षते। पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः" इत्येतत्प्रत्यभिज्ञाप्यते। द्रक्ष्यसि विलोकिष्यसे। "गङ्गा पतिव्रता चेति द्वयं परमपावनम्। यदेतत्तनुते श्रेयो दर्शनस्मरणादिभिः" इत्याद्युक्तरीत्या तद्दर्शनेन तव श्रेयोऽपि भवि-

ष्यतीत्यभिप्रयन्पुनस्तां विशिनष्टि । गोपायन्तीति । या सीता निजां स्वकीयां तनुं मूर्तिमपि न तु मदीयां तथा सति वा मदर्थं रक्षणमुचितं भवेदिति भावः । यद्वा—"अपि सर्वस्व-मुत्सृज्य रक्षेदात्मानमात्मना" इत्युक्तरीत्या स्वार्थमेवावश्यरक्षणी-यामात्मीयां मूर्तिमपीति भावः । मदर्थं "अहङ्कारं विहायाथ कामक्रोधौ च सर्वदा । मनसो रञ्जनं पत्युः कार्यमन्यस्य व-र्जनम्" इति पतिव्रताधर्मेषु व्यासोक्तरीत्या मत्प्रीत्यर्थमेव न तु स्वप्रयोजनं किंचिदप्यपेक्ष्येति भावः । अनेन पारतन्त्र्यपराकाष्ठा सूचिता । कथंचित् महदपि कृच्छ्रं सोढ्वा । गोपायन्ती धार-यन्ती सती भूमौ लोके भूलोके महतीं पूज्यां एकपत्नी पतिव्रतेति समाख्यां कीर्तिम् [1]एकः पतिर्यस्यास्सा एकपत्नी "नित्यं सपत्न्या-दिषु" इति पतिशब्दस्य नकारे "ऋन्नेभ्यः" इति ङीप् "यशः कीर्तिस्समाख्या च" इत्यमरः । "सम्यक् ख्यायत इति समाख्या"

[1] एकः पतिर्यस्यास्सा एकपत्नी । 'नित्यं सपत्न्यादिषु' इति पतिशब्दस्य नकारे 'ऋन्नेभ्यः' इति ङीप्—इति रसास्वादिनी ॥ यत्तु—'नित्यं सपत्न्यादिषु' इति पतिशब्दस्य नुकि 'ऋन्नेभ्यः' इति ङीबिति - तदिदं रसास्वादिनीसूक्तिसर्वस्व-स्तेयस्य प्रथमं निदर्शनम्—'नित्यं सपत्न्यादिषु' इत्यनुशासनेन नकारस्यैव विधानेन नुकोऽविधानात् । रसास्वादिनीमुद्रितकोशे हि मुद्रणदशायां अक्षरयोजकदो-षेण नूनम् "नकारे" इत्यस्य स्थाने "नुकि" इति विपर्यस्तं मुद्रितम् । तत्संग्रहणधुरीणैस्तु तथैव स्वव्याख्यानेऽपि संगृहीतमिति ॥

इति टीकासर्वस्वकृत् । [1]वहति प्राप्नोति वहतेर्भौवादिकात्स्वरितेतः कर्तरि लट् । अनेन पातिव्रत्यप्रथावहनफलस्यापि भर्तृगामित्वसूचनात्पारतन्त्र्यपराकाष्ठैव द्योतिता "वासोऽङ्गरागाभरणं शरीरमपि वा स्वकम् । भर्त्रर्थं धारयेद्या तु सा स्त्री ज्ञेया पतिव्रता" इत्याद्युक्तं पातिव्रत्यलक्षणं च सूचितम् । यद्वा—तनुशब्दमावर्त्य तनुमपि निजां तनुमिति योजनीयम् । तथा तनुमपि कृशामपीत्यर्थः । अनेन "सा प्रकृत्यैव तन्वङ्गी त्वद्वियोगाच्च कर्शिता । प्रतिपत्पाठशीलस्य विद्येव तनुतां गता" इत्युक्तः कार्श्यातिशयो विवक्षितः । निजां तनुं मत्कृते मत्प्राप्त्याशयेति या

[1] वहति प्राप्नोतीति रसास्वादिनी ॥ यत्तु—वहति धारयतीत्यर्थः । 'वहति यः परितः कनकस्थलीः' इत्यादाविव वहतिरत्राप्येककर्मक इति—तन्न वह प्रापण इति पाठतस्य वहतेरेककर्मकत्वस्वाभाव्येन तत्रोपपत्तिदृष्टान्ताद्यनपेक्षणात् । क्वाचित्कं तु वहतेर्द्विकर्मकत्वं व्यापारद्वयान्तर्भावेण गलग्रहणादिपूर्वकसंयोगानुकूलव्यापारानुकूलव्यापारार्थकताश्रयणेन कथञ्चिदुपपादनीयम् । न खलु वहतिः 'अकथितं च' इति सूत्रविषयः येनास्य दुह्यादिवत् द्विकर्मकत्वमेव स्वाभाविकमाशङ्क्येत । दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासीनामेव परिगणनेन भाष्यकृता तत्सूत्रविषयतानियमात् । अत एव—दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासिजिमथ्मुषाम् । कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ इत्यर्वाचीनपरिगणनमुपदर्शितभाष्यविरुद्धं वेदितव्यम् । नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥ इति भाष्येऽन्यादिग्रहणस्य व्यापारद्वयार्थकत्वेन संपादितद्विकर्मकताकधातुसामान्योपलक्षणत्वात् । स्पष्टं चेदं शब्देन्दुशेखरे ॥

वन् । कथंचित् कथमपि गोपायन्ती रक्षन्ती "गुपू रक्षणे" इति धातोर्भौवादिकात् । "गुपूधूपविच्छिपणिपनिभ्य आयः" इत्याय-प्रत्यये "सनाद्यन्ता धातवः" इति धातुत्वे शपि लटश्शतरि उ-गित्त्वलक्षणङीपि "शप्श्यनोर्नित्यम्" इति नुम् । "एष निर्या-तितश्श्रीमान्मया ते वारिसम्भवः । एतं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामि-वानघ । अतः परं न शक्ष्यामि जीवितुं शोकलालसा । अ-सह्यानि च दुःखानि वाचश्च हृदयच्छिदः । राक्षसीनां सुघो-राणां त्वत्कृते मर्षयाम्यहम् । धारयिष्यामि मासं तु जीवितं शत्रुसूदन । मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज । घोरो राक्षसराजोऽयं दृष्टिश्च न सुखा मयि । त्वां च श्रुत्वा विपद्यन्तं न जीवेयमहं क्षणम् । कामभोगैः परित्यक्ता हीना बन्धुजनेन च । धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी । तत्र दृष्टा मया सीता रावणान्तःपुरे सती । विन्यस्य त्वयि जी-वन्ती रामा राम मनोरथम्" इत्याद्युक्तरीत्या दुर्वचदुःखसहस्रकबलि-ताऽपि कथंचिन्मत्प्राप्त्याशयैव ध्यानोपवासादिना तनीयसीमपि त-नुं रक्षन्तीति भावः । भूमौ लोके अस्मिन् लोके एतदत्याश्च-र्यमिति भावः महतीं सर्वलोकैः पूज्यमानां "वर्तमाने पृषन्महद्बृ-हज्जगच्छतृवच्च" इति महेः कर्मण्यतिप्रत्ययान्तत्वेन निपातितान्मह-च्छब्दाच्छतृवद्भावातिदेशेन उगित्त्वात् "उगितश्च" इति ङीप् । न च शतृवद्भावातिदेशेन "शप्श्यनोर्नित्यम्" इति नुमा भाव्य-मिति भ्रमितव्यं अतिप्रत्ययस्यार्धधातुकत्वाभ्युपगमेन सार्वधातुक-

परकत्वाभावाच्छत्रभावेन शप्प्रत्ययसंबन्ध्यवर्णात्परत्वालाभान्नुमप्राप्तेरिति दिक् । एकपत्नीसमाख्यां वहति । अन्यत्सर्वं पूर्ववत् । [1]अत्र भर्त्रर्थनिजतनूगोपनस्य पतिव्रतासमाख्यावहनं प्रति हेतुत्वात्काव्यलिङ्गं छेकानुप्रासश्शब्दालंकारः, वृत्त्यनुप्रासस्याप्यभ्युच्चयः । किंच सीतया आलम्बनेन तदीयायोनिजत्वपातिव्रत्यादिनोद्दीपनेन च विभावितस्तदनुस्मरणजनितनयनविकासादिभिरनुभावितस्तदनुमितैर्हर्षादिभिर्व्यभिचारितो, रामगतो विस्मयाख्यस्स्थायी परिपोष्यत इत्यद्भुतरसो व्यज्यते । "यत्र स्थायी विस्मयस्स्यादद्भुताख्यो रसस्तु सः" इति लक्षणात् । "अपूर्वदर्शनाच्चित्तविस्तारो विस्मयो मतः" इति विस्मयलक्षणम् ॥ १४ ॥

एवं "इष्टं हि विदुषां लोके समासव्यासधारणम्" इत्युक्तरीत्या प्रथमं संक्षेपतो राजहंसं प्रति सुखेन मार्गे गतवतस्तव सीतादर्शनं भविष्यतीत्यभिधाय तदेतद्विस्तरेण वक्तुमुपक्रमते—

तत्र । नन्वेतावन्तं कालं मानसं प्रति प्रस्थिते मयि मद्विश्लेषवेदनातुरतया क्षपयित्वा कथंचिद्वर्षासमयमिदानीमेव मत्प्रत्याग-

[1] अत्र भर्त्रर्थनिजतनूगोपनस्य पतिव्रतासमाख्यावहनं प्रति हेतुत्वात्काव्यलिङ्गमिति रसास्वादिनी । यत्तु—काव्यलिङ्गमिदमुपेक्ष्य "अत्र उत्थितामिति विशेषणस्य उत्तरार्धविशेषणस्य च तद्दर्शनं श्रेयस्करमित्यभिप्रायकतया परिकरः" इत्यलङ्कारवर्णनम्—तन्न सीतादर्शनश्रेयस्करत्वस्य व्यङ्ग्यत्वेऽपि तस्य व्यञ्जकोपदर्शितविशेषणसमानाधिकरणत्वविरहात् । दर्शनरूपप्रकृतार्थानुपपादकत्वाच्च । विशेषणस्य प्रकृतार्थोपपादकस्वसमानाधिकरणव्यङ्ग्यकत्व एवालङ्कारिकैः परिकरालङ्कारवर्णनात् । उक्तं हि कुवलयानन्दे—व्यङ्ग्यार्थस्य वाच्यपरिकरत्वात्परिकर इति नामालङ्कारस्येति ॥

मनवशादानन्दं विन्दन्तीयं पद्मिनी त्वदभ्यर्थनेन कृतलङ्कागमनसंकल्पं मामभ्यनुजानीयाद्वा न वेति हंसाभिप्रायमाशङ्क्याह रामचन्द्रः -

**प्रक्षीणां त्वद्विरहसमये जातहर्षामिदानीं**
**प्रत्यायास्यन्ननुनय शनैः पद्मिनीं स्वादुवाचा ।**
**सा ते तन्त्रीस्वनसुभगया स्यादितीहाभ्यनुज्ञां**
**मन्ये कुर्यान्मधुकरगिरा मैथिलीसौहृदेन ॥ १५ ॥**

प्रक्षीणामिति ॥ त्वद्विरहसमये त्वद्विश्लेषवेळायां प्रक्षीणां क्षयं प्राप्तां प्रशब्देन क्षीणताया अतिमात्रप्रवृत्तता द्योत्यते "उपवासेन शोकेन ध्यानेन च भयेन च । परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम्" इत्युक्तरीत्या मद्विश्लेषावसरे संप्रति सीतामिवेति भावः । प्रपूर्वकात् क्षयतेः कर्तरि निष्ठा "निष्ठायामण्यदर्थे" इति क्षियो दीर्घः "क्षियो दीर्घात्" इति निष्ठातस्य नत्वं "अट्कुप्वाङ्" इत्यादिना णत्वं च । इदानीं सांप्रतं त्वदागमनावसरे इति भावः । जातः उत्पन्नः हर्षो यस्यास्तां तथाभूताम् । जातशब्दस्य "आदिकर्मणि क्तः कर्तरि च" इति निष्ठान्ततया हर्षस्याचिरोदितत्वं द्योतितं अधुनैव जायमानानन्दामिति भावः । अनेन "आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रीयेत या नारी सा स्त्री ज्ञेया पतिव्रता" इत्युक्तपातिव्रत्यलक्षणवत्ताऽपि सूचिता । तेन सर्वात्मनाऽनुपेक्ष्यत्वं द्योतितम् । पद्मिनीं कमलिनीं [1]प्रत्यायास्यन्

[1] प्रत्यायास्यन् प्रत्यागामिष्यन् सन् प्रत्यागमनमद्यतनभाव्येव निवेदयन्निति

प्रत्यागमिष्यन् सन् प्रत्यागमनमद्यतनभाव्येव निवेदयन्निति भावः । प्रत्याङ्पूर्वकाद्यातेर्लृडन्तात् "लृटस्सद्वा" इति शता लृट्प्रयोगेण प्रत्यागमनस्याद्यतनभावित्वं गम्यते । अनद्यतनभावित्वमेव चेदविवक्षिष्यल्लुटमेव प्रायोक्ष्यत । [1]शतृप्रत्ययश्चायं हेत्वर्थे "लक्षणहेत्वोः क्रियायाः" इत्यनुशासनात् हेतुरिह फलं अद्यतनभाविप्रत्यागमनफलकमनुनयं कुर्विति भावः । 'प्रत्यायास्यन् प्रत्यागन्तुमिच्छन्' इति व्याख्यानं तु मन्दम् । सन्नदर्शनात् । न हि सन्प्रत्ययवैधुर्ये उक्तार्थस्संभवेत् । स्वाद्व्या मधुरया, हृदयाविसंवादितया प्रवृत्तत्वे-

---

भाव इति रसास्वादिनी। यत्तु—प्रत्यायास्यन् प्रत्यागमिष्यन् सन् शीघ्रं प्रत्यागमिष्यामीति निवेदयन्नित्यर्थ इति विवरणम्—तन्न तथा निवेदनस्य शाब्दताविरहेण "इत्यर्थः" इति विवरणस्यायुक्तत्वात्। तस्मान्नूनमिदं रसास्वादिनीसन्दर्भस्यैव भावपदस्थाने अर्थपदयोजनेन स्वीकरणं स्वव्याख्यानस्य आचार्यकृतव्याख्यानाद्विशेषप्रचिख्यापयिषामात्रेण न पुनस्साध्वसाधुविवेकेनेति विभावयन्तु विचक्षणाः॥

[1]शतृप्रत्ययश्चायं हेत्वर्थे......हेतुरिह फलं अद्यतनभाविप्रत्यागमनफलकमनुनयं कुर्विति भावः इति रसास्वादिनी। इह गमने फलत्वं स्वरूपसत्कीर्तितम् । न तु तादृूप्येण बोधाभिप्रायेण । फलरूपहेतुस्थलेऽपि हेतुत्वपुरस्कारेणैव शत्रादिस्थले बोधात् । भविष्यतोपि फलस्य ज्ञायमानतया हेतुत्वसंभवात् । स्पष्टं चेदं मञ्जूषायाम् । तथा चाचिरभविष्यत्प्रत्यागमनस्यापि तद्धेतुत्वं ज्ञायमानलिङ्गकरणतान्यायेनाव्याहतमिति विशिष्टाभिप्रायेण विशेष्यस्येह हेतुतानिबन्धनसंभवो बोध्यः । एतदभिप्रायेणैव "निवेदयन्निति भावः" इति निवेदनपर्यन्तभावविवरणं कृतं रसास्वादिन्यामाचार्यैरित्यवधेयम् ॥

नामृतवदास्वादनीययेति भावः । वाचा गिरा न तु "आगःप्रमार्जनायैव चाटवो येन शिक्षिताः" इत्युक्तरीत्या अहृदयककैवलवाचेति भावः। शनैः मन्दं चिरकालविच्छिन्नस्य त्वदनुभवानन्दस्येदानीमेव पुनरुन्मिषत्तया सहसा प्रस्थाननिवेदने भवेदेवोद्वेजनम् तदनुचितमिति शनैरित्युक्तं अनुनय सान्त्वय । अन्यथा "अहं गमिष्यामि महावनं प्रिये" इति बहुकालविश्लेषपिशुनेन मद्वचनेन सीतेव चिरविश्लेषसंभावनया व्यग्रीभूय नाभ्यनुजानीयादिति भावः। सा, त्वयाऽनुनीता पद्मिन्यपि, तन्त्रीस्वनः वीणातन्त्रीध्वनिः स इव सुभगया सौभाग्ययुक्तया तद्वन्मधुरयेति यावत् । मधुकरगीरेव गीः तया मधुव्रतध्वनिरूपया वाचा मधुकरशब्देन तद्गिरो माधुर्यातिशयो नैसर्गिक इति द्योतितम् । तन्त्रीस्वनसुभगयेति विशेषणेन तद्गिरोऽन्तस्तोषविशेषोन्मिषितत्वं द्योतितम् । न ह्यन्तस्तोषवैधुर्ये ईदृशो ध्वनिरुन्मिषेदिति भावः । स्यात् एवमेव भवत्विति ते तव इह सीतोद्देश्यकमत्संदेशहरणपूर्वकलङ्कागमने महति कृत्ये, अभ्यनुज्ञां अभिमुखीभूयानुमतिं न तूदासीनतया पराङ्मुखत्वेनेति भावः। अनेन तस्या अप्यस्मिन्कार्ये भवेदौत्सुक्यमेवेति द्योत्यते । [1]कुर्यात्

[1] कुर्यात् रचयेत् मन्ये संभावये इति रसास्वादिनी । यत्तु—कुर्यात् विरचयेत् मन्ये संभावये वाक्यार्थः कर्म संभावनायां लिङ् इति विवरणम्— तन्न लिङ्मन्यत्योरुभयोस्संभावनार्थकत्वे पौनरुक्त्यापत्तेः। संभावनाविषयकसंभावनाप्रत्ययापत्तेश्च । तस्मात् "अर्हे कृत्यतृचश्च" इत्यर्हार्थे लिङ् । अभ्यनुज्ञानं कर्तुमर्हा इत्युत्प्रेक्षे इत्येव विवरणं युक्तमित्यवधेयम् ॥

रचयेत् इति मन्ये संभावये कृत्यान्तरे चेदभ्यनुजानीयाद्वा न वा न जाने । अस्मिंस्तु प्रस्तुते कार्येऽवश्यमभ्यनुजानीयादिति वितर्कय इति भावः। नन्वस्मिन्नपि कार्ये केन निमित्तेनाभ्यनुजानीयात्प्रियतमप्रस्थानमित्यत आह—मैथिलीति । मैथिल्यां वैदेह्यां [1]सौहृदेन प्रेम्णा सख्येनेत्यर्थः। अभ्यनुज्ञां कुर्यादित्यन्वयः। यदा आवयोस्सख्यं संवृत्तं तदा मैथिलीपद्मिन्योश्चास्मत्प्रिययोः सख्यं सिद्धमेवेति "आत्मानं पीडयित्वाऽपि सुहृत्कार्यपरायणा" इत्युक्तरीत्या सखीनिमित्तं कंचित्कालं त्वद्विश्लेषक्लेशमभ्युपगम्याप्यनुमन्येतैव तव प्रस्थानमिति भावः । यथोच्यते सीतां प्रति सरमया "तव हेतोर्विशालाक्षि न हि मे जीवितं प्रियम्" इति । "धनत्यागस्सुखत्यागो देहत्यागोऽपि वा पुनः । वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम्" इत्येतदप्यत्रानुसंधेयम् । सौहृदेनेत्यत्र शोभनचित्तवाचिनस्सुहृदयशब्दाद्भावार्थे युवादिपाठात् "हायनान्तयुवादिभ्योऽण्" इत्यणि "तद्धितेष्वचामादेः" इत्यादिवृद्धौ "हृदयस्य हृल्लेखयदण्लासेषु" इत्यनेन हृदादेशः । [2]ननु

[1] सौहृदेन प्रेम्णा सख्येनेत्यर्थ इति रसास्वादिनी । यत्तु—सौहृदेन अनुकम्पयेत्यर्थः.......शोभनं हृदयं यस्यास्सा सुहृदया कारुणिका न तु मित्रं तत्र सुहृदिति निपातनात् । तस्या भावस्सौहृदमिति विवरणम् । तन्न सुहृत्पदादप्यणि सौहृदमिति रूपसिद्धेः "यद्वा" इत्यादिना आचार्यैरेव वर्णितत्वात् । प्रथमपक्षाद्दपि तत्पक्षस्यैवोपपन्नतया अस्माभिर्वक्ष्यमाणत्वाच्च सौहृदपदस्य सख्यपरताया एव युक्तत्वात् ॥

[2] "ननु हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्ध्या भवितव्ये कथमादिवृद्धिरिति चेदवहितमनाश्शृणु" इत्यादि रसास्वादिनी ॥ अत्र सौहृदशब्दसाधनाय

"हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्ध्या भवितव्ये कथमादिवृद्धिरिति चेदवहितमनाश्शृणु उक्तोभयपदवृद्धिः "सुहृद्दुर्हृदौ

चत्वारः पक्षा आचार्यैरुपदर्शिताः । तत्र सुहृच्छब्दादणि सौहार्दमित्येव सुहृदयशब्दात्तु सौहृदमित्येव "हृद्भगसिन्ध्वन्ते" इति सूत्रे "सुहृद्दुर्हृदौ" इति निपातितस्यैव प्रतिपदोक्तपरिभाषया ग्रहणादिति प्रथमः पक्षः । सोऽयं वामनानुसारी लक्षणप्रतिपदोक्तपरिभाषासंचारमूलकः । द्वितीयस्तु सुहृच्छब्दान्मित्रार्थेनिपातितात् सुहृदयशब्दाच्चाणि सौहृदमित्येव । "हृद्भगसिन्ध्वन्ते" इत्यतः अनादेशनिष्पन्नहृत्पदस्यैव भगादिशब्दसाहचर्येण ग्रहणात् । हृदयपर्यायहृत्पदघटितात्तु सुहृच्छब्दात् सौहार्दमित्येव—इत्ययं साहचर्यपरिभाषासंचारमूलकः पक्षः । तृतीयस्तु—सुहृदयशब्दादण्येव सौहृदमिति सिद्धिरिति वृद्धेरेव परत्वात्प्रथमप्रवर्तनमूलकः पक्षः । चतुर्थस्तु शोभनं च तत् हृच्चेति कर्मधारये अर्शआदित्वेनाचि निष्पन्नात्सुहृच्छब्दाद्युवादेराकृतिगणत्वेनाणि सौहृदमिति सिद्धिरिति पक्षः परिभाषासंचारादिक्लेशलेशहीनस्सर्वसुग्रह इति ॥

यत्तु—तेषु प्रथमपक्षस्यैव "सुहृदयस्य भावः सौहृदम् । हृद्भगसिन्ध्वन्त इत्युभयपदवृद्धिस्तु लक्षणप्रतिपदोक्तन्यायेन मित्रे निपातितसुहृच्छब्दस्यैवेति बोध्यम्" इत्यभिधानम्—तत्तु तत्पक्षीयास्वारस्यानवधारणनिबन्धनम् । तथाहि—प्रतिपदोक्तत्वं यदि—स्वीयोद्देश्यसमर्पकशब्दगतानपूर्वीघटितशास्त्रबोधितत्वं स्वं च यत्र लक्षणप्रतिपदोक्तयोर्ग्रहणप्रसक्तिस्तदेव शास्त्रं यथा "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति स्वरविधायके "तृतीया तत्कृतार्थेन गुणवचनेन" इत्यादिशास्त्रबोधितस्यैव तृतीयासमासस्य प्रतिपदोक्तत्वमिति । तदा हृद्भगेति शास्त्रस्य स्वपदेन परिग्रहे तदीयोद्देश्यसमर्पकं हृत्पद तद्गतानुपूर्वीघटितं शास्त्रम् । "सुहृद्दुर्हृदौ" इति शास्त्रमिव 'हृदयस्य हृल्लेखयदण्लासेषु' इति शास्त्रमपीति तद्बोधितस्यापि सुहृदयशब्दादणि हृद्भावापन्नस्य सुहृच्छब्दस्य प्रतिपदोक्तत्वं दुर्वारम् । यदि तु—लक्षणनिरपेक्षस्वरूपनिष्प-

मित्रामित्रयोः” इति निपातितयोस्सुहृद्दुर्हृच्छब्दयोः प्रतिपदोक्तयोरेव प्रवर्तते न तु सुहृदयदुर्हृदयशब्दयोराण हृद्भावमापन्नयोः। तयोर्हृदन्तत्वस्य लाक्षणिकत्वाल्लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्। यद्वा—“हल्ङ्याब्भ्यः” इत्यादिसूत्रे सुतिसीत्यत्र तिपा साहचर्यात्सिप इव “औतोऽम्शसोः” इत्यत्र शसा साहचर्यात्सुप एवाम इव च “हृद्भगसिन्धु” इति सूत्रे भगसिन्धुशब्दसाहचर्यादनादेशनिष्पन्नहृदयशब्दपर्यायहृच्छब्दस्यैव ग्रहणात्तादृशहृच्छब्दान्ताङ्ग एवोभयपदवृद्धिप्रवृत्तेः “सुहृद्दुर्हृदौ” “हृदयस्य हृत्” इत्यादिना हृदयशब्दस्थानादिष्टहृच्छब्दान्तादङ्गादण्यादिवृद्धौ उक्तरीत्या सौहृदमित्येव सिद्ध्यति। अस्मिंश्च पक्षे शोभनचित्तवाचिहृदयपर्यायहृदन्तसुहृच्छब्दादेवोभयपदवृद्धिः। “सुहृद्दुर्हृदौ” इ-

त्तिकत्वं तत् यथा “गातिस्था” इति शास्त्रे “पा पाने” इति पठितस्यैव प्रतिपदोक्तत्वमित्युच्यते तदा निपातितयोर्मित्रामित्रार्थवाचिनोस्सुहृद्दुर्हृत्पदयोरपि तादृशप्रतिपदोक्तत्वानुपपत्तिः तयोरपि स्वरूपनिष्पत्तेः सुदुर्भ्यां हृदयस्य हृद्भावनिपातनपरेण “सुहृद्दुर्हृदौ” इति शास्त्रेणैव संपाद्यत्वात्। अथ यदि निपातशास्त्रेषु अवयवविभागानादरेण समुदायनिपातनमाद्रीयते तदा निपातितयोस्सुहृद्दुर्हृत्पदयोः हृद्भगेति शास्त्रप्रवर्तनमेवासंभवि तयोर्हृदन्तोत्तरपदघटितमूर्तिकत्वासंभवादिति। तात्सिद्धं मित्रपर्यायसुहृच्छब्दाद्भावे हायनान्तेत्यणि सौहृदमिति रूपमिति सुधियो विभावयन्तु। तस्यास्य द्वितीयपक्षस्यातिसमञ्जसत्वेऽपि प्रथमतृतीयचतुर्थपक्षाणामपि प्रदर्शनमाचार्याणां व्युत्पित्सुजनमनोविनोदनार्थम्। अत एव पदार्थविवरणदशायां “सौहृदेन प्रेम्णा सख्येनेत्यर्थः” इति द्वितीयपक्षानुसारेणैव विवरणं कृतम्। अन्यथा शोभनहृदयत्त्वेनेत्यपि व्याख्येयं स्यादिति दिक्॥

तादिसूत्रनिष्पन्नहृदन्तशब्देभ्यस्त्वादिवृद्धिरेवेति मित्रवाचिसुहृच्छब्दात्सौहृदमित्येवेति पूर्वस्माद्विशेषः। नन्वेवं पक्षद्वयेऽपि "वा शोकष्यञ्रोगेषु" इति सूत्रे सौहार्द्यमित्युदाहरणमसंगतं स्यात् तत्र च सुहृच्छब्दस्योक्तरीत्या लाक्षणिकत्वेन वा आदेशनिष्पन्नहृच्छब्दान्तत्वेन वा उभयपदवृद्धिविषयत्वायोगेऽपि तद्घटिततयैव दर्शनादिति चेन्न। तस्य प्रौढिमात्रदत्तत्वेनानादर्तव्यत्वात्। सौहृद्यमिति ह्युदाहर्तुमुचितं, हृद्भावमात्रोदाहरणस्य प्रकृतत्वेनोभयपदवृद्धिमत्ताया अनावश्यकत्वात् सौहार्द्यमिति प्रामाणिकप्रयोगसद्भावे तु शोभनं हार्दं यस्य सुहार्द इति विगृह्य तस्माद्वा उक्तरीत्या "सुहृद्दुर्हृदौ" इति प्रतिपदोक्तसुहृच्छब्दात् अनादेशनिष्पन्नहृदन्तसुहृच्छब्दाद्वा "गुणवचनब्राह्मणादिभ्यश्च" इति ष्यञि आदिवृद्धौ उभयपदवृद्धौ वा तद्रूपमपि सिद्ध्यति "वा शोकष्यञ्" इति सूत्रे ष्यञुदाहरणं तु सौहृद्यमित्येव युक्तम्। यद्वा—सुहृदयशब्दादेवोक्तरीत्या अणि आदिवृद्धिहृद्भावयोरौपगव इत्यादौ स्वहृदयशब्दात् श्वहृदयशब्दाद्वा भवार्थे अणि "द्वारादीनां च" इत्यैजागमे सौवहृदं शौवहृदमित्यादौ च लब्धलक्ष्ययोः प्राप्तौ परत्वाद्धृद्भाव एव प्रथमं प्रवर्तमानायां तदानीमङ्गस्य हृदन्तत्वाभावान्न "हृद्भगसिन्ध्वन्ते" इत्युभयपदवृद्धिः प्रवर्तितुं क्षमते। न च द्वारादौ स्वश्वशब्दयोः केवलयोरेव पाठात्कथं तदादिग्रहणेनैचः प्रवृत्तिरिति शङ्क्यं "न्यग्रोधस्य च केवलस्य" इत्यनन्तरसूत्रे केवलग्रहणेन पूर्वसूत्रे तदादिग्रहणस्य ज्ञापितत्वात्। अथवा। व्याघ्रहृदये व्यासहृदये वा भवं वैयाघ्रहृदं

वैग्रासहृदमित्यत्रौ "नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" इत्यैचि, हृद्भावस्य चारितार्थ्यं द्रष्टव्यं आदिवृद्धिप्रवृत्त्यनन्तरं हृदयशब्दस्य हृद्भावे सौहृदमिति निष्पद्यते ॥ ननु "परनित्यान्तरङ्गप्रतिपदविधयो विरोधसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वम्" इति न्यायेन स्वाम्पीत्यत्र परान्नित्यादपि नुमः "अमृन्" इति प्रतिपदोक्तोपधादीर्घस्येवात्रापि परीभूतवृद्ध्यपेक्षया प्रतिपदोक्तस्य हृदादेशस्यैव बलीयस्त्वेन वृद्धिबाधनेन तस्यैव प्रवृत्तिः कुतो न स्यादिति चेन्न । निरवकाशत्वरूपप्रदिपदोक्तस्यैव बाधकताप्रयोजकत्वेन प्रकृते उक्तरीत्या हृदादेशस्यान्यत्र लब्धावकाशतया वृद्धिबाधनाक्षमत्वात् ॥ एतच्च "उगवाधिभ्यो यत्" इति सूत्रे भाष्ये स्पष्टं ॥ "छदिरुपधिबलेर्ढञ्" इति सूत्रे मनोरमायामप्युपन्यस्तम् । तथाच तत्सूत्रमनोरमाग्रन्थः—"छादिषेयाणीति यदा तु चर्मवि कारश्छदिः तदा परत्वात् 'चर्मणोऽञ्' इत्यञ् प्राप्नोति पूर्ववि: प्रतिषेधेन ढञेवेष्यते छादिषेयं चर्म आह च—'यञञ्चावञ पूर्वविप्रतिषिद्धम् ॥ ढञ्च' इति ॥ एवं निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकम् । न तु सावकाशत्वे, इति मुनिमते लभ्यते । तेन स्वम्पि तटाकानीत्येव युक्तं परत्वान्नुम्प्रवृत्तेः । प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य स्वाम्पि तटाकानीति मतं तु दुर्बलमिति दिक्" इति ॥ "शेषाद्विभाषा" इति सूत्रे च "शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति" इत्याशङ्क्य "अनवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशाः" इत्य-

भाषि। तस्मात्प्रतिपदोक्तस्यापि हृदादेशस्योक्तरीत्याऽन्यत्र लब्धावकाशत्वेनोपक्षीणशक्तितया वृद्धिबाधनासामर्थ्यादादावेवादिवृद्धौ ततो हृदादेशे सौहृदमित्येव सिद्ध्यतीति सुष्ठूक्तम्॥ ननु "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति न्यायेन विप्रतिषेधबाधितस्य हृदादेशस्य कथं पुनः प्रवृत्तिरिति चेत् "पुनःप्रसङ्गविज्ञानात्सिद्धम्" इति न्यायेन भिन्धकीत्यत्र परत्वाद्द्विभावे कृतेऽप्यकच्प्रवृत्तिवत्पूर्वस्यापि निमित्तसद्भावात्तदपि प्रवर्तत एवेत्यदोषः। नन्वेवमपि हृद्भावोत्तरं हृदन्तत्वेनोभयपदवृद्धिरनिवार्यैवेति चेन्न "अङ्गवृत्ते पुनर्वृत्तावविधिः" इति न्यायेनैकस्मिन्नङ्गवृत्तवृद्धिशास्त्रे प्रवृत्ते पुनरन्यस्याङ्गवृत्तवृद्धिशास्त्रस्य प्रवृत्त्ययोगात्। नन्वेवं हार्दमिति रूपासिद्धिः। तत्र हृदयशब्दादणि त्वदुक्तरीत्या परत्वाद्वृद्धौ हार्दयेत्यवस्थाने एकदेशविकृतन्यायेन स्थानिवद्भावेन वा तस्यैव हृदयशब्दत्वादण्निमित्तकहृदादेशस्यानेकाल्त्वात्सर्वादेशे। हृदमित्येव सिद्धेः। न च हृदादेशोत्तरं पुनर्वृद्धौ हार्दमिति स्यादेवेति वाच्यम्। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेरिति चेन्न। यद्यपि निरवकाशत्वरूपप्रतिपदोक्तस्य बाधकताप्रयोजकत्वं तथाऽपि प्रकृते तदभावेन हृदादेशस्य वृद्ध्यबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं हृदादेशः स्वाम्पीत्यत्र दीर्घवत् ततो वृद्धिः इति प्रामाणिकप्रयोगानुरोधाद्दुर्बलमपि पक्षमाश्रित्य समाधातुं शक्यत्वात्। एतच्च स्वाम्पीत्यत्र शेखरे स्पष्टम्। यद्वा—हृदयशब्दात्प्रज्ञादित्वात्स्वार्थे अणि उक्तरीत्या वृद्धिहृदादेशयोः क्रमेण

कृतयोर्हृदमिति सिद्धौ ततस्तस्येदमित्यणि हार्दमिति सिद्ध्यत्येव। लक्ष्यभेदान्न लक्ष्येलक्षणन्यायस्याप्यवकाशः। हृदयस्येदं हार्दमिति मूलोक्तमप्येतदभिप्रायकतयैव नेयम्। अत एव "सौहृददौर्हृदावणि हृद्भावात्" इति वामनसूत्रं "सुहृदयदुर्हृदयशब्दाभ्यां युवादिपाठादणि कृते हृदयस्य हृद्भावे सौहृददौर्हृदशब्दौ भवतः। सुहृद्दुर्हृच्छब्दाभ्यां तु युवादिपाठादणि कृते 'हृद्भगसिन्ध्वन्ते' इत्यादिनोभयपदवृद्धौ सौहार्दं दौर्हार्दं च भवति" इति तद्वृत्तिश्च संगच्छते। यद्वा—शोभनं च तत् हृच्चेति हृदयशब्दपर्यायहृच्छब्देन कर्मधारये अर्शआदित्वान्मत्वर्थीये अचि निष्पन्नात्सुहृदशब्दाददन्ताद्युवादेराकृतिगणत्वाद्भावे अणि सौहृदमिति निष्पद्यते। न चैवमपि सुहृदशब्दादणि "यस्येति च" इत्यलोपे हृदन्तत्वतादवस्थ्यान्न फले ग्रहिस्स्यात्प्रयास इति भ्रमितव्यं, परया वृद्ध्या यस्येति लोपस्य बाधात् "अचः परस्मिन्" इत्यलोपस्य स्थानिवद्भावेन हृदन्ततादौर्लभ्याद्वेति सर्वथाऽपि सौहृदमित्येतत्साध्वेवेति न संकटं किंचित्, अत एव "यशोदयासौहृदादीनाम्" इति श्रीवत्साङ्कमिश्रीययमकरत्नाकरादिप्रयोगाश्चोपपन्नतराः अप्पयदीक्षितास्तु श्रीयादवाभ्युदयतृतीयसर्गे "सुरभिकैरवसौहृदवासितः' इत्यत्र सौहृदशब्दोपपत्तिमित्थमभिवर्णयन्ति। तथाहि तद्ग्रन्थः—"सुहृदयशब्दस्य युवादित्वाद्भावेऽण्प्रत्यये 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृद्भावे आदिवृद्धौ च सौहृदशब्दः। ननु कथं 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति नोभयपदवृद्धिः। इत्थं अणि परतो हृद्भा-

देशवृद्धिशास्त्रयोरन्यत्र सावकाशयोः परत्वाद्वृद्धिशास्त्रं प्रथमं प्रवर्तते तत्प्रवृत्तिकाले हृदन्तत्वाभावान्नोभयपदवृद्धिरित्यादिवृद्धिः—ततो हृदादेशः। तदनन्तरं तु हृदन्तत्वोपजीवनेन नोभयपदवृद्धिः। आकृतिपदार्थपक्षे वृद्धेरेकत्वात्तस्याश्चैकस्मिन्पदे सकृत्प्रवृत्तायास्तत्रैव पुनः प्रवृत्त्यभावात्। यद्वा—'हृद्भगसिन्ध्वन्ते' इत्यत्रान्तग्रहणसामर्थ्यादिदं विज्ञायते। हृदन्तादेवाणादयो ये विहितास्तेषु परत उभयपदवृद्धिः। न तु हृदयान्तादणाद्युत्पत्त्यनन्तरं हृदादेशे भवतीति। तेन शोभनहृदयार्थकसुहृदयशब्दप्रकृतिकं सौहृदमिति भवति। सौहार्दमिति तु मित्रवाचि सुहृच्छब्दप्रकृतिकमिति न कश्चिद्दोषः। केचिदाहुः—युवादिषु सुहृत्सुहृदयशब्दौ द्वावपि पठ्येते—तत्र सुहृच्छब्दस्यापि सुहृदयशब्दप्रकृतिकस्य एकदेशविकृतन्यायेन सुहृदयशब्दपाठादेवाणि सिद्धे पुनःपाठोऽन्यत्र सुहृदयशब्दे यद्भवति तत्सुहृच्छब्दे नास्तीति ज्ञापनार्थम्। तेन सुहृदयशब्दादणि हृदादेशे भवत्युभयपदवृद्धिः सुहृच्छब्दादणि तु नोभयपदवृद्धिरिति। अपरे तु—'संज्ञापूर्वको विधिरनित्यः' इति क्वचिदुत्तरपदवृद्ध्यभावमाहुरिति" इति [1]अत्र पद्मिनीशब्दस्त्रीलिङ्गस्वारस्यात् प्रत्याया-

[1] अत्र पद्मिनीशब्दस्त्रीलिङ्गस्वारस्यात् प्रत्यायास्यन्निति पुल्लिङ्गस्वारस्यात् ......पद्मिनीहंसयोरनुरक्ततरदम्पतिव्यवहारसमारोपरूपा समासोक्तिः। तया चोत्तभ्यमाना पद्मिनीकर्तृकहंसप्रस्थानाभ्यनुज्ञानोत्प्रेक्षा इति रसास्वादिनी। यत्तु—अत्र रामभद्रगताया अनाहार्यसंभावनाया एवाचार्यैर्विवक्षिततया नोत्प्रेक्षाऽवकाश इति—तन्न हंसप्रस्थानाभ्यनुज्ञायाः पद्मिनीलताकर्तृकत्वासम्भवेन तत्सम्भावनाया भग-

स्यन्निति पुल्लिङ्गस्वारस्याद्विरहसमयप्रक्षीणत्वादिविशेषणसाम्याच्च पद्मिनीहंसयोरनुरक्ततरदम्पतिव्यवहारसमारोपरूपा समासोक्तिः तथा चोक्त-

वद्गताया अनाहार्यत्वासम्भवात् । अथ विरहातिरेकाहितोन्मादावस्थया हंसे संदेशहरत्वादेरिव पद्मिन्यां तथाऽभ्यनुज्ञाकर्तृत्वस्याप्यनाहार्यज्ञानमेव भगवति सम्भवतीति चेत्—नैवम्—न खलु भगवानुन्मादावस्थया निखिलं जगदेव विपर्यस्य पश्यति । तथा सति हंसमपि हंसतया न प्रतिपद्येत । स्वात्मानं वा रामतया । वैदेहीं वा स्वप्रियात्वेन । तथाच काव्यारम्भ एवाप्रसिद्धस्स्यादिति मूलच्छेदी पाण्डित्यप्रकर्षः । किं बहुना—भगवदुक्तावत्रैव बहुषु स्थलेषूत्प्रेक्षावर्णनं च भवतामनुपपन्नमापद्यते । अत्रैव पद्ये पद्मिनीशब्दे परिकराङ्कुरस्य पद्मिनीशब्दश्लेषमूलकातिशयोक्त्युत्थापितत्वं च भवदुक्तं नोपपद्येत । पद्मिन्यां लतायां पद्मिनीजातिस्त्रीत्वमपि भगवानध्यवस्यतीति वक्तुं शक्यत्वात् । तस्मात्सन्देशप्रवृत्तस्य भगवतो हंससन्देशहरत्वतदुपपादकरूपेष्वनाहार्यज्ञानाभ्युपगमेऽपि बाधितपद्मिनीहंसप्रस्थानाभ्यनुज्ञाकर्तृत्वादिज्ञाने अनाहार्यत्वाभ्युपगमे मानाभावात्प्रस्थानाभ्यनुज्ञासम्भावनाऽपीहाहार्यैवेत्युत्प्रेक्षा निराबाधा। पूर्वार्धनिबद्धाऽपि पद्मिनीकर्मकानुनयप्रार्थना पद्मिनीशब्दस्त्रीलिङ्गादिमूलकसमासोक्त्यादिमूलतयैवोपपन्ना न विरुद्ध्यते । वस्तुतस्तु—भगवतो रामभद्रस्याविद्यादिनिखिलदोषदूरस्य न क्वचिदप्यनाहार्यं विपरीतज्ञानमभ्युपगन्तुं शक्यम् । सन्देशप्रवृत्तिरपि मानुषत्वाभिनयार्थैव सीतावियोगपरिदेवनादिवदुपपद्यते तस्य । गाढोन्माद इत्याद्याचार्यसूक्तिष्वपि उन्मादादिपदं अचेतनालापादिकार्यकरज्ञानहेतुचित्तवृत्तिसाम्यादुपपद्यते । किं बहुना भाषणेन । प्रथमपादव्याख्यान्ते "पद्मिनी हि वर्षासु क्षीयते शरदि वर्धत इति हृदयम्" इति स्वयमेव वक्तू रामभद्रस्य पद्मिन्यामचेतनत्वाभिसन्धेर्व्यक्तीकृतया स्ववचनव्याहतमेवेदं भगवतोऽत्रानाहार्यसंभावनाकथनमिति ध्येयम् । तस्मादिहोत्प्रेक्षैव युक्ता । तथा सत्येव च "मन्ये" इत्यस्य तद्व्यञ्जकतया सार्थक्यम् । अन्यथा कुर्यादित्यत एव संभावनामात्रलाभसंभवात् तद्वैयर्थ्यं स्पष्टमेव । अत एव हि "संमोदस्ते पथि

भ्यमाना पद्मिनीकर्तृकहंसप्रस्थानाभ्यनुज्ञोत्प्रेक्षा। मधुकरगिरेति रूपकगर्भैवोत्तभ्यते उक्तसमासोक्तेरुभयोपकारकत्वात्। अत उत्प्रेक्षारूपकयोरैककालिकत्वेन परस्परापेक्षया चारुतोन्मेषतौल्येन च विनिगमनाविरहात्समप्राधान्यसङ्करः। पद्मिनीशब्देन स्त्रीविशेषरूपार्थस्यापि क्रोडीकाराभिसन्धौ पद्मिन्येव पद्मिनीत्यादिरूपकोज्जीविता प्रस्थानाभ्यनुज्ञोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावसङ्करः। एवं समासोक्तिरूपकयोरेकत्रैवाचार्याणामभिसन्धेर्निर्णेतुमशक्यतया सन्देहसङ्करः। तन्वीस्वनसुभगयेत्यत्र इवशब्दलोपाद्वाचकलुप्तोपमा समासगा। मधुकरगिरेत्यत्र रूपकानुप्रासयोः तन्वीस्वनसुभगयेत्यत्रोपमाऽनुप्रासयोश्चैकवाचकानुप्रवेशसङ्करः। उक्तोपमारूपकयोः द्वितीयपादोक्तनकारपुनरावृत्तिलक्षणानुप्रासस्य चतुर्थपादाभिहितमकारावृत्तिरूपानुप्रासादेश्चान्योन्यनैरपेक्ष्यात्संसृष्टिश्चेति। [1]नरसिंहाकाराः पञ्चाप्यलङ्कारा विभावनीयास्सावधानं सहृदयैरालङ्कारिकशिरोमणिभिरित्यलं पल्लवितेन ॥ १९ ॥

परिणसेत्" "स्थाने कुर्युः" "छत्रायेरन्" इत्यादौ शुद्धसंभावनाविवक्षायां मन्यतिर्नोपादीयत आचार्यैर्मूलकारैरिति दिक् ॥

[1] नरसिंहाकाराः पञ्चाप्यलङ्कारा इत्यादि रसास्वादिनी। यत्तु—इमामलङ्कारप्रक्रियामुपेक्ष्य प्रक्षीणां जातहर्षामिति विशेषणयोरनुनयं प्रति हेतुत्वात्काव्यलिङ्गम्—इत्यलङ्कारवर्णनम्—तन्न तद्विशेषणयोरनुनयोपपादकानुपेक्ष्यत्वद्योतकतायास्स्वयमेव विवृततया प्रकृतार्थोपपादकार्थव्यञ्जकविशेषणविन्यासरूपपरिकरविषये काव्यलिङ्गकथनस्य स्वकीयव्याख्यानव्याहतत्वात्। वस्तुतस्तु—प्रक्षीणामित्यादेस्समासोक्त्यर्थमुपात्तस्य समासोक्तिप्रविष्टतयैवोपपत्तेः पृथक्परिकरो नात्राचार्यैर्वि-

एवमनुनीतायाः पद्मिन्या अभ्यनुज्ञां प्राप्यास्मात्कमलवनादुड्डीयस्वेत्यभ्यर्थ्यते—

**सार्धं कान्तैश्शबरसुदृशामद्रिकुञ्जेषु रागात्**
**आसीनानां क्षणमसमये दृश्यचन्द्रोदयश्रीः ।**
**उड्डीयेथास्सरसिजवनाद्दक्षिणाशानुसारी**
**पश्यन्दूरात्प्रबलगरुतां पक्षिणां दत्तवर्त्मा ॥ १६ ॥**

सार्धमिति ॥ कान्तैः सार्धं साकं "सार्धं तु साकं सत्रा समं सह" इत्यमरः । कान्तैरित्यनेन कमनीयत्वकामयितृत्वोक्त्या तेषां संभोगौपयिकमानुरूप्यं व्यञ्जितम् । अद्रीणां कुञ्जाः लतागृहाः तेषु "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः । रागात् अनुरागाद्धेतोः आसीनानां उपविशन्तीनां "आस उपवेशने" इत्यस्मादादादिकाद्धातोः कर्तरि शानचि, "ईदासः" इत्यासः परस्यानसंबन्ध्याकारस्य ईदादेशः, यथाऽन्योन्यमूरुबाहुंसादिसंमर्दस्स्या-

र्णित इत्युक्तप्रायम् । एतेन—पद्मिनीति विशेष्यस्य सौकुमार्यातिशयेन विरहदुःखासहत्वाभिप्रायकत्वात्परिकराङ्कुरः । अयमपि पद्मिनीशब्दश्लेषमूलकातिशयोक्त्युत्थापित इति सङ्करः—इत्यप्ययुक्तमिति व्यक्तीकृतम् । विरहदुःखासहत्वादेस्समासोक्त्यावारोप्यगतत्वेन प्रतीयमानतया व्यवहारारोपविषये कमलिन्यामभावेन तदभिप्रायकतया परिकराङ्कुरासम्भवात् । पद्मिनीशब्दे श्लेषाङ्गीकारेऽपि श्लिष्टरूपकस्यैव तत्र व्यवहर्तुमुचिततया तत्र श्लेषमूलकातिशयोक्तिवर्णनस्यानुचितत्वात् । तस्य च श्लिष्टरूपकस्योत्तम्भकं मधुकरगिरेत्यत्र गीःपदे भाषणध्वन्युभयार्थके श्लिष्टरूपकमिति ॥

त्तथोपविशन्तीनामिति भावः । अनेन संभोगौत्सुक्यातिशयो व्यञ्जितः। शोभने दृशौ यासां ताः सुदृशः अनेन "अङ्गप्रत्यङ्गकानां यस्सन्निवेशो यथोचितम् । सुस्निग्धसन्धिबन्धस्स्यात्तत्सौन्दर्यमितीर्यते" इति लक्षितसौन्दर्यातिशयाभिव्यञ्जकेन कामनीयत्वसंभोगानुरूप्यादिकं ध्वन्यते । शबर्यश्च ताः सुदृशश्च शबरसुदृशः म्लेच्छजातिविशेषललनाः "भेदाः किरातशबरपुळिन्दा म्लेच्छजातयः" इत्यमरः ॥ शबरशब्दाज्जातिलक्षणङीषि "पुंवत्कर्मधारय" इत्यादिना पुंवद्भावः । दृश्येति कृत्यप्रत्ययान्तशब्दयोगात् "कृत्यानां कर्तरि वा" इति कर्तरि षष्ठी, असमये अह्नि तत्रापि चन्द्रोदयानर्हसमय इत्यर्थः । क्षणं त्रिंशत्कलात्मकं कालं अत्यल्पकालमिति यावत् । "लघ्वक्षरोच्चारमात्रो निमेषः परिकीर्तितः । अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला ॥ तास्तु त्रिंशत्क्षणः" इत्यमरः "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। [1]दृश्या, विशदावभासत्वरामणीयकादिभिर्दर्शनयोग्या चन्द्रोदयस्य श्रीर्यस्मिंस्तथाभूतस्सन् "नेयडुवङ्स्थानावस्त्री" इति नदीसंज्ञानि-

[1] दृश्या......चन्द्रोदयश्रीर्यस्मिन् इति रसास्वादिनी । यत्तु—चन्द्रोदयस्य इन्दूदयस्य उद्यच्चन्द्रस्येत्यर्थः—इति व्याख्यानम् तन्न । चन्द्रोदयपदस्य उद्यच्चन्द्रवाचकत्वासंभवात् । न च कृदभिहितो भावो द्रव्यवत्प्रकाशत इति न्यायात्तदर्थकत्वसंभव इति वाच्यं चन्द्रस्योदय इति तत्पुरुषव्युत्पन्नचन्द्रोदयपदे पूर्वपदार्थप्राधान्यस्य शाब्दिकमर्यादाविरुद्धस्य न्यायसहस्रेणाप्यभ्युपगन्तुमशक्यत्वात् । विस्तरेण चेदमुपपादयिष्यते सन्ध्यारागमिति श्लोके ॥

षेधान्न "नद्यृतश्च" इति कप्। [1]शबरयुवतीनां तत्रैव निषण्णतया तव शीघ्रं प्रदेशान्तरगमनाच्च क्षणदृश्यत्वं सन्नप्यह्नि चन्द्रोदयो नासमयभावी न च प्रभाकरप्रभानिकरप्रसरे दृश्यः, कथंचिदविशददर्शनेऽपि न क्षणिकः त्वं तु तद्विलक्षणतया दृश्यस इति लोकविलक्षणचन्द्रोदयभ्रमस्तासां भविष्यतीति भावः ॥ अत्र शबरसुदृशामित्यस्य दृश्यपदेन समासैकदेशेनान्वयेऽप्यदोषः । अस्य कृद्योगविहितकर्तृषष्ठ्यन्तत्वेन कारकत्वात् ॥ तथाचोक्तम्—"प्रतियोगिपदादन्यद्यदन्यत्कारकादपि । वृत्तशब्दैकदेशेन न तस्यान्वय इष्यते" इति ॥ दक्षिणां आशां दिशं अनुसरतीति तथोक्तस्सन् तदनुसरणशीलस्सन्नित्यर्थः ॥ "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः ॥ यद्वा—अनुसरतीत्यनुसारी सृधातोः "आवश्यकाधमर्ण्ययोर्णिनिः" इत्यावश्यकार्थे णिनिः दक्षिणाशां अनुसारी दक्षीणाशानुसारी "अकेनोर्भविष्यदाधमर्ण्ययोः" इति कृद्योगलक्षणषष्ठीनिषेधाद्दक्षिणाशामिति कर्मणि द्वितीया ॥ यद्यपि सूत्रे आधमर्ण्यार्थकणिनियोग एव षष्ठी निषिध्यते तथाऽ

---

[1] शबरयवतीनां तत्रैव निषण्णतया तव शीघ्रं प्रदेशान्तरगमनाच्च क्षणदृश्यत्वमिति रसास्वादिनी । यत्तु—हंसगमनावस्थाकालिकत्वात् श्रियः क्षणदृश्यत्वमिति—तन्न क्षणान्तरेऽपि हंसगमनावस्थायास्सत्त्वेन हंसगमनावस्थाकालिकत्वस्य श्रियि क्षणदृश्यतायामहेतुत्वात् । गच्छतो हंसस्य प्रथमदर्शनक्षण एव तस्मिन् हंसे चन्द्रोदयश्रीर्दृश्या भवति । क्षणान्तरे तु प्रदेशान्तरापसर्पणात् सन्निकर्षविगमेन हंसस्य धर्मिणः तत्र धर्मान्तरस्य वा न दर्शनसंभव इत्येवेह विवक्षितम् । तदिदमाचार्यैर्विवृतम् "तव प्रदेशान्तरगमनादिति" इति ध्येयम् ॥

प्यावश्यकार्थकणिनियोगेऽप्ययं निषेधो भवत्येव ॥ सूत्रे आधमर्ण्य-पदेन तत्सूत्रोक्तार्थोपलक्षणात् । अत एव “ अंशं हारी ” इति नि-र्देशस्संगच्छते । तत्र ह्यावश्यके णिनिरिति प्रकृतसूत्रशब्देन्दुशेखरे विस्तरः। ततः “ श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ” इति भाष्य-वार्तिकस्थादिपदस्य प्रकारार्थकत्वेन व्याख्यानादन्नबुभुक्षुरित्यादाविव द्वितीयासमासः । विस्तरस्तु भाष्यप्रदीपोद्योतादौ ॥ अथ गमनत्वराव-शान्नानवहितेन भवितव्यमित्याह—पश्यन्निति ॥ दूरात् दूरमित्यर्थः “ दूरान्तिकार्थेभ्यो द्वितीया च ” इति चकारात्पञ्चमी प्रातिपदिकार्थ-मात्रे । यद्वा—“दूरान्तिकार्थेभ्यः ” इति सूत्रस्य “सप्तम्यधिकरणे च” इत्युत्तरसूत्रेऽप्यनुवर्तनादधिकरणार्थे पञ्चमी ॥ दूरे इत्यर्थः तथाच प्र-युज्यते—“दूरादावसथान्मूत्रं दूरात्पादावसेचनम्” इति । इदं च मनुव-चनं दूरान्तिकेति सूत्रभाष्ये उदाहृतं “ आवसथस्य दूरे इत्यर्थः ” इति कैयटेन विवृतं च ॥ पश्यन् “ मार्गमालोकयन्दूरादूर्ध्वं प्रणिहि-तेक्षणः ” इत्युक्तरीत्या गतिप्रतिघातिसत्त्वदूरपरिहरणाय “ अस्मा-कमपि सौपर्णं दिव्यं चक्षुर्बलं तथा । तस्मादाहारवीर्येण निसर्गेण च वानराः । आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ” इति संपात्यु-क्तप्रक्रियया त्वमपि यावच्चक्षुः प्रसरेत्तावद्दूरं मार्गं विलोकयन्निति भावः ॥ एवं सावधानतायाः फलमाह—प्रबलेति ॥ प्रकृष्टं बलं स्थौल्यं सामर्थ्यं वा येषां ते प्रबलाः “ प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः ” इति समास उत्तरपदलोपश्च। प्रबलाः गरुतः पक्षाः येषां ते तेषां तथोक्तानामिति बहुव्रीहिगर्भबहुव्रीहिः ॥ “ स्थौल्यसा-

मर्ध्यसैन्येषु बलं ना काकसीरिणोः । गरुत्पक्षच्छदाः" इति चामरः । पक्षिणां भेरुण्डादीनां प्रबलगरुतामित्यनेन बलातिशयोन्मत्तत्वद्योतकेन तन्निवारणस्य दुश्शकत्वं द्योत्यते । सुशकत्वेऽपि भूयिष्ठप्रयत्नादि-साध्यत्वेन तत्प्रसङ्गे तव गमनप्रत्यूहोऽपि क्वचित्संभवेत्स मा भूदित्याह— दत्तेति ॥ दत्तं वितीर्णं वर्त्म मार्गो येन तथाभूतस्सन् "राज्ञः पन्था ब्राह्मणेनासमेत्य समेत्य तु ब्राह्मणस्यैव पन्थाः । यानस्य भाराभि-हतस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यो वर्णज्यायसां चेतरैर्वर्णैरेव शिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः" इत्याप-स्तम्बोक्तरीत्या आत्मस्वस्त्ययनार्थं तेषां निष्प्रत्यूहसञ्चरणाय स्वय मेव वितीर्णावकाश इत्यर्थः । अन्यथा तव तेभ्यः किमप्यभद्रं संभवेदपीति भावः । यद्यपि "आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः । द्वितीयो बलिभोजानां ये च वृक्षफलाशिनः ॥ भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैस्सह । श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् । बलवीर्योपपन्नानां रूपयौवनशालिनाम् ॥ षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा" इत्युक्तरीत्या बलवी-र्यादिगुणसमृद्धिमतो राजहंसस्याध्वनि शकुन्तान्तरचङ्क्रमस्यैव दुर्लभत योक्तविधशङ्काया एव नावकाशः येनाशास्येत मङ्गळं तथाऽप्य-र्वागेव स्वपथप्राप्तेः कदाचित्तत्संघर्षस्संभवेदित्यस्थानभयसंभ्रान्ततया रामभद्रस्यैवमाशासनमिति ध्येयम्—वदन्ति हि "अति स्नेहः पाप-शङ्की" इति यद्वा हंसपथादपि परत्वाद्वैनतेयगतेः "वैनतेयगतिः परा, वैनतेयाच्च नो जन्म" इति संपात्युक्तप्रकारेण सौपर्णानां पत-

त्रिणां हंसाध्वन्यपि क्वचित्संचारसंभवान्माननीयानां तेषां मार्गप्रदानं तव स्वस्त्ययनायेत्यभिप्रायेणानुशासनमित्यवगन्तव्यम् । अस्मात् सरसिजवनात् कमलवनात् उड्डीयेथाः उद्गत्य विहायसा गच्छेः । उत्पूर्वकात् "डीङ् विहायसा गतौ" इत्यस्माद्दैवादिकात्प्रार्थनायां लिङ् ॥ अत्र चन्द्रोदयश्रियोऽन्यधर्मस्यान्यत्र हंसेऽसंभवे औपम्ये पर्यवसानादसंभवद्वस्तुसंबन्धनिदर्शनेति प्राचां व्यवहारः । चन्द्रोदयश्रीरूप धर्मस्य हंसे वर्णनात्पदार्थवृत्तिनिदर्शनेत्यर्वाचां व्यवहारः ॥ "पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् । त्वन्नेत्रयुगळं धत्ते लीलां नीलाम्बुजन्मनोः" इति लक्ष्यलक्षणसंग्रहकृदुक्तेः । अनेन च शबरयुवतीनां चन्द्रोदयभ्रान्तिद्योतनाद्भ्रान्तिमदलङ्कारो ध्वन्यत इत्यलङ्कारेणालङ्कारध्वनिः । हंसस्यातिक्षिप्रगामित्वप्रसन्नविशदमनोहरवर्णत्वादिद्योतनादलङ्कारेण वस्तुध्वनिः ॥ किंच ॥ कान्तैस्सुदृशामित्याभ्यां ॥ "यौवनं रूपलावण्ये सौन्दर्यमभिरूपता । मार्दवं सौकुमार्यं चेत्यालम्बनगता गुणाः" इत्युक्तालम्बनगतगुणसमृद्धिरूपोद्दीपनविभावसंपत्तिः । [1]अद्रिकुञ्जेष्वित्यनेन "कोकिलालापमाकन्दमन्द-

[1] अद्रिकुञ्जेष्वित्यनेन........तटस्थोद्दीपनविभावसामग्री इति रसास्वादिनी ॥ यत्तु—अद्रिकुञ्जेषु दृश्यचन्द्रोदयश्रीरिति च उद्दीपनस्य प्रतीतिरिति कथनम्—तन्न चन्द्रोदयभ्रान्तिप्रतिपादनपरस्य दृश्यचन्द्रोदयश्रीरित्यस्य उद्दीपनप्रत्यायकत्वासंभवात् । "मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः" इत्यादौ वस्तुसतामेव मलयानिलचन्द्रादीनामुद्दीपनविभावत्वोक्तेरिति । चन्द्रोदयभ्रान्तेरुद्दीपनत्वेन मूलविवक्षितत्वे च तत्र क्षणिकत्वनिबन्धनं विरुद्धं स्यान्मूलकृताम् ॥ १७ ॥

मारुतषट्पदाः । लतामण्डपभूगेहदीर्घिकाजलदारवाः । प्रासादगर्भसंगीतक्रीडाद्रिसरिदादयः । एवमूह्या यथाकालमुपभोगोपयोगिनः ” इत्युक्ततटस्थोद्दीपनविभावसामग्री सार्धमासीनानामित्यनेन “ भावं मनोगतं साक्षात्स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः । ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसंभवाः ” इत्याद्युक्तानुभावसामग्री हर्षौत्सुक्यादिसंचारिभावसामग्री रोमाञ्चप्रभृति सात्विकभावसौभाग्यं च यथासंभवं ग्राह्याणि एभिश्शबरमिथुनरूपालम्बनविभावगता रतिः परिपोष्यत इति शृङ्गाररसो व्यज्यते ॥ स च संभोगलक्षणः ॥ तल्लक्षणमुक्तम् ॥ “ अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि स संभोग उदाहृतः ” इति ॥ तत्र च रागादिति पदेन शृङ्गारावस्थाविशेष उक्तः ॥ तदप्युक्तम् ॥ “ प्रेमाभिलाषो रागश्च स्नेहः प्रेम रतिस्तथा । शृङ्गारश्चेति संभोगस्सप्तावस्थः प्रकीर्तितः ” इति ॥ विवृतं चैतद्रसाकरे ॥ “ प्रेमादिदृक्षारम्येषु तच्चिन्तात्वभिलाषकः । रागस्तत्सङ्गबुद्धिस्स्यात् स्नेहस्तत्प्रवणक्रिया । तद्वियोगासहं प्रेम रतिस्तत्सहवर्तनम् । शृङ्गारस्तन्मयक्रीडा सम्भोगे सप्तधा क्रमः ” इति ॥ अत्र शृङ्गारस्य म्लेच्छजातिविशेषशबरविषयतया रसाभासत्वं केषांचिन्मते ॥ तदुक्तम् ॥ एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा । योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ” इति “ म्लेच्छास्तिरश्चामनाघ्रातवैदग्ध्यगन्धानामननुभूतविभावानुभावानामभिवदनव्यापारमात्रविलक्षणास्सहोदराः । अतस्तेषां द्वयानामपि समानयोगक्षेमत्वात्सहोपादानम् ” इति रत्नापण-

कृत् ॥ अतस्तेषु विभावादिपूर्त्यभावात्तत्र रसस्याभासत्वम् ॥ यत्र विभावादिपरिपूर्तिस्तत्रैव मुख्यो रसः ॥ तदुक्तं लोचने ॥ "रसस्तु स एव यो यत्र विभावानुभावव्यभिचारिसंयोजनोचितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशे चर्वणप्रयुक्त एवास्वादप्रकर्षः" इति ॥ ईदृशस्थले रस एवायं नाभासः इत्यन्ये । तदुक्तं विद्याधरेण "विभावादिसंभवो हि रसं प्रति पयोजको न विभावादिज्ञानं ततश्च तिरश्चामप्यस्त्येव रसः" इति ॥ एतेन तिरश्चामपि रससद्भाववर्णनेन म्लेच्छानामपि रससद्भावः कैमुतिकन्यायसिद्ध इति विभावनीयम् । विभावादिसामग्रीपरिपोषसद्भावात् । अयमेव पक्षो वरमित्युत्पश्यामः । किंच । क्षणमसमये दृश्यचन्द्रोदयश्रीरित्यत्र हंसेनालम्बनेनानुमीयमानैर्नयनविष्फारणादिभिरनुभावैर्हर्षादिभिर्व्यभिचारिभिश्च शबरमिथुनगतस्य विस्मयाख्यस्य स्थायिनः परिपोषणादद्भुतरसो व्यज्यते । अत्र तुल्यकालबलोत्पत्त्योः रतिविस्मययोः स्थायिनोर्विभावादिभिः रसतया परिणममानयोर्भोजराजादिमते सङ्करः । तथाचोक्तं सरस्वतीकण्ठाभरणे । "तुल्यकालबलोत्पत्तिहेतौ भावान्तरोदये । संसर्गस्तस्य यस्तेन संकरस्स निगद्यते" इति । रसार्णवसुधाकरकारस्त्वीदृशस्थले सङ्करं नेच्छति । तथा च तद्ग्रन्थः—केचित्समानबलयो रसयोस्सङ्करं विदुः । न परीक्षाक्षममिदं मतं प्रेक्षावतां भवेत् । तुल्यत्वे पूर्वजस्स्वादः कतरस्येत्यनिश्चयात् । स्वर्गापवर्गयोस्तुल्यमनुस्वादप्रसङ्गतः । तयोरन्यतरस्यैव प्रायेणास्वादनादपि । युगपद्रसनीयत्वं नोभयोरुपपद्यते । तुलाभृतत्वमुभयोः न स्यात्प्रकरणादिना । कवितात्पर्यविश्रान्तेरेकत्रैवावलोकनादिति"

इत्यनपेक्षितविस्तीर्णामिति प्रतिज्ञाभङ्गभयादुपरम्यते ॥ १६ ॥

अथ राजहंसप्रोत्साहनाय तदुड्डयनसमनन्तरभाविनीं माल्यवतश्शोभां संभावयन्नाह—अङ्गीकुर्वन्निति ॥

**अङ्गीकुर्वन्नमृतरुचिरामुत्पतिष्णोस्सलीलं**
**छायामन्तस्तव मणिमयो माल्यवानेष शैलः।**
**शोभां वक्ष्यत्यधिकललितां शोभमानामतीन्दोः**
**देवस्यादेरुपजनयतो मानसादिन्दुबिम्बम् ॥**

मणिमयः रत्नप्रचुरः । "तत्प्रकृतवचने मयट्" इति मयट् । मणिशब्देनात्रेन्द्रनीलानां ग्रहणं वक्ष्यमाणभगवन्निदर्शनाल्लिङ्गात् । माल्यवानिति प्रसिद्धः एषः अत्यन्तासन्नः "समीपतरवृत्ति चैतदो रूपम्" इत्युक्तेः । शैलः अद्रिः मणिमय इति विशेषणं प्रतिबिम्बग्रहणयोग्यतासूचनाय । लीलया सह वर्तते यस्मिन्कर्मणि तद्यथा स्यात्तथा सलीलं न हि दाक्षिण्यक्लेशादिनेदमुत्पतनमिति भावः । उत्पतिष्णोः साधूत्पतनकारिण इत्यर्थः । उत्पूर्वकात्पतेः "अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्" इतीष्णुच् । स च तत्साधुकार्यर्थे "आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" इत्यनुशासनात् । "उत्पतिष्णुस्तूत्पतिता" इत्यमरः । अनेनोत्पतने सौष्ठववैकल्यं मात्रयाऽपि नास्तीति द्योतितम् । इन्दुमतिक्रान्तोऽतीन्दुः तथोक्तस्य "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । चन्द्रातिशायिसुषमस्येत्यर्थः । "ऊ-

धर्वगमनादतीन्दोः" इति व्याख्यानं तु नातीव प्रकृतोपयोगि तव अमृतं सुधा तदिव रुचिरां मनोहराम् । तद्वद्विशदतमामिति यावत् । इदं च वक्ष्यमाणनिदर्शनानुकूलं "सुन्दरं रुचिरं चारु" इत्यमरः । छायां प्रतिबिम्बं "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपे" इत्यमरः । अन्तः मध्यप्रदेशे अङ्गीकुर्वन् स्वीकुर्वन् मानसात् मनसः इन्दुबिम्बं चन्द्रमण्डलं उपजनयतः सृजतः "चन्द्रमा मनसो जातः" इति श्रुतेः । वर्तमाननिर्देशेन चन्द्रमसो बहिर्निर्गमोन्मुखतयाऽन्तरवस्थानं सूच्यते । आदेः जगत्कारणस्य । देवस्य परमपुरुषस्य अधिकललितां अत्यन्तरमणीयां अधिकं ललिता अधिकललितेति विस्पष्टपटुवत्समासः । निरूपितं चैतदधस्ताच्चतुर्थश्लोकेऽधिकसुभग इत्यत्र, सूत्रितं च वामनेन "आमूललोलादिषु वृत्तिर्विस्पष्टपटुवन्मयूरव्यंसकादित्वात्" इति । शोभमानां दीप्यमानां शोभां श्रियं वक्ष्यति प्राप्स्यति । वहतेर्भविष्यति लृटि स्यप्रत्यये "होढः" इति ढत्वे "षढोः कस्सि" इति कत्वे "आदेशप्रत्यययोः" इति कवर्गात्परीभूतसकारस्य षत्वम् । अत्र मणिमय इति माल्यवद्विशेषणस्य छायाग्रहणार्हताभिप्रायगर्भत्वात् अमृतरुचिरां अतीन्दोः इति शोभाहंसविशेषणयोरुपमागर्भयोश्चन्द्रबिम्बनिदर्शनानुगुण्याभिप्रायगर्भत्वाच्च त्रयः परिकराः । माल्यवत ईदृशमणिमयत्वेन छायाग्रहणासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिविशेषश्चेत्येतैरुपजीविता मानसाच्चन्द्रबिम्बं जनयितुर्देवस्य श्रियोऽन्यधर्मस्यान्यत्र माल्यवद्गिरावसंभवादसंभवद्वस्तुसंबन्धनिदर्शना इमां पदार्थ-

वृत्तिनिदर्शनेति नव्याः लक्षणं त्ववोचाम श्लोके पूर्वस्मिन् । किंच । माल्यवद्विषयकं श्रीरामचन्द्रगतं भावं प्रति राजहंसविषयकस्तद्भावोऽङ्गमिति प्रेयोऽपराङ्गव्यङ्ग्यम् । "प्रेयोऽपराङ्गं भावस्य यदि भावरसाङ्गता" इति लक्षणात् ॥ १७ ॥

अथ प्रस्थातुमुद्युञ्जानाय राजहंसाय सुखदायिनं पन्थानमुपदिशति रघुनन्दनः—मार्गाविति ॥

**मार्गौ सम्यङ्मम हनुमता वर्णितौ द्वौ तयोस्ते**
**सह्यासन्नोऽप्यनघ(ति)सुभगः पश्चिमो नित्यवर्षः ।**
**प्राचीनेषु(तु)प्रतिजनपदं संहतावद्भुतानां**
**मग्ना दृष्टिः कथमपि सखे मत्कृते ते निवार्या ॥ १८॥**

हनुरस्यास्तीति हनुमान् प्रशंसायां मतुप् । प्राशस्त्यं च हनोरिन्द्रवज्रक्षतिजनितवीरकिणाङ्कितत्वात् । तथाचेन्द्रेणोक्तमुत्तरकाण्डे "मत्करोत्सृष्टवज्रेण हनुस्तस्य तदा क्षतः । नाम्नैष हरिशार्दूलो भविता हनुमानिति" इति "अन्येषामपि दृश्यते" इत्यत्र दृशिग्रहणेन दीर्घस्य पाक्षिकत्वादिह हनुशब्दस्य न दीर्घः । यथा दृश्यते तथा साध्विति तदर्थात् "शॄस्वृस्निहि" इत्याद्युणादिसूत्रव्याख्यानावसरे "हनूमानित्यत्र अन्येषामपि दृश्यत इति पाक्षिको दीर्घः" इति मनोरमातत्त्वबोधिन्योः "गमोऽवोचद्धनूमन्तम्" इत्यत्र घण्टापथे च निरूपितम् । अत एव शरादिषु हनुशब्दपाठोऽप्यप्रामाणिक इत्येवास्थेयं अन्यथा "शरादीनां च" इति दीर्घस्य

नित्यत्वाद्धनुमानिति रूपासिद्धेरुदाहृतमनोरमादिग्रन्थविरोधस्स्पष्ट एव । शरादिषु हनुशब्दपाठस्य प्रामाणिकत्वेऽपि "पृषोदरादीनि" इत्यतो "यथोपदिष्टम्" इत्यस्य "वले" इति सूत्रे शेखरकृताऽनुवर्तितत्वात्तदुत्तरसूत्रे "शरादीनां च" इत्यत्राप्यनुवर्तने बाधकाभावान्मतुपि परे हनुशब्दस्य दीर्घो वैकल्पिक इति ब्रूमः । उभयथाऽपि शिष्टैरुपदिष्टत्वात् । अत एव "पम्पातीरे हनुमता, हनुमन्कीदृशं सख्यं, हनूमान्मारुतात्मजः, ततो हनूमान्दशकण्ठनीताम्" इत्यादय उभयथाऽपि प्रयोगा निर्विवादाः । वस्तुतस्तु यथा कशेरूशब्दस्य "केश्रएरङ्चास्य" इत्युणादिसूत्रेण ऊप्रत्ययान्तत्वेऽपि बाहुलकादुप्रत्ययान्तत्वमप्यभ्युपगतं तथा "शॄस्वृस्निहित्रप्यसिवसिहनि" इत्याद्यौणादिकसूत्रेण हनुशब्दस्य उप्रत्ययान्तत्वेऽपि बाहुलकादूप्रत्ययान्तत्वस्याप्यभ्युपगमे विरोधाभावेन हनुमान् हनूमानिति सर्वसंप्रतिपन्नस्य रूपद्वयस्यापि निष्पत्तेर्दृशिग्रहणेन पाक्षिकदीर्घकल्पनक्लेशः "शरादीनां च" इत्यत्र हनुशब्दपाठः यथोपदिष्टमित्यस्यानुवर्तनक्लेशोऽपि नाश्रयणीयः । न च ऊप्रत्ययकल्पनमपि क्लेश एवेति वाच्यं वृत्त्यविषयेऽपि हनूरिति प्रामाणिकप्रयोगदर्शनेन संप्रतिपन्नोणादिबाहुळकत्वमूलकस्य ऊप्रत्ययकल्पनस्यावश्याभ्युपेयत्वात् ॥ अन्यथा कशेरुशब्देऽपि क्लेश एवाभ्युपगन्तव्यस्स्यात् ॥ उणादिबाहुळकत्वाद्याश्रयणमपीदृशप्रामाणिकप्रयोगनिर्वाहायैव ॥ अत एव "ईदृशानां प्रयोगाणामबहिष्कारसिद्धये । बहुधा बहुळादीनामष्टाध्याय्यामुपक्रमः ॥ नानाव्याकरणाभिज्ञबहुवि-

द्वत्परिग्रहे । शब्दासाधुत्वमाहुर्ये शाब्दिकांस्तान्नमन्महे "॥ इति तत्त्र टीकायामाचार्यपादैरनुगृहीतं सङ्गच्छते ॥ अत एव च ॥ "हनुश्चापि हनूश्च स्यात्, हनुर्हनूस्तनुश्चैवम्" इत्यादयश्श्रीहर्षादिद्विरूपकोशाश्चोपपन्नाः । नन्वेवं बाहुळकत्वेनैव हनूरिति रूपसिद्धौ "अप्राणिजातेश्च" इति सूत्रे ऊङ्विधौ "अरज्ज्वादीनाम्" इति हनुशब्दपर्युदासो व्यर्थः । तत्र हि हनुशब्दः पठ्यत इति चेन्न ॥ ऊङि सति "नोङ्धात्वोः" इति विभक्त्युदात्तत्वप्रतिषेधस्स्यादिति तद्वारणेन सार्थक्यात् ॥ तस्माद्रूपद्वयमपि निष्कण्टकमेवेति न संकटं किंचित् । विस्तरस्तु अस्मदीयायां लक्ष्मीसहस्ररत्नप्रकाशिकायां प्रारम्भस्तबके 'दूरं हनूमन्मुखैः' इत्यत्र द्रष्टव्यः ॥ हनुमता मारुतिना मम द्वौ प्रतीचीनप्राचीनौ द्वौ, मार्गौ सम्यक् समञ्जसं यथा स्यात्तथा विविच्येत्यर्थः । वर्णितौ कथितौ ॥ तयोर्मध्ये पश्चाद्भवः पश्चिमः । प्रतीचीनो मार्गः "अग्रादिपश्चाड्डिमच्" इति पश्चाच्छब्दाद्भवार्थे डिमच्, "टेः" इति टिलोपः, अविद्यमानं अघं दोषो यस्मिंस्तथाभूतः न केवलमेतावदेव ॥ किंतु शोभनो भगो गुणसमृद्धिर्यस्मिंस्तथाभूतश्च भवति "भगश्श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः ॥ अनघश्चासौ सुभगश्चेति खञ्जकुब्जादिवत्समासः । हन्त तर्हि तेनैव पथा गन्तव्यं मयेत्यत्राह ॥ ते इत्यादिना—सः हि आसन्नः इतिच्छेदः । आसन्नोऽपि संनिकृष्टोऽपि ॥ "समीपे निकटासन्नसंनिकृष्टसनीडवत्" इत्यमरः । माल्यवत्कुटुम्बिनस्तव लङ्कां प्रति गन्तुं पश्चिम एवाध्वा प्रत्यासन्नोऽस्तीति भावः । सः पश्चिमो मार्गः नित्यं संततं वर्षं वृष्टि-

र्यस्मिस्तथोक्तो हि । हिः प्रतिपादितार्थस्य लोकप्रसिद्धिद्योतकः । [1]यद्यपि निर्दोषस्सगुणस्तव प्रत्यासन्नश्च प्रतीचीनः पन्थाः तथाऽपि तत्र नित्यवर्षत्वमेको महान् दोषः पान्थसामान्यस्य ; विशेषतश्च भवतो मेघाडम्बरनिसर्गभीरोः । यदनारतवर्षधारासारनिपाताभिघातावश्यंभावेन क्लिन्नपक्षतयोत्पतनलाघवमपि सर्वात्मना संभाव्यते दुर्लभं तद्गन्तुमनर्ह एवेति भावः ॥ यद्वा—सह्यासन्न इति समस्तं पदम् । सह्यासन्नोऽपि सह्याचलोपकण्ठगतोऽपि पश्चिमो मार्गः अनघसुभग एव । अपिशब्देनात्रानघसुभगताया अर्धाङ्गीकृतिर्द्योत्यते ॥ तामेव विवृण्वंस्तत्र हेतुमभिप्रयन्नाह—नित्यवर्ष इति ॥ किंतु संततवर्ष इति भावः ॥ स ह्यासन्नोऽप्यनतिसुभगः इति पाठेऽपि सः हि, आसन्न इत्येव छित्वा पश्चिमो मार्गः ते तव आसन्नोऽपि अनतिसुभगः नातिसुभगं करणः हि यस्मात् "हि हेताववधारणे" इत्यमरः ॥ स पश्चिमो मार्गः, नित्यवर्षः अश्रान्तवर्षाकुल इति योजना कार्या आसन्नत्वलक्षणगुणसद्भावेऽपि नित्यवर्षत्वरूपदोषस्यापि सद्भावान्नातीव रमणीयः प्रतीचीनो मार्ग इति भावः ॥ यद्वा—सः प्रसिद्धः ॥ पश्चिमो मार्गः ते आ-

---

[1] यद्यपि निर्दोषस्सगुणस्तव प्रत्यासन्नश्च प्रतीचीनः पन्था इति रसास्वादिनी ॥ यत्तु - त्वदपेक्षया अनघसुभग इत्यर्थः —इति विवरणम्—तन्न नित्यवर्षत्वेन वर्षभीरुहंसापेक्षया न दोषत्वस्यैवेह विवक्षितत्वेन अनघत्वस्य हंसापेक्षया लक्षणासंभवात् । तस्मात्सामान्यत इतरापेक्षयैव अनघत्वमिह विवक्षितमिति बोध्यम् । एतदभिप्रायेणैव "यद्यपि निर्दोषस्सगुणस्तव प्रत्यासन्नश्च प्रतीचीनः पन्थाः" इति प्रत्यासन्नपदात्पूर्वमेव तवेति पदं योजितं न तु निर्दोषपदात्पूर्वमाचार्यैरिति दिक् ॥ १८ ॥

सन्नो हि हिशब्दोऽवधारणे। अपिशब्दस्य यद्यपीत्यर्थः। यद्यप्यासन्न एव। तथाऽप्यनतिसुभगः। न ह्यासन्नतामात्रेणानतिसुभगंमावुकेऽपि पथि सहसा गन्तुमुचितं प्रायेण क्लेशावश्यंभावादिति भावः। अनतिसुभगत्वमेव दर्शयति ॥ नित्यवर्ष इति ॥ हेतुगर्भमिदं नित्यवर्षत्वादनतिसुभग इत्यर्थः ॥ अयमेव पाठस्साधीयान् अथ पारिशेष्यात्प्राच्येनैव पथा गन्तव्यमित्यभिप्रयन् तत्रापि गतिशैघ्र्यप्रतिबन्धसंभवं संभाव्य स मा प्रसाङ्क्षीत्तेत्यभ्यर्थयते ॥ प्राचीनेष्विति ॥ प्राचीनशब्दोऽत्र प्राग्देशवाची ॥ "दिक्छब्देभ्यस्सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" इति "दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः" इति च प्रागादिशब्दानां देशवाचित्वस्याप्यनुशासनात्। प्राञ्च एव प्राचीनाः। प्राक्छब्दात् "विभाषाञ्चेरदिक्स्त्रियाम्" इति स्वार्थिकः खप्रत्ययः ॥ तेषु प्राग्देशमार्गेष्विति यावत् ॥ प्राचीने त्विति पाठस्स्वच्छः ॥ द्वौ मार्गौ वर्णिताविप्युपक्रम्य पश्चिमो नित्यवर्ष इत्युक्त्वात्पूर्वमार्गापेक्षयाऽस्य वैलक्षण्यकथनावश्यंभावाच्च ॥ तुशब्दोऽत्र पूर्वापेक्षया विलक्षणाक्षिप्रगतिप्रतिबन्धसद्भावं द्योतयति ॥ प्राचीने तु प्राग्देशमार्गे तु प्रतिजनपदं "जनः पदं वस्तु यस्मिन् स जनपदः" इत्यमरसुधायां भानुः "जनाः पद्यन्तेऽस्मिन्निति जनपदः" इति टीकासर्वस्वकृत्। वस्तुतस्तु जनानां पदं जनपद इति विग्रहो युक्तः। "नाड्यपजनोपपदानि व्रणाङ्गपदानि" इति पुल्लिङ्गेष्वनुशासनात् जनपदे जनपदे प्रतिजनपदं वीप्सायामव्ययीभावः प्रतिग्रामसमूहमित्यर्थः। "नीवृज्जनपदौ" इत्यमरः ॥ अद्भुतानां विचित्रवस्तूनां संहतौ समु

दये "स्त्रियां तु संहतिर्बृन्दम्" इत्यमरः। स्त्रीलिङ्गस्वारस्यान्नायिकात्वं द्योत्यते ॥ मग्ना "यद्यत्पश्यामि ते गात्रं शीतांशुसदृशानने। तस्मिंस्तस्मिन् पृथुश्रोणि चक्षुर्मम निबध्यते" इत्युक्तरीत्या तत्रतत्रैव विलग्नेत्यर्थः ॥ यद्वा—मग्ना मज्जनोन्मुखीत्यर्थः। "टुमस्जोशुद्धौ" इति धातोस्तौदादिकात् "आदिकर्मणि क्तः कर्तरि च" इति कर्तरि क्तः। जश्त्वे "चोः कुः" इति कुत्वे संयोगादिलोपे "ओदितश्च" इति निष्ठा तकारस्य नत्वं मज्जनारम्भ एव निवारणं सुकरं न तु सुतरां मग्नस्येति भावः ॥ दृष्टिः लोचनं प्रतिजनपदमद्भुतानां संहतावित्याभ्यामनुक्षणमपि मज्जनप्रसक्तिसद्भावोऽभिव्यञ्जितः ॥ तेनैकत्र मग्नाया उद्धरणेऽपि पुनःपुनस्तत्प्रसक्तेरवश्यंभावात्तन्निवारणमतिदुष्करमिति ध्वन्यते। मत्कृते मदर्थम्। अत्युत्सुकतया विलम्बमसहमानस्य ममार्थे इत्यर्थः। "अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ" इति नैघण्टुकाः। निवार्या नितरां वारणीया यत्किंचित्प्रसङ्गेऽपि विलम्ब एव संभवेदिति भावः ॥ निपूर्वकाद्वृञ्धातोः "ऋहलोर्ण्यत्" इति ण्यत्। मत्प्रयोजनार्थमद्भुतविलग्नाऽपि दृष्टिराकर्षणीयेति भावः ॥ नन्वेकस्मिंश्चेदद्भुते निमज्जेल्लोचनं ततः कथंचित्तदाकृष्येत प्रतिजनपदमप्यद्भुतसंहतावनुक्षणनिमग्ना कथं निवारणीयेत्यत आह—कथमपीति ॥ गरीयसा प्रयत्नेनेत्यर्थः। "कथमादि तथाऽप्यन्तं यत्नगौरवबाढयोः" इत्युत्पलमाला न हि शक्यं क्षोदीयसा प्रयत्नेनेदं वारणमिति भावः ॥ ननु कुत ईदृशो गरीयानपि प्रयत्नो मया करणीय इत्यत आह—सखे इति॥ इदं च "त्वं वयस्योऽसि मे हृद्यो ह्येकं दुःखं सुखं च नौ"

इत्युक्तरीत्या समानसुखदुःखतां द्योतयितुम् । तेनाद्भुतविमग्नदृष्टितया संभवति तव गमनविलम्बे भवेन्मम महानेव क्लेशस्स तवापि क्लेश एव भविष्यतीत्यतस्तद्वारणायावश्यं यत्नगौरवमाश्रयणीयमिति भावः । अत्र पूर्वार्धे नित्यवर्ष इति विशेषणस्य प्रतीचीनमार्गपरित्यजनाभिप्रायगर्भत्वात्परिकरः । अनतिसुभग इति पाठे नित्यवर्ष इत्यस्य विशेषणगत्या प्रतीच्यमार्गानतिसुभगत्वहेतुतया काव्यलिङ्गभेदः ॥ उत्तरार्धे प्राच्येन पथा सत्वरं गन्तव्यमित्यर्थस्य भङ्ग्यन्तरेण वर्णनात्पर्यायोक्तम् । सखे इति विशेष्यस्याप्युक्तरीत्याऽभिप्रायगर्भत्वात्परिकराङ्कुर इत्येतेषां संसृष्टिः ॥ १८ ॥

अथ क्रमेण तत्तद्देशातिक्रमणमादिशंस्तावदाद्यावभ्यर्णदेशोल्लङ्घनमनुजानीते रामभद्रः—

**श्रुत्वा शब्दं श्रवण(मधुरं)सुभगं तावकं पामरीणां**
**प्रत्यासन्नात्सपदि भवनात्सादरं निर्गतानाम् ।**
**अभ्रूभङ्गेऽप्यधिकसुभगैर्निश्चिताङ्गः कटाक्षैः**
**देशानेतान्वनगिरिनदीसंविभक्तान्व्यतीयाः॥१९**

श्रुत्वेति ॥ श्रवणयोः श्रोत्रयोः मधुरं प्रियं "स्वादुप्रियौ तु मधुरौ" इत्यमरः ॥ अमृतवदास्वादनीयमिति भावः । श्रवणसुभगमिति पाठेऽप्यर्थस्समानः । तवायं तावकः "तस्येदम्" इत्यणि "तवकममकावेकवचने" इति युष्मच्छब्दस्य तवकादेशः । तं त्वदीयं शब्दं निन-

दं श्रुत्वा प्रत्यासन्नात् अदूरेत्यात् भवनात् स्वस्वनिकेतनात् सपदि तत्क्षणमेव "सद्यस्सपदि तत्क्षणे" इत्यमरः ॥ स्वस्वभवनानामत्यभ्यग्रतया निनादश्रवणनिर्गमनयोरव्यवधानम् । आदरेण सह वर्तते यस्मिन्कर्मणि तद्यथा भवति तथा सादरं "तेन सह" इति समासे "वोपसर्जनस्य" इति सहशब्दस्य सभावः ॥ निर्गतानां किमीयोऽयमीदृशो मधुरध्वनिरिति संदिह्य तन्निर्णिनीषया बहिरागतानामिति भावः ॥ सादरमित्यनेन तन्निर्णये औत्सुक्यातिशयो व्यज्यते । पामरीणां प्राकृतीनां अज्ञतमानां ललनानां "विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः" इत्यमरः । पिप्पल्यादेराकृतिगणत्वान्ङीष् । पामराणां स्त्रिय इति पुंयोगलक्षणो वा । तेनातिपामरत्वं सूचितम् ॥ नागरिकाश्चेल्ललना निनादश्रवणमात्रादेवादसीय एवायं ध्वनिरिति बहिरनिर्गत्यैव निश्चिनुयुरिति भावः । भ्रुवोः भङ्गः विक्षेपः ततो नञ्समासे अभ्रूभङ्गं तस्मिन् भ्रूभङ्गाभावेऽपीत्यर्थः ॥ भ्रूविकारानभिज्ञत्वेऽपीति यावत् । न चागमर्थाभावेऽव्ययीभावेन तत्पुरुषो बाध्यत इति भ्रमितव्यम् ॥ "रक्षोहागमलघ्वसंदेहाः प्रयोजनं, अद्रुतायामसंहितम्" इति च भाष्यवार्तिकप्रयोगाभ्यामव्ययीभावेन सहास्य मूल एव विकल्पकण्ठोक्तेः ॥ अधिकं सुभगाः अधिकसुभगाः तथोक्तेः ॥ विस्पष्टपटुरितिवत्समास इत्यसकृदवोचाम । भ्रूभङ्गाद्यनुभावपौष्कल्यं हि सौभाग्यातिशयहेतुः । तदभावेऽप्यधिकसौभाग्योक्त्या तत्सौन्दर्यस्य निसर्गमधुरस्यैयताभावस्सूचितः । कटाक्षैः अपाङ्गदर्शनैः "कटाक्षोऽपाङ्ग-

दर्शने" इत्यमरः ॥ [1]निश्चितं निर्णीतं अङ्गं गात्रं यस्य तथोक्तस्सन् असावुड्डीयमानो वियति राजहंसो यस्यास्माभिश्श्रुतश्श्रुतिमधुरो ध्वनिरिति हंसनिश्चयपूर्वकं ध्वनेस्तदीयत्वनिर्णयस्ताभिः कृत इति भावः। वनानि च गिरयश्च नद्यश्च वनगिरिनद्य इतीतरेतरद्वन्द्वः

[1]निश्चितं निर्णीतं अङ्गं गात्रं यस्य तथोक्तस्सन् । असावुड्डीयमानो वियति राजहंसो यस्यास्माभिश्श्रुतश्श्रुतिमधुरो ध्वनिरिति हंसनिश्चयपूर्वकं ध्वनेस्तदीयत्वनिर्णयस्ताभिः कृत इति भाव इति रसास्वादिनी ॥ यत्तु—निश्चितानि निचितानि व्याप्तानीत्यर्थः अङ्गान्यवयवा यस्य स तथोक्तस्सन्—इति । विवरणम्—तन्न निश्चितशब्दस्य व्याप्तार्थकत्वे कोशप्रयोगयोरनुपलम्भात् । निरित्युपसर्गपूर्वकस्य चिनोतेरध्यवसायरूढतया "भरितं निचितं व्याप्तम्" इति निचितशब्दशक्तिग्राहकस्य हेमचन्द्रकोशस्य प्रकृतानुपयुक्तत्वात् । अन्यथा निगमनिर्गमशब्दयोरपि पर्यायत्वापत्तेः । एतेन निमग्ननिर्मग्नशब्ददृष्टान्तप्रदर्शनमपि परास्तम् । निपूर्वस्य मज्जतेर्यत्र शक्तिस्ततोऽन्यत्र निरित्युपसर्गपूर्वस्य मज्जतेः रूढ्यभावात्पर्यायत्वोपपत्तिः ॥ किं बहुना "निश्चितशब्दपर्यायतया प्रयोगान्तरमन्वेषणीयम्" इत्युक्त्या स्वोक्तं स्वयमेवास्वरसीकृतम् । यदपि वस्तुतस्तु—निश्चितानि चरणौ रक्तौ चञ्चुश्च रक्ता अन्यच्छ्वेतमिति रीत्या निर्णीतानि अङ्गानि अवयवा यस्य सः न त्वङ्गी हंसो निश्चितः तासां पामरत्वेन हंसगन्धानभिज्ञत्वादिति भावः—इति—तदपि न यतः हि पद्मिन्यः पद्मवनानि शरदि राजहंसविहरणं च तत्प्रत्यासन्नभवनानां पामरीणामपि हंसगन्धानाभिज्ञताया दुर्भणत्वात् । पामर्यो हि स्वविप्रकृष्टनगरभवपदार्थानभिजानन्तीति युक्तम्—न त्वेतावता स्वसन्निकृष्टवन्यवस्तून्यपि ता नाभिजानीयुः । प्रत्युत वन्यवस्तुषु विशेषावधारणे तासामेव कौशलं प्रथते । इदमेव द्योतयितुमासां कटाक्षमात्रनिर्धारितहंसगात्रता निबद्धा मूले । विवृता च तदीयभावसर्वस्ववेदिभिराचार्यैः "हंसनिश्चयपूर्वकम्" इत्यनेनेत्यवधेयम् ॥

ननु "जातिरप्राणिनाम्" इति नियमात्समाहारद्वन्द्वैकवद्भावेनैवात्र भवितव्ये कथमितरेतरद्वन्द्वः। अत एव मनोरमायां "रञ्जिता नु विविधास्तरुशैलाः" इति भारविप्रयोगमाशङ्क्य तरुसहिताश्शैलास्तरुशैला इति समाहितमिति चेन्न। सकलतरुशैलरञ्जनं हि तत्र विवक्षितं न तु केषांचिदेव तरुशैलविशेषाणामिति जातिप्राधान्यादेकवद्भावमाशङ्क्य तथा समाहितं, अत एव "व्यक्तिप्राधान्यविवक्षया न निर्वाहः, सकलतरुशैलरञ्जनस्य विवक्षितत्वात्" इति प्रकृतिसूत्रशब्दरत्नग्रन्थसंगतिः। इह तु कतिपयवनगिरिनदीविशेषाणामेव तत्तद्देशसंविभागसीमात्वेन विवक्षिततया सकलवनगिरिनदीनामविवक्षितत्वेन जातिप्राधान्याभावान्नैकवद्भावावश्यंभावः। अत एव "जातिप्राधान्य एवायमेकवद्भावः, द्रव्यविशेषविवक्षायां तु बदरामलकानि" इति मूल एव स्पष्टमुक्तं "प्राधान्यं च तज्जात्याश्रयसकलव्यक्तिबोधनरूपम्। द्रव्यविशेषेत्यस्य नियतद्रव्यविशेषेत्यर्थः। इदं च 'तस्यादितः' इत्यत्र कैयटे" इति शब्देन्दुशेखरकृत्। एवं च जातिप्राधान्ये एकवद्भाव एव द्रव्यप्राधान्ये त्वितरेतरयोगोऽपीति बोध्यम्। "क्षीरोदके संपृक्ते, इति अन्तादिवच्च" इति सूत्रभाष्यप्रयोगोऽत्र मानम्। वनगिरिनदीभिस्संविभक्तान् एतद्वनावधिकोऽयं देश एतद्गिरिपर्यन्त एतद्देश इत्येवं क्रमेण सम्यक्कृतसीमाविभागानित्यर्थः। एतान् समीपवर्तिनो देशान्विषयान् व्यतीयाः व्यतीत्य गच्छेः वि अति इत्युपसर्गपूर्वादेतेः कर्तरि प्रार्थना-

यां लिङ् । [1]अत्र सादरबहिर्निर्गमस्य हंसनिनादश्रवणहेतुकत्वात्काव्यलिङ्गम् । भ्रूभङ्गरूपकारणाभावेऽप्यधिकसौभाग्यरूपकार्योदयाद्विभावना "विभावना विनाऽपि स्यात्कारणं कार्यजन्म चेत्" इति लक्षणात् । अनयोरन्योन्यनैरपेक्ष्यात्संसृष्टिः । उक्तालङ्कारद्वयं स्वभावोक्त्यैकवाचकानुप्रवेशसंकीर्णम् । किञ्च—अकस्माच्छ्रुतं श्रवणमधुरं हंसनिनादं किमीयोऽयमिति संदिह्य बहिरागत्य पामरीभिर्हंसनिश्चयपूर्वकं तदीयत्वेन तस्य निश्चितत्वान्निश्चितान्तसंदेहालङ्कारो व्यज्यत इति वस्तुनाऽलङ्कारध्वनिः । सादरबहिर्निर्गमनोत्तानदर्शनादिभिरनुभावैर्हर्षौत्सुक्यादिभिस्संचारिभिश्च हंसनिनादविषयकस्य पामरस्त्रीगतविस्मयाख्यस्थायिनः परिपोषादद्भुतरसो व्यज्यत इति संक्षेपः ॥ १९ ॥

अथ गमनावसरे कर्णाटान्ध्रसंभेदसीमावस्थितशालिगोपिकामौग्ध्यमनुभूयतामित्याह—

**इक्षुच्छाये किसलयमयं तल्पमातस्थुषीणां**
**सल्लापैस्तैर्मुदितमनसां शालिसंरक्षिकाणाम् ।**

[1]अत्र सादरबहिर्निर्गमस्य हंसनिनादश्रवणहेतुकत्वात्काव्यलिङ्गमिति रसास्वादिनी ॥ यत्तु—अत्र श्रवणमधुरमिति विशेषणस्य सादरनिर्गमहेतुत्वात्काव्यलिङ्गमिति प्रकारान्तरेण काव्यलिङ्गवर्णनम्—तन्न श्रोत्रमाधुर्यस्य शुश्रूषातिशयसंपादनद्वारा श्रवण एव हेतुत्वात् श्रवणस्यैव च साक्षात्सादरबहिर्निर्गमनहेतुत्वात् श्रवणमाधुर्यस्य सादरनिर्गमनहेतुतामूलककाव्यलिङ्गाभिधानासंगतेः ॥ १९ ॥

कर्णाटान्ध्रव्यतिकरवशात्कर्बुरे गीतिभेदे मुह्य-
न्तीनां मदनकलुषं मौग्ध्यमास्वादयेथाः ॥२०॥

इक्षूणां छाया इक्षुच्छायं तस्मिन् "छायाबाहुल्ये" इति छायाशब्दस्य तत्पुरुषे क्लीबत्वम् । किसलयानां विकारः किसलयमयं "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इति वैकारिको मयट्। यद्वा—प्रकृतं किसलयं किसलयमयं "तत्प्रकृतवचने मयट्" इति प्राचुर्यार्थे मयट् । अथवा स्वार्थिकः—किसलयमेव किसलयमयं—तथोक्तं—न च स्वार्थिको मयट्प्रत्ययो नानुशिष्ट इति वाच्यं 'तत्प्रकृतवचने' इत्यत्र तद्ग्रहणं वाक्यभेदेन प्राचुर्याभावेऽप्यत्यन्तस्वार्थिकमयडर्थं तेन चिन्मयं ब्रह्मेति सिद्धम्" इति शब्देन्दुशेखरोक्तेस्तल्लाभात्—तल्पं शय्यां "तल्पं शय्याट्टदारेषु" इत्यमरः। आतस्थुषीणां आस्थितवतीनां स्थाधातोर्भूतसामान्ये लिटः "क्वसुश्च" इति सूत्रेण क्वसुः । ततः "उगितश्च" इति ङीपि "वसोस्संप्रसारणं" इति संप्रसारणे "इण्कोः" इति षत्वं यद्यपि क्वसोश्छान्दसत्वात् "तं तस्थिवांसं नगरोपकण्ठे श्रेयांसि सर्वाण्यधिजग्मुषस्ते" इत्यादयो लौकिकाः प्रयोगा गतानुगतिका एवेति मूले मनोरमातत्त्वबोधिन्योश्च व्यक्तं [1]तथाऽपि "विभाषा-

[1] तथाऽपि विभाषा पूर्वाह्णापराह्णाभ्यामिति सूत्रभाष्ये पपुष इदं पपिवद्रूप्यमिति प्रयोगाल्लोकेऽपि क्वचित्क्वसोस्साधुत्वमस्तीति सूचितम्—इति रसास्वादिनी। यत्तु—अत्र क्वसोश्छान्दसत्वेऽपि मूलवता कविप्रयोगबाहुल्येन भा-

पूर्वाह्णापराह्णाभ्याम्" इति सूत्रभाष्ये "पपुष इदं पपिवद्भ्यम्" इति प्रयोगाल्लोकेऽपि क्वचित्क्कसोस्साधुत्वमस्तीति सूचितं इदं च "क्वसोश्च" इति सूत्रशेखरे स्पष्टम्। न च "भाषायां सदवसश्रुवः" इति सूत्रवैयर्थ्यं सदादिभ्योऽप्युक्तरीत्यैव भाषायामपि क्वसुसिद्धेरिति वाच्यम्। अन्यत्र क्वचिदेव क्वसुरिति ज्ञापनार्थत्वादस्य एतच्च प्रकृतसूत्रशब्दरत्ने स्फुटम्। तैः लज्जामन्मथसंभेदसुभगतया

षायामपि साधुत्वं बोध्यमिति--तन्न प्रयोगमात्रस्य गतानुगतिकतया एव वैयाकरणैरुक्ततया तेन साधुत्वसाधनासंभवात्। तस्माद्भाष्यबलात्तत्साधनमेव युक्तमाचार्यैरुपदर्शितम्॥

यदपि--किञ्च--उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते। इत्युक्त्याऽनुपूर्वकस्य भूधातोरिवास्याप्यर्थान्तरपरतया सकर्मकत्वमिति--तन्न मासं तिष्ठतीत्यादौ अनुपसृष्टस्य तिष्ठतेर्यदर्थकतया मासादिरूपकालेन सकर्मकत्वं आङुपसृष्टस्यापि तस्य तदर्थकत्वेनैव तल्पादिना सकर्मकत्वोपपत्तेरिह सकर्मकत्वे उपसर्गेणेत्याद्युक्तेरप्रयोजकत्वात्। ननु मासं तिष्ठतीत्यादौ "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" इति भाष्यत एवाकर्मकत्वेऽपि कालादेः कर्मतया द्वितीयोपपत्तिः। न चैवं सति तल्पस्यापीह देशतयैव "देशश्चाकर्मकाणाम्" इति भाष्येणैव कर्मत्वोपपत्तिरिति वाच्यं तत्र देशपदेन कुरुपञ्चालादिदेशस्यैव ग्रहणस्याकरे व्यक्तत्वात्। स्पष्टं चेदं मनोरमायाम्। तथाच "तल्पमातस्थुषीणाम्" इति प्रकृते आङुपसर्गयोगेनार्थान्तरकल्पनयैव सकर्मकत्वं तिष्ठतेरुपपादनीयमिति चेन्न कालभावाध्वगन्तव्या इत्यादिभाष्यस्य हिशब्दघटितत्वेन विधायकत्वविरहेणानुवादकत्वात् मासं तिष्ठतीत्यादावपि धात्वर्थशरीरे व्यापारान्तरान्तर्भावेणैव कर्तुरित्यनेनैव मासादेः कर्मत्वस्योपपादनीयत्वात्। अत एव मासमोदनं पचतीत्यादावपि सकर्मकयोगेऽपि मासादेः कर्मत्वोपपत्तिः। अत एव--का-

वचस्सीमातिशायिवैभवैरिति भावः । सल्लापैः "उक्तिप्रत्युक्तिमद्वाक्यं सल्लाप इति कीर्तितम्" इति लक्षणलक्षितैर्वाक्यैः "सल्लापो भाषणं मिथः" इत्यमरः । मुदितं प्रीतं मनो यासां तथोक्तानां कर्णाटानां अन्ध्राणां च निवासो जनपदः कर्णाटाः अन्ध्राः "तस्य निवासः" इति चातुरर्थिकाणः "जनपदे लुप्" इति लुपि

लभावाध्वदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ इति हरिकारिका संगच्छते । अन्यथा—कालभावाध्वेति भाष्यस्य विधायकत्वाङ्गीकारेण उक्तविधदेशकालादेरन्यस्य कर्मत्वानङ्गीकारे कालादेरपि सकर्मकयोगे कर्मत्वानुपपत्तेः । स्पष्टं चेदं शब्देन्दुशेखरे । अथ "देश इति कुरुपञ्चालादिरेव गृह्यते । तेनाधिशीङ्स्थासामित्यादेर्न वैयर्थ्यम् । ग्रामसमूहकुर्वादिरेव देशो न तु प्रदेशमात्रम् । तेन ग्रामं स्वपितीत्यत्र न भवतीत्याकरात्" इति मनोरमासन्दर्भस्य "न वैयर्थ्यमिति । शीङादेरपि शयनपूर्वके व्यापने वृत्त्या कर्तुरित्येव कर्मत्वस्यास्यादियोग इव सिद्धत्वादिति भावः । एवं चैवंकल्पनयोक्तदेशादीनामिव कर्मत्वं नान्येषामनभिधानादिति सूचयति" इति तत्रत्यशब्दरत्नसन्दर्भस्य च पर्यालोचनया उक्तदेशादेरन्यत्र व्यापनादिव्यापारान्तर्भावकल्पनयाऽपि कर्मत्वं न स्वीकर्तुं शक्यमिति चेन्न । एवं सति आङ्पूर्वस्य तिष्ठतेर्योगेऽपि तदर्थे व्यापनादिरूपव्यापारान्तर्भावेणैव तल्पस्य कर्मताया भवद्भिर्वाच्यतया भवतामपि तादृशमनोरमाशब्दरत्नसन्दर्भविरोधस्य जागरूकत्वात् । यदि तु—शब्देन्दुशेखरपर्यालोचनया उदाहृतभाष्यसन्दर्भस्यानुवादकतया विधायकत्वविरहेण देशादेरन्यत्र वासकर्मकयोगे वा अनभिधानकल्पकत्वं नास्ति इत्यवगमात् उपदर्शितमनोरमाशब्दरत्नसन्दर्भौ अनादेयावेवेत्याश्रीयते । तदा तल्पं तिष्ठति तल्पमातिष्ठतीत्यादौ एकरीत्यैव कर्मतोपपत्तिर्निराबाधैवेति । तथाच "उपसर्गेण...इत्याद्युक्त्या" इत्युक्तिरयुक्तैवेति ध्येयम् ॥

“लुपि युक्तवद्व्यक्तिवचने” इति प्रकृतिवल्लिङ्गवचने [1]कर्णाटाश्च अन्ध्राश्च कर्णाटान्ध्राः कर्णाटदेशः अन्ध्रदेशश्चेत्यर्थः तद्गतगीतालापप्रकारा इति यावत्, तेषां व्यतिकरवशात् अन्योन्यसांकर्यवशात् कर्बुरे शबले देशद्वयसीमासंभेदवशादुभयदेशीयगीतालापप्रकारमेळनेन मधुव्यतिकरितदुग्धवद्विजातीयास्वाददायिनीति भावः। भिद्यन्ते हि प्रतिदेशं गीतालापप्रकाराः। गीतिभेदे विलक्षणगीतविशेषे मुह्यन्तीनां उक्तविधकर्णाटान्ध्रगीतिभेदं विविच्य ग्रहीतुमक्षमतया व्यामोहमश्नुवानानाम्। यद्वा—विलक्षणगीतरसास्वादेन विगळितवेद्यान्तरमानन्दमनुभवन्तीनामित्यर्थः। शालीनां व्रीहीणां संरक्षिकाः पालिकाः स्त्रियः तासां रक्षतेस्संपूर्वकात्कर्तरि ण्वुलि टापि

[1] कर्णाटाश्चान्ध्राश्च कर्णाटान्ध्राः कर्णाटदेशः अन्ध्रदेशश्चेत्यर्थः तद्गतगीतालापप्रकारा इति यावत्। तेषां व्यतिकरवशात् अन्योन्यसाङ्कर्यवशात् इति रसास्वादिनी। यत्तु—कर्णाटाश्चान्ध्राश्च कर्णाटान्ध्राः तेषां कर्णाटान्ध्रदेशयोरित्यर्थः व्यतिकरस्य संपर्कस्य वशात् अधीनत्वादिति—विवरणम्—तन्न. व्यतिकरपदस्य साङ्कर्ये प्रसिद्ध्यतिशये न तत्परताया एव उचिततया देशयोश्च सीमाविभक्तयोः परस्परसाङ्कर्यासंभवेन तत्तद्देशीयगीतालापप्रकाराणामेव कर्णाटान्ध्रपदार्थतायास्स्वीकारौचित्यात्। एवं व्यतिकरपदार्थस्य संपर्कस्य देशद्वयपरस्परसंपर्करूपत्वे असंभवः सीमाविभक्तयोस्तयोः परस्परसंपर्कस्य कथमप्यसंभवात्। देशद्वयप्रतियोगिकसंपर्कपरत्वे च तस्य गीतिभेदनिष्ठकर्बुरतायां साक्षाद्धेतुत्वासंभवेन तादृशसंसर्गशालितत्तत्सीमासन्निकृष्टप्रदेशनिवासिरसिकजनकर्तृकतत्तद्गीतालापप्रकारवत्तयैव वाच्यतया तादृशगीतालापप्रकारपरत्वमेव कर्णाटान्ध्रपदयोस्स्वीकृतं भवतीति॥ २०॥

"प्रत्ययस्थात्" इतीत्वं ततश्शेषषष्ठ्या समासः । अन्यथा "तृजकाभ्यां कर्तरि" इति निषेधः प्रसजेत्। "गुणिविशेषकः" इति भाष्यप्रतीकमुपादाय "बहुषु" इति सूत्रे कैयटेनैवं समाहितं "प्रत्यासत्त्या कारकषष्ठ्यैव तन्निषेधः" इति "तृजकाभ्याम्" इति सूत्रशेखरे निरूपितम् । केचित्तु "तत्प्रयोजको हेतुश्च" इति निर्देशादनित्योऽयं समासनिषेध इत्याहुः । तन्मन्दं शेषषष्ठीसमासेनैवोक्तनिर्देशोपपत्तेः । यद्वा—शालीन् संरक्षन्तीति शालिसंरक्ष्यः कर्मण्यण् ततोऽणन्तलक्षणे ङीपि स्वार्थिककनि "केणः" इति ह्रस्वः । मदेनेन मन्मथोद्दीपनातिशयेनेति यावत् । कलुषं आविलं मन्दीभवितुमुन्मुखमिति यावत् मौग्ध्यं मुग्धत्वं मुग्धावस्थामित्यर्थः । आस्वादयेथाः सर्वात्मनाऽनुभवेः । स्वर्दोणिजन्ताल्लिङि मध्यमपुरुषैकवचनम् । मुग्धा हि लोके लज्जाविजितमन्मथा भवन्ति एतास्तु मुग्धा अप्युद्दीपनसामग्रीपौष्कल्यभूमजनितपारवश्येन मन्दीभवनोन्मुखव्रीडा इति तन्मौग्ध्यमपि प्रौढिसंभेदवशात्तद्गीतवल्लोकविलक्षणास्वादसंपादकमिति भावः । अत्र कर्णाटान्ध्रव्यतिकरवशात्कर्बुरे इति गीतिभेदविशेषणस्य शालिगोपीमोहहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम्— प्रस्तुते राजहंसे अप्रस्तुतदक्षिणनायकवृत्तान्तप्रतीतेस्समासोक्तिश्चेत्यनयोस्संसृष्टिः । किंच इक्षुच्छायाकिसलयतल्पादिभिस्तटस्थोद्दीपनविभावैस्तदनुमितै रोमाञ्चादिभिस्सात्विकैर्हर्षादिभिर्व्यभिचारिभिश्च शालिगोपीलक्षणालम्बनगतरतेस्तत्तत्प्रियतमविषयिकायाः परिपोषणाच्छृङ्गाररसोऽभिव्यज्यत इति संक्षेपः ॥ २० ॥

तत उड्डीयमानस्य भवतो वेङ्कटाद्रिर्नयनपदवीमधिरोक्ष्यतीत्याह—

**विष्णोर्वासादवनिवहनाद्बद्धरत्नैश्शिरोभिः**
**शेषस्साक्षादयमिति जनैस्सम्यगुन्नीयमानः ।**
**अभ्रैर्युक्तोऽलघुभिरचिरान्मुक्तनिर्मोककल्पैः**
**अग्रेभावी तदनु नयने रञ्जयन्नञ्जनाद्रिः ॥ २१ ॥**

तदनु कर्णाटान्ध्रदेशसीमासंभेदव्यतिवर्तनानन्तरं विष्णोः भगवतः श्रीनिवासस्य वासात् अवस्थानात् अवनेः भूमेः वहनाद्धारणात् बद्धानि संदानितानि रत्नानि मणयो येषु तैः शिरोभिः शिखरैश्शीर्षैश्च अयं परिदृश्यमानो गिरिः साक्षात् प्रत्यक्षं शेषः अनन्त इति सम्यक् सोपपत्तिकं न तु गतानुगतिकलोकवार्ताश्रवणमात्रात् उक्तहेतूनामुभयसाधारण्यादिति भावः। जनैः वितर्ककुशलैः उन्नीयमानः ऊह्यमानः अवनिवहनादित्यत्रेयं वाराहपुराणी कथा अनुसंधेया। तथाहि तत्र धरणीं प्रति वराहः—"त्वां निवेश्य महीदेवि शेषशीर्षे सुखावहे। लोकं त्वयि निवेश्यैव त्वत्सहायान्धराधरान् ॥ इहागतोऽस्म्यहं देवि किमर्थं त्वमिहागता। पृथिवी—मां समुद्धृत्य पाताळात्सहस्रफणशोभिते। रत्नपीठ इवोत्तुङ्गे सरत्नेऽनन्तमूर्धनि ॥ कृत्वा मां सुस्थिरां देव धरांश्चापि न्यवेशयः। मद्धारणक्षमान्पुण्यांस्त्वन्मयान् पुरुषोत्तम ॥ तेषु मुख्यान् महाबाहो मदाधारान्वदस्व मे। श्रीवराहः—सुमेरुर्हिमवान्विन्ध्यो मन्दरो गन्धमादनः। सालग्रामश्चित्रकूटो माल्यवान्पारियात्रकः ॥ महेन्द्रो म-

लयस्सह्यसिंमहाद्रिरपि रैवतः। मेरुपुत्रोऽञ्जनो नाम शैलस्स्वर्णमयो महान् ॥ एते शैलवरास्सर्वे त्वदाधारा वसुन्धरे" इत्यादिः। अञ्जनो नाम शैलो वेङ्कटाद्रिरेव । अग्रे "श्रीवेङ्कटाचलो नाम वासुदेवालयो महन्" इति तस्यैव वसुन्धराऽऽधारेषु गिरिषूत्तमत्ववर्णनात् । शेष रूपत्वं चास्य गिरेरुक्तं ब्रह्माण्डपुराणे—"शेषो गतमदः पश्चात्" इत्युपक्रम्य "उत्तरे शिखरे तत्र सांनिध्यार्थं जगत्पतेः। तपस्तेपे महाघोरं दिव्यं वर्षसहस्रकम् ॥ तपसा तोषितो देवः प्रत्यक्षस्समजायत । वरं वरय भद्रेति तेनोक्तश्शेष आह तम् ॥ यदि प्रसन्नो भगवन्निदं मे देहि भो वरम्। यथा शेषे मदङ्के त्वं वैकुण्ठे भुवनोत्तमे ॥ शैलाकारे च मद्देहे नित्यमत्र वस प्रभो" इत्यादिना ॥ अत एव [1] लघुभिः विगळितजलधारासारसर्वस्वतया लघिमानमुपागतैः। अनेन पर्वतादुत्पतनोन्मुखत्वं द्योतितम्। तेन वक्ष्यमाणाचिरान्मुक्तनिर्मोकसंभावनोपष्टम्भः—अलघुभिरिति वा छेदः ॥ अलघुभिर्महद्भिः अनेन कञ्चुकत्वेन संभाव्यमानानामभ्राणामद्रिरूपशेषभोगानुरूपमहत्त्वं क्षिप्रं तत उत्पतनाक्षमत्वं च द्योत्यते एतेनापि वक्ष्यमाणाचिरान्मुक्तनिर्मोकसंभावनोत्तम्भनं अचिरात् तदा-

[1] लघुभिः विगलितजलधारासारसर्वस्वतया लघिमानमुपागतैः । अनेन पर्वतादुत्पतनोन्मुखत्वं द्योतितामिति रसास्वादिनी ॥ यत्तु--लघुभिः शरत्काले लाघवमुपयातैः अनेन धवळत्वं सूचितम् इति तन्न लघुभिरित्यनेन लाघवस्य विवक्षितत्वे हि "अभ्रैर्युक्तश्शुभ्रैः" इत्येव प्रयुज्येत मूले । तस्मात् लघुभिरित्यस्य लाघवकार्यभूतपर्वतावधिकोत्पतनोन्मुखत्वद्योतनविवक्षणमेव युक्तम् ॥ २१ ॥

नीमेव मुक्ताः विसृष्टाः आदिकर्मणि क्तः मुच्यमाना इत्यर्थः ॥ अचिरादित्येतदव्ययं "चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः" इत्यनुशासनात् । तस्य मुक्तशब्देन 'सुप्सुपा' इति समासः ॥ अचिरान्मुक्ताः ये, निर्मोकाः कञ्चुकाः ईषदसमाप्ताः अचिरान्मुक्तनिर्मोकाः अचिरान्मुक्तनिर्मोककल्पानि तैः अभिनवविसृष्टकञ्चुकसधर्मभिरित्यर्थः । तादृशकञ्चुकत्वेनोत्प्रेक्षाविषयैरिति यावत् ॥ यद्यपि कल्पबादिप्रत्ययानामुपमापर्यवसायित्वमेव प्रसिद्ध्यति । तथाऽपीहाद्रेस्साक्षाच्छेषत्वोन्नयनाभ्रयुक्तत्ववर्णनानुगुण्येनाभ्रेष्वचिरात्तन्मुक्तनिर्मोकत्वोत्प्रेक्षाया एव स्वारसिकत्वात्संभावनापर्यवसायित्वमेवोचितम् । न ह्युरगान्तरनिर्मुक्तनिर्मोकसाधर्म्यवर्णने भवेदेवं सौन्दर्यमितीदं सहृदयहृदयैकसाक्षिकम् । एवमेव यादवाभ्युदये द्वितीयसर्गे "प्रियोदयस्फीतरुचो रजन्यास्संतोषनिश्वासनिभस्समीरः" इत्यत्र "निश्वासनिभ इत्युत्प्रेक्षा" इति व्याख्याय "यद्यपि निभशब्द उपमाया एव वाचकः तथाऽपि रजन्या निश्वाससंभावनायां निमित्तोपन्यासाद्रजनीनिश्वासतादात्म्योत्प्रेक्षेति निभशब्दस्य तत्रैव पर्यवसानादुपमोपक्रमोत्प्रेक्षेयमित्यप्पय्यदीक्षिता व्याचख्युः ॥ तद्वदिहाप्युपमोपक्रमोत्प्रेक्षेति ध्येयम् ॥ वस्तुतस्तु कल्पादयोऽपि क्वचिदुत्प्रेक्षावाचका एव । "कल्पदेशीयदेश्याद्यास्स्पर्धिप्रतिभटादयः । निभवद्वादयश्चापि क्वचित्संभावनापराः" इति काव्यकल्पतरुकृदुक्तेः ॥ प्रयुक्ताश्च क्वचिन्महाकविभिरुत्प्रेक्षायामिमे शब्दाः । तथाच मुरारिमिश्रः प्रायुङ्क्त "किंचामी शल्कयन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रा-

संवट्टोत्पिष्टसन्ध्याऽनलकणनिकरस्पर्धिनो भान्ति दीपाः" इति "स्पर्धते ह्वयति द्वेष्टि" इत्युपमावाच[illegible] दण्डिना परिगणितं स्पर्धिशब्दमुत्प्रेक्षायाम् ॥ "वलयं सुमेरो[illegible] वर्त्मनि [illegible] [illegible] । मान्क-शरकूटस्य परितो मानसूत्रवत्" इति वच्छब्दमुपमायामेव प्रसिद्धमुत्प्रेक्षायामनन्तभट्टः ॥ एवं "संचारिजाम्बूनदबिम्बकल्पा" इत्यादयश्च द्रष्टव्याः अत एव "सेनाधिपा रघुपतेस्सितरक्तनीलास्तस्थुः प्लवङ्गपतयः परिवार्य लङ्काम् । व्यालोलवारिनिधिवीचितटोपनीतफेनप्रवाळदळशैवलराशिकल्पाः" इत्युपमोत्प्रेक्षासंदेहसंकरोदाहरणं साहित्यरत्नाकरकृतस्संगच्छते ॥ कल्प उत्प्रेक्षावाचकत्वाभावे तदसंगतिस्स्पष्टैव। अचिरान्मुक्तेति निर्मोकविशेषणेन तेषां निश्शेषशेषभोगानिर्मुक्तत्वं द्योतितम् ॥ अत एव वक्ष्यमाणमभ्रैर्युक्तमित्येतत्संगच्छते ॥ निर्मोकत्वेन संभाव्यमानैरभ्रैर्निश्शेषविनिर्मुक्तत्वे शेषत्वेनोन्नीयमानस्याद्रेस्तद्युक्तत्ववर्णनमसङ्गतं स्यात् ॥ अभ्रैः जलदैः "अभ्रं मेघो वारिवाहः" इत्यमरः ॥ युक्तः संबद्धः ॥ तत्र तत्र लग्नाश्शारदवारिदाश्शेषत्वेन संभाव्यमानस्याद्रेः कञ्चुका इवाभान्तीति भावः ॥ अञ्जनाद्रिः वेङ्कटगिरिः अञ्जनायास्तत्र पुत्रलाभाय तपसि स्थितत्वाददेस्तन्नाम ॥ तदेतदुक्तं ब्रह्माण्डपुराणे तीर्थखण्डे ब्रह्मणा—"अञ्जने [illegible] हि शेषाद्रौ तपस्तप्त्वा सुदारुणम् । पुत्रं सूतवती यस्माल्लोकत्रयहिताय वै ॥ प्रसिद्धिं यातु शैलोऽयमञ्जने तव नामतः । अञ्जनाचल इत्येव नात्र कार्या विचारणा" इति ॥ नयने लोचने रञ्जयन् आनन्दयन् अग्रेभावी पुरस्ताद्भविता ॥ वेङ्कटाद्रिं द्रक्ष्य

सीति यावत् ॥ अत्र विष्णुनिवासत्वादिभिर्हेतुभिर्गिरेश्शेषत्वेनानु-
मानादनुमानालङ्कारः ॥ प्रयोगस्तु अयं गिरिस्साक्षाच्छेषः विष्णु-
निवासत्वादवनिवाहित्वाद्बद्धरत्नशीर्षत्वाच्चेति ॥ एतदुज्जीविता अभ्र-
च्छिरान्मुक्तनिर्मोकतादात्म्योत्प्रेक्षेति सङ्करः ॥ नयनरञ्जनस्य पूर्व-
वाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदश्लोकसङ्करेणोज्जीव्यत इति सङ्करः॥
अनुप्रासस्याप्यभ्युच्चयः ॥२१॥

अथ "असंसेव्य हरिं साक्षाद्दिव्यक्षेत्रातिवर्तनम्" इति भगवत्सेवा-
मन्तरेण भगवदभिव्यक्तिक्षेत्रातिपतनस्यापचारेषु परिगणनात्प्रियसखेन
राजहंसेन तत् परिहारयितुं तत्र श्रीनिवासस्य त्वयाऽपि कार्या सपर्या
यथाशक्तीत्याह—

**तत्रारूढैर्महति मनुजैस्स्वर्गिभिश्चावतीर्णैः**
**सत्त्वोन्मेषाद्व्यपगतमिथस्तारतम्यादिभेदैः ।**
**साधारण्यात्फलपरिणतेस्संघशो बद्धयमानां**
**शक्त्या कामं मधुविजयिनस्त्वं च कुर्यास्सपर्याम् ॥**

महति पूज्ये [1] तत्र अञ्जनाद्रौ । इदं च मधुविजयिनस्सपर्या

---

[1] तत्र अञ्जनाद्रौ । इदं च मधुविजयिनस्सपर्यां कुर्या इत्यत्रान्वेति इति रसास्वादिनी ॥ यत्तु—अस्य च बद्धयमानामित्यनेनान्वय इति— तन्न तथा सति कुर्या इत्यत्र कुत्रेत्याकांक्षाया अनिवृत्तिप्रसंगात् प्रधानक्रियायां कुर्या इत्यस्या-मन्वये तु गुणकोटिप्रविष्टायां बन्धनक्रियायामपि तदधिकरणस्यैव लाभसंभवेन प्रधानक्रियान्वयस्यैव युक्तत्वात् ॥

कुर्या इत्यत्रान्वेति ॥ आरूढैः आरोहणं कृतवद्भिः—अर्थादद्रेरेव कर्मत्वं मनुजैः मानवैः, अवतीर्णैः अवरोहणं कृतवद्भिः, स्वर्गिभिः, देवैश्च, स्वर्गिभिश्चावतीर्णैरित्याभ्यां पदाभ्यां "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम्" इत्युक्तनिरतिशयसुखमयप्रदेशनित्यसंसर्गवतामप्यत्रावतीर्णत्ववर्णनादस्याञ्जनाद्रेस्ततोऽप्यतिशयिततमनित्यसुखप्रदानधौरंधर्यं व्यज्यते ॥ आरूढैरवतीर्णैरित्युभयत्रापि "आरूढमद्रीनुदधीन्वितीर्णम्" इत्यादाविव "गत्यर्थाकर्मक" इत्यादिना कर्तरि क्तः ॥ सत्त्वस्य सत्त्वगुणस्य उन्मेषात् रजस्तमोऽनभिभूततया विकासात् क्षेत्रमहिम्नेति भावः ॥ यत्प्रशस्यते पौराणिकैः "शुद्धसत्त्वमयो ह्येष साक्षाच्छेषात्मको गिरिः" इति ॥ व्यपगतः विशेषेणापगळितः व्यपेत्युपसर्गाभ्यां कर्तरि प्रत्ययेन च तारतम्यादिभेदस्यापुनस्स्मरणं प्रयत्नान्तरनैरपेक्ष्येण स्वयमेव विगतत्वं द्योत्यते ॥ मिथः अन्योन्यं "मिथोऽन्योऽन्यं रहस्यपि" इत्यमरः ॥ तारतम्यं न्यूनाधिकभावः ॥ मिथः तारतम्यं मिथस्तारतम्यम् "सुप्सुपा" इति समासः । तरतमशब्दौ नित्यसमस्तौ स्वभावाद्व्यासज्यवृत्त्या न्यूनाधिकरूपार्थे रूढौ सुबन्तौ न तु प्रत्ययरूपौ तथा सति "न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः" इति तयोर्विना प्रकृतिं प्रयोगस्तादृशप्रत्ययसमुदायाद्भावार्थकप्रत्ययोत्पत्तिश्चायुक्तौ स्यातां ततो भावार्थे ब्राह्मणादित्वात् ष्यञ् तरतमयोर्भावस्तारतम्यं तदेव आदिर्यस्य सः तथाविधो भेदो व्यपगतो येषां ते इति बहुव्रीहिगर्भबहुव्रीहिः ॥

आदिशब्देन देवत्वमनुष्यत्वादेर्ग्रहणम् ॥ गुणान्तरानभिभूततमोन्मिषितेन सत्त्वेन न्यूनाधिकभावदेवत्वमनुष्यत्वादिप्रयुक्तवैषम्यबुद्धिस्तेषां विगळितेति भावः । रजस्तमःकार्यं हि तारतम्यादिगणनकार्पण्यं फलपरिणतेः फलपरिपाकस्य साधारण्यात् सामान्यत्वात् "साधारणं तु सामान्यम्" इत्यमरः । सर्वेषां भगवत्सपर्याप्रसक्तानां मोक्षरूपफलपरिणामस्य समानत्वादित्यर्थः ॥ ननु च यथाऽधिकारं न्यासोपासनरूपौ द्वौ मोक्षोपायौ निर्णीतौ शास्त्रे तत्कथं सपर्याया अपि तत्साधनत्वोक्तिरिति चेत् इत्थं यद्यसावाकिंचन्यादिलाभात्प्रपत्त्यधिकारिणः पुरुषस्य भगवत्प्रसादनार्थोऽवतिष्ठते । तदा तदुपलक्षितायाः प्रपत्तेरुक्तफलसाधनत्वरूपप्रभावप्रतिपादने तात्पर्यान्न विरोधः । यदा त्वियं भक्त्यङ्गकर्मविशेषः तदा "नेहाभिक्रमनाशोऽस्ति" इति न्यायात्कल्मषनिबर्हणसम्यग्ज्ञानभक्त्यादिपरंपरया मोक्षसाधनमिति निष्कण्टकोऽयं वर्णापथ इति स्पष्टं रहस्यरक्षाद्याचार्यग्रन्थपरिशीलननिपुणानाम् । फलपरिणतेरित्यादेरेवं वाऽर्थः ॥ फलपरिणतेः तत्तद्विवक्षितफलपरिणामस्य साधारण्यात् तुल्यत्वात् न हि कस्यचिदपि स्वस्वविवक्षितमैहिकमामुष्मिकं वा फलं व्यभिचरतीति भावः ॥ [1] संघशः संघीभूतैरिति यावत् ॥ संघशब्दस्य "असमागम्य कृत्स्नशः" इत्यादाविव कथंचिद्बह्वर्थकत्वात् "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति

[1] संघशः सङ्घीभूतैरिति यावदिति रसास्वादिनी ॥ यत्तु—संघशः संघीभूयेत्यर्थ इति—तन्न कारकादेव शसोऽनुशासनेन संघीभवनक्रियापरत्वे तदनुपपत्तेः ॥ २२

स्वार्थिकश्शम्प्रत्ययः एतादृशैश्च सद्भिः वक्ष्यमाणां क्रियमाणामिति यावत् । असाधारण्ये फलपरिणतेस्तदर्हाः केचिदेव प्रवर्तेरन् सपर्यायां न सर्वेऽपि संघीभूता इति भावः ॥ मधुविजयिनः श्रीनिवासस्य मधुशब्दोऽत्र कैटभस्याप्युपलक्षकः तेन मूर्तरजस्तमस्त्वेन भगवच्छास्त्रप्रसिद्धमधुकैटभहन्तृतयाऽस्य रजस्तमोऽभिभवेन सत्त्वप्रवर्तकत्वं द्योत्यते॥ श्रूयते हि—“महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः” इति ॥ स्मर्यते च—“यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम्” इति इदं च पूर्वोक्तसत्त्वोन्मेषोत्तेजकमिति ध्येयम् ॥ सपर्यां पूजां “पूजा नमस्याऽपचितिस्सपर्याऽर्चाऽर्हणास्समाः” इत्यमरः ॥ त्वं च त्वमपि कुर्याः रचयेः त्वं चेत्यस्यात्मनि तिर्यक्त्वप्रयुक्तनिहीनताबुद्ध्या न कथंचिदपि ततो निवर्तेथाः तत्र सत्त्वोन्मेषातिरेकात्तवापि जातिगुणादिप्रयुक्ततारतम्यस्य निवर्तिष्यमाणत्वात्, किन्तु सुरनरसमुदायेषु तत्र मिळितेषु त्वमप्येकतमो भूत्वा सपर्यामवश्यं कुर्या इति भावः ॥ कथमहं देवादिभिरप्यशक्यां तत्सपर्यां तिर्यङ्मात्रः कुर्यामित्यत आह ॥ शक्त्येति ॥ शक्त्या यथाशक्तीत्यर्थः ॥ “नभः पतन्त्यात्मसमं पतत्रिणः” इत्युक्तरीत्या शक्त्यनुगुणमेव न त्वतिशक्ति न ह्यशक्यं शास्ति शास्त्रं तेऽपि कुर्वन्ति यथाशक्त्येव ॥ यदेवं प्रार्थ्यते ब्रह्मणाऽपि “गृहाण पूजां गोविन्द यथाशक्ति मया कृताम्” इति ॥ न हि सर्वेश्वरस्य तस्याराधने कस्यचिदपि समस्तशक्तिरविकला येन कश्चिदेवातिशयीत ॥ अतः “को मज्जतोरणुकुलाचलयोर्विशेषः” इति न्यायेन सर्वेऽपि तुल्यकक्ष्या एव तदर्हणायामिति न देवाद्यपेक्षयाऽऽत्मनि शक्तिमान्द्यसंभा

वनेनापि निवर्तेथा इति भावः ॥ शक्त्याऽपि किंविधं कैङ्कर्यं कार्यमित्यत्राह ॥ काममिति ॥ कामं यथेप्सितं न तु निर्बन्धोऽत्रास्तीति भावः ॥ "कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्" इत्यमरः ॥ अत्र सुराणां नराणां च सत्त्वोन्मेषवत्त्वतौल्येन विशेषानुपलम्भस्य वर्णितत्वात्सामान्यालङ्कारः ॥ "सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते" इति लक्षणात् ॥ किञ्च-सुरनरतुल्यकक्ष्यतया हंससपर्याकरणे प्रस्तुतवृत्तान्ते वर्ण्यमाने सत्त्वोन्मेषाद्व्यपगतमिथस्तारतम्यादिभेदैरित्यादिविशेषणबलाद्देशविशेषविशिष्टपरमपुरुषकैङ्कर्यं नित्यमुक्तादिक्रियमाणं दायधनक्रमेण सदाचार्यकटाक्षायत्तभगवत्कृपाविषयार्वाक्तनमुक्तपुरुषस्यापि सुलभमित्यप्रस्तुतवृत्तान्तप्रतीतेस्समासोक्तिः "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्" इति लक्षणात् तेनाञ्जनाद्रेर्नित्यविभूतितौल्यद्योतनादुपमालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ २२ ॥

अञ्जनाद्रेर्दक्षिणतो गच्छतस्तव कनकमुखराख्या नदी नयनपदवीमधिरोक्ष्यतीत्याह—

**स्तोकोन्मग्नस्फुरितपुलिनां त्वन्निवासेच्छयेव**
**द्रक्ष्यस्याराक्तनकमुखरां(रीं) दक्षिणामञ्जनाद्रेः ।**
**आसन्नानां वनविटपिनां वीचिहस्तैः प्रसूना-**
**न्यर्चाहेतोरुपहरति या नूनमर्धेन्दुमौळेः ॥**

तव निवासे विश्रमार्थस्थितौ इच्छया स्पृहयेव स्तोकं स्वल्पं

उन्मग्नं उन्मज्जनं प्राप्नुवत् ॥ आदिकर्मणि क्तः अत एव स्फुरितं अनतिचिरजलोन्मज्जनेन विशदतया प्रकाशमानं च पुलिनं तोयोत्थितद्वीपं यस्यास्तथाभूतां "द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् । तोयोत्थितं तत्पुलिनम्" इत्यमरः ॥ शरदागमप्रवृत्तिप्रयुक्तप्रवाहापचयोपक्रमवशात् "दर्शयन्ति शरन्नद्यः पुलिनानि शनैश्शनैः । नवसङ्गमसव्रीडा जघनानीव योषितः" इत्युक्तरीत्या शनैश्शनैर्व्यज्यमानपुलिनामिति भावः ॥ अञ्जनाद्रेः वेंकटाचलात् आरात् समीपे "आराद्दूरसमीपयोः" इत्यमरः ॥ [1]दक्षिणां दक्षिणदिशि विद्यमानामित्यर्थः अञ्जनाद्रेरित्यत्र "अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते" इति पञ्चमी ॥ [2]कनकमुखरां सुवर्णमुखराख्यां नदीं कनकमुखरीमित्यपि पाठः क्वचिद्दृश्यते ॥ अयमेव युक्तः पाठ इति प्रतिभाति "सुवर्णमिव लोकानां भागधेयादियं नदी । नीता भुवमगस्त्येन मुखरीकृतदिङ्मुखा ॥ तस्माद्या-

[1] दक्षिणां दक्षिणदिशि विद्यमानामित्यर्थः इति रसास्वादिनी ॥ यत्तु — दक्षिणां दक्षिणदिशि स्थितां सरलां च इति — तन्न सारल्यरूपार्थे विवक्षिते तत्राञ्जनाद्रेरित्यस्यावधेः अन्वयायोगात् । न चारादित्यत्रैव तदन्वय इति वाच्यम् तथा सति दक्षिणामित्यत्र अवध्याकांक्षाया अनिवृत्तिप्रसंगात् ॥

[2] कनकमुखरां सुवर्णमुखराख्यां नदीं इति रसास्वादिनी ॥ यत्तु— कनकमुखरां कनकैः भूषणैः मुखरां शब्दायमानां च इत्यर्थान्तरवर्णनं—तन्न कनकमुखरापदस्य विशेष्यवाचितया तत्र श्लेषविवक्षायाः स्ववर्णितसमासोक्तिप्रतिकूलत्वात् ॥ कनकमुखरीमिति पाठस्यैव प्रमाणानुसारिताया आचार्यैस्स्थापिततया तत्पाठे तदर्थासंभवाच्च ॥

स्यति विख्यातिं सर्वलोकाभिनन्दिनाम् । सुवर्णमुखरीनाम्ना धाम्ना कैवल्यसंपदः ॥ एषा सुवर्णमुखरी सरित्सु सकलास्वपि । विशिष्टा सेवनीया च ब्रह्मणो वचनं त्विदम् ” इत्यादिस्कान्दादिपुराणेषु बहुशो ऽन्यन्ततयैव पाठदर्शनात् आबन्ततयाऽपि पाठदर्शने भवतु तथैव न नाम्नि विप्रतिपत्तिः द्रक्ष्यसि विलोकिष्यसे ॥ तामेव विशिनष्टि ॥ आसन्नानामिति ॥ या सुवर्णमुखरा आसन्नानां सविधवर्तिनां अनेन वक्ष्यमाणप्रसूनापचयस्य सौकर्यं द्योत्यते ॥ वनविटपिनां विपिनशाखिनां न तु राजादिनिष्कुटस्थानां अनेन प्रतिबन्धलेशविधुरतया कुसुमानां सुग्रहत्वं द्योतितम् । किञ्च—वनविटपिनामासन्नत्वविशेषणेन निजसलिलसेकपरिपोषितत्वं द्योतयता कुसुमानां स्वप्रयत्नकृतत्वं द्योत्यते ॥ तेन तेषां सपर्याकरणे प्रशस्ततमत्वं व्यज्यते ॥ यदुच्यते—“प्रातरुत्थाय चिन्वीयात्स्वारामात्स्वयमेव हि । पूजार्थमस्त्रमन्त्रेण पुष्पादीन्यत्नतः पथि ॥ यायादरण्यमथवा निर्बाधं हि तदार्जनम् ” इत्यादिना “ स्वप्रयत्नकृतं शस्तं मध्यमं वन्यमुच्यते । अधमं तु क्रयक्रीतं याचितं त्वधमाधमम् ” इति ॥ प्रसूनानि कुसुमानि अर्धेन्दुमौळेः रुद्रस्य अर्धश्चासाविन्दुश्च अर्धेन्दुरिति कर्मधारयः “ समुदाये दृष्टाश्शब्दा अवयवे वर्तन्ते ” इति न्यायात् न च “ अर्धं नपुंसकम् ” इत्यनुशासनादेकदेशिसमासेनैव भाव्यमिति भ्रमितव्यं हरशिरोधृतस्य चन्द्रमसश्शकलरूपतया अत्रार्धशब्दस्य समांशवाचित्वायोगात्समांशवाचिन एव तस्य तादृशसमासानुशासनात् न चार्धशब्दस्य शकलवाचित्वे विवादितव्यं “भित्तं

शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके" इत्यनुशासनात् अत एव समप्रविभागादन्यत्र दृश्यमानाः अर्धोक्तमर्धविलोकितमित्यादयः प्रयोगाश्च संगच्छन्ते ॥ वस्तुतस्त्वर्धशब्दस्य समांशवाचितायामपि नैकदेशिसमासनिर्बन्धः ॥ "अर्धं नपुंसकम्" इति सूत्रस्य "परवल्लिङ्गं" इत्यत्र भाष्ये प्रत्याख्यातत्वात् ॥ तथाच परवल्लिङ्गसूत्रे भाष्यं "एकदेशिसमासो नारभ्यते, कथमर्धपिप्पलीति समानाधिकरणो भविष्यति ॥ अर्धं च सा पिप्पली च अर्धपिप्पलीति न सिद्ध्यति परत्वात् षष्ठीसमासः प्राप्नोति । अथ पुनरयमेकदेशिसमास आरभ्यमाणष्षष्ठीसमासं बाधते इष्यते च षष्ठीसमासोऽपि । तद्यथा अपूपार्धं मया भक्षितं ग्रामार्धं मया लब्धमिति ॥ एवं पिप्पल्यर्धमित्यपि भवितव्यम् । कथमर्धपिप्पलीति ॥ समानाधिकरणो भविष्यति" इति परत्वादित्यस्यायमर्थः । 'न ते प्रयोजनादिष्टं मुख्यशब्दार्थलुम्पनम्' इति भेदाश्रयणमेव परं मुख्यं प्रधानं, ततश्च षष्ठीसमास एव प्राप्नोति भिन्नविषयत्वात्तु शास्त्रापेक्षं परत्वमत्र न विवक्षितमिति। इदं च कैयटे ॥ अत एव "शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा । यस्य नोपरता भार्या देहार्धं तस्य जीवति ॥ जीवत्यर्धशरीरे तु कथमन्यस्स्वमाप्नुयात् । प्रेम्णा शरीरार्धहरा हरस्य" इत्यादय उभयथाऽपि प्रयोगा निर्विचिकित्सा इत्यलं प्रसक्तानुप्रसक्तिकाकुतूहलेन ॥ अर्धेन्दुर्बालचन्द्रो मौळौ जटाजूटे यस्य सः—गड्वादेराकृतिगणत्वात्सप्तम्याः परनिपातः ॥ अर्धेन्दुः मौळिश्शेखरं यस्येति वा विग्रहः "चूडा किरीटं केशाश्च संयता मौळयस्त्रयः" इत्यमरः ॥ अर्चाहेतोः चन्द्र-

शेखरकर्मकस्वकर्तृकाराधनार्थं तादृशान्यकर्तृकाराधनार्थं वेत्यर्थः ॥ "निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्" इति षष्ठी ॥ तथा च तत्तीरे चन्द्रशेखरस्थित्यादिकमुच्यते स्कान्दे सुवर्णमुखरीप्रभाववर्णनावसरे—"अत्रास्ति भगवानीशः ख्यातोऽगस्त्येशसंज्ञया । स्थापितोऽगस्त्यमुनिना लोकानन्दविधायिना ॥ स्नात्वा तस्यां महानद्यां तल्लिङ्गं पूजयन्ति ये । दशानामश्वमेधानां फलं संप्राप्नुवन्ति ते" इति ॥ यद्वा—रुद्रकर्तृकभगवदाराधनार्थमित्यर्थः ॥ तथा चोच्यते वामनपुराणे श्रीवेङ्कटाचलमाहात्म्ये—"किं मां न भाषसे देव त्वत्समीपमिहागतम् । को वा ध्येयस्त्वया देवः कोऽस्मिन्वा निवसत्यहो" इत्यगस्त्यपृष्टेन शेषाद्रेर्दक्षिणभागे तपस्यता शङ्करेण "परावरपतिर्देवो विश्वयोनिर्जनार्दनः । मया चान्यैश्च विश्वात्मा ध्येयो नारायणो हरिः ॥ नान्यो ध्येयः पुमान् लोके पूज्यो वा न च विद्यते । तमृते जगतां नाथं सर्वव्यापिनमीश्वरम् ॥ नारायणगिरावस्मिन्वसत्येष सनातनः । नारायणो जगद्योनिः भगवान्पुरुषोत्तमः ॥ अस्मिन्नचस्तं मनो यस्मान्मया सर्वेश्वरे हरौ । तस्मात्समागतं त्वां हि नाभिभाषे न चान्यथा" इत्यादिना ॥ स्वस्य श्रीनिवासध्यानाराधनादिनिरतत्वम् ॥ वीचयस्तरङ्गा एव हस्ताः तैः [1]उपहरति नूनं उपदात्वेनार्पयतीवेत्यर्थः ॥ यथा शुश्रूष-

---

[1] उपहरति नूनं उपदात्वेनार्पयतीवेत्यर्थ इति रसास्वादिनी ॥ यत्तु उपहरतीत्यत्र पातुं न प्रथमं व्यवस्यति जलं युष्मास्वित्यादिवत् कालसामान्ये लट् इति—तन्न कनकमुखराकर्तृकप्रसूनोपहारस्य त्रैकालिकत्वेन वर्तमानकालार्थ-

माणा पुत्रिकादिः पित्रादेर्भगवत्समपर्यार्थं कुसुमादीन्युपहरति तथेति भावः। उपपूर्वकस्य हरतेरुपदार्थकत्वं तु "उपहारस्तथोपदा" इत्यनुशासनेन सिद्धम् ॥ अत्र हंसनिवासेच्छायाः स्तोकोन्मग्नस्फुरितपुलिनतां प्रत्यहेतोर्हेतुत्वेन संभावनाद्धेतूत्प्रेक्षा सुवर्णमुखरायास्तादृशेच्छाया गगनकुसुमायमानतया असिद्धविषया ॥ सा च वीचिहस्तैरिति रूपकोज्जीवितचन्द्रशेखरसपर्यार्थकुसुमोपहारक्रियोत्प्रेक्षया अनुक्तविषयया संसृज्यते ॥ नदीकर्तृकनिजसलिलनिपतिततटविटपिकुसुमोत्क्षेपणरूपविषयस्यानुपादानादनुक्तविषयेति ध्येयम् । किञ्च प्रस्तुते नदीवृत्तान्ते 'स्तोकोन्मग्नस्फुरितपुलिनाम्' इत्यादिना अप्रस्तुतप्रियतमनवसंगमाभिलाषिसव्रीडमुग्धललनावृत्तान्तप्रतीतेः "पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां" इत्यादाविव सारूप्यनिबन्धना समासोक्तिरुक्तालङ्कारैस्संकीर्यत इति संक्षेपः ॥ २३ ॥

अथ सुदूरोत्पतनखेदव्यवधूननाय स्तोकं तत्र विश्रम्य प्रस्थातव्यं पुरस्तादित्याह—

**निर्विश्यैनां निभृतमनभिव्यक्तमञ्जुप्रणादो**
**मन्दाधूतः पुलिनपवनैर्वञ्जुलामोदगर्भैः ।**

---

कालेऽपीह लटोऽनुपपत्तिलेशविरहात् । वर्तमानव्यपदेशेनैव धात्वर्थस्य उपहरणस्य नित्यानुवृत्तिलाभाच्च । अत एव – 'श्रीमत्तदङ्घ्रियुगळं प्रणमामि मूर्ध्ना' इत्यत्र प्रणमामीति वर्तमानव्यपदेशो नित्यानुवृत्तिविवक्षयेत्यनुगृहीतं रहस्यरक्षायां भगवतैव मूलकृता ॥ "पातुं न प्रथमं व्यवस्यति जलं" इत्यत्रापि वर्तमानकाल एव लट् । "व्यवस्यतीति वर्तमानप्रयोगेण सार्वभौमानुरूपवरप्राप्तावपि न गर्वः किन्त्वद्यापि गमनदिवसेऽपि स्ववचनानुसरणशीला जलं प्रयच्छतीति व्यज्यते" इति शाकुन्तलव्याख्यानेषु वैखानसीयराघवभट्टीयादिषु दर्शनात् ॥ २३ ॥

अव्यासङ्गस्सपदि पदवीं संश्रयान्यैरलङ्घ्यो (ङ्घ्यां)
बन्दीकुर्युस्तटवसतयो मा भवन्तं किराताः ॥

एनां सुवर्णमुखरां निभृतं निस्पन्दं यथा स्यात्तथा विविक्तं यथातथेति यावत् निर्विश्य उपभुज्य "निर्वेश उपभोगस्स्यात्" इत्यमरः ॥ यथाऽन्ये स्तोकमपि न विदुस्तथोपभुज्येति भावः । तत्र विश्रम्येति यावत् । [1]वञ्जुलानां विकाराः पुष्पाणि वञ्जुलाः वानीरकुसुमानि "तस्य विकारः" इति वैकारिकाणः "पुष्पमूलेषु बहुळम्" इति लुपि "लुपि युक्तवद्व्यक्तिवचने" इति युक्तवद्भावात्प्रकृतिवल्लिङ्गवचने । "रथाभ्रपुष्पविदळशीतवानीरवञ्जुलाः" इत्यमरः । तेषां आमोदः सुदूरविसर्पिविमर्दजनितजनमनोहरगन्धविशेष, स एव गर्भे येषां तथाभूतैः गड्वादेराकृतिगणत्वात्सप्तम्याः परनिपातः "विमर्दोत्थे परिमळो गन्धे जनमनोहरे । आमोदस्सोऽतिनिर्हारी" इत्यमरः । अनेन सौरभ्यं प्रकाशितम् । पुलिनानां तोयोद्गतसैकतानां पवनैः मारुतैः अनेन शैत्यं सूचितम् । मन्दं यथा स्यात्तथा आधूतः कृतवीजनोपचारस्सन्निति यावत् । अनेन मारुतस्य मान्द्यं सूचितम् । अविद्यमानः व्यासङ्गस्तत्रैवात्या-

[1] वञ्जुलानां विकाराः पुष्पाणि वञ्जुलाः वानरिकुसुमानीति रसास्वादिनी ॥ यत्तु वञ्जुलानां विकारा वञ्जुला इति व्युत्पत्तिवर्णनं तन्न विकारसामान्यविवक्षायां वैकारिकाणो लुपोऽसंभवात् ॥ वंजुलानां विकाराः पुष्पाणीति व्युत्पत्तावेव "पुष्पमूलेषु बहुलं" इत्यनेन वार्तिकेन लुपस्संभवात् ॥ ईदृशस्थलेषु विकारविशेषनिर्देशपुरस्सरं व्युत्पत्तिप्रदर्शनस्यैव सांप्रदायिकत्वाच्च ॥

सक्तिर्यस्य तथोक्तस्मिन् मानसादप्यतिशयिनलोकोत्तररामणीयकयुक्तां विविक्तमुपभुक्तामिमां कथं नु सहसा त्यजेयमिति लोभातिरेकात्तत्रैव विलम्बमकुर्वन्निति भावः । या हि सुवर्णमुखरा वर्ण्यते स्कान्दे "यदीयसैकतावासविश्रान्ता मानसं सरः । न स्मरन्ति निजावासं मराळा विहगोत्तमाः" इति । [1]अनभिव्यक्तः अस्फुटः मञ्जुर्मनोहरः प्रणादो यस्य तथाभूतस्मिन् सपदि तत्क्षणमेव अन्यैः पृथग्जनैः तत्रत्यैः अलङ्घ्यः अपरिभाव्यस्सन् अलङ्घ्यामिति पाठे पदवीविशेषणं 'बलवीर्योपपन्नानां रूपयौवनशालिनाम् । षष्ठस्तु पन्था हंसानां" इत्युक्तरीत्या वियत्यतिदवीयस्त्वादितरैर्दुष्प्रापामित्यर्थः । पदवीं सरणिं "पदवी सृतिः" इत्यमरः । संश्रय सम्यगाश्रय । संपूर्वकाच्छ्रीञो लोण्मध्यमपुरुषैकवचनम् । एवमविलम्बेनोत्पतनस्य फलमाह—बन्दीति । तटवसतयः कनकमुखरातीरनिवासिनः । किराताः व्याधाः, भवन्तं एवं विविक्तप्रदेशे नदीमुपभुज्य मूकीभूय क्षिप्रं वियत्पथं प्रत्युत्पतन्तमिति भावः । मा बन्दीकुर्युः न प्रग्रहीकर्तुं शक्नुयुः अन्यथा तत्रैव विलम्ब्याऽवाक्स्वपथप्राप्तेरुदश्रयेश्चेत्किञ्चिदपि मधुरतर निनादमवश्यं त्वां बन्दीकुर्युरिति भावः । माऽस्तु मा भविष्यतीत्यादाविवायं माशब्द न तु माङ् अत एव "माङि लुङ्"

[1] अनभिव्यक्तः अस्फुटः मञ्जुर्मनोहरः प्रणादो यस्यासि इति रसास्वादिनी ॥ यत्तु प्रणादः प्रकृष्टशब्दः अनुरागजशब्दविशेषश्चेत्यर्थ इत्यर्थद्वयविवरणं तन्न "प्रणादस्तु शब्दस्स्यादनुरागजः" इत्यमरपठितरूढ्यर्थपरिग्रहेणैवोपपत्तेरर्थान्तरस्यापि विवक्षायां प्रयोजनविरहात् ॥ २४ ॥

इति न लुङित्याहुः अबन्दीं बन्दीं संपद्यमानां कुर्युः बन्दीकुर्युः "प्रग्रहोपग्रहौ बन्द्यां" इत्यनुशासनाद्बन्दीशब्दस्स्वभावान्नित्यस्त्रीलिङ्गः। ततोऽभूततद्भावे च्विप्रत्यये कृञो लिङ् । कारागारनिगृहीतं न विदध्युरित्यर्थः । अत्र वर्णनीये राजहंसे विविक्तोद्देशलब्धपरकीयमुग्धललनासंभोगसौभाग्यस्य मन्दानिलान्दोळनविधूतखेदस्य एवंविधदुर्दान्तताऽसहिष्णुतल्ललनाऽनुबन्धिनिष्ठुरतरपरिजनबृन्दास्कन्दनसाध्वसात्त्वरितारमन्यतोऽपसरतो धूर्तस्य वृत्तान्तः प्रतीयत इति समासोक्तिः पूर्वश्लोकवत्सारूप्यनिबन्धना । किरातकर्तृकहंसकर्मकबन्दीकरणदुष्करत्वस्य पूर्ववाक्यार्थेन समर्थितत्वात्काव्यलिङ्गं चेत्यनयोरेकवाचकानुप्रवेशसंकरः ॥ २४ ॥

अथैकादशभिश्श्लोकैस्तुण्डीरमण्डलवैभवं वर्णयिष्यंस्तत्रादौ सत्यव्रतक्षेत्रं याहीत्याह—

**तुण्डीराख्यं तदनु महितं मण्डलं वीक्षमाणः**
**क्षेत्रं यायाः क्षपितदुरितं तत्र सत्यव्रताख्यम् ।**
**पत्यौ रोषात्सलिलवपुषो यत्र वाग्देवतायाः**
**सेतुर्जज्ञे सकलजगतामेकसेतुस्स देवः ॥ २५ ॥**

तदनु सुवर्णमुखराप्रदेशातिलङ्घनानन्तरं महितं पूजितं "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः । अनौपाधिकनिर्देशादसङ्कोचेन सर्वजगतां मान्यत्वं सूचितम् ॥ उक्तं च—"अनौपाधिकनिर्देशे ह्यसङ्कोचो मनीषिभिः । सिद्धे शब्दार्थसम्बन्ध इति न्या-

येन कल्प्यते" इति ॥ वार्तमानकालिकप्रत्ययेन तत्पूज्यत्वस्य सार्वकालिकत्वं द्योतितम् । तुण्डीर इत्याख्या यस्य तत्तुण्डीराख्यं मण्डलं देशं "मण्डलं परिधौ कोष्ठे देशे द्वादशराजसु" इति मेदिनी॥ वीक्षमाणस्सन् तत्र मण्डले क्षपितं निरस्तं दुरितं पापं येन तत्तथोक्तं अखिलकलुषकुलविमूलनधुरीणामित्यर्थः ॥ तथाचोक्तं हस्तिगिरिमाहात्म्ये—"यत्तु सत्यव्रतं नाम क्षेत्रं पापप्रणाशनम्" इति ॥ सत्यं अव्यभिचरितफलं व्रतं जनैः कृतो विगुणोऽपि नियमो यस्मिंस्तत्सत्यव्रतं सत्यव्रतमित्याख्या यस्य तत्तथोक्तं अन्वर्था चेयं समाख्या यथोच्यते हस्तिगिरिमाहात्म्ये—"यानि व्रतानि तत्रैव कृतानि विगुणान्यपि । तानि सत्यव्रतानि स्युरिति सत्यव्रतं स्मृतम्" इति ॥ क्षेत्रं भगवदभिव्यक्तिस्थानं "क्षेत्रं कळत्रे केदारे सिद्धस्थानशरीरयोः" इति प्रतापः । यायाः गच्छेः "या प्रापणे" लिङ् ॥ प्रापणमिह गतिः ॥ क्षेत्रं विशिनष्टि—पत्याविति ॥ यत्र क्षेत्रे सकलजगतां अखिलभुवनानां एकः निष्प्रतिद्वन्द्वः सेतुः सेतुवदसङ्करकर इत्यर्थः ॥ "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इति सेतुसामान्येन सर्वलोकासङ्करकरत्वश्रुतेः ॥ अतएव "परमतस्सेतु" इत्यधिकरणे "सामान्यात्तु" इति सूत्रितम् ॥ यद्वा—सिनोति बध्नाति स्वस्मिन् सर्वं चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरित्यवयवार्थेनाप्यसङ्करकरत्वमुच्यत इति प्रकृतसूत्रश्रीभाष्यश्रुतप्रकाशिकयोस्स्पष्टम् ॥ "सितनिगमि" इत्यादिना सिनोतेर्बन्धनार्थकादौणादिकस्तुन्प्रत्ययः ॥ अथवा—"द्युभ्वा-

द्यायतनं" इत्यधिकरणश्रीभाष्यरीत्या उक्तप्रकारेणैव सिनोतेर्बन्धनार्थत्वात्सेतुः ॥ अमृतस्य प्रापक इत्यर्थः ॥ "अमृतस्यैष सेतुः" इति श्रुतेः ॥ साययति सम्बन्धयति चेतनानमृतेनेति सिनोतेर्ण्यन्तात्तुन्प्रत्यय इति विशेषः ॥ सेतुरिव वा सेतुः नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः । सः सर्वेश्वरत्वभूतपालत्वभूताधिपतित्वादिभिः प्रसिद्धः देवः "एको देवस्सर्वभूतेषु गूढः, अध्यात्मयोगाधिगमेन देवं, सहस्रशीर्षं देवं" इत्यादिश्रुत्या प्रत्यायितद्योतनादिस्वभावो नारायणः पत्यौ भर्तरि चतुर्मुखे "पतिस्समास एव" इति घिसंज्ञानियमान्नात्र तत्प्रयुक्तं "अच्चघेः" इति सूत्रकार्यम् । रोषात् क्रोधविशेषात् । तदुक्तं रसार्णवसुधाकरे—"वधावज्ञादिभिश्चित्तज्वलनं क्रोध ईरितः । एष द्वेधा भवेत्क्रोधः कोपरोषप्रभेदतः" इत्युपक्रम्य "मिथस्स्त्रीपुंसयोरेव रोषः स्त्रीगोचरः पुनः । प्रत्ययावधिरत्र स्युर्विकाराः कुटिलेक्षणम् ॥ अधरस्फुरणापाङ्गरागनिश्वसितादयः" इति ॥ अयं च रोषः पत्यावित्युक्तेः पुरुषविषय इति व्यक्तमेव ॥ स च रोषः "द्वेधा निगदितः स्त्रीणां रोषः पुरुषगोचरः । सपत्नीहेतुराद्यस्स्यादन्यस्स्यादन्यहेतुकः" इत्युक्तप्रकारद्वयभिदुरे तस्मिन्न सपत्नीहेतुकः किं त्वन्यनिमित्तकः, स्वावज्ञानादेव ब्रह्मणा कृतोरूपक्रान्तत्वेन तन्मूलकतया प्रवृत्तत्वात् सलिलं वपुश्शरीरं यस्यास्तथोक्तायाः विधातृसवनविध्वंसनायावलम्बितवेगवत्याख्यनदीरूपाया इत्यर्थः । वाग्देवतायाः सरस्वत्याः, सेतुः जलनिरोधकसन्निवेशवि-

शेषः ॥ "सेतुराळौ स्त्रियां पुमान्" इत्यमरः ॥ स्त्रियां वर्तमानायामाळौ सेतुः पुमानिति कोशार्थः ॥ सिनोति जलं सीयते वा मृत्पाषाणादिभिरिति सेतुः "षिञ् बन्धने" जज्ञे प्रादुर्बभूव "जनी प्रादुर्भावे" अस्माद्दैवादिकाल्लिटि "लिटस्तझयोरेशिरेच्" इत्येशादेशे "असंयोगाल्लिट्कित्" इति कित्त्वे "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपश्चुत्वं च ॥ आश्चर्यमिदं यदखिलजगत्साधारणस्सेतुर्भगवानस्या असाधारणस्सेतुरासीदितीति भावः ॥ अत्र "इदानीं सा मयि क्रुद्धा मया पूर्वं विमानिता। दुराराध्या त्वया तस्मादनुनीयाह्वयस्व ताम्" इत्यादिः "धर्मपत्नीं विहाय त्वां धाता यष्टुं प्रचक्रमे। सावित्रीमात्मनः पत्नीं कल्पयित्वा महर्षिभिः ॥ ऋत्विग्भिर्दीक्षितो ब्रह्मा ह्यभीष्टफलसिद्धये। तं दृष्ट्वैव वयं क्रुद्धाः प्रतीकारचिकीर्षवः ॥ निवेदयितुकामास्ते त्वत्समीपमिहागताः। प्रमाणमत्र देवि त्वं कर्तव्यं यदनन्तरम् ॥ मखभङ्गस्त्वया कार्य इत्येवं प्रतिभाति नः। अपकारप्रतीकारस्सतां सर्वत्र सम्मतः ॥ अपकारः कृतस्तेन विधात्रा त्वयि मानिनि। इत्युक्ता दानवैर्देवी तथेत्याह सरस्वती ॥ अनुज्ञातास्तया देव्या प्रययुस्सुरशत्रवः। अथ विधिमखभञ्जनाय धातुर्वदनसरोरुहषण्डराजहंसी। कृतमतिरतिरंहसा नदी सा भवितुमशिश्रियदाशु सह्यशैलम्" इत्यन्ता "ततस्सा सह्यशैलस्य निर्गत्योत्तरभागतः। आस्थायातिमहावेगं ययौ सत्यव्रतं प्रति" इत्यादिः "मां निरोद्धुमयं शेते भगवान्भक्तवत्सलः। विधातुर्यज्ञरक्षार्थं स्वयमेव ममाग्रतः ॥ सर्वेषामपि भूतानां गुरुरेष सनातनः। सर्वभूतान्त-

रात्मानमशक्यमतिवर्तितुम् ॥ इत्थं विचिन्तयन्ती सा तत्समीपं शनैर्ययौ । न शशाक ततो गन्तुं निरुद्धा विष्णुसेतुना ॥" इत्यन्ता च पौराणिकी हस्तिगिरिमाहात्म्यकथाऽनुसंधेया । अत्र वर्णनीयस्य सत्यव्रतक्षेत्रस्य सेतूभवनरूपमहापुरुषचरित्रमङ्गतया वर्णितमित्युदात्तालङ्कारो द्वैतीयीकः । तथा च सूत्रम्—"समृद्धिमद्वस्तुवर्णनमुदात्तम् । अङ्गभूतमहापुरुषचरितं च" इति । लक्ष्यलक्षणसंग्रहकृदप्याह—"उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् । सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः" इति । उपलक्षणं अङ्गमित्यर्थः। रुद्रटस्तु—काव्यालङ्कारेऽमुमवसरनाम्ना व्यवाहार्षीत् । तथा च तदीयं लक्षणम् । "अर्थान्तरमुत्कृष्टं सरसं यदि वोपलक्षणं क्रियते । अर्थस्य तदभिधानप्रसङ्गतो यत्र सोऽवसरः" इति । उत्कृष्टं महापुरुषचरित्रादिकमर्थान्तरं शृङ्गारादिरसवदर्थान्तरं वा यत्रान्यस्यार्थस्योत्कर्षाभिधानप्रसङ्गेन उपलक्षणमङ्गं क्रियते—सोऽवसरनामाऽलङ्कार इत्यर्थः । आद्यस्य तदीयमुदाहरणम् । "तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी । निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः" इति। द्वितीयस्योदाहरणम् । "सा सिप्रानाम नदी यस्यां मङ्क्षूर्मयो विशीर्यन्ते। मज्जन्मालवललनाकुचकुम्भास्फालनव्यसनात्" इतीत्यलं विस्तरेण ॥ २९

अथ सत्यव्रतक्षेत्रे काञ्चीनाम्नीं नगरीं द्रक्ष्यसीत्याह—

**नानारत्नैरुपचितगुणां नित्यसंगीतनादां ।**
**भूमेर्द्रक्ष्यस्युचितविभवं भूषणं तत्र काञ्चीम् ॥**

यस्यां नित्यं निहितनयनो हस्तिशैलाधिवासी।
द्वन्द्वातीतस्स खलु पुरुषो दृश्यते सत्यकामः॥२६॥

नानाविधानि रत्नानि—"गजवाजिरथास्त्रेषु निधिमालाम्बरद्रुमाः। शक्तिपाशमणिच्छत्रविमानानि चतुर्दश" इति मार्कण्डेयपुराणोक्तानि रत्नानि स्वस्वजातिश्रेष्ठवस्तूनि "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः। एकैकस्मिन्नपि रत्नेऽवान्तरभेदविवक्षया नानाशब्दः। तैः उपचिताः अभिवर्धिताः गुणाः रामणीयकसमृद्ध्यादयो यस्याः तां तथाविधां पक्षे नानाविधैः रत्नैर्मणिभिः उपचिताः प्रत्युप्ताः गुणास्सौवर्णतन्तवो यस्याः तथाभूतां उपचितशब्दस्येदृशार्थकत्वं तु "हेम्नीवोपचितो मणिः" इत्यादौ प्रसिद्धं [1]नित्यस्सार्वकालिकः संगीतस्य नादो यस्यां तथाविधां, नित्यस्संगीतस्य नाद इव नादो यस्यां तथाविधां च संगीतं च—"तौर्यत्रिकं नृत्तगीतवाद्यं नाट्यमिदं त्रयम्" इत्युक्ततौर्यत्रिकनाट्यापरपर्यायं "नृत्तं गीतं च वाद्यं च त्रयं संगीतमुच्यते"

---

[1] नित्यस्सार्वकालिकस्संगीतस्य नादो यस्यां तथाविधाम्। नित्यस्संगीतस्य नाद इव नादो यस्यां तथाविधां च इति रसास्वादिनी—यत्तु अन्यत्र नित्यस्तन्ततो यस्सङ्गो विषयसङ्गो विषयास्वाद इति यावत्। सोऽस्यास्तीति नित्यसङ्गी। अतिशायने मतुप्। तेन इतः प्राप्तः आदरेणानुभूतः नादः ध्वनिर्यस्या इत्यर्थवर्णनं भूषणपक्षे – तन्न अतिक्लिष्टत्वात्। सम्भवत्स्वारसिकोपमालङ्कारोपस्कृतार्थपरित्यागाच्च। एतेन – यद्वा—नित्यः अनवरतः सङ्गीतस्सम्यग्गीत सम्यग्वर्णितः नादो यस्या इत्यर्थान्तरवर्णनमपि व्याख्यातं वेदितव्यम्। गानकर्त्राकाङ्क्षया साकाङ्क्षत्वप्रसङ्गाच्च॥

इत्युक्तेः "सम्यग्गीते तु संगीतं न्यायारम्भे प्रसिद्धके । तूर्याणां त्रितये चापि" इति शब्दार्णवोक्तेश्च । भूमेः भूदेव्याः, उचितः अनुरूपः विभवः ऐश्वर्यं यस्य तत्तथाभूतं नानारत्नोपचितगुणत्वाद्रत्नगर्भाया वसुमत्यास्तस्या अनुरूपवैभवमिति भावः । सापेक्षत्वेऽपि गमकत्वात्समासः । न च चैत्रस्य गुरुकुलमित्यत्रेव नित्यसापेक्षत्वादेव न दोष इति वाच्यं नित्यसापेक्षत्वाभावेऽपि "किमोदनश्शालीनां सक्त्वापणमाढकीयानां" इत्यादौ समासदर्शनेन गमकत्वस्यैव प्रयोजकत्वात् । [1]गमकत्वं च विग्रहवाक्यजन्यशाब्दबोधसमानप्रकारकशाब्दबोधप्रयोजकत्वमेव । यथा ह्युच्यते—"यस्य विग्रहवाक्येन समानार्थकता भवेत् । असौ समासो गमकस्सापेक्षत्वेऽपि सम्मतः" इति । अयमर्थस्समर्थसूत्रे भाष्ये व्यक्तः । एवंविधं भूषणं आभरणं उचितविभवाभरणभूतामित्यर्थः । "परिष्कारो विभूषणम्" इत्यमरः । काञ्चीं काञ्चीनाम्नीं नगरीं ब्रह्मणा तत्र

[1]गमकत्वं चेत्यादि रसास्वादिनी । यत्तु—भूमेरुचितविभवमित्यत्र सापेक्षत्वेऽपि गमकत्वात्समासः । तदुक्तम्—यस्य विग्रहवाक्येन समानार्थकता भवेत् । असौ समासो गमकस्सापेक्षत्वेऽपि सम्मतः ॥ इति—तदिदं विचित्रं रसास्वादिनीसूक्तिसर्वस्वचौर्यचातुर्यम् । आचार्यैर्हि "गमकत्वं च विग्रहवाक्यजन्यशाब्दबोधसमानप्रकारकशाब्दबोधजनकत्वम्" इति शाब्दिकोक्तिर्बालानां सुखग्रहणधारणादिकृते "यस्य विग्रहवाक्येन" इति कारिकयाऽनूदिता स्वयमेव। तत्र "यथा ह्युच्यते" इत्यस्य यथा पद्यरूपेणानूच्यतेऽस्माभिरित्यर्थः । तदिदमनवगत्य "यथा ह्युच्यते" इत्याद्युक्त्या प्राचीनकारिकात्वेनाध्यवस्य "तदुक्तम्" इत्यादिना सैव कारिका उदाहृता । तदिदं विवेचयन्तु विवेचकाः ॥

हरेरञ्चितत्वात्तस्याः काञ्चीति नाम तदेतन्निरुक्तं हस्तिगिरिमाहात्म्ये—"क इति ब्रह्मणो नाम तेन तत्राञ्चितो हरिः । अतः काञ्चीति विख्याता पुरी पुण्यविवर्धनी" इति । पक्षे काञ्चीं मेखलां "काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च" इत्युभयत्रापि मेदिनी । तामेव विशिनष्टि—यस्यामिति । द्वंद्वमतीतो द्वंद्वातीतः अशनायापिपासे शोकमोहौ जरामृत्यू सुकृतदुष्कृते इत्यादिद्वंद्वान्यतीतः तथाच श्रूयते बृहदारण्यके कहोळप्रश्ने—"कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इति । छान्दोग्ये दहरविद्यायां च—"नैनꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इति । अनेनाखिलहेयप्रत्यनीकत्वं सूचितं द्वंद्वमित्यत्र "द्वंद्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" इति सूत्रेणाभिव्यक्त्यर्थे स्वार्थे द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वमेकवद्भावश्च निपात्यते । अत्यन्तसहचरितत्वेन लोकविज्ञानमत्राभिव्यक्तिः । "अत्यन्तसहचरिते लोकविज्ञाते द्वंद्वमित्युपसंख्यानं" इति वार्तिकात् । अत एव "अभिव्यक्तौ साहचर्येण" इत्युक्तं मूले "तेन द्वंद्वं संकर्षणवासुदेवावित्यत्रैव द्वौ युधिष्ठिरार्जुनावित्यत्र न भवति । द्वंद्वं न्यञ्चीत्यत्र वीप्सायां द्वित्वं, अन्यत्र स्वार्थे सहचरितत्वं चात्र शब्दप्रयोगे बोध्यम्" इति शब्देन्दुशेखरकृत् । एतच्च लक्ष्मीसहस्ररत्नप्रकाशिकायां प्रारम्भस्तबके चरणद्वंद्वैकसंसर्गत इत्यत्र प्रपञ्चितमस्माभिः अशनायापिपासादीनामत्यन्तस-

ह्चरितत्वेन शब्दप्रयोगस्तु—"उभे तीर्त्वा अशनायापिपासे तत्र को मोहः कश्शोकः जरामृत्यू ते पुनरेवापियन्ति तत्सुकृतदुष्कृते धूनुतः" इत्यादिश्रुतिषु द्रष्टव्यः। अत एव कौषीतकिब्राह्मणे "एवमहोरात्रे पर्यवेक्षत एवं सुकृतदुष्कृते सर्वाणि च द्वंद्वानि" इति सुकृतदुष्कृतादीनां द्वंद्वशब्देन निर्देशश्च संगच्छते। द्वंद्वातीत इत्यत्र "द्वितीयाश्रितातीत" इत्यादिना द्वितीयासमासः। काम्यन्त इति कामाः कल्याणगुणाः "सोऽश्नुते सर्वान्कामान्" इत्यत्र "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इत्यत्र च तथैव व्याख्यातत्वात्। सत्याः नित्याः कामाः कल्याणगुणाः यस्य तथाभूतः। अनेनानन्तकल्याणगुणाकरत्वमुक्तं पुरसंज्ञे शरीरे शेत इति पुरुषः "पुरसंज्ञे शरीरेऽस्मिञ्छयनात्पुरुषो हरिः। शकारस्य षकारोऽयं व्यत्यासेन प्रयुज्यते" इति निरुक्तेः षकारव्यत्यय उकारव्यत्ययस्याप्युपलक्षणार्थ इति पुरुषसूक्तभाष्येऽस्मदाचार्याः। अनेन "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्" इति श्रुत्युक्तरीत्याऽस्य परमात्मनस्सर्वान्तर्यामित्वं सर्वस्य चिदचिदात्मकप्रपञ्चस्य तच्छरीरत्वं चोक्तं पुरुषश्चात्र नारायण एव। "भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने" इति स्मरणात्। स इति सर्वनाम्ना पुरुषस्य विशेषितत्वात् "विश्वमेवेदं पुरुषः" इत्यादौ शरीरात्मभावनिबन्धनसर्ववस्तुसामानाधिकरण्यार्हतया "तं त्वौपनिषदं पुरुषं" इत्यादौ

शास्त्रैकसमधिगम्यतया "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्" इत्युपक्रम्य "तेनेदं पूर्णं पुरुषेण सर्वम्" इत्यन्तश्रुतौ अदृश्यत्वादिगुणकतया च प्रसिद्धिस्सूच्यते। द्वंद्वातीतः सत्यकामः पुरुष इति पदैः निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गवत्त्वात्परस्य ब्रह्मणस्सर्वेषु शरीरेष्वन्तर्यामितयाऽवस्थितस्यापि तद्गतदोषास्पर्शित्वं सूचितं भवति। तदेतद्ब्रह्ममीमांसायां—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इत्यधिकरणे, किं जीवस्येव तदन्तर्यामिणः परस्य ब्रह्मणोऽपि जागरादिस्थानप्रयुक्तदोषास्संभवन्त्युत नेति संशय्य "यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन् यश्चक्षुषि तिष्ठन् यो रेतसि तिष्ठन्" इत्यादिना जीवस्येव सर्वावस्थास्ववस्थितिवचनात् छन्दतोऽपि पूयशोणितादिमज्जनमपुरुषार्थ एवेति सर्वे दोषास्संभवन्तीति पूर्वपक्षं प्रापय्य। "अपहतपाप्मा विजरः; निरवद्यं निरञ्जनं; सत्यकामस्सत्यसंकल्पः; यस्सर्वज्ञस्सर्ववित्। यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे" इत्यादिश्रुतिस्मृतिभ्यो निरस्तनिखिलदोषगन्धत्वसर्वज्ञत्वसत्यसंकल्पत्वाद्युभयलक्षणस्वरूपावगतेः परस्य ब्रह्मणस्सर्वत्रान्तर्यामितयाऽवस्थितस्यापि न दोषगन्धस्संभवति अपि तु सर्वनियमनरूपलीलारस एवेति सिद्धान्तितम्। सत्यकामो द्वंद्वातीत इत्याभ्यां सगुणनिर्गुणश्रुत्योर्विषयभेदश्च प्रदर्शितः। यद्वा—द्वंद्वातीत इत्यनेन "अपहतपाप्मा" इत्यादि "अपिपासः" इत्यन्तेनोक्तस्स्वलीलोपकरणभूतत्रिगुणप्रकृतिप्राकृततत्संसृष्टपुरुषगतसर्वहे-

यस्वभावप्रतिषेधः । "सत्यकामः" इत्यनेनोक्ता स्वभोग्यभोगोपकरणजातस्य सर्वस्य नियता चोक्ता "सत्याः कामाः यस्यासौ सत्यकामः काम्यन्त इति कामाः तेन परेण ब्रह्मणा स्वभोग्यतदुपकरणादयस्स्वाभिमता ये काम्यन्ते ते सत्याः नित्या इत्यर्थः। अन्यस्य लीलोपकरणस्यापि वस्तुनः प्रमाणसंबन्धयोग्यत्वे सत्यपि विकारास्पदत्वेनास्थिरत्वात्तद्विपरीतं स्थिरत्वमेषां सत्यपदेनोच्यते" इति वेदार्थसंग्रहेऽन्वग्राहि । अत्र "सत्यत्वं द्विविधं, प्रमाणसंबन्धार्हत्वमविकारित्वं च तच्च सत्यत्वं प्रपञ्चस्य नास्तीति तदत्राभिप्रेतम्" इति व्यासार्याः । ईदृशोऽपि पुरुषः हस्तिशैलाधिवासी हस्तीति शैलो हस्तिशैलः दिग्गजैस्तत्र पूर्वं भगवतोऽर्चितत्वेन हस्तिसंबन्धाद्धस्तीति शैलविशेषस्य संज्ञा । श्येनसादृश्यरूपश्येनसंबन्धाद्यागविशेषे श्येनशब्दवत् । अत एव शैलादिपदसमभिव्याहारमन्तरेणापि "हस्तीशसर्ववचसामवसानसीमा" इत्यादि तत्रतत्राचार्यैः प्रयुज्यते। तत्र नामैकदेशे नामग्रहणं चेदभ्युपगम्यते तदा हस्तिनां शैलो हस्तिशैल इति षष्ठीसमासोऽपि संभवत्येव । तदुक्तं—हस्तिगिरिमाहात्म्ये—"दिङ्नागैरर्चितस्तस्मिन्पुरा नारायणः प्रभुः। ततो हस्तिगिरिर्नाम ख्यातिरासीन्महागिरेः" इति । हस्तिशैलमधिवसतीति हस्तिशैलाधिवासी सन् यस्यां काञ्च्यां नित्यं सर्वदा निहिते तदेकाग्रतया विन्यस्ते नयने येन स तथोक्तश्च सन् काञ्चीं नित्यं कटाक्षविषयीकुर्वन्नित्यर्थः । दृश्यते अर्चारूपेण चक्षुर्गोचरीक्रियते जनैरिति शेषः । दृशेः कर्मणि लट् । खल्विति प्रसिद्धौ-

तनार्थः ॥ हस्तिशैलाधिवासी दृश्यत इत्याभ्यां "हस्तिशैल इति ख्यातस्तत्र शैलवरो महान् । दृश्यते तस्य शिखरे पूजनीयस्त्वया हरिः" इत्येतत्प्रत्यभिज्ञाप्यते । दृश्यत इति लटा कृतयुगमुखे विधातृवितानवेद्यामाविर्भूतस्तदैव नान्तर्हितः किंतु—"वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिस्स्वयम् । वरदस्सर्वभूतानामद्यापि परिदृश्यते" इत्युक्तरीत्याऽधुनाऽपि सकलभुवनजननयनविषयो भवतीति द्योतितम् । स्वोचितविविधविचित्रानन्तभोग्यभोगोपकरणसमृद्धानन्तमहाश्चर्यनित्यविभवोऽपि सर्वान्तर्यामितया "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इत्याद्युक्तप्रकारेण विशुद्धमनोमात्रग्राह्यतया विद्यमानोऽपि लीलाविभूतिगतप्राकृतहस्तिगिरिनिवासशीलस्सकललोकलोचनगोचरो रोचते इत्याश्चर्यमेतदिति भावः ॥ मेखलापक्षे त्वेवमन्वयः—हस्तिशैलाधिवासी द्वंद्वातीतस्स पुरुषः, यस्यां नित्यं निहितनयनस्सन् सत्यकामो दृश्यत इति ॥ हस्तिशैलाधिवासी भगवदनुग्रहसंपिपादयिषया दिव्यक्षेत्ररूपमहाशैलवासीत्यर्थः । अनेन विविक्तदेशसेवित्वमुपरतत्वं च द्योत्यते । द्वंद्वातीतः "निर्द्वंद्वो नित्यसत्त्वस्थः" इत्यत्रेव द्वंद्वशब्द इह पुण्यापुण्यमूलसांसारिकस्वभाववर्गद्वयपरः । द्वंद्वमतीतो द्वंद्वातीतः एतेन तितिक्षुत्वदान्तत्वशान्तत्वादिकं व्यज्यते । सः "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इत्याद्युक्तरीत्या लोकोत्तरतया प्रसिद्ध इत्यर्थः ॥ अनेन समाहितत्वं सूच्यते । अत्र "शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति श्रुत्यर्थोऽनुसंधेयः । पुरुषः ईदृशः पुमानपि यस्यां

मेखलायां नित्यं निहितनयनः सार्वकालिकतन्निर्वर्णनैकव्यसनी अत एव सत्यः नित्यः कामो विषयाभिलाषो यस्य तथोक्तश्च सन् दृश्यते सर्वैरपि विलोक्यते खलु। निवृत्तनिखिलसंसारसंगो योगिनामीश्वरोऽपि यां पश्यन्नित्यकामुको दृश्यते तस्यास्सौन्दर्यं कियदिति वर्णनीयमिति भावः॥ यद्वा—ईदृशः पुरुषोऽपि सत्यकामस्सन् यस्यां नित्यं निहितनयनो दृश्यत इति योजना। तदा "न पाणिपादचपलो न नेत्रचपलोऽनृजुः" इत्याद्युक्तरीत्या सकलचापलनिवृत्तोऽपि निरन्तरपरब्रह्मध्यानावधानादृतान्तरङ्गोऽपि महायोगी कुसुमचापचापलविवशो यन्निध्यानबद्धादरो दृश्यते तस्यास्सौन्दर्यादिकं वाङ्मनसाविषय इति भावः॥ अथवा—द्वंद्वातीतः यावत्साधनसमाप्त्यवर्जनीयशीतोष्णादिसहः अनेन "द्वंद्वातीतो विमत्सरः" इत्येतत्प्रत्यभिज्ञाप्यते तेन च विवक्षितस्य पुरुषस्य स्थितप्रज्ञता द्योत्यते सा च शास्त्रजन्यात्मज्ञानपूर्वककर्मयोगापाद्यज्ञाननिष्ठायोगाख्यात्मावलोकनसाधनं एषा च द्वितीयाध्याये भगवता गीता चतुर्भिश्श्लोकैः—"प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान्। आत्मन्येवात्मना तुष्टस्स्थितप्रज्ञस्तदोच्यते॥ दुःखेष्वनुद्विग्नमनास्सुखेषु विगतस्पृहः। वीतरागभयक्रोधस्स्थितधीर्मुनिरुच्यते॥ यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्। नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता" इति॥ एवं स्थितप्रज्ञविषयं श्लोकचतुष्टयं क्रमेण वशीकारैकेन्द्रियव्यतिरे-

कयतमानाख्यतदवस्थाचतुष्टयविषयं तत्र पूर्वपूर्वावस्था उत्तरोत्तरावस्था-निष्पाद्येत्यनुसंधेयं तथाहि—" तत्र प्रथमं बाह्येन्द्रियाणि विषयेभ्यः प्रतिसंहृत्य मन आत्मनि व्यवस्थापयितुं यतेत इयं यतमानसंज्ञा। अथ बलात्संहृतान्यपि बाह्येन्द्रियाणि सावशेषरागद्वेषादि-दोषकलुषितं मनः पुनःपुनरवसरे प्रेरयेत् स्वयं चात्मनि स्थातुं न शक्नुयात्। अतः पक्वावशिष्टरागद्वेषादीनौदासीन्यानभिनन्दनादि-क्रमेण पचेत् इयं व्यतिरेकसंज्ञा॥ ततः पक्वेऽपि दोषशेषे अनादिविषयानुभवभावितवासनामात्रमात्मानमनुबुभूषन्तीं शेमुषीं प्रति-बिभत्सेत् तत्र निरतिशयानन्दरूपमात्मानं पुरुषद्वेषिण्या योषित इव युवानं प्रदर्श्य प्रदर्श्य क्रमादात्मनि तोषं समुत्पाद्य तेन तोषविशेषेण दवीयसा च स्मृतिविधुरेण कालेन बाह्यविषयवासनाजालमुन्मूलयि-तुमीहेत सेयमेकेन्द्रियसंज्ञा। या पुनस्समस्तवासनाविलयादौत्सुक्यमात्रस्याप्यसंभवेन परमवैराग्यदशा सा वशीकरणसंज्ञा। ज्ञाननिष्ठाकाष्ठायोगाख्यमात्मावलोकनं साधयति तच्चावलोकनं परंपरया निर-तिशयपुरुषार्थभूतामृतत्वाय कल्पते" इति श्रीमत्तात्पर्यचन्द्रिकाया-मनुगृहीतमाचार्यैः। अत्र च द्वंद्वातीत इत्यनेन संकोचकाभावा-दैहिकामुष्मिकसकलफलविरक्तत्वद्योतकेन पर्वक्रमप्राप्ता चतुर्थी ज्ञा-ननिष्ठाकाष्ठा वशीकारावस्थैव सूच्यते। उक्तं च हैरण्यगर्भैः—"दृष्टानुश्रविकवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति॥ ऐहि-कामुष्मिकसकलफलविमुखस्य यस्तेषु फलेषु सवासनरागत्यागस्सा वशीकारसंज्ञेत्युच्यत इति तदर्थः। अत एव विवक्षितपुरुषस्य स

इति सर्वनाम्ना प्रसिद्धपरामर्शिना निर्देशः सत्यकामत्वोक्तिश्च अत्र सत्यशब्दः "सत्ति यमित्येतानि वाव तानि त्रीण्यक्षराण्यथ यत्सत्तद्मृतमथ यत्ति तन्मर्त्यमथ यद्यन्तेनोभे यच्छति" इति दहरविद्याश्रुतनिर्वचनान्मुक्तामुक्तनियन्तृत्वाचितया "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति गीतानिरुच्यमानपुरुषोत्तमशब्दसमानार्थकत्वेन परब्रह्मवाचकः—अत एव "सत्यं ज्ञानमनन्तं ब्रह्म; येनाक्षरं पुरुषं वेद सत्यम्" इत्यादौ ब्रह्म सत्यशब्देन निर्दिश्यते सत्यं परं ब्रह्म कामयत इति सत्यकामः परब्रह्मप्राप्तीच्छुः ज्ञाननिष्ठाकाष्ठामासाद्य परमात्मोपासननिरत इति भावः "शीलिकामिभिक्षाचरिभ्यो णः" इति कर्मण्यणोऽपवादो णप्रत्ययः॥ ईदृशोऽपि यस्यां मेखलायां निहितनयनो दृश्यत इति॥ अनेन वाङ्मनसागोचरः काञ्चीभूषणस्य मनोनयनहारिरामणीयकवैभव इति द्योत्यते॥ अत्र प्रस्तुताप्रस्तुतयोः काञ्चीनगरीमेखलयोर्यौगपद्येन वर्णनात्प्रकृताप्रकृतगोचरश्श्लेषालङ्कारः॥ "नानार्थसंश्रयश्श्लेषो वर्ण्यावर्ण्योभयाश्रयः" इति लक्षणात्॥ स च नानारत्नैरुपचितगुणामित्यादिशब्देषु परस्परविलक्षणपदभङ्गानपेक्षमेवानेकार्थक्रोडीकरणादभङ्गश्लेषः॥ यदीदृशप्रकृताप्रकृतश्लेषस्थले शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चः तत्प्रकृताप्रकृताभिधानमूलकस्योपमादेरलङ्कारस्य व्यङ्ग्यत्वाभिप्रायम्॥ अप्रकृतार्थस्यापि शब्दशक्त्या प्रतिपाद्यस्याभिधेयत्वावश्यंभावेन व्यक्त्यनपेक्षणात्॥ यद्यपि प्रकृतार्थे प्रकरणबलाज्झडिति बुद्धिस्थे

सत्येव पश्चान्मेखलादिवाचिकाञ्च्यादिपदानामन्योन्यसान्निध्यबलात्तत्तद्विषयकशक्त्यन्तरोन्मेषपूर्वकमप्रकृतार्थस्स्फुरेत् नैतावता तस्य व्यङ्ग्यत्वं शक्त्या प्रतिपाद्यमाने सर्वथैव व्यक्त्यनपेक्षणात् । पर्यवसिते प्रकृतार्थाभिधाने पश्चात् स्फुरतीति चेत्कामं भवतु गूढश्लेषः ॥ सभङ्गश्लेषश्शब्दालङ्कारः । अभङ्गश्लेषस्त्वर्थालङ्कार इति काव्यप्रकाशकृदादयः । उभयमपि शब्दालङ्कार इत्यन्ये उभयमप्यर्थालङ्कार इति दीक्षिताः एतत्प्रपञ्चस्तु तदीयग्रन्थेषु द्रष्टव्यः ॥ काञ्चीव काञ्चीत्यभिसन्धौ श्लिष्टरूपकमुक्तश्लेषानुप्राणितमित्यनयोरेकत्रैवाचार्यसंरम्भस्य नियन्तुमशक्यतया संदेहसङ्करः ॥ किञ्च—नगरीपक्षे नानारत्नैरित्यादिना समृद्धिमद्वस्तुवर्णनात्प्राथमिकमुदात्तं प्रणतार्तिहरस्य परस्य ब्रह्मणो नित्यसांनिध्यरूपचरितं काञ्च्युपलक्षणतया निबद्धमिति द्वैतीयीकमुदात्तमिति सजातीययोरनयोस्संसृष्टिः ॥ "उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षकम्" इत्युभयोरपि लक्षणं मेखलापक्षेऽप्येवमेवोदात्तद्वयं विभावनीयं निरुक्तोदात्तद्वयद्विकस्य चैकवाचकानुप्रवेशसङ्करः। अपिच नगरीपक्षे, भूमेरुचितविभवं भूषणमिति तस्यां भूषणत्वारोपाद्रूपकं तच्च निरवयवं मेखलापक्षे नित्यसङ्गीतनादामित्यत्र लुप्तो मा‍भेदः पक्षद्वयेऽपि भूमेरुचितविभवमित्यनुरूपवस्तुवर्णनात्मकस्समालङ्कार इत्येतेषां संसृष्टिः ॥ इयं च निरूपितश्लेषेण समृद्धिमद्वस्तुवर्णनात्मकप्राथमिकोदात्तेन चैकवाचकानुप्रवेशसङ्कीर्णा । नगरीपक्षे स पुरुष इत्यदृश्यतया प्रसिद्धस्य शास्त्रैकसमधिगम्यस्य सर्वान्तरात्मनः पुरुषस्य दृश्यत इति चक्षुर्विषयत्ववर्णनादेको विरोधाभासः ॥

"आभासत्वे विरोधस्य विरोधाभास इष्यते" इति लक्षणात् । अचक्षुश्रोत्रतया श्रुतिप्रसिद्धोऽपि यस्यां नित्यं निहितनयन इत्यपरो विरोधाभासः । इमौ च विरोधाभासौ भगवत आश्रितपरित्राणार्थेच्छापरिगृहीताभिमतार्चारूपदिव्यमङ्गळविग्रहत्वात्परिहार्यौ "न ते रूपं न चाकारो नायुधानि न चास्पदम् । तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे" इत्याद्यागमात् ॥ सर्वशरीरकोऽप्यखिलहेयप्रत्यनीकोऽनन्तकल्याणगुणनिधिरित्यपरो विरोधाभासः । अयं चोक्तरीत्या उभयलिङ्गश्रुत्या परिहार्यः एतेषामन्योन्यनैरपेक्ष्यात्संसृष्टिः । अस्याश्चोक्तश्लेषेण द्वैतीयीकोदात्तेन चैकवाचकानुप्रवेशसङ्कर इति दिक् ॥ द्वंद्वातीतोऽपि सत्यकामोऽपि यस्यां नित्यं निहितनयन इत्यनेन किमुत कामरक्त इति द्योतनात्काव्यार्थापत्त्यलङ्कारो व्यज्यत इति संक्षेपः ॥ २६ ॥

अथ काञ्चीदर्शनमात्रेण न तूष्णीमवस्थातव्यं किं तु समीपमेत्यावश्यं प्रणन्तव्यं "दृष्ट्वैव देवायतनं मूर्ध्नि बद्धाञ्जलिर्भवेत् । समीपमेत्य तस्याथ प्रणमेत्प्रीतिविह्वलः" इति स्मरणात् । अन्यथा "विष्णोरायतनं दृष्ट्वा समीपे न नमेत्तु यः । तस्य वृश्चन्ति मूर्धानं शतधा यमकिङ्कराः" इति स्मृतेः प्रत्यवेया एवेत्यभिप्रयन्नाह दाशरथिः—

**तामासीदन्प्रणम नगरीं भक्तिनम्रेण मूर्ध्ना**
**जातामादौ कृतयुगमुखे धातुरिच्छावशेन ।**

यद्वीथीनां करिगिरिपतेर्वाहवेगावधूतान्
धन्यान्रेणूंस्त्रिदशपतयो धारयन्त्युत्तमाङ्गैः॥ २७॥

आदौ पुरा कृतयुगस्य मुखे प्रारम्भे "मुखं प्रधाने प्रारम्भे" इति मेदिनी॥ अनेन "सृष्ट्वैतदखिलं ब्रह्मा जगत्स्थावरजङ्गमम्। आदौ कृतयुगे विष्णुं द्रष्टुकामो बभूव ह" इति हस्तिगिरिमाहात्म्योक्तं स्मारितम्। धातुः चतुर्मुखस्य इच्छावशेन सङ्कल्पाधीनतया सङ्कल्पमात्रेणैव न तु मणिकनकरजतादिबाह्यसामग्रीसंयोजनादिप्रयासेनेति भावः "त्रिष्वधीने वशो वाञ्छाप्रभुत्वाधीनतासु च" इति रत्नमाला। जातां उत्पन्नां यद्यपि ब्रह्माज्ञापरतन्त्रेण विश्वकर्मणा मनसा निर्मिता काञ्ची "त्रैलोक्यान्तर्गतास्सर्वे शतशोऽथ सहस्रशः। अत्रैवाद्यागमिष्यन्ति मम यज्ञदिदृक्षवः॥ त्वं तेषामपि सर्वेषां निर्मिमीश्वाः पुरं महत्" इत्युपक्रम्य "इति तद्वचनं श्रुत्वा प्रणिपत्य कृताञ्जलिः। तदाज्ञां प्रतिजग्राह विश्वकर्मा महामनाः॥ निर्ममे मनसैवाथ पुरं देवपुरं यथा" इति हस्तिगिरिमाहात्म्योक्तेः। तथाऽपि तत्रापि धातुरिच्छाया एव प्रयोजकत्वात्तथानिर्देशः॥ इच्छामात्रनिदानकत्वादेव जातामिति कर्तरिप्रत्ययेन निर्देशश्च॥ अनेन "तदप्रमेयाप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा" इत्युक्तरीत्या विश्वकर्मनिर्मितात्पुष्पकादपि "अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषदर्शनम्" इत्याद्युक्तमस्यास्तत्तच्छिल्पवैचित्र्यप्रतिभूमीति व्यज्यते। न हि मनःकल्पनीये वैचित्र्ये-

ऽस्ति नाम काचिदर्गळा ईदृशवैचित्र्यातिशयाभिव्यञ्जनार्थैवान्यत्रापि "मनसेव कृतां लङ्कां" इत्याद्युत्प्रेक्ष्यते त्वद्ब्राह्यचतुर्मुखेच्छाजातत-या तत्रात्यन्तमाननीयामिति भावः । तां पूर्वोद्दिष्टां नगरीं काञ्ची-नाम्नीं पुरीं आसीदन् प्राप्नुवन् सन् आङ्पूर्वकात्सदेश्शतरि "पा-घ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छ-धौशीयसीदाः" इति सीदादेशः । भक्त्या महनीयविषयकप्रीति-र्भक्तिः तया न चैषा "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इत्याद्युक्तविजातीयप्रत्ययाव्यवहितानवरतभावनात्मिका भक्तिः हंसस्य तिर्यक्त्वेन तत्रानधिकारात् । "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" इत्यादौ ब्रह्ममीमांसायां मनुष्याद्यधिकारिकत्वस्य स्थापितत्वाद्विद्यायाः किंतु "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इत्याद्युक्ता परमात्मगुणविग्रहादिष्वनुकूलताबुद्धिरूपा—"भज इत्येष धातुर्वै से-वायां परिकीर्तितः । सेवा तु प्रोच्यते सद्भिर्भक्तिशब्देन भूयसी ॥ सेवा चात्यन्तनीचत्ववृत्तिर्हि स्वामिनं प्रति" इत्युक्ता स्वामिनं प्रति नैच्यवृत्तिरूपा वा तया नम्रेण स्वयमेव प्रह्वेण न तु बलान्न-मितेन "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति नमतेः कर्तरि रप्रत्ययः ॥ अनेन भक्तेरुद्वेलत्वं द्योतितम् । मूर्ध्ना शिरसा न के-वलं वाङ्मात्रेण न च मनसा नापि "समस्तिष्कप्रणामस्स्याद-ञ्जलिं मस्तके न्यसेत् । प्रणामस्संपुटस्स स्याद्धृदयेऽञ्जलिमर्पयेत् ॥ प्रह्वाङ्गस्संपुटं कुर्यात्सा प्रह्वाङ्गनमस्क्रिया" इत्युक्तमस्तिष्कसंपुटादिमा-त्रेणेति भावः ॥ नमस्कारप्रकरणे च—"तद्यथा पुनरयं जातु

भ्यां पाणिभ्यां शिरसा च" इत्यारभ्य "इत्येवं नमति स सर्वैः करणैर्नमति" इत्युक्तं तादृशप्रणामश्चैवं प्रशस्यते। "सर्वैः करणैर्नमस्यन् समग्रो भवति समग्रो भवन्नाप्तकारी भवत्याप्तकारी भगवन्तं प्राप्नोति" इति। प्रणम स्वापकर्षबोधकेन प्रह्वीभावेन भजस्वेत्यर्थः। उत्कृष्टविषयस्वनिष्ठापकर्षबोधानुकूलव्यापारो हि नमस्कारः। "णमु प्रह्वत्वे" इति भौवादिकाद्धातोर्लोण्मध्यमपुरुषैकवचनम्, "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम्। मूर्ध्ना प्रणमेत्यनेन "पादाङ्गुळिभ्यां जानुभ्यां शिरसा चावनिं स्पृशन्। बद्धाञ्जलिर्नमस्कुर्यात्स पञ्चाङ्ग इतीरितः" इति श्रीवैखानसीयाद्युक्तचतुर्विधमूर्धप्रणामेषु यं कंचित्स्वशक्यं प्रणाममाचरेति सूच्यते॥ यद्वा—हंसस्याञ्जल्यादिरचनानुकूलकराद्यवयवाभावान्मूर्ध्नेत्येतावदेवोक्तं तावतैव "यथा तथावाऽपि सकृत्कृतोऽञ्जलिः" इति न्यायेन तत्कर्तृकप्रणामसाफल्यसंभवाच्छक्यस्यैव विधातुमुचितत्वाच्च शास्त्रमपि न हि नाम शास्त्यशक्यम्। ननु कथं चतुर्मुखोपवाह्येन मया भूमिष्ठैषा नगरी नमस्कार्येत्यत्राह—यदिति॥ [1]तृतीया यौवनाख्या

---

[1]तृतीया यौवनाख्या दशैव सदा येषामिति त्रिदशाः। 'रूपं बिभर्ति सौमित्रे पञ्चविंशतिवार्षिकम्' इति श्रीरामायणाद्युक्तेः। उत्पत्तिस्थितिनाशाख्यास्तिस्र एव दशा वयोऽवस्था येषां त इति वा त्रिदशाः—इति रसास्वादिनी। यत्तु—अत्र द्वितीयां व्युत्पत्तिं प्रदर्श्य तत्र प्रथमव्युत्पत्त्युपष्टम्भकतयोदाहृतप्रमाणस्योदाहरणम्—तन्न स्वोपदर्शितव्युत्पत्तौ स्वोदाहृतप्रमाणस्यानुगुण्यविरहात्॥

दशैव सदा येषामिति त्रिदशाः "रूपं बिभ्रति सौमित्रे पञ्च विंशतिवार्षिकम्" इति श्रीरामायणाद्युक्तेऽस्सर्वदाऽपि तेषां यौवनावस्थैवेति ध्येयम् । वृत्तिविषयेऽत्र पूरणप्रत्ययस्य लोपो द्रष्टव्यः तृतीयभागाविशिष्टेत्यर्थे त्रिभागशेषा रजनीत्यादिप्रयोगदर्शनात् ॥ उत्पत्तिस्थितिविनाशाख्यास्तिस्र एव दशा वयोऽवस्था येषां त इति वा त्रिदशाः तेषां पतयः सृष्ट्याद्यधिकृततया महीयांसश्चतुर्मुखादयोऽपि न तु तेष्वपि यः कश्चिदिति भावः । करिगिरिपतेः हस्तिशैलनेतुर्भगवतो देवाधिराजस्य वाहस्तुरङ्गः वाहनं गरुत्मानिति वा तदुत्सववैभवस्यैव तत्र सर्वातिशायित्वप्रसिद्धेः, तस्य वेगे नावधूतान् कम्पितान् न तु भगवच्चरणारविन्दव्यतिकरं तद्वाहचरणावमर्शं वा प्राप्तान् किं तु तद्वाहनवेगेन दूरतो निरस्तानिति भावः ॥ अत एव धन्यान् महाभाग्यवत इत्यर्थः "कृतकार्यमिदं दुर्गं वनं व्याळनिषेवितम् । यदध्यास्ते महाबाहू रामश्शस्त्रभृतां वरः ॥ आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च । येषु स्नास्यति काकुत्स्थो विगाह्य सलिलं शुचि" इत्यादौ रामसंसर्गप्रयुक्तं दुर्गादीनां भाग्यवत्त्वमिव "धन्या अहो अमी आळ्यो गोविन्दाङ्घ्र्यब्जरेणवः । यान्ब्रह्मेशादयो देवा दधुर्मूर्ध्न्यघनुत्तये" इति श्रीकृष्णचरणारविन्दव्यतिकरप्रयुक्तं बृन्दावनरेणूनां भाग्यवत्त्वमिव च यद्वीथीरेणूनां देवाधिराजवाहनावधूतत्वेन भाग्यवत्त्वमिति भावः ॥ धन्या इति प्रथमान्तपाठे त्रिदशपतय इत्यस्य विशेषणं तदा "धन्याः पश्यन्ति मे नाथं कृतज्ञं श्रियवादि-

नम् । धन्या द्रक्ष्यन्ति रामस्य ताराधिपनिभं मुखम्" इत्यादा-विव तादृशरेणुशिरोधारणौपयिकमहाभाग्यभाज इति भावः । धनं लब्धारो धन्याः "धनगणं लब्धा" इति यत् । भाविनीं ध-न्यतामभिसंधाय वा धन्या इत्युक्तिः । यस्याः काञ्च्याः वीथ्यः पद्व्यः प्रतोल्य इति यावत् "वीथी पङ्क्तौ गृहाङ्गे च रूप कान्तरवर्त्मनोः" इति मेदिनी । "वीथी पङ्क्तावश्वगतौ नाट्यभेदे गृहाङ्गणे" इत्यमरशेषः । "वीथी गृहाङ्गे पङ्क्तौ च नाट्यरू पकवर्त्मनोः" इति विश्वः । "वीथी पद्व्यपि" इत्यमरश्च । तव-र्गद्वितीयान्तोऽयं न तु तच्चतुर्थान्तः कोशेषु तवर्गद्वितीयान्तेष्वेव पाठात् ॥ अत एव "विथ्यतेऽनया—'विथृ याचने' घञ् पृषोदरादिर्गौरादिश्च" इत्यमरसुधाग्रन्थश्च संगच्छते ॥ रेणून् पां-सून् । न तु पटवासकादिकमिति भावः । अनेनातिक्षोदीयस्त्वं सूचितं "रेणुर्द्वयोः स्त्रियां धूळिः" इत्यमरः ॥ उत्तमाङ्गैः शिरोभिः न तु ततोऽधस्तनैरंसादिभिरङ्गैः "उत्तमाङ्गं शिरश्शीर्षं" इत्यमरः ॥ धारय न्ति वहन्ति । "धृञ् धारणे" इत्यस्माद्धातोर्भौवादिकात्स्वार्थे निवृत्त-प्रेषणाद्धेतुमति वा णिच् ॥ स्वमहीयस्त्वं रेणूनां लघीयस्त्वं चानालोच्य देवाधिराजवाहवेगविधूननप्राप्तधन्यतातिशयवत्तया तान् स्वयमपि धन्या बुभूषवो भक्त्यतिशयेन शेषाफ्याद्विच्छेखरीकुर्वन्तीति भावः ॥ वर्त-माननिर्देशेन न कदाचिदप्यनादरेण तानवधूनयन्तीति द्योत्यते । तस्मात्त्वया साऽवश्यं प्रणन्तव्या तेन "तस्य वज्रकराहस्य वि-ष्णोरमिततेजसः । प्रणामं येऽपि कुर्वन्ति तेषामपि नमोनमः"

इत्युक्तक्रमेण तवापि सर्वजनवन्दनीयत्वं स्यादिति भाव ॥ [1]अत्र धन्यानित्यस्य धन्या इत्यस्य वा विशेषणगत्या रेणूनामुत्तमाङ्गधारण-हेतुत्वादेकं काव्यलिङ्गम्। त्रिदशपतिकर्तृकभगवद्वाहवेगावधूतकाञ्चीनगरवीथीरेणुशिरोधारणरूपवाक्यार्थेन तन्नगरकर्मकमूर्धप्रणामानुशासन-रूपवाक्यार्थस्य समर्थितत्वादन्यच्च काव्यलिङ्गमुक्तकाव्यलिङ्गोज्जीवितमिति सङ्करः ॥ उक्तविधरेणुशिरोधारणरूपमहापुरुषचरितस्य वर्णनीयकाञ्चीनगरोपलक्षकत्वादुदात्तभेद इत्यनयोरेकवाचकानुप्रवेशसङ्करः॥ काञ्चीनगरविषयकत्रिदशपतिगतभावस्य श्रीरामगततन्नगरीविषयकभावं प्रत्यङ्गत्वात्प्रेयोऽपराङ्गव्यङ्ग्यम्। रामगततादृशभावस्य चाचार्यगततादृशभावं प्रत्यङ्गत्वादन्यच्चापराङ्गव्यङ्ग्यमिति संक्षेपः ॥ २७ ॥

---

[1]अत्र धन्यानित्यस्य धन्या इत्यस्य वा विशेषणगत्या रेणूनामुत्तमाङ्ग-धारणं प्रति हेतुत्वादेकं काव्यलिङ्गम् । त्रिदशपतिकर्तृकभगवद्वाहवेगावधूतकाञ्चीनगरीवीथीरेणुशिरोधारणरूपवाक्यार्थेन तन्नगरकर्मकमूर्धप्रणामानुशासनरूपवाक्यार्थस्य समर्थितत्वादन्यच्च काव्यलिङ्गमुक्तकाव्यलिङ्गोज्जीवितमिति सङ्करः इति रसास्वादिनी । यत्तु—त्रिदशपतय इति विशेष्यस्य सर्वोत्कृष्टा अपि धारयन्तीत्यभिप्रायकतया परिकराङ्कुर इत्यलङ्कारान्तरस्यापि वर्णनम्—तन्न धारयन्तीत्यस्य वाच्यतया व्यङ्ग्यकोटिप्रवेशस्यायुक्तत्वात् । सर्वोत्कृष्टत्वस्य त्रिदशपतिपदव्यङ्ग्यत्वेऽपि तस्य धारणरूपप्रकृतवाक्यार्थानुपपादकतया परिकराङ्कुरावतारासम्भवाच्च । एतेनैव—उत्तमाङ्गैरित्यत्राप्युत्कृष्टैरङ्गैरित्यभिप्रायकतया परिकराङ्कुरः इत्यप्यसंबद्धं वेदितव्यम् । उत्कृष्टत्वस्य तद्विशिष्टाङ्गानां वा वाच्यकक्ष्यापन्नत्वात् धारणरूपप्रकृतार्थानुपपादकत्वाच्च ॥ २७ ॥

अथ "शिवस्सर्वेषु कालेषु काननेभ्यो विनिस्सृतः । राघवं युक्तशीतोष्णस्सेविष्यति सुखोऽनिलः" इत्युक्तरीत्या मामिव मत्प्रियसखं काञ्चीनगरप्रणाममहाभाग्यलाभधन्यं त्वामपि तत्र गतं परिचरिष्यति मन्दानिलस्तत्रत्य इत्याह—

**मन्दाधूतात्तदनु महितो निस्सृतश्चूतषण्डात्**
**पार्श्वे तस्याः पशुपतिशिरश्चन्द्रनीहारवाही ।**
**दूरात्प्राप्तं प्रियसखमिव त्वामुपैष्यत्यवश्यं**
**कम्पापाथःकमलवनिकाकामुको गन्धवाहः॥**

तदनु काञ्चीप्रणमनानन्तरं तस्याः काञ्च्याः पार्श्वे पक्षभागे [1]मन्दं शनैः आधूतात् ईषत्कम्पितात् चूतानां आम्रतरूणां "आम्रश्चूतः" इत्यमरः ॥ षण्डं कदम्बं तस्मात् "अब्जादिकदम्बे षण्डमस्त्रियाम्" इत्यमरः ॥ निस्सृतः निर्गतः अनेन मारुतस्य मान्द्यं सूचितम् ॥ पशुपतेः तत्रत्यस्यैकाम्रेश्वरस्य शिरसि यश्चन्द्रः तस्य नीहारोऽवश्यायः "अवश्यायस्तु नीहारः" इत्यमरः ॥ तं

[1] मन्दं शनैः आधूतात् ईषत्कंपितात् इति रसास्वादिनी ॥ यत्तु—आधूतात् समन्तात्कंपितादिति व्याख्यानम्—तन्न. रसालवने आङा धूननाभिव्याप्तेर्विवक्षितत्वे तस्या महावातैकसाध्यतया "अनेन मान्द्यं विवक्षितम्" इति स्वेनापि विवक्षितमारुतमान्द्यप्रतीतिभङ्गप्रसङ्गात् । तस्मादाङोऽत्र ईषदर्थकत्वमेव युक्तमाचार्योपदर्शितम् । मन्दमित्यनेन च विरळक्रमवाहित्वरूप मान्द्यं विवक्षितं यदेव शनैरित्यनेन विवृतमाचार्यैरिति ध्येयम् ॥ २८ ॥

वहतीति नीहारवाही ताच्छील्ये णिनिः "बहुलमाभीक्ष्ण्ये" इति वा णिनिः तदा असकृत्पशुपतिशिरश्चन्द्रनीहारवाहीत्यर्थः अनेन शैत्यातिशयस्सूचितः । कम्पा कम्पाख्या सप्तधाभूताया वेगवत्या अवान्तरझरी एतच्चाग्रिमश्लोके व्यक्तीभविष्यति । तस्याः पाथः अम्भः "कबन्धमुदकं पाथः" इत्यमरः ॥ तस्मिन् या कमलवनिका पद्मवनी तस्याः कामुकः तदनुबन्धीति यावत् । कमलवनिकायाः पाथस्संबन्धकण्ठोक्तेस्तद्गतानां कमलानामम्लानत्वसौरभ्यनिर्भरत्वभोग्यत्वादिकं व्यज्यते । न हि सलिलादुद्धृतानां पद्मानामम्लानतादिकं सलिलगतानामिव सुलभं भवति । कामुकशब्दसमभिव्याहारवशात्कमलवनिकायामुत्तमनायिकात्वं प्रतीयते । अनेन मारुतस्य सौरभ्यं सूचितं अत एव गन्धवाह इति विशेष्यनिर्देशोऽपि स्वारसिकः महितः एवंविधमान्द्यशैशिर्यसौरभ्यनिर्भरतयाऽनारतमखिलजगदभिनन्दनीय इति भावः ॥ "मतिबुद्धि" इत्यादिना वर्तमाने क्तः । गन्धं वहतीति गन्धवाहः मारुतः कर्मण्यण् । दूरात् विप्रकृष्टप्रदेशात् प्राप्तं समीपमुपनतं दूरात्प्राप्तमित्यनेन आसन्नवर्तिनि सख्यौ कदाचिदादरो मन्दरोऽपि नातीव दोषाय पुनःपुनस्तस्याद्रियमाणत्वात् विप्रकृष्टदेशवर्तिनि तु कार्यवशात्प्रत्यासन्ने कथंचिदप्यौदास्यं तदादरपौनःपुन्यासंभवेनाप्रतिसमाधेयं वैरस्यमावहतीत्यतस्तस्मिन्न कदाचिदप्यनादरः कार्य इति व्यज्यते ॥ प्रियश्चासौ सखा च प्रियसखः "राजाहस्सखिभ्यः" इति समासान्तष्टच् । त्वमिव न तु यंकंचित्सखिब्रुवमिव किंतु

परमप्रेमास्पदं सखायमिवेति भावः । अवश्यसत्कार्यत्वे सखित्वमेकमेव पर्याप्तं निमित्तं तत्रापि तस्य प्रियत्वे किमु वक्तव्यं तत्रापि दूरात्प्राप्तत्वे किमुतरामिति भावः ॥ त्वां दूरात्प्राप्तं त्वां अवश्यमुपैष्यति नियमेन समीपमेत्य सभाजयिष्यति ॥ "काननं वाऽपि शैलं वा यं रामोऽभिगमिष्यति । प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम्" इत्युक्तरीत्या काननादयो मामिव तत्रत्यो मारुतस्त्वामपि मम हिते प्रवृत्तमभ्यागतमनभ्यर्च्यावस्थातुं न क्षमेतेति भावः ॥ अत्र वर्णनीये गन्धवाहे चूतषण्डान्निस्सृतः पशुपतिशिरश्चन्द्रनीहारवाही कम्पापाथःकमलवनिकाकामुकः महित इति विशेषणैः क्रमेण दूराद्भ्यागतप्रियसखसच्चिकीर्षासक्ततया स्वभवनात्प्रत्युद्गतस्य सज्जीकृतार्घ्यपाद्याचमनीयाद्यर्हणसाधनस्य सकळत्रस्य सर्वलोकमाननीयस्य कस्यचित्कुटुम्बिनो वृत्तान्तः प्रतीयत इति सारूप्यनिबन्धना समासोक्तिः प्रियसखमिवेत्युपमोपस्कृतेति सङ्करः ॥ तकारपकारादिव्यञ्जनपुनरुक्तेर्वृत्त्यनुप्रासश्चेत्यनयोरेकवाचकानुप्रवेशसङ्करः ॥ अनेन काञ्चीप्रदेशस्यातिभोग्यतारूपवस्तु व्यज्यते ॥ २८ ॥

न केवलं चतुर्मुखेच्छावशेन जातत्वादेव तव माननीया काञ्ची किं तु तत्र तत्प्रेयसीनित्यसंनिधानादपीत्याह—

**वर्णस्तोमैरिव परिणता सप्तभेदैर्महौघैः**
**मान्या मध्येनगरमभितस्सेविता देवताभिः ।**

स्वच्छस्वादुप्रसरसुभगा स्वामिनी वः कवीनां
वेगासंज्ञां वहति महतीं वल्लभा पद्मयोनेः॥

कवीनां जलचरविहगानां "कं वारिणि च मूर्धनि, विष्किरपतत्रयः" इति चामरः। काव्यकृतां च स्वामिनी ईशित्री "स्वामिन्नैश्वर्ये" इति निपातनात्स्वशब्दान्मत्वर्थीय आमिनच् नान्तलक्षणो ङीप्। नदीरूपेण परिणतत्वेन वागधिदेवतात्वेन च जलचरशकुन्तानां काव्यकृतां चेशित्रीत्यर्थः॥ पद्मयोनेः ब्रह्मणः वल्लभा दयिता सरस्वतीत्यर्थः॥ वर्णानां अकारादीनां स्तोमैस्समूहैरिव सप्त भेदाः प्रकाराः येषां तथोक्तैः अकारमारभ्य अः, इत्यन्तमेकस्स्तोमः, कचटतपवर्गाः पञ्च स्तोमाः, यकारादिळकारान्त एकस्स्तोम इति वर्णानां स्तोमास्सप्त सार्वलौकिकाः॥ एवं सप्तप्रकारैः महौघैः महाप्रवाहैः "ओघो बृन्देऽम्भसां रये" इत्यमरः॥ सरस्वतीप्रवाहाणां सप्तप्रकारत्वं तु शुक्तिकादिरूपेण तदुक्तं हस्तिगिरिमाहात्म्ये—"ततो विकीर्णा बहुधा प्रययौ सागरं प्रति। दक्षिणोत्तरभागाच्च पूर्वभागात्ततो हरेः॥ विष्णोरुत्तरभागेन प्रययौ सागरं प्रति। शुक्तिका कनका सुप्रा कम्पा पेया च मञ्जुला॥ चण्डवेगेति सप्तैताः कीर्तितास्सप्तनामभिः। विष्णोर्दक्षिणभागेन प्रययौ सागरं प्रति॥ तस्या वेगवतीत्याख्या बभूव भुवनत्रये" इति॥ परिणता परिणामं प्राप्ता रूपान्तरं प्राप्तेत्यर्थः॥ यथा वागधिदेवतात्वावस्थायां वर्णस्तोमैस्सप्तभेदैः परिणता तथा नदीत्वावस्था-

यामपि सप्तभेदैः प्रवाहैः परिणतेति भावः ॥ नगरस्य मध्ये मध्येनगरं "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः । काञ्ची नगरमध्य इत्यर्थः ॥ मान्या माननीया अनुपाधिकनिर्देशेन सर्व लोकमान्येति ध्वन्यते ॥ अभितः उभयतः पार्श्वद्वयेऽपीत्यर्थः ॥ अभिशब्दात् "पर्यभिभ्यां च" इति तसिल् । स च "सर्वोभयार्थाभ्यामेव" इति नियमादुभयार्थकादेवाभिशब्दादिति ध्येयम् । देवताभिः अर्चात्मनाऽविर्भूताभिः परदेवताभिः सेविता आश्रिता "वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिस्स्वयम् । वरदस्सर्वभूतानामद्यापि परिदृश्यते ॥ श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम् । कामादधिवसन् जीयात्कश्चिदद्भुतकेसरी" इत्याद्युक्तरीत्या पार्श्वद्वयामपि भगवदर्चाभिस्सेवितेति भावः । यद्वा—मान्या मध्येनगरमभितो देवताभिस्सेवितेति योजना "अभितः देवताभिर्ब्रह्मादिदेवताभिस्सेविता" इति व्याख्यानं तु नातीव हृद्यं स्वच्छः निर्मलः स्वादुः रुच्यश्च प्रसरः प्रवाहः—तेन सुभगा मनोहरा च सती अनेन "स्वच्छं लघु च रुच्यं च पथ्यमाहुर्जलं बुधाः" इत्युक्तरीत्या तदीयजलगुणसमृद्धिस्सूच्यते मुरारिमिश्रोऽप्याह "जडस्वच्छस्वादुप्रकृतिरुपहूतेन्द्रियगणो गुणो यद्यप्यासामयमयुतसिद्धो विजयते" इति ॥ महतीं पूज्यां वेगा वेगवतीति संज्ञां आख्यां वहति प्राप्नोति उपमानुप्रासौ संसृज्येते ॥ २९ ॥

अथ तत्र स्नानादिना परां शुद्धिं प्राप्स्यसीत्याह—

**तीर्थे पुंसां शमितकलुषे तत्र सारस्वताख्ये**

**स्नात्वा सार्धं मुनिभिरनघैस्सम्यगुल्लासिताङ्गः ।**
**विश्वं चित्ते विगतरजसि व्यञ्जयन्तीमशेषं**
**वक्ष्यस्यन्तर्बहिरपि परां शुद्धिमक्षेपणीयाम् ॥३०॥**

तत्र वेगवत्यां पुंसां आप्लवतां पुरुषाणां शमितं परास्तं कलुषं वृजिनं येन तस्मिंस्तथोक्ते गमकत्वात्समास इत्यवोचाम । पुंसामिति सामान्यतो निर्देशेन वर्णाश्रमादिविभागानादरेण सर्वेषां पावनत्वं द्योत्यते सरस्वत्या इदं सारस्वतं सारस्वतमित्याख्या यस्य तथोक्ते तीर्थे ऋषिजुष्टजले "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः ॥ अत्र "ततस्तस्याग्रतो विष्णोर्यत्रोत्तस्थौ सरस्वती । विशुद्धगात्री तन्वङ्गी योषिद्रूपा यशस्विनी ॥ तत्र स्थित्वा जगन्नाथं प्रणिपत्य सरस्वती । संस्तुत्य विविधैस्स्तोत्रैस्स्वयमन्तर्दधे पुनः ॥ तत्तीर्थमभवत्पुण्यं महापातकनाशनम् । कुण्डतीर्थमिति ख्यातं पावनं केशवप्रियम् ॥ तत्र कुर्वन्ति ये स्नानं न ते यान्ति पुनर्भवम्" इत्येतदनुसन्धेयम् । अत्र कुण्डतीर्थमिति सारस्वततीर्थस्यैव नामान्तरमित्याहुः । अनघैः निर्दोषैः मुनिभिः निदिध्यासारूपविद्यावाप्तये परब्रह्ममननशीलैः "मनेरुच्च" इत्यौणादिक इन्प्रत्ययः, कित् । तत्रत्यैः ऋषिभिः "मननं चोपासनालम्बनस्य पुनःपुनस्संशीलनम्" इति सहकार्यन्तरविध्यधिकरणे "बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र भाषितं सार्धं साकं स्नात्वा आप्लुत्य मुनिभिस्सह स्नात्वेत्यनेन "सेव्याश्श्रेयोऽर्थिभिस्सन्तः पुण्यतीर्थफ-

लोपमाः । क्षणोपासनयोगोऽपि न तेषां निष्फलो भवेत् ॥ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः । कालेन फलते तीर्थं सद्यस्साधुसमागमः'' इत्युक्तरीत्या तथाविधतीर्थस्नानस्य पावनत्वमाम्रेडितमिति द्योत्यते ''भवद्विधा भागवतास्तीर्थभूतास्स्वयं प्रभो । तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता'' इत्यादिकमपीहानुसन्धेयं ''सद्भिरेव सहासीत सद्भिः कुर्वीत संगमम् । सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत्'' इत्याद्युक्तरीत्या सर्वसमृद्धिनिदानभूतस्सत्सङ्गस्तत्रावश्यं त्वया कर्तव्य इत्यपि व्यज्यते ॥ सम्यक् उल्लासिताङ्गः तीर्थस्नानेनोल्लासं प्रापितान्यङ्गानि यस्य स तथोक्तः ॥ यद्वा—मुनिभिरित्येतन्मध्यमणिन्यायादुत्तरत्राप्यन्वेति ॥ मुनिभिः त्वया सह स्नातैस्तैरेव मुनिभिः सम्यक् साधु यथा तथा—उल्लासितानि सादरपरिमार्जनादिना प्रहर्षितानि विकलुषितानि चाङ्गानि यस्य स तथोक्तः ॥ ''संभाषा दर्शनं स्पर्शस्स्मरणं कीर्तनं नतिः । पावनानि किलैतानि साधूनामिति शुश्रुम'' इति च्यवननहुषसंवादोक्तरीत्या महामुनिकरस्पर्शादिविधूतपाप्मेति भावः । विगतं रजः रजोगुणो यस्मात्तथोक्तेरजस्तमोगन्धविधुर इति यावत् । चित्ते मनसि अशेषं कृत्स्नं विश्वं प्रपञ्चं व्यञ्जयन्तीं प्रकाशयन्तीं ''सत्वात्संजायते ज्ञानम्'' इत्युक्तरीत्या सर्वविषयसाक्षात्कारकारणज्ञानसंपादयित्रीमित्यर्थः । परां निरतिशयां अक्षेपणीयां निमित्तान्तरेणानभिभवनीयां शुद्धिं नैर्मल्यं ''तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्'' इत्युक्तसत्त्वगुणसमृद्धिसंपादितं वैशद्यमिति यावत् । अन्तः

बहिरपि वक्ष्यसि प्राप्स्यसि बहिश्शुद्धिस्तु निर्मलतीर्थावगाहनवि-
रजीकृताङ्गत्वं "वह प्रापणे" लृटि स्यप्रत्यये "हो ढः" इति
ढत्वे "षढोः कस्सि" इति कत्वे "इण्कोः" इति षत्वम् । तीर्थस्नान-
मुनिकरस्पर्शादिभिस्तव लोकोत्तरज्ञाननैर्मल्यसंपत्तिर्भविष्यतीत्यभिप्रायः॥
अत्र शमितकलुषे इति तीर्थविशेषणस्योक्तविधशुद्धिप्राप्त्यभिप्रायग-
र्भत्वात्परिकरः । एवंविधतीर्थे मुनिजनैस्साकं स्नानस्य तदुल्लासि-
ताङ्गत्वस्य चोक्तविधशुद्धिप्राप्तिहेतुत्वात्काव्यलिङ्गभेदः । अनिवृत्ते क-
र्मकृतदेहबन्धे अशेषप्रपञ्चसाक्षात्कारकारणशुद्धेरसंबन्धेऽपि तत्संब-
न्धोक्तेरतिशयोक्तिः सकारादिव्यञ्जनपुनरावृत्तेर्वृत्त्यनुप्रासश्च । किं च—
शमितकलुषे तीर्थे स्नात्वेत्यनेन "स आगच्छति विरजां तां
मनसात्येति तत्सुकृतदुष्कृते धूनुतः" इति श्रुत्युक्तरीत्या विर-
जानदीस्नानपूर्वकसर्वपापावधूननस्य मुनिभिस्सार्धमित्यनेन तत्र मुक्ता-
न्तरसमागमस्य सम्यगुल्लासिताङ्ग इत्यनेन अमानवकरस्पर्शावधूतनि-
खिलवासनत्वस्य "तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाह-
स्ताश्शतमाञ्जनहस्ताश्शतं चूर्णहस्ताश्शतं वासोहस्ताश्शतं फणहस्तास्तं
ब्रह्मालङ्कारेणालङ्कुर्वन्ति स ब्रह्मालङ्कारेणालङ्कृतो ब्रह्मविद्वान्ब्रह्मैवाभिप्रै-
ति" इति कौषीतकिश्रुत्युक्तरीत्या ब्रह्मालङ्कारालङ्कृतत्वस्य च वि-
गतरजसि चित्ते अशेषं विश्वं व्यञ्जयन्तीमन्तर्बहिरप्यक्षेपणीयां परां
शुद्धिं वक्ष्यसीत्यनेन "मनसैतान्कामान्पश्यन्रमते य एते ब्रह्म-
लोके । मनोऽस्य दिव्यं चक्षुः सर्वꣳ ह पश्यः पश्यति सर्वमाप्नो-
ति सर्वशः स चानन्त्याय कल्पते" इति श्रुतिप्रतिपन्नसर्वविष-

यसाक्षात्कारौपयिकसकलसांसारिककर्मसंबन्धनिबन्धननिखिलसंकोचनि - वृत्तिरूपायाः "अपहतपाप्मा विजरो विमृत्युः" इत्यादिप्रजापतिवाक्योदितापहतपाप्मत्वादिरूपायाश्चान्तश्शुद्धेरनितरास्कन्दनीयायाः दिव्यदेहस्याप्राकृतशुद्धसत्त्वमयत्वेन बहिश्शुद्धेश्च प्रतीतेर्वर्णनीये राजहंसवृत्तान्ते सारूप्यान्मुक्तपुरुषवृत्तान्तः प्रतीयत इति समासोक्तिरिति सर्वेषामेकवाचकानुप्रवेशसङ्करः ॥ अत्र "ततोऽमानवमासाद्य" इत्यादिप्रमाणसिद्धवैद्युतव्यतिरिक्तविरजातीरवर्त्यमानवकरस्पर्शादारभ्य प्रकृतिसंबन्धरूपप्रतिबन्धकनिवृत्तिः ॥ न तु वैद्युतपुरुषात्मकामानवकरस्पर्शादिति मन्तव्यम् 'गत्वाऽथो विरजां विमुञ्चति तनुं सूक्ष्मां ततोऽमानवस्पर्शात्क्षाळितवासनास्सुकृतिनो गच्छन्ति विष्णोः पदम्" इत्यभियुक्तोक्तेरिति हि केचिदूचुः ॥ केचित्तु अमानवद्वयसद्भावे प्रमाणाभावादातिवाहिकस्यैवामानवस्य विरजातरणानन्तरभाविपवित्रकरस्पर्शाद्वासनानिरसनमित्याहुः । स्पष्टं चेद न्यायसिद्धाञ्जनव्याख्यानादौ॥ उक्तसमासोक्त्या सारस्वततीर्थस्य विरजौपम्यं प्रतीयत इत्यलङ्कारेणालङ्कारध्वनिः ॥ "तत्र कुर्वन्ति ये स्नानं न ते यान्ति पुनर्भवम्" इत्युदाहृतप्रमाणानुरोधेन तत्तीर्थमहिमातिशयमात्रवर्णनाभिसन्धौ तु परम्परया तत्तीर्थस्नानस्यापि मोक्षकारणत्वात्त्वमपि तत्र स्नानेन मुक्तैश्वर्यं प्राप्स्यसीत्यर्थोऽनुसन्धेयः। अस्मिन्पक्षे यथाश्रुतार्थवर्णनमात्रपर्यवसितत्वान्न समासोक्तिरिति विशेषः इतोऽपि समासोक्तिवर्णनमेव स्वारसिकम् । नन्वेतदयुक्तं यन्मुक्तस्याप्राकृतशुद्धसत्त्वमयविग्रहवत्त्ववर्णनं "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वा वसन्तं न

प्रियाप्रिये स्पृशत" इति शरीरसम्बन्धे दुःखस्यावर्जनीयत्वमभिधाय "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्याशरीरत्वश्रवणादिति चेत् इदं तावदनधिगतशारीरकशास्त्रस्य तावन्मात्रवेदान्तवाक्यं श्रुतवतश्चोद्यम्—मुक्तानामैच्छिकदिव्यशरीरसद्भावस्य तत्र फललक्षणे अभावाद्धिकरणे स्थापितत्वात् तत्र हि किं मुक्तस्य शरीरेन्द्रियादिकमस्ति उत न अथ यथासङ्कल्पमस्ति च नेति चेति संशय्य "अभावं बादरिराह ह्येवम्" इति सूत्रेण शरीरस्य दुःखहेतुत्वान्मुक्तस्य शरीरं नेति बादरिमतमनूद्य "भावं जैमिनिर्विकल्पामननात्" इति सूत्रेण "स एकधा भवति" इत्यादिषु मुक्तस्यानेकधाभावश्रवणादच्छेद्यस्य निरवयवस्य शरीरेण विनाऽनेकीभावानुपपत्तेः कर्मकृतशरीरस्यैव दुःखहेतुत्वाच्च सशरीर एवायमिति जैमिनिमतेन प्रतिक्षिप्य "द्वादशाहवदुभयविधं बादरायणोऽतः" इति सूत्रेण सत्यसंकल्पत्वश्रुत्या इच्छाऽनुरोधेन कदाचित्सशरीरः अशरीरश्च कदाचिदिति स्वमतोपन्यासपूर्वकं भगवता बादरायणेन सिद्धान्तितं विस्तरस्तु श्रीभद्भाष्ये तस्मान्मुक्तस्यापि दिव्यशरीरेन्द्रियसद्भावे न काऽप्यनुपपत्तिः ॥

ननु न केवलं चतुर्मुखेच्छासिद्धत्वसरस्वतीसांनिध्याभ्यामेव तस्याः पूजनीयत्वं किंतु तत्र भगवदापरोक्ष्यचिकीर्षुणा ब्रह्मणाऽश्वमेधस्यानुष्ठितत्वेनापीत्यभिप्रयन्नाह—

**तस्यास्तीरे सरसिजभुवस्सौम्य वैतानवेदिः**
**दिव्यं कुर्वन् द्रमिडविषयं दृश्यते हस्तिशैलः ।**

**यस्योपान्ते कृतवसतयो यापयित्वा शरीरं**
**वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥३१**

हे सौम्य! मनोहरदर्शन! "सौम्ये ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते" इति मेदिनी। एतच्च संबोधनं सत्यामपि गमनत्वरायां तत्र दिव्यत्वाद्धस्तिशैलसंनिवेशस्य तत्सेवने सावधानेनैव भाव्यं अतस्तत्र किंचित्त्वराशैथिल्यं भविष्यतीति मा व्यग्रीभूरिति सान्त्वनाय तस्याः वेगवत्याः तीरे उत्तरतीरे—"वेगवत्युत्तरे तीरे" इत्युक्तेः सरसि जातमिति सरसिजं "सप्तम्यां जनेर्डः" इति डप्रत्ययः ॥ "हलदन्तात्सप्तम्याः" "तत्पुरुषे कृति बहुलम्" इति वा अलुक् । सरसिजे भवतीति सरसिजभूः तस्य ब्रह्मण इत्यर्थः ॥ वितानोऽध्वरः तस्येयं वैतानी वैतानी च सा वेदिश्च वैतानवेदिः "पुंवत्कर्मधारय" इति पुंवद्भावः । "क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके । वेदिः परिष्कृता भूमिः" इति चामरः "नागाद्रिं परिसंतक्ष्य निम्नोन्नतविवर्जितम् । तच्छृङ्गं च समीकृत्य चकारोत्तरवेदिकाम्" इत्युक्तेर्ब्रह्माध्वरवेदीभूत इत्यर्थः ॥ हस्तिशैलः करिगिरिः द्रमिड इति विषयो देशः । तं "देशविषयौ तूपवर्तनम्" इत्यमरः ॥ दिव्यं कुर्वन् दिवि भवो दिव्यः "द्युप्रागपागुदक्प्रतीचो यत्" इति भवार्थे यत्प्रत्ययः । परमव्योमप्रदेशतुल्यं वितन्वन्निति यावत् ॥ 'यत्राभिव्यक्तिमापन्नो भगवान्भूतभावनः । दिव्यो देशस्स विज्ञेयो नात्र कार्या विचारणा" इति भगवच्छास्त्रो-

25

क्तरीत्या स्वस्य भगवदभिव्यक्तिस्थानभूतत्वेन दिव्यत्वात्स्वाश्रितं द्रमिडदेशमपि दिव्यं कुर्वन्निति भावः ॥ दृश्यते चक्षुर्ग्राह्यो भवति ॥ तं विशिनष्टि ॥ यस्येति—यस्य हस्तिगिरेः उपान्ते अन्तिके न तु हस्तिगिरौ कृतवसतयः कदाचित् रचितनिकेता अपि क्लृप्तनिवासा अपि वा वसन्त्यस्यामिति वसतिर्वेश्म "वस निवासे" "अमेरतिः" इत्यतोऽतिरित्यनुवर्तमाने "वहिवस्यर्तिभ्यश्च" इत्यौणादिकोऽतिप्रत्ययः ॥ यद्वा—भावे अतिप्रत्ययः न तु क्तिन् तथासत्युष्टिरिति रूपं स्यात् ॥ अत एव "वसतिस्स्यात् स्त्रीयां वासे यामिन्यां च निकेतने। वसतिस्स्यादवस्थाने यामिन्यां च निकेतने। वसतिः स्थाननिशयोर्जन्मवेश्मनि वेश्मनि" इति मेदिनीविश्वरत्नमालाकोशास्संगच्छन्ते ॥ एतेन "वसती रात्रिवेश्मनोः" इत्येतावन्मात्रकोशावलोकनेन वसतिशब्दस्य वासार्थकत्वं नैवेति केषांचिदभिनिवेशो निरालम्बन इति ध्येयम् ॥ धन्याः कृतार्थाः "श्रीरङ्गोपवनतटीषु वर्तिषीय" इत्याद्युक्तरीत्या तत्सदेशनिवास एवालंधन्यत्वलाभायेति भावः ॥ विशेष्यानिर्देशान्न केवलं सुकृतिन एव वक्ष्यमाणातिशयभाजः किंतु यादृशास्तादृशा वा भवन्तु तेऽपि तन्निवासमात्रेण तादृशातिशयभाजो भवन्त्येवेति व्यज्यते ॥ शरीरं वपुः यापयित्वा क्षपयित्वा वितमसि विगतं तमो यस्माद्यस्मिन्निति वा वितमः—तथोक्तं "यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्। आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतेः। तमश्शब्दोऽत्र मूलप्रकृतिपरः "क्षयन्तमस्य रजसः पराके" इत्यनेन तुल्यार्थकत्वात्। तमो-

गुणकत्वात्तमश्शब्देन निर्देशः। प्रकृतिप्राकृतसंबन्धगन्धविधुर इत्यर्थः॥ तदेतदनुगृहीतं वेदार्थसंग्रहे भगवद्भाष्यकारैः—"क्षयन्तमस्य रजसः पराके इति रजश्शब्देनात्र त्रिगुणात्मिका प्रकृतिरुच्यते। केवलं रजसोऽनवस्थानात्। इमां त्रिगुणात्मिकां प्रकृतिमतिक्रम्य स्थिते स्थाने वसन्तमित्यर्थः॥ अनेन त्रिगुणात्मकात्क्षेत्रज्ञभोग्यभूताद्वस्तुनः परस्ताद्विष्णोस्स्थानमिति गम्यते॥ "वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्" इत्यत्रापि तमश्शब्देन सैव प्रकृतिरुच्यते॥ केवलस्य तमसोऽनवस्थानादेव रजसः पराके क्षयन्तमित्यनेनैकवाक्यत्वात्। तमसः परस्ताद्वसन्तं महान्तमादित्यवर्णं पुरुषमहं वेदेत्ययमर्थोऽवगम्यते" इति॥ मुक्तगतौ "शीर्षकपालं भिनत्त्यण्डं भिनत्त्यक्षरं भिनत्ति तमो भिनत्ति" इत्यादिवाक्यमपि प्रकृतेः परत्वे प्रमाणमवगन्तव्यम्। वासुदेवस्य सर्वत्रासौ वसति वसत्यस्मिन् सर्वमिति वा वासुः। वसतेर्बाहुलकादौणादिक उण्प्रत्ययः। दीव्यतीति देवः वासुश्चासौ देवश्च वासुदेव इति कर्मधारयः॥ "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततस्स वासुदेवेति विद्वद्भिः परिकीर्त्यते" इति निर्वचनात्। सर्वान्तर्यामिणस्सर्वाधारस्य निरतिशयदीप्तिमतो भगवतो नारायणस्येत्यर्थः। पदे स्थाने "तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः" इत्यादिश्रुतिभिस्सिद्धे परमे व्योम्न्येव न तु चतुर्मुखादिलोके नापि यत्र क्वचित् परमपदोपान्ते हस्तिगिरेः प्रान्ते कदाचिन्निवसन्तोऽपि देहावसाने परमपदमध्य एव वसन्ति किमुत सर्वदाऽपि तत्रैव

वसन्त इति भावः ॥ अत्र "लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् । अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ नित्यसिद्धैस्समाकीर्णं तन्मयैः पाञ्चकालिकैः । सभाप्रासादसंयुक्तं वनैश्चोपवनैर्युतम् ॥ वापीकूपतटाकैश्च वृक्षषण्डैश्च मण्डितम् । अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् । प्रकृष्टसत्त्वराशिं तं कदा द्रक्ष्यामि चक्षुषा" इत्यादिकमनुसंधेयम् । वर्तिष्यन्ते स्थास्यन्ते "अत्रैव द्रष्टुकामा ये समागच्छन्ति मानवाः । सर्वपापविनिर्मुक्तास्ते यान्तु परमं पदम्" इति ब्रह्मणा प्रार्थितेन वरदेन "एकरात्रं त्रिरात्रं वा सप्तरात्रमथापि वा । निवसेद्यस्स सहसा मुच्यते सर्वकिल्बिषैः ॥ जातो वाऽत्र मृतो वाऽपि पापानामतिपापकृत् । मम लोकमवाप्नोति न पुनर्भवमृच्छति" इति ब्रह्माणं प्रति वरस्य प्रदानात् अत्र कादाचित्कनिवासवतां पातकिनामपि मुक्तैश्वर्यलाभवर्णनस्य नित्यनिवासिनां सुकृतिनां किमु वक्तव्यमिति क्षेत्रप्रभावातिशयप्रतिपादने तात्पर्यम् । अन्यथा एतावतैव निश्श्रेयसलाभे उपायानुष्ठाननैरपेक्ष्यमेव प्रसजेत् ॥ यद्वा—"दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कलुषैर्वृतम् । तदन्तकाले संशुद्धिं याति नारायणालये" इत्याद्युक्तरीत्या शास्त्रविरुद्धशब्दादिविषयप्रावण्यादिदोषदुष्टस्यापि चित्तस्य तत्र शरीरवियोगसमये दिव्यदेशवासमहिम्ना भगवत्साक्षात्कारार्हशुद्धिसंभवान्मुक्ता भविष्यन्तीति भावः ॥ न ह्यत्र भगवत्प्रद्वेषिवद्भगवद्भागवतद्रोहापचारादिभि कालं क्षपयतामननुष्ठितोपायानामपि तत्र निवासमात्रेणोक्तातिशयस्संभवति ॥ किं तु "कु

र्वाणश्च सदावृत्ति विष्णोरायतने वसेत् । दद्याच्च विविधान्भोगाननुरूपान्मनोरमान् ॥ यत्किंचिदपि कुर्वाणो विष्णोरायतने वसेत् । न किंचिदपि कुर्वाणो विष्णोरायतने वसेत्" अपायाद्विरतश्शश्वन्मां चैव शरणं गतः । तनूकृत्याखिलं पापं मामाप्नोति नरश्शनैः" इत्याद्युक्तरीत्या विहितेषु कायिकवाचिकमानसिक कैङ्कर्येषु शक्यं यत्किंचित्कुर्वाणानां तदसंभवे निषिद्धमपचारं यत्किंचिदप्यकुर्वाणानामनुष्ठितोपायानामेवेति नातिप्रसङ्ग इति स्पष्टमिदं सत्संप्रदायपरिशीलननिष्णातानाम् । वक्तव्यान्तरं तु "तत्रारूढैरखिलमनुजैः" इति श्लोकव्याख्यावसरे निरूपितमधस्तात् । "अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" इत्येतदप्यत्रानुसंधेयम् । यद्वा— धन्याः यस्योपान्ते कृतवसतय इति योजना ॥ तदा एवमर्थः— धन्याः प्रपदनधनलाभमहाभाग्यवन्तः यस्य उपान्ते कृतवसतयस्सन्तः । "हरेराश्रितवात्सल्यात्तत्तत्स्थानाभिनन्दिनः ॥ असाधारणभावेन तत्र तत्रैव वा वसेत् ॥ यत्र नारायणो देवः परमात्मा सनातनः । तत्पुण्यं परमं ब्रह्म तत्तीर्थं तत्तपोवनम् ॥ तत्र देवर्षयस्सिद्धास्सर्वे चैव तपोधनाः ॥ गोमन्तः पर्वतो राजन् सुमहान् सर्वधातुमान् । वसते भगवान्यत्र श्रीमान्कमललोचनः । मोक्षिभिस्संस्तुतो नित्यं प्रभुर्नारायणो हरिः ॥ सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः । यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने" इत्याद्युक्तप्रक्रियया भगवदभिव्यक्तिक्षेत्रतया हस्तिगिरिप्रान्तस्य प्रप-

ल्लनिवासस्थानत्वात् ॥ शरीरं यापयित्वा वासुदेवस्य वितमसि पदे वर्ति- ष्यन्ते "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्र- मुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि, एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनि- ष्पद्यते तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यसे" इत्या- दिश्रुत्युक्तरीत्या स्थूलं शरीरं ब्रह्मप्राप्तिपर्यन्तं विद्यामाहात्म्यस्था- पितं सूक्ष्मं च शरीरं विधूय परिपूर्णब्रह्मानन्दानुभवसाम्राज्यवन्तः परमे व्योम्नि निवत्स्यन्तीत्यर्थः ॥ [1]लृट्प्रयोगस्तु "अथ संपत्स्य- से" इति श्रुत्यनुरोधेन "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ॥ मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ अनावृ- त्तिश्शब्दादनावृत्तिश्शब्दात्" इति श्रुतिस्मृतिसूत्रोक्तरीत्या सर्वदा- ऽपि तत्रैव वर्तिष्यन्ते न तु कदाचिदपि पुनरावर्तन्त इति भा-

[1] लृट्प्रयोगस्तु "अथ संपत्स्यसे" इति श्रुत्यनुरोधेन इति रसास्वा- दिनी ॥ यत्तु—अत्र वासकरणापेक्षया भविष्यति लृट् । न तु श्रीरामभ- द्रकथनापेक्षया । तेन केषाञ्चित्पूर्वं जातेऽपि वासुदेवपदवर्तने न दोषः इति तन्न. भविष्यत्त्वस्यात्र वक्तृभूतरामभद्रकथनापेक्षत्वेऽपि रामभद्रकथनानन्तरका- लिक्यां हस्तिशैलोपान्तकृतवसतीनां वासुदेवपदवर्तनक्रियायां वक्तृशब्दप्रयोगाधि- करणकालवृत्तिप्रागभावप्रतियोगित्वरूपस्य लृडर्थभविष्यत्त्वस्याक्षतत्वेन तदुपेक्षाया अयोगात् । न खलु समभिव्याहृतधात्वर्थक्रियात्वावच्छेदेन लृटा भविष्यत्त्वं प्रत्याय्यत इति व्युत्पत्तिः प्रामाणिकी । येनात्र रामभद्रकथनप्राक्कालिकवासुदेव- पदवर्तनक्रियायां तदर्थबाधश्शङ्क्येतापि । सामानाधिकरण्येनान्वयमात्रेणैवोपपत्तेः तादृशव्युत्पत्तिकल्पने मानाभावात् । अन्यथा अद्यकृतपाकेऽपि चैत्रे पूर्ववृष्टेऽपि

वः । ननु शरीरपातानन्तरं कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेऽवतिष्ठत इति चेद्विद्यामाहात्म्यादित्यवधेहि ॥ "विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकाऽपि प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथैनं गमयितुं सूक्ष्मशरीरं स्थापयति यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तटाके तद्धेतुषु तदिच्छादिषु नष्टेष्वपि तदेव तटाकादिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादि कुर्वन्ति तद्वत्" इति सांपरायाधिकरणे "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" इति सूत्रे भाषितं भगवद्भाष्यकारैः । अत्र शरीरयापनानन्तरमेव परमपदप्राप्तिवर्णनात् "विभवार्चनाद्व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यते" इति श्रीपञ्चरात्राधिकरणोक्ता क्रममुक्तिर्व्यावर्त्यते । तत्तदुपासनाधिकारिभेदनियतत्वेन तत्तद्गतीनां विलम्बासहिष्णुप्रपन्नविषयत्वायोगात् । स्पष्टं चेदं श्रीरहस्यत्रयसारपरिशीलनमहाभाग्यवताम् । अत्र द्रमिडविषयं दिव्यं कुर्वन्निति विरोधस्याभासाद्विरोधाभासः कृतवसतय इत्यनेन विशेषणगत्या वितमःपद-

मेघे परदिनपाकवर्षाद्यभिप्रायेण चैत्रः पक्ष्यति मेघो वर्षिष्यतीत्यादिप्रामाणिकप्रयोगाणामनुपपत्तिप्रसङ्गात् ॥ एवं वासकरणापेक्षया भविष्यत्त्वमादाय लृडुपपत्तिकरणमपि न सत्। लृटा समभिव्याहृतक्रियापेक्षभविष्यत्त्वप्रत्यायनस्य क्वचिदपि प्रामाणिकप्रयोगेऽनुपलम्भात् । वक्तृवाक्यापेक्षया भविष्यत्त्वप्रतीतेरेवानुशासनसिद्धत्वात् । अन्यथा चैत्रीयपाकानन्तरभोजने निर्वृत्तेऽपि चैत्रः पक्त्वा भोक्ष्यति इत्यादीनां रामो रावणं हत्वा अश्वमेधानाहरिष्यतीत्यादीनां च सांप्रतिकप्रयोगाणां साधुताप्रसङ्गात् इति ॥ ३१ ॥

वर्तनस्य समर्थनात्काव्यलिङ्गभेदः । परमव्योमप्राप्तिहेतुभूततत्प्रदेशनिवासरूपप्रपन्नजनचरितस्य हस्तिगिरेरुपलक्षणतया निबद्धत्वादुदात्तभेदश्च। उक्तविरोधाभासकाव्यलिङ्गयोस्संसृष्टिः काव्यलिङ्गोदात्तयोरेकवाचकानुप्रवेशसङ्करः ॥ सकारादिव्यञ्जनपुनरावृत्तेर्वृत्त्यनुप्रासश्चाप्यभ्युच्चीयते ॥ ३१ ॥

कुतो हस्तिगिरेरीदृशो महिमातिशय इत्यत्राह—

**संचिन्वाना तरुणतुलसीदामभिस्स्वामभिख्यां**
**तस्यां वेद्यामनुविदधती श्याम(शीत)लं हव्यवाहम्।**
**भोगैश्वर्यप्रियसहचरैः काऽपि लक्ष्मीकटाक्षैः**
**भूयश्श्यामा भुवनजननी देवता सन्निधत्ते॥३२॥**

तस्यां पूर्वोक्तायां हस्तिगिरिरूपायां वेद्यां उत्तरवेद्यां तरुणा यौवनस्था या तुलसी तरुणेत्यनेन श्यामलत्वकोमलत्वातिशयो व्यज्यते ॥ तस्याः दामभिः माल्यैः स्वां नैसर्गिकीं अभिख्यां श्यामलं हव्यवाहमनुविदधतीति भूयश्श्यामेति च वक्ष्यमाणत्वाच्छ्यामलां शोभामित्यर्थः ॥ "अभिख्या नामशोभयोः" इत्यमरः । संचिन्वाना उपचिन्वती संपूर्वकाच्चिनोतेश्शानच् ॥ संचिनोतेरीदृशार्थकत्वं तु "धर्मं शनैस्संचिनुयाद्वल्मीकमिव पुत्तिका" इत्यादौ दृष्टं अत एव श्यामलं मेचकं अनेन प्रसिद्धाग्निर्व्यावर्तते। हव्यं वहतीति हव्यवाहः तं पावकम् । कर्मण्यण् । अनुविदधती अनुकुर्वाणा यद्यग्निः कदाचिच्छ्यामलोऽपि स्यात्तदा तमनुविदधानेति भावः ॥

यद्वा—श्यामलं हव्यवाहमनुविदधती श्यामलहव्यवाह इव भासमाना अयमपरश्श्यामलो हव्यवाहः किमवतीर्ण इति संभावनाया विषय इति यावत् ॥ यथा प्रसिद्धेन हव्यवाहनेन प्रत्यक्षतो हविर्गृह्यते, तद्वदनयाऽपि परदेवतया सर्वदेवतान्तर्यामितया सर्वयज्ञह विर्भोक्त्र्या तत्रोत्तरवेद्यां साक्षादाविर्भूय हविषो गृहीतत्वाद्देदीप्यमानदिव्यविग्रहत्वाच्च हव्यवाहत्वेन संभावना । अत एव हव्यवाहशब्देन निर्देशश्च स्वारसिकः अत एव चेयं "अभ्रैर्युक्तो लघुभिरचिरान्मुक्तनिर्मोककल्पैः" इत्यत्रेवोपमोपक्रमोत्प्रेक्षेति ध्येयम् । एतच्च सविस्तरं तद्व्याख्यानावसरे निरूपितमधस्तात् ॥ शीतलमिति पाठे "शीतो भव हनूमतः" इत्यादिवन्निमित्तेन केनचिद्यदि स्याच्छीतलोऽग्निस्तदा तत्सदृशीत्यर्थः ॥ एतेनाग्निवद्देदीप्यमानत्वेऽप्यनुष्णत्वेन सकललोकाप्यायकत्वात्ततो वैलक्षण्यं द्योतितम् । अयं पाठस्तु नातीव स्वरसः, भूयश्श्यामा देवतेति वक्ष्यमाणतया श्यामलहव्यवाहसाधर्म्यस्यैवावश्यवक्तव्यत्वेन शीतलाग्निसाधर्म्यवर्णनस्येहानुपयोगात् ॥ "द्विरदशिखरिसीम्ना सद्मवान्पद्मयोनेस्तुरगसवनवेद्यां श्यामलो हव्यवाहः" इति वरदराजस्तवे तथैवाचार्यैर्वर्णितत्वाच्च । यद्यपि प्राचीनेषु मूलश्रीकोशेषु शीतलं हव्यवाहमित्येव पाठः प्रायेण दृश्यते । तथाऽपि प्राचीनव्याख्यायामेतच्छ्लोकस्य विवरणावसरे "उत्तरवेद्यां श्यामपावकरूपेण नारायणो भासत इत्याह" इत्यवतारितत्वाच्छ्यामलमित्येव पाठ इति निश्चीयते ॥ यत्तु तत्रैव शीतलमिति पदमुपादाय अनुष्णमिति विवरणं तदपि वर्णभ्रमनिबन्धनलेखकस्ख-

लनकृतमेव स्यात् ॥ श्यामलमित्यस्य कृष्णमिति विवरणे श्यामलं कृष्णमिति वर्णानुपूर्व्यां शीतलमनुष्णमिति वर्णानुपूर्वीभ्रमस्यापि द्रामिडलिपिषु किंचिद्रेखासाम्येन कदाचित्संभवात् । अन्यथा तदवतरणिकाया एव विरोधापत्तेः ॥ भोगश्चैश्वर्यं च प्रियाश्च सहचराश्चेत्युभयत्रापि द्वन्द्वः । भोगैश्वर्ययोर्विषये प्रियसहचराः तथोक्तैः । भोगावस्थायां प्रियैः ऐश्वर्यावस्थायां सहचरैरित्यर्थः । भोगो नाम शुद्धसत्त्वविभूत्यनुभवजन्यरसः, ऐश्वर्यं लीलाविभूतिनियमनम् । यद्यपि लीलाविभूत्यनुभवेनापि रसस्संभवति तथाऽपि शुद्धसत्त्वविभूत्यनुभवजन्यरसस्य निग्रहजन्यरसासंवलिततया भोगरसत्वेन व्यवहारः । भोगावस्थायां निग्रहानुन्मेषाद्भोगविभूतिनियमनसमये प्रियैः प्रीतिविषयैः प्रीतिपूर्वकैरिति यावत् । लीलाविभूतिनियमने तु केवलं सहचरैः तत्कार्यभूतनिग्रहापर्यवसायित्वेऽपि तद्विषयेऽपि कथंचिदनुग्रहरूपतासंपादनेन प्रवर्तमानैरिति यावत् ॥ अथवा प्रियसहचरैरिति कर्मधारय एव । विभूतिद्वयनियमनसमयेऽपि प्रियरूपतयैव सहचरैः अनुग्रहपूर्वकतयैव सहचारिभिरित्यर्थः । प्रियत्वं च कटाक्षविषयं प्रतीति विवक्षितं तच्चानुग्रहपूर्वकत्व एव पर्यवस्यति । सर्वावस्थायामपि सहवर्तमानैरिति तु निष्कर्षः । तत्तद्गुणाश्रयवस्तुसाहचर्यात्तत्तद्गुणसंक्रमणस्य लोकसिद्धत्वात्सहचरैरित्युक्तिः । यद्वा—भोगः जगत्सृष्ट्यादिलीलाऽनुभवः । ऐश्वर्यं अखिलजगदीशितृत्वं प्रशासितृत्वमित्यर्थः ॥ तयोर्विषये प्रियसहचरैः अत्यन्तानुकूलैः सामरस्यं प्राप्तैरिति यावत् । लक्ष्म्याः श्रीदेव्याः, कटाक्षैः अपाङ्गवी-

क्षणैः "कटाक्षोऽपाङ्गदर्शने" इत्यमरः ॥ अत्र "अपाङ्गा भूयांसो यदुपरि परंब्रह्म तदभूत्, स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थितीस्स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन्हरिः। यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तयोः" इत्याद्युक्तप्रक्रियया उक्तविधभगवद्भोगैश्वर्ययोस्तदधीनत्वाद्भोगैश्वर्यप्रियसहचरैरिति विशेषणम्। "नमश्श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः। ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत् ॥ यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातारतम्ये मुरारेः। प्रलयसमयसुप्तं स्वं शरीरैकदेशं वरद चिदचिदाख्यं स्वेच्छया विस्तृणानः ॥ खचितमिव कलापं चित्रमातत्य धून्वन्ननुशिखिनि शिखीव क्रीडसि श्रीसमक्षम् ॥ श्रियै समस्तचिदचिद्विधानव्यसनं हरेः। अङ्गीकारिभिरालोकैस्सार्थयन्त्यै कृतोऽञ्जलिः" इत्यादिकमप्यत्रैवानुकूलम्। भूयः अतिशयेन बहु यथा स्यात्तथा श्यामा श्यामला। बहुशब्दादीयसुनि "बहोर्लोपो भू च बहोः" इति बहुशब्दात्परीभूतेयसुन्नवयवेकारलोपो बहुशब्दस्य भू इत्यादेशश्च। भूयश्श्यामेत्येतत्समस्तं व्यस्तं वा अनेन निरन्तरलक्ष्मीकटाक्षविषयत्ववर्णनेन सर्वलोकातिशायिरूपलावण्यसौन्दर्यसौभाग्यसीमाया रमाया अप्यासेचनकतां द्योतयता "रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम्, साक्षान्मन्मथमन्मथः" इत्युक्तरीत्याऽस्या वरदाभिधायाः परदेवतायास्स्वेतरसमस्तविलक्षणरूपलावण्यादिमत्ता द्योत्यते। ईदृशलक्ष्मीकटाक्षविषयत्वादेव भुवनानां लोकानां जननी जनयित्री स्रष्ट्रीत्यर्थः। भुवनशब्दश्छान्दसोऽपि

प्रचुरप्रयोगदर्शनाल्लोकेऽपि साधुरिति "मध्ये केचिद्वयमिह" इति श्लोके महति भुवन इत्यत्रावोचाम । काऽपि "न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः । न विद्मो न विजानीमो यथैतदनुशिष्यात् । यद्वाचाऽनभ्युदितं यन्मनसा न मनुते येनाहुर्मनोमतम् । तदेव ब्रह्म त्वं विद्धि । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह," इत्याद्युक्तरीत्या वाङ्मनसापरिच्छेद्यमहामहिमशालिनी देवता—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिश्रुतिभिरखिलजगत्कारणतयोद्घुष्यमाणा सदात्मपरब्रह्मपुरुषोत्तमनारायणादिशब्दाभिलपनीया परदेवतेत्यर्थः । "संचिन्वाना तरुणतुलसीदामभिः" इत्याद्येतावत्पर्यन्तेन ग्रन्थेन परत्वं दर्शितम् । अत्र "वक्षस्थल्यां तुलसिकमलाकौस्तुभैर्वैजयन्ती सैश्वर्यं कथयतितरां रङ्गधाम्नस्तदास्ताम्" इत्यादिकमनुसंधेयम् । संनिधत्ते भक्तानुजिघृक्षया स्वयमेवाविर्भूय सांनिध्यं कुरुते । तस्यां वेद्यां संनिधत्त इत्यनेन सौलभ्यं प्रकाशितम् । तदेतदुक्तमीश्वरसंहितायां स्वयंव्यक्ताध्याये—"क्षेत्रेषु पुष्कराद्येषु वासुदेवो जगत्पतिः । स्वयं व्यक्तिं समभ्येत्य भक्तानां हितकाम्यया । स्थितस्संनिहितो देवस्स्वयंव्यक्तो मुनीश्वराः" इति ॥ अत्र भुवनजननीति कारणत्वाभिधायिना पदेन कारणत्वसमनियतं ध्येयत्वमप्यस्या एव देवताया इति व्यज्यते "कश्च ध्येयः" इत्युपक्रम्य "कारणं तु ध्येयः" इति कारणमनूद्य ध्येयत्वविधानात् ॥ श्यामेत्यनेन "श्यामाच्छबलं प्रपद्ये शब-

लाच्छ्यामं प्रपद्ये" इति छान्दोग्यश्रुतिगतं श्यामपदं प्रत्यभिज्ञाप्यते। अस्याश्श्रुतेरर्थस्तु श्रीरङ्गरामानुजमुनिभिरेवमभिवर्णितः—"परमात्मनो हि त्रिविधमुपासनमुक्तमुपासात्रैविध्यात्" इत्यत्र। चिच्छबलतया अचिच्छबलतया स्वरूपेण च तत्र स्वरूपेणानुसन्धाने ज्ञानादिगुणवद्दिव्यविग्रहयोगिताऽप्यनुसंधेया तत्सिद्ध्यर्थमेव हि पुण्डरीकाक्षमप्राकृतं वपुरतिदिश्यते। "स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः" इति। तत्र "स यश्चायं पुरुषे" इत्यानन्दमयमनूद्य "यश्चासावादित्ये" इति दिव्यविग्रहातिदेश इति व्यासार्यैरुपासात्रैविध्यादित्यत्रोक्तम्। वेदार्थसङ्ग्रहे च भगवता भाष्यकृता—"य एषोऽन्तरादित्ये हिरण्मयः पुरुषः। सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' विद्युद्वर्णात्पुरुषादित्यर्थः। 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' मध्यस्थनीलतोयदा विद्युल्लेखेव सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिवाभातीत्यर्थः" इत्युक्तं अतो विग्रहवैशिष्ट्यं सिद्धं अत एव हि "श्यामा एकरूपा भवन्त्येवमिव हि प्रजापतिस्समृद्ध्यै" इति प्रजापतिशब्दितस्य भगवतश्श्यामरूपत्वमुक्तं तस्माच्छ्यामं इति विग्रहविशिष्टं स्वरूपमुच्यते। ततश्च श्यामादिति ल्यब्लोपे पञ्चमी श्यामविग्रहविशिष्टं स्वरूपं प्रपद्य स्वरूपमुपास्य शबलं चिदचिद्विशिष्टं प्रपद्ये उपासे शबलमुपास्य श्याममुपास इत्यर्थः॥ "ततश्च निरन्तरं त्रैविध्येनोपास इत्यर्थः" इति॥ किंच, उत्तरश्लोके—"मरक-

तशिलामेचकं मेघम्" इत्यस्या एव देवताया नीलमेघत्वाध्यवसानेन "नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा" इति नारायणानुवाकस्थश्रुत्यर्थस्मारकेण लिङ्गभूयस्त्वाधिकरणोक्तं सर्वपरविद्यावेद्यत्वमस्या एवेति द्योत्यते ॥ तत्र हि "दह्रं विपाप्मं वरवेश्मभूतम्" इत्यादिना पूर्वप्रस्तुतदहरविद्यामात्रस्य वेद्यनिर्धारणार्थमेव प्रवृत्तो नारायणानुवाकः प्रकरणस्य तन्मात्रविश्रान्तत्वादिति पूर्वपक्षं प्रापय्य "नारायणः परं ब्रह्म तत्त्वं नारायणः परः" इत्यादिना परब्रह्मपरतत्त्वपरज्योतिःपरात्मब्रह्मशिवेन्द्राक्षरादिशब्दैस्सर्वपरविद्योपास्यानूद्य चिह्नभूतवाक्येन नारायणत्वविधानभूयस्त्वात्सर्वपरविद्यावेद्यनिर्धारणार्थ एव नारायणानुवाकः वाक्यस्य प्रकरणापेक्षया बलीयस्त्वात् तच्च पूर्वमीमांसायां "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति सूत्रेणोक्तं तस्मान्नारायण एव सर्वपरविद्यावेद्य इति सिद्धान्तितं आचार्यैरप्येतदेव स्फुटीकृतं वरदराजस्तवे ॥ "नागाचलेश निखिलोपनिषन्मनीषा मञ्जूषिका मरकतं परिचिन्वतां त्वाम् । तन्वी हृदि स्फुरति काऽपि शिखा मुनीनां सौदामनीव निभृता नवमेघगर्भा" इति ॥ नन्वेवं सर्वपरविद्यावेद्यस्वरूपस्य नीलनीरदश्यामलत्वे निर्धारिते कथमन्तरादित्यविद्यायां "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इति । मुण्डके च—"यदा पश्यः पश्यते रुक्मवर्णम्" इति । मानवे च—"रुक्माभं स्वप्नधीगम्यं तं विद्यात्पुरुषं परम्" इति च हिरण्यवर्णस्य ध्येयत्वं श्रूयत इति चेदुच्यते ॥ न हि तत्र हिरण्मयरुक्माभशब्दौ हिरण्यवर्णत्वार्थकौ किंत्वौज्ज्व-

ल्यपरौ "हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्" इति द्रमिडभाष्यकारैरौज्ज्वल्यपरतया हिरण्मयशब्दस्य व्याख्यातत्वात् "नीलतोयदमध्यस्था" इति श्रुत्यनुरोधाय हि हिरण्मयशब्दस्तैरेवं व्याख्यातः ॥ ननु नीलतोयदसाम्यमुपासनविशेषोपास्यस्य भगवतः उपासनान्तरोपास्यस्वरूपं हिरण्यवर्णमिति हिरण्यशब्दो नौज्ज्वल्यपर इति चेन्न "पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्" इति प्रकृत्य "नीलतोयदमध्यस्था" इति "य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः" इति च हृदयगुहायामेव नीलतोयदसाधर्म्यहिरण्मयत्वयोश्श्रवणात् न चैवमपि "आदित्यवर्णं तमसः परस्तात्" इत्यादित्यवर्णत्ववर्णनं कथमिति शङ्कनीयं आदित्यवर्णं रुक्मवर्णमित्येक एव वर्णः प्रतियोगिभेदाधीनप्रातिकूल्यानुकूल्याभ्यां मुखभेदेन निर्दिश्यते । अत एव "रुक्माभः आदित्यवर्णः" इति वेदार्थसङ्ग्रहग्रन्थस्य व्याख्यानावसरे "रुक्माभमिति व्याख्येयं पदं तद्व्याचष्टे आदित्यवर्ण इति 'यदा पश्यः पश्यते रुक्मवर्णं आदित्यवर्णं तमसः परस्तात्' इति वाक्ययोर्दुराधर्षत्वभोग्यत्वाभिप्रायेणादित्यवर्णत्वं रुक्मवर्णत्वं चोक्तमित्यभिप्रायेणादित्यवर्ण इति व्याचष्टे" इति व्यासार्यैरन्वग्राहि। तत्रैव "अत्रैवं वर्णयन्ति केचिदाचार्याः आदित्यवर्णं रुक्मवर्णमिति वर्णशब्दस्वारस्यान्न केवलं हिरण्मयशब्द औज्ज्वल्यमात्रपरः ॥ अपितु वर्णपर एव, कथं तर्हि नीलतोयदसाम्यश्रुत्यविरोध इति चेन्नीलतोयदवर्णस्यैव हेतुविशेषेण स्वर्णवर्णत्वोपपत्तेरित्यवधेहि तथा सति

भगवद्विग्रहो बालातपानुलिप्तमरकतगिरिनिभो विभाति तथाच श्रीरामायणे "कच्चिन्न तद्धेमसमानवर्णम्" इति । नीलतोयदवर्णस्य भगवतो हिरण्यवर्णत्वे हेतुस्संप्रदायैकसमधिगम्य इति नात्र लिख्यते" इति चान्वगृह्यत । आचार्यैस्तु पूर्वोक्तरीत्या हिरण्मयशब्दस्यौज्ज्वल्यपरत्वमभिवर्ण्य "यद्वा हिरण्यविकारत्वव्यवच्छेदार्थं द्रमिडभाष्यं तत्र 'मयूरकण्ठच्छविशुद्धहेम' इति 'शिल्पशास्त्रानुसाराच्छ्यामत्वसिद्धिः' इति 'अजोऽपि सन्नव्ययात्मा' इति श्लोकतात्पर्यचन्द्रिकायामनुजगृहे" इत्यास्तांतावत्प्रसक्तानुप्रसक्तिका । प्रकृतमनुसरामः—पूर्वं स खलु पुरुष इति पुल्लिङ्गेन अत्र देवतेति स्त्रीलिङ्गेन उत्तरत्र दिव्यं तेज इति नपुंसकलिङ्गेन च निर्देशः "एको ह वै नारायण आसीत्, आत्मा वा इदमेक एवाग्र आसीत्" इत्यादौ क्वचित्पुल्लिङ्गेन "सेयं देवतैक्षत" इत्यादौ क्वचित् स्त्रीलिङ्गेन "सदेव सोम्येदं, ब्रह्म वा इदमग्रे" इत्यादौ क्वचिन्नपुंसकलिङ्गेन च निर्दिश्यमानं परतत्त्वमेकमेवेति व्यञ्जयितुं एवं भिन्नलिङ्गनिर्देशानामप्येकविषयत्वं ज्ञापयितुमेव भगवता सूत्रकृताऽपि "आनन्दमयोऽभ्यासात्" इत्यादौ पुल्लिङ्गेन "सर्वोपेता च तद्दर्शनात्; सैव हि सत्यादयः" इत्यादौ स्त्रीलिङ्गेन "ज्योतिश्चरणाभिधानात्; अरूपवदेव हि तत्प्रधानत्वात्" इत्यादौ नपुंसकलिङ्गेन च निर्देशः कृतः तेन लिङ्गभेदान्न परतत्त्वभेदशङ्का कार्येति सिद्धम् । किंच—पूर्वं स खलु पुरुष इति निर्दिष्टस्यास्मिन्नुत्तरस्मिंश्च श्लोके लक्ष्मीविशिष्टत्वोक्त्या "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतिप्रत्यभिज्ञापनादनन्यथासिद्धेन श्रियः पतित्वलिङ्गेन पुरुषसूक्तस्थपुरुष-

शब्दस्य नारायणपरत्वं निर्धारितं तेनैव—"महान्प्रभुर्वै पुरुषस्स-त्त्वस्यैष प्रवर्तकः" इत्यादिश्वेताश्वतरश्रूयमाणः पुरुषशब्दोऽपि तत्पर एवेत्यवधारितम्, "वेदाहमेतं पुरुषं महान्तम्" इत्यादिपुरुषसूक्तवाक्य-स्य तत्र प्रत्यभिज्ञानात् ॥ किंच ॥ पूर्वं पुरुषशब्दनिर्दिष्टस्यै-वात्रोत्तरश्लोके च श्यामलत्वोक्तेः "नीलतोयदमध्यस्था" इति नारायणानुवाकस्थश्रुत्यर्थस्य स्मारितत्वात्पुरुषनारायणशब्दयोरेक-विषयत्वं च द्योतितम् । अत एव "सहस्रशीर्षं देवम्" इत्यारभ्य "विश्वमेवेदं पुरुषः" इति नारायणानुवाकोक्तिः। सुबालोपनिषदि—"चक्षुश्च द्रष्टव्यं च नारायणः" इत्यादिभिर्नारायणस्य सर्वात्मकत्वं प्रतिपाद्य "पुरुष एवेदꣳ सर्वम्" इति पुरुषसूक्तेन निगमनं च संगच्छत इति प्राचामाचार्याणां प्रबन्धेषु विस्तरः ॥ अत्र शी-तलं हव्यवाहमनुविदधतीत्यत्र यद्यग्निश्श्यामलस्स्यात्तदा तमनुविदधती-त्यभिसन्धौ अग्नेश्श्यामलिमासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः त-दुज्जीवितोपमेति केषांचिन्मतम् ॥ तथाच मल्लिनाथः—"उदयाद्रि-सीम्नि युगपच्चकासतोर्दिननाथपूर्णशशिनोरिव श्रियम्" इत्यादौ अ-तिशयोक्त्युत्थापितोपमेति व्याचख्यौ । प्राचां मते त्वभूतोपमा त-थाच दण्डी—"सर्वपद्मप्रभासारस्समाहृत इव क्वचित् । त्वदाननं विभातीति तामभूतोपमां विदुः" इति ॥ पूर्वोक्तरीत्या श्यामल-हव्यवाहत्वेन संभावनायामभिसन्धौ उपमोपक्रमोत्प्रेक्षेत्युभयथाऽपि सं-भवादनयोस्संदेहसङ्करः ॥ स्वतस्सिद्धस्य भगवच्छ्यामलिम्नस्तुलसी-दामलक्ष्मीकटाक्षसांनिध्यप्रयुक्तोत्कर्षवर्णनादतद्गुणोनामालङ्कारः ॥ तदु-

क्तं लक्ष्यलक्षणसंग्रहे—"प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः। नीलोत्पलानि दधते कटाक्षैरतिनीलताम्" इति ॥ प्रागुक्तोपमालङ्कारेण संभावनालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः, "संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये" इति लक्षणात् ॥ अनुप्रासश्चात्र द्रष्टव्यः ॥ ३१ ॥*

पूर्वश्लोकोक्तं भगवन्तं प्रणतार्तिहरं परं पुरुषं नीलमेघत्वेनाध्यवस्य वर्णयंस्तदवलोकनात्त्वं मा भैषीरिति राजहंसं सान्त्वयति दाशरथिः—

**लक्ष्मीविद्युल्ललितवपुषं तत्र कारुण्यपूर्णं**
**मा भैषीस्त्वं मरकतशिलामेचकं वीक्ष्य मेघम् ।**

---

*अस्मिन् श्लोके 'श्यामलं हव्यवाहम्' इति पदव्याख्यानावसरे योज्येयं टिप्पणी—श्यामलं हव्यवाहमनुविदधती श्यामलहव्यवाह इव भासमाना । शीतलमिति पाठे 'शीतो भव हनूमतः' इत्यादिवन्निमित्तेन केनचिद्यदि स्याच्छीतलोऽग्निस्तदा तत्सदृशीत्यर्थः । अयं पाठस्तु नातीव स्वरसः 'भूयश्श्यामा देवता' इति वक्ष्यमाणतया श्यामलहव्यवाहसाधर्म्यस्येहावश्यवक्तव्यत्वेन शीतलाग्निसाधर्म्यवर्णनस्येहानुपयोगात् । 'द्विरदशिखरिसीम्ना सद्मवान्पद्मयोनेस्तुरगसवनवेद्यां श्यामलो हव्यवाहः' इति वरदराजस्तवे तथैवाचार्यैर्वर्णितत्वाच्च इति रसास्वादिनी ॥ यत्तु—"श्यामलं नीलं हव्यवाहमग्निमनुकुर्वती" इति व्याख्याय "इदं च 'तुरगसवनवेद्यां श्यामलो हव्यवाहः' इति पूर्वाचार्योक्त्यनुरोधेन" इत्युपष्टम्भकमभिहितम्—तत्र के ते पूर्वाचार्याः येषां तथोक्तिमनुरुद्ध्य इह भगवता मूलकृता "श्यामलं हव्यवाहम्" इति न्यबन्धि इति पूर्वाचार्यसूक्तिपरिशीलनधुरीणास्त एव ज्ञातुमीशते । चित्रमेषामतिभूमिगामिसंप्रदायपरिचयशालित्वं यत् रसास्वादिन्यामाचार्यैः 'श्यामलं हव्यवाहम्' इति मूलपाठनिर्धारणाय 'द्विरदशिखरिसीम्ना सद्मवा-

शुद्धैर्नित्यं परिचितपदस्त्वादृशैर्देवहंसैः
हंसीभूतस्स खलु भवतामन्ववायाग्रजन्मा ॥३३॥

तत्र उत्तरवेद्यां लक्ष्मीरेव विद्युत् "आदित्यवर्णे तपसोऽधिजातः, सूर्यां हिरणमयीं लक्ष्मीं, ज्वलन्तीं तृप्ताम्" इत्यादिश्रुत्युक्तरीत्या आदित्यादिवद्दीप्यमानदिव्यमङ्गळविग्रहतया श्रियो विद्युत्त्वेन रूपणं तया ललितं रुचिरं वपुः शरीरं यस्य तं तथोक्तं "हारभेदे विलासे च ललितं चारुणि त्रिषु" इति रत्नमाला । अनेन लक्ष्मीदिव्यविग्रहशोभासंवलनेन मरकतशिलामेचकस्य भगवद्दिव्यमङ्गळविग्रहस्य कृष्णपिङ्गळतया मयूरग्रीवासवर्णत्वं द्योत्यते ॥ तथाच श्रूयते नारायणानुवाके—"पुरुषं कृष्णपिङ्गळम्" इति ॥ "लक्ष्मीशोभासंप्रयुक्ततया कृष्णपिङ्गळम्" इति श्रीमद्रङ्गरामानुजमुनयः । युक्तं चैतत्—"पिङ्गळां हेममालिनीम्" इति लक्ष्म्याः पिङ्गळवर्णत्वश्रवणात् । इदमेव हि रूपं "हिरणमयः पुरुषः" इत्यादिभिश्श्रूयमाणमिति रहस्यं "मयूरकण्ठच्छविशुद्धहेमा" इति शिल्पशास्त्रे शुद्धसुवर्णस्य मयूरग्रीवासवर्णतायाः प्रतिपादनात् । वक्तव्यान्तरं त्ववादिष्म पूर्वस्मिन्नेव श्लोके ॥ करुणैव कारुण्यं चतुर्वर्णादित्वात्स्वार्थे ष्यञ् तच्चानुद्दिष्टस्वप्रयोजनापर-

---

न्पद्मयोनेस्तुरगसवनवेद्यां श्यामलो हव्यवाहः, इति वरदराजस्तवे आचार्यैर्वर्णितत्वाच्च" इति संदर्भेण स्पष्टमेव तथोक्तेर्मूलकारीयत्वस्य दर्शितत्वेऽपि रसास्वादिनीसर्वस्वसंग्रहणधुरीणैरिह विपरीतवर्णनामिति ॥ ३२ ॥

दुःखनिराकरणेच्छा ये तु परदुःखदुःखित्वं दयेति वर्णयन्ति तन्मते निखिलहेयप्रत्यनीकतया निरूपितस्वरूपस्य भगवतो दुःखप्रसक्त्यभावेन दयास्वरूपमेवोच्छिद्येत "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः" इत्यादिकं तु समाश्रितानां स्वस्मिन्ननुरागविषेश सिद्धये दुःखित्वाभिनयमात्रमित्याचार्याणां सर्वेषां निर्वाहः "दयाऽन्येषां दुःखाप्रसहनम्" इत्यादिकमप्यत्रैव संवादि। कारुण्येन पूर्णं पूरितं पूरयतेः कर्मणि क्तः "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" इति निपातनात्साधुः। "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः। यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः" इति सर्वगुणमूर्धन्यतया प्रसिद्धेषु जाग्रत्स्वपि ज्ञानशक्त्यादिकल्याणगुणेषु कारुण्येन पूर्णत्वोक्तिरेतस्यैव स्वसंबन्धेन गुणान्तराणामपि स्वरूपसत्तासंपादकत्वेन गुणशिरोमणित्वात्॥ एतद्विनाभावे ज्ञानशक्त्यादीनां गुणानामपि सतां दोषतैव॥ यदन्वगृह्यताचार्यैरेव— "वृषगिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः। दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः" इति एतद्विनाभूतैर्गुणान्तरैर्न पूर्णता किंत्वनेनैवेति भावः। कारुण्यपूर्णतायां च लक्ष्मीविशिष्टत्वं हेतुः सा हि सुदुस्सहापराधशतपरिपूरितेषु चेतनेषु क्वचित्पितृत्वप्रयुक्तहितप्रवर्तननिबन्धनक्रोधोष्मळतया "क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु, न क्षमामि वसुंधरे" इत्याद्युक्तरीत्या क्वचिदुन्मिषितमपि भगवतो निग्रहसंकल्पं "सदाऽनुग्रहसंपन्ना, अनुग्रहपरामृद्धिं, करुणां वेदमातरं, नित्यमज्ञातनिग्रहाम्" इत्याद्युक्तरीत्या नि-

ग्रहासमानाधिकरणानुग्रहैकनिधिमातृत्वप्रयुक्तप्रियप्रवर्तनैकतानशीला तदनपायिनी सर्वलोकजननी तत्तदुचितैरुपायैर्विस्मार्योद्वेलयति तस्य करुणाजलधिम् ॥ यथाऽऽहुरभियुक्ताः—"पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने हितस्रोतोवृत्त्या भवति च कदाचित्कलुषधीः ॥ किमेनं निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः" इति ॥ किंच—कारुण्यपूर्णमित्यनेन सर्वात्मना निग्रहप्रवेशानवकाशो द्योत्यते। अपूर्ण एव हि पूरकान्तरप्रवेशाय दिशेदन्तरम्। यद्वा—महान्तोऽप्यपराधाश्चेतनानां त्रसरेणुवदेतत्कृपासुधाजलधौ निमज्जन्ति कुलाचला इव महोदधाविति व्यज्यते ॥ लक्ष्म्यां विद्युत्त्वरूपणाल्लिङ्गादरूपितमपि कारुण्ये सलिलत्वं प्रतीयते। यथा ह्युच्यते—"लक्ष्मीविद्युल्लसितम्" इत्यारभ्य "कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श" इति ॥ मेघपक्षे तु विद्युल्लसितत्वं सलिलपूर्णत्वे ज्ञापकमिति द्रष्टव्यम्। मरकतशिलामेचकं गारुत्मतरत्नवच्छ्यामलं यद्यपि गारुत्मतं हरितवर्णतयैव प्रसिध्यति अत एव हरिन्मणिरित्येव व्यवह्रियते न तु नीलमणिरिति तथाऽपि गुणवत्तरस्य तस्य श्यामलिमांशभूयस्त्वनिबन्धनं रत्नतत्त्वविदां नीलवर्णताव्यवहारमवलम्ब्य भगवतो मरकतशिलामेचकत्वोक्तिरिति न विरोधः ॥ तथा च स्कान्दे रत्नपरीक्षाध्याये—"गाढं दूर्वादळश्यामं तुलसीदळसप्रभम्। कलमाग्रदळप्रख्यं प्रोक्तं मरकतं त्विति ॥ सगुणा च सदोषा च जातिरस्य द्विधा मता। सगुणायाश्च जातेस्तु प्रभेदः परिकीर्त्यते ॥ गाढमुल्लसितं चैव पेशलं पि-

त्तलं तथा । मुग्धं च पृथुकं चेति लक्षणं पृथगुच्यते ॥ गाढं दूर्वादळनिभं श्लक्ष्णमुल्लसितं स्मृतम् । पेशलं कलमाग्राभं पित्तं शुकगरुत्प्रभम् ॥ मुग्धं तु तुलसीश्यामं पृथुकं पद्मपत्रवत् । सगुणाष्षड्विधाः प्रोक्ताः" इति ॥ अत एव "घासश्यामान्मरकतमणीनुन्मयूखप्ररोहान्, शुकाङ्गनीलोपलनिर्मितानाम्" इत्याद्युक्तयस्संगच्छन्ते ॥ मेघं घनाघनं मेघत्वेनाध्यवसितं भगवन्तं वरदमित्यर्थः ॥ लक्ष्मीविद्युल्लसितं मेघमित्याभ्यां "सेव्यमानश्श्रिया पार्श्वे शातकुम्भनिभश्रिया । नीलजीमूतसंकाशः स्थिरविद्युत्प्रकाशया" इति हस्तिगिरिमाहात्म्योक्तं स्मारितम् ॥ मेघत्वाध्यवसानेन विद्युत्त्वरूपणेन च क्रमेण भगवति सुक्षितित्वसुभूतित्वभद्रकृत्त्वादिकं लक्ष्म्यां रोचिष्णुतादिकं उभयोरपि ब्रह्मक्षत्रोपलक्षितसर्वजगत्पातृत्वं च द्योत्यते ॥ तथाच श्रूयते—"सुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो नाम" इति ॥ तत्रैवानुषज्यते—"स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु" इति ॥ तत्र सुक्षितित्वं वसुंधराऽऽप्यायकत्वं सुभूतित्वं सकलजगत्संपन्निदानत्वं भद्रकृत्त्वं सर्वमङ्गळप्रदातृत्वं वीक्ष्य विशेषेण दृष्ट्वा त्वं मा भैषीः मा वित्रसीः भीधातोर्जौहोत्यादिकाल्लुङि च्लेस्सिचि वृद्धिष्षत्वं च "न माङ्योगे" इत्यट्प्रतिषेधः । त्वं मा भैषीरित्यस्याविज्ञाततत्स्वरूपस्वभावा बिभ्यतु नामान्ये हंसाः त्वं तु मास्म बिभेरिति भावः । अहं तु कुतो न बिभियां निसर्गतोऽस्मत्कुलविद्वेषिणो घनाघनस्यावलोकनेनेत्यत्र प्रसिद्धघनापेक्षयाऽस्य वैलक्षण्यप्रदर्शनेन स्वोक्तमभयप्रदानवचनं समर्थयते—

शुद्धैरिति ॥ सः पूर्वोक्तमेघः भगवानिति तु तत्त्वं शुद्धैः स्वच्छैः धवळैरिति यावत् । पक्षे—ज्ञानप्रतिघातुककर्मसम्बन्धप्रयुक्तक्लेशगन्धविधुरैरित्यर्थः । शुद्धैरित्यनुपाधिकनिर्देशेन स्वभावत एव निरस्तनिखिलक्लेशत्वं गम्यते ॥ यथोक्तं—"हताखिलक्लेशमलैस्स्वभावतः" इति । अप्रतिबुद्धास्सर्वे क्लेशाक्रान्ताः, प्रतिबुद्धास्तु कतिपयक्लेशरहिताः । उपायतो निवृत्तनिखिलक्लेशास्तु मुक्ताः नित्यास्त्वनादिनिर्धूतनिखिलक्लेशा इत्यभिप्रायः । अतएव त्वादृशैः त्वमिव पश्यन्तीति त्वादृशास्तथोक्तैः "त्यदादिषु दृशोऽनालोचने कञ्च" इति युष्मच्छब्दोपपदाद्दृशेः कञि "प्रत्ययोत्तरपदयोश्च" इति युष्मच्छब्दस्य मपर्यन्तस्य त्वादेशे "आसर्वनाम्नः" इत्यात्वं हंसस्यापि शुद्धत्वात्त्वादृशैरित्युक्तं देवहंसैः देवलोकस्थितैर्मराळैरित्यर्थः । अन्यत्र देवहंसैः देवश्रेष्ठैः देवानां हंसा इव श्रेष्ठाः देवहंसा नागोत्तमादिवच्छैषिकषष्ठ्यास्समासः न च निर्धारणे षष्ठीयमिति भ्रमितव्यं येन "न निर्धारणे" इति समासनिषेधः प्रसजेत् निर्धारणहेतुतदवधिनिर्धार्यमाणरूपत्रितयसन्निधान एव तदवतारादत्र च त्रितयसन्निधानवैधुर्यादिति लक्ष्मीसहस्ररत्नप्रकाशिकायां "दातुं त्वां पुरुषोत्तमाय" इत्यत्र विस्तरः । यद्वा—देवाः हंसा इव देवहंसा इत्युपमितसमासः "स्युरुत्तरपदे व्याघ्र" इत्यारभ्य "सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः" इत्यनुशासनादुत्तरपदीभूतहंसशब्दस्य श्रेष्ठार्थवाचकत्वं आद्यपदेन तस्यापि ग्रहीतुमुचितत्वात् । अथवा—देवाश्च ते हंसाश्चेति कर्मधारयः । देवाः "यत्र पूर्वे साध्यास्सन्ति देवाः" इति श्रुत्यु-

क्तरीत्या असंकुचितज्ञानप्रसरतया देदीप्यमाना इत्यर्थः। हंसाः जीवाः तैः सर्वथाऽपि नित्यसूरिभिरित्यर्थः॥ "हंसस्स्मरे खगे विष्णौ यतौ निर्लेपभूभुजि॥ जीवेऽर्केऽश्वे श्वेतवृषे स्यान्मन्त्रपरमात्मनोः" इति रत्नमाला। नित्यं सदा परिचिते परिचारिते पदे पादौ यस्य स तथोक्तः। यद्वा—परिचितं परिशीलितं पदं व्यवसायो यस्य स तथोक्त इत्यर्थः। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः॥ शुद्धैर्हंसैः परिशीलतव्यवसाय इत्यनेन नायं हंसहिंसनार्थगूढव्यवसायेन तत्प्रत्यायनाय कैतवेनावलम्बिततत्सजातीयशरीरः किंतु स्वभावतस्सकलहंसकुलसमृद्धिविश्राणनायैवेति निसर्गशुद्धैस्त्वादृशैरेव हंसैर्निश्चितस्वाभिप्राय इति गम्यते। अन्यत्र तु परिचिते परिचरिते परिपूजिते पदे चरणे यस्य स तथोक्तः अत्र "स्वच्छन्दानुवृत्तस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणगणशेषशेषाशनगरुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगळः" इति पृथुगद्योक्तमनुसंधेयम्। "तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवाꣳसस्समिन्धते। विष्णोर्यत्परमं पदम्" इति श्रुत्या ईदृशनित्यसूरिसिद्धिः॥ एतेन प्रकृतार्थे मेघस्य हंसकुलानुकूलत्वमुक्तं न केवलमेतावदेव, किंतु स्वयमपि कदाचिद्धंसीबभूवेत्याह—हंसीभूत इति॥ भगवत्पक्षे तु वेदोद्धरणाय परिगृहीतहंसावतार इत्यर्थः॥ अत्र वक्तव्यं सर्वमपि "वेदोदन्वद्विभजनविदः" इति श्लोकव्याख्यानावसरे प्रपञ्चितम्। "रङ्गधे

तिमिरघस्मरशीतस्वच्छहंसतनुरिन्दुरिवोद्यन् । वेदभाभिरनुजग्राहिथार्तान् ज्ञानयज्ञसुधयैव समृध्यन्" इत्यभियुक्तोक्तिरिहानुसन्धेया। अत एव भवतां युष्माकं हंसानामित्यर्थः ॥ सजातीयसमुदायसाहित्यविवक्षया बहुवचनम्। अन्ववायो वंशः "वंशोऽन्ववायस्संतानः" इत्यमरः । अग्रे जन्म यस्य स इति व्यधिकरणपदो बहुव्रीहिः "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे" इति वामनः। अन्ववायस्याग्रजन्मा कुलकूटस्थ इत्यर्थः। "वेदोद्न्वद्भिमजनविदो वंशजं विश्वमूर्तेः" इति पूर्वं स्वेनैवास्य राजहंसस्य हंसात्मनाऽवतीर्णभगवद्वंशजत्वेन वर्णनात्तस्यैतत्कुलकूटस्थत्वमित्यभिप्रायेण तथोक्तम्। खल्वित्यनुनये "निषेधवाक्यालङ्कारजिज्ञासानुनये खलु" इत्यमरः। अयं भावः—नन्वेतन्न जानासिनाम त्वं सखे वस्तुतत्त्वम्—यदयं शुद्धहंसकुलानुकूलस्स्वयं हंसात्मनाऽवतीर्णतया भवत्कुलकूटस्थश्च कालमेघः न तु प्रसिद्धमेघवन्निसर्गतो हंसहिंसकः अनवलम्बितहंसरूपश्चेत्यतो मा भैषीः न हि स्वकुलश्रेयोविधानसावधानः कुलकूटस्थ एव व्यापादयितुमुद्युञ्जीत जातुनाम स्वकुलीनम्, किन्तु त्वमपि देवहंसान्तरवत्तत्पदपरिचरणमहाभाग्येन विन्दस्वानन्दमिति। नन्वत्र तद्विष्णोरिति मन्त्रेण सदा पश्यन्तीति नित्यसूरिसिद्धिरित्युक्तं पूर्वम्। "वितमसि पदे वासुदवस्य" इत्यत्रानेनैव मन्त्रेणाप्राकृतस्थानसिद्धिरिति कथमुभयोरप्यनेनैव सिद्धिरिति चेत् उच्यते—तद्विष्णोरित्यादिस्थानविधिस्सूरिविधिस्सदादर्शनविधिश्च। तथाहि—विष्णोः परस्य ब्रह्मणः परमं पदं सूरयस्सदा पश्यन्तीति वचनात्सर्वकालदर्शनवन्तः परिपूर्णज्ञानाः केचन सन्तीति ज्ञायते ये सूरयस्ते सदा पश्यन्तीति वचनव्य-

क्तिः ये सदा पश्यन्ति ते सूरय इति वा अत्र यच्छब्दान्वयो वचनव्य-क्तिकृतः। नात्रोद्देश्यं किमप्यस्ति सर्वस्यार्थस्याप्राप्तत्वात्, तस्मादियं वचनव्यक्तिर्नोद्देश्योपादेयविभागवती उभयपक्षेऽप्यनेकविधानं न संभवति वाक्यभेदप्रसङ्गादिति चेन्न अप्राप्तत्वात्सर्वस्य सदापश्यदनेकद्रष्टृविशिष्टं परमं स्थानं विधीयते अगत्या च विशिष्टविधिः न तु मानान्तरसिद्धभगवल्लोकानुवादेन सदा पश्यन्तीति गुणमात्रविधिः। यथोक्तम्—"तद्गुणास्तु विधीयेरन्न विभागाद्विधानार्थे न चेदन्येन शिष्टाः" इति॥ यथा "यदाग्नेयोऽष्टाकपालः" इत्यादिकर्मविधौ कर्मणो गुणानां चाप्राप्तत्वेन सर्वगुणविशिष्टं कर्म विधीयते तथाऽत्रापि सूरिभिस्सदा दृश्यत्वेन विष्णोः परं स्थानमप्राप्तं प्रतिपादयतीति न कश्चिद्विरोध इति वेदार्थसंग्रहतच्छ्रुतप्रकाशिकान्यायसिद्धाञ्जनादौ विस्तरः। तस्मात्तद्विष्णोरिति मन्त्रेण नित्यसूरिसिद्धिरित्युक्तिरपि साधीयस्येव। अत्र विषयस्य भगवतस्स्वशब्देनोल्लेखनं विना विषयवाचकेन मेघपदेनोपादानाद्विषयनिगरणम्—तत्पूर्वकं विषयस्य विषयिरूपतयाऽध्यवसानाद्रूपकातिशयोक्तिः "रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानतः" इति लक्षणात् सा च शुद्धैरित्यादिना हंसीभूत इत्यन्तेन प्रसिद्धमेघाद्भेदस्य तत उत्कर्षस्य च गर्भितत्वात् "अनाकाशे कोऽयं गळितहरिणश्शीतकिरणः" इत्यत्रेवाधिकाभेदरूपा। अत्रातिशयोक्तौ रूपकविशेषणं रूपके दर्शितानां विधानामत्रापि संभवोऽस्तीत्यतिदेशप्रदर्शनार्थम्। तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यम्—तत्राप्याधिक्यन्यूनताविभाग-

श्वेति सर्वमनुसन्धेयमिति कुवलयानन्दे स्पष्टम् । इयं च रूपकातिशयोक्तिः लक्ष्मीविद्युल्ललितवपुषमित्येकदेशविवर्तिरूपकेण मरकतशिलामेचकमिति लुप्तोपमया शुद्धैरित्यादिशब्दवाच्यार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्या चानुप्राणिता । किंच—लक्ष्मीविद्युल्ललितवपुष्ट्वादिविशिष्टनीलमेघदर्शनजनिष्यमाणभयनिवारणरूपवाक्यार्थस्य प्रसिद्धमेघवैलक्षण्यप्रदर्शकोत्तरार्धवाक्यार्थसमर्थिततया काव्यलिङ्गमित्यनयोरेकवाचकानुप्रवेशसंकरः । द्वितीयपादे मकारपुनरावृत्तिरूपवृत्त्यनुप्रासेनोक्तलुप्तोपमाया एकवाचकानुप्रवेशसंकरः उक्तरूपकादीनां मिथस्संसृष्टिरिति विभावनीयम् । अनया च रूपकातिशयोक्त्या व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३३ ॥

एवम्—"उपेत्यायतनं विष्णोः प्रणिपत्य ततस्ततः" इति भरद्वाजसंहितोक्तरीत्या "तामासीदन्प्रणम नगरीम्" इति काञ्चीनगरीप्रणामकरणमनुशिष्य तत्र हस्तिशैले प्रणतार्तिहरस्य भगवतो वरदस्य सांनिध्यमभिधाय "परीत्य देवदेवेशं प्रणम्यात्मानमर्पयेत्" इत्युक्तरीत्या प्रणमन्तं त्वामपि "करुणापूर्णदृष्टिभ्यां वीक्षमाणश्चतुर्मुखम्" इति हस्तिगिरिमाहात्म्योक्तरीत्या तव स्वामिनं चतुर्मुखमिवावश्यमनुगृह्णीयादुदञ्चितदयातरङ्गैरपाङ्गैस्स भगवानित्याह—

**सारास्वादी सवनहविषां स्वामिनस्ते स देवः**
**शुद्धं चक्षुश्श्रुतिपरिषदां चक्षुषां भागधेयम् ।**
**अङ्गीकुर्यादिनतममृतासारसंवादिभिस्त्वां**
**आविर्मोदैरभिमतवरस्थूललक्षैः कटाक्षैः॥३४**

सारेति ॥ ते तव स्वामिनः ईशितुः चतुर्मुखस्येत्यर्थः । सवनहविषां यज्ञियवपादिहविषां, सारमास्वदयतीति सारास्वादी ताच्छील्येआभीक्ष्ण्ये वा णिनिः । सवनसारशब्दयोर्नित्यसापेक्षत्वात्समासः । अनेन "ततस्सर्वेषु पशुषु हूयमानेषु पद्मभूः । यज्ञं यज्ञेश्वरं विष्णुं वरदं भक्तवत्सलम् ॥ अग्निमध्ये स्थितं ध्यात्वा तस्मै सर्वं न्यवेदयत् । यज्ञमूर्तिरनन्तात्मा वैकुण्ठः प्रीयतामिति ॥ तत्सर्वं प्रति जग्राह ब्रह्मणा विनिवेदितम् । सर्वलोकगुरुस्साक्षाद्वरदो हव्यकव्यभुक् ॥" इत्यादिका, "ततो वसिष्ठो धर्मात्मा वह्निमध्ये विधूमके । मन्त्रेण जुहवांचक्रे वपांपरमपावनाम् ॥ यजमानश्च तां भक्त्या पद्मयोनिस्समाहितः । तस्मै निवेदयामास विष्णवे परमात्मने ॥ सर्वलोकेश्वरो देवः प्रणतार्तिहरोहरिः । अनया वपया साक्षाद्गुरुर्मे प्रीयतामिति" इत्यादिका । "तत उत्तरवेद्यन्तः प्रभामण्डल मण्डितम् । पश्चिमाभिमुखं विष्णुं ददृशुस्ते दिवौकसः ॥ तं दृष्ट्वा विस्मितास्सर्वे कृताञ्जलिपुटास्सुराः । सहस्रादित्यसङ्काशे विमाने गिरिमूर्धनि ॥ तिष्ठन्तं हविरश्नन्तं ददृशुस्ते दिवौकसः" इत्यादिका च हस्तिगिरिमाहात्म्यकथाऽनुसंहिता । श्रुतिपरिषदां वेदसदसाम्—"समज्या परिषद्गोष्ठी सभासमितिसंसदः" इत्यमरः ॥ स्त्रीलिङ्गस्वारस्याद्रमणीत्वं प्रतीयते । शुद्धं अस्पृष्टतिमिरादिदोषगन्धम्, व्यवधायकाप्रतिबद्धप्रसरं वा चक्षुः चक्षुरिन्द्रियम् "वेदैः पश्यन्ति ब्राह्मणाः । पितृदेवमनुष्याणां वेदश्चक्षुस्सनातनम् । श्रुतिस्मृती तु विप्राणां चक्षुषी द्वे विनिर्मिते"[1] इति ब्रह्मादिसक-

[1] ब्रह्मादिसकलजगच्चक्षुष्ट्वेन प्रसिद्धानां श्रुतिपरिषदामपि चक्षुर्भूतः तदधी-

लजगच्चक्षुष्ट्वेन प्रसिद्धानां श्रुतिपरिषदामपि चक्षुर्भूतः तदधीनप्रवृत्तिकत्वाद्वेदानां श्रुतिपरिषत्कर्तृकस्वविषयकसाक्षात्कारस्यापि स्वयमेव हेतुभूतत्वाद्वा चक्षुष्ट्वेन रूपणम्। अयं भावः—"ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत्। ततो वचनमीशानं प्राह वेदैर्विनाकृतः॥ वेदा मे परमं चक्षुर्वेदा मे परमं धनम्। वेदा मे परमं

---

नप्रवृत्तिकत्वाद्वेदानाम्। श्रुतिपरिषत्कर्तृकस्वविषयकसाक्षात्कारस्यापि स्वयमेव हेतुभूतत्वाद्वा चक्षुष्ट्वेन रूपणमिति रसास्वादिनी॥ यत्तु—"श्रुतिपरिषत्कर्तृकस्य सर्वविषयकसाक्षात्कारस्य भगवदधीनत्वाच्चक्षुष्ट्वेन रूपणम्" इति व्याख्याय "कथं श्रुतीनां नित्यत्वे तासां सर्वविषयावगाहनस्य भगवदधीनत्वमित्याशङ्कनम् तन्न-श्रुतीनां नित्यत्वेऽपि तद्गतधर्मस्य भगवदधीनत्वे बाधकविरहात्। नित्यचेतनगतानामप्यनित्यसुखदुःखादिधर्माणां दर्शनेन धर्मिनित्यत्वस्य धर्मनित्यत्वानियतत्वात्॥ एतेन—नित्यानामपि भगवन्नित्येच्छाधीनत्वमिति संप्रदायात—इति समाधानमप्यसंबद्धं वेदितव्यम्। यदपि—यद्वा तासां सर्वविषयावगाहनशक्तिः चक्षुष्ट्वेनाध्यवसीयते। तद्धेतुत्वाद्भगवतस्तत्त्वेन व्यपदेशः इति पक्षान्तरम्—तदपि न. "भगवतश्चक्षुष्ट्वेन रूपणाद्रूपकालङ्कारः" इत्युदीच्यस्वकीयोक्तिविरोधात्। हेतुहेतुमद्भावादिना तत्त्वव्यपदेशस्थले रूपकानुन्मेषस्याकरेषु व्यक्तत्वात् एवं चक्षुःपदेन साध्यवसानवृत्त्या अवगाहनशक्तिप्रतिपादनं तदनन्तरं सारोपवृत्त्या भगवति तत्त्वप्रतिपादनमिति युगपदेकस्मिन् चक्षुःपदे सारोपसाध्यवसानवृत्त्योः परस्परविरुद्धयोरङ्गीकारप्रसङ्गः॥ यदपि श्रुतिपरिषदां चक्षुरित्यनेन तासां परमप्रेमास्पदत्वं भगवति व्यञ्जयता परमतात्पर्यविषयत्वमुक्तं भवतीति तदपि स्वकृतचक्षुःपदविवरणप्रतिकूलमेव। साक्षात्कारहेतुत्वरूपसाधर्म्यपुरस्कारेणैव चक्षुष्ट्वरूपणस्य पूर्वं विवृततया चक्षुःपदेन परमप्रेमास्पदत्वव्यञ्जनाया असंभवात्। प्रेमास्पदत्वरूपसाधर्म्यमूलकरूपणाङ्गीकारे हि तथा व्यञ्जनोक्तिसंभवः॥ ३४॥

धाम वेदा मे ब्रह्म चोत्तमम् ॥ मम वेदा हृतास्सर्वे दानवाभ्यां बलादितः । अन्धकारा इमे लोका जाता वेदैर्विवर्जिताः ॥ वेदे हृतेऽहं किं कुर्यां लोकान्वै स्रष्टुमुद्यतः" इत्यादिना "त्वया विनिर्मितोऽहं वै वेदचक्षुर्वचोऽतिग । ते मे वेदा हृताश्चक्षुरन्धो जातोऽस्मि जागृहि" इत्यन्तशान्तिपर्वहयशिरउपाख्यानोक्तरीत्या वेदाभावे ब्रह्मणोऽप्यन्धीभाववत् "एतस्मिन्नन्तरे राजन् देवो ह यशिरोधरः । जग्राह वेदानखिलान्रसातलगतान्हरिः" इत्युक्तरीत्या दैत्यापहृतास्ता यदि भगवान्नोदधरिष्यत्तदा तासामप्यन्धतैवाभविष्य-दिति । न च श्रुतीनामचेतनतया तच्चक्षुष्ट्वेन भगवतो रूपणम-युक्तमिति वाच्यम्—तासां विग्रहवत्त्वस्य तत्पूर्वग्रन्थ एव कण्ठ-रवेणोक्तेः, तथाहि—'तावभ्यधावतां श्रेष्ठौ तमोरजोगुणान्वितौ । बलवन्तौ गदाहस्तौ पद्मनाळानुसारिणौ ॥ ददृशातेऽरविन्दस्थं ब्र-ह्माणममितप्रभम् । सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान् ॥ ततो विग्रहिणस्तांस्तु वेदान् दृष्ट्वाऽसुरोत्तमौ । सहसा जगृहतुर्वेदान्ब्र-ह्मणः पश्यतस्तदा ॥ अथ तौ दानवश्रेष्ठौ वेदान्गृह्य सनातनान् । रसां विविशतुस्तूर्णमुदक्पूर्वे महोदधौ" इति ॥ वस्तुतस्तु श्रुति-परिषदां स्त्रीत्वेन रूपणस्य गम्यमानतया उक्तचोद्यस्यैव नावका-श इति ध्येयम् । न केवलमयं श्रुतिपरिषदां चक्षुर्मात्रं किंतु सर्वलोकचक्षुषां भाग्यमपीत्याह—चक्षुषामिति ॥ चक्षुषां आब्र-ह्मपिपीलिकं पश्यतां नयनानामित्यर्थः भागधेयं भाग्यं "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः ॥ "भाग-

रूपनामभ्यो धेयः” इति भागशब्दाद्भाग्यार्थकात्स्वार्थे धेयप्रत्ययः। परिणतं सकललोकचक्षुर्भागधेयमेवेत्यर्थः। अत्र सारास्वादी सवनहविषामित्यनेन रसनेन्द्रियत्वं प्रतीयते तथाऽपि चक्षूरूप इत्याश्चर्यं चक्षुषो हि रूपं विषयो न तु रसः श्रुतिपरिषदामित्यत्र श्रुतिशब्देन श्रोत्ररूपार्थस्यापि क्रोडीकाराच्छ्रोत्रसमूहानां चक्षुरित्यन्यदप्याश्चर्यम्। इन्द्रियाणि हि सर्वाण्यपि चेतनोपकरणान्येव न त्वन्योन्योपकरणानि चक्षुश्चक्षुषां भागधेयमित्याश्चर्यान्तरं च न हि चक्षुश्चक्षुषामेव भाग्यं भवितुमर्हति किंतु चक्षुरिन्द्रियविधुराणाम्। सः पूर्वं लक्ष्मीपतित्वादिना वर्णितः। देवः भगवान् अत्र देव इत्यनेन “केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः। केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं क उ देवो युनक्ति” इति श्रुतिगतो देवशब्दः प्रत्यभिज्ञाप्यते तेन च तत्र चक्षुश्श्रोत्रप्रेरकः क इति प्रश्ने “श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति” इति प्रतिवचनस्य विषयभूतस्सर्वेन्द्रियप्रेरकतया चक्षुषोऽपि चक्षुर्भूतोऽयं देव इति द्योत्यते। तेन पितृदेवर्षिविप्रादिसर्वलोकचक्षुर्भूतश्रुतिपरिषच्चक्षुष्ट्वेन वर्णनमस्य युक्तमेवेत्यपि गम्यते। विनतं प्रणतं करणत्रयपरिकलितनमस्क्रियमित्यर्थः। त्वां पूर्वोक्तप्रक्रियया सवनहवींष्यात्मने साक्षादास्वादनीयतया समर्पितवतश्चतुर्मुखस्यौपवाह्यमिति भावः॥ आविर्मोदैः आविर्भवदानन्दैः दयारसनिर्भरैरिति यावत्। अ-

त एव अमृतासारैः सुधाधारासंपातैः संवदन्ति संवादमैककण्ठ्यं कुर्वन्तीत्यमृतासारसंवादिनः तैस्तथोक्तैः तत्सदृशैरिति यावत् "धारासंपात आसारः" इत्यमरः। ताच्छील्ये णिनिः अनेन। भोग्यत्वजगदुज्जीवकत्वशीतलत्वसौम्यत्वादिकं व्यज्यते अत एव आभिमतवरस्थूललक्षैः अभीप्सितवरदानशौण्डैः पात्रलाघवप्रदेयगौरवादिविमर्शकार्पण्यावधीरणेन यथाऽभीष्टं मुक्तानुभाव्यनित्यकैङ्कर्यपर्यन्तसर्वैश्वर्यनिरतिशयौदार्यधुर्यैरित्यर्थः ॥ "स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे" इत्यमरः ॥ अनेन च कटाक्षविशेषणेनास्य परदैवस्य वरद इति नामेति सूच्यते। कटाक्षैः अपाङ्गदर्शनैः अङ्गीकुर्यात् परिजनाविशेषशेषतया स्वीकुर्यान्नात्र संदेग्धव्यमिति भावः। अत्र भगवतश्श्रुतिपरिषच्चक्षुष्ट्वेन चक्षुर्भागधेयत्वेन च रूपणाद्रूपकालंकारद्वयं अमृतासारस्योपमानस्य कटाक्षैरित्युपमेयस्य, संवादिभिरित्युपमावाचकस्य च त्रयाणामेवोपादानाद्धर्मलुप्तोपमा। न च संवादिभिरित्यस्योपमावाचकत्वं कथमिति शङ्कनीयम्—"इववद्वायथाशब्दाः" इत्युपक्रम्य "सदृक्सदृशसंवादिसजातीयानुवादिनः" इत्युपमावाचकेषु दण्डिनाऽस्य परिगणितत्वात् कटाक्षैरङ्गीकारस्य प्रणतिहेतुकत्वात्काव्यलिङ्गं चेत्येतानि संसृज्यन्ते। उक्तरीत्या विरोधाभासाश्च व्यज्यन्ते॥३४

अथ "प्रीतिसंहृष्टसर्वाङ्गः स्तुत्वा चापि विलोकयन्। कृतप्रसादस्सेवेत नियतात्मा यथोचितम्" इति भरद्वाजसंहितोक्तरीत्या भगवत्प्रसादफलभूतां तत्सेवां च कुर्वीथा इत्याह—

**मध्वास(सि)क्तं सरसिजमिव स्विन्नमालम्ब-**
**मानो देव्या हस्तं तदितरकरन्यस्तलीलारविन्दः ।**
**देवश्श्रीमान् स यदि विहरेत्स्वैरमारामभूमौ**
**व्यक्तो वालव्यजनवपुषा वीजयेस्तं त्वमेव॥३५**

मध्विति ॥ सः अखिलजगज्जन्मस्थितिक्षपणादिलीलतया श्रुतिशतप्रथितः । श्रीरस्यास्तीति श्रीमान् । नित्ययोगे मतुप् । लक्ष्मीनित्यसंबन्धवान् । देवः भगवान् देवराजः । स्विन्नं स्वेदयुक्तं स्विदेरनिटो निष्ठायां "रदाभ्याम्" इति नत्वम् । अनेन प्रियतमस्वकरस्पर्शसौभाग्यवशाल्लक्ष्म्यास्सात्त्विकोद्भेद उक्तः "स्तम्भप्रलयरोमाञ्चास्स्वेदः" इति सात्त्विकेषु स्वेदस्य परिगणनात् । अत एव मधुना मकरन्देन आसक्तं संबद्धं, आसिक्तमिति पाठे आर्द्रीकृतमित्यर्थः "मधु मद्ये पुष्परसे" इत्यमरः ॥ सरसिजं पद्ममिव स्थितम् । [1]देव्याः महा-

[1] देव्याः महादेव्याख्यायाः श्रिय इति रसास्वादिनी । यत्तु—देव्याः महादेवीनाम्न्याः श्रीदेव्याः "महादेव्यै च विद्महे" इत्यादिश्रुत्या लक्ष्म्या महादेवीनामत्वमिति तन्न. हस्तिशैले अर्चात्मना अवतीर्णाया हि श्रियः महादेवीति नाम दिव्यदेशान्तरावतीर्णदेवीव्यावृत्ततया असाधारणम् । यदेव "पेरुंदेवि" इति द्रामिडभाषायां प्रथितम् । तत्र च "महादेव्यै च विद्महे" इति श्रुत्युदाहरणमसंबद्धमेव । न खलु सा श्रुतिरेतदर्चाविषयिणी । निखिलविभवार्चादिसाधारणदेवीनाम्नश्च न प्रकृतोपयोगः । अन्यथा "देव्याः श्रीनाम्न्याः श्रियं देवीमित्यादिश्रुतेः" इत्यादिव्याख्यानस्यापि प्रकृते समुचितत्वापत्तेरिति दिक् ॥ ३५ ॥

देव्याख्यायाः श्रियः दीव्यतेरिगुपधलक्षणे कप्रत्यये प्राप्ते तदपवादः पचाद्यच् पचादौ देवडिति टित्त्वेन पाठात् "टिड्ढा" इत्यादिना ङीप्। हस्तं औचित्याद्दक्षिणं पाणिं आलम्बमानः वामकरेण गृह्णानः। अत्र देव इत्यनेन "राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान्" इत्युक्तं राजाधिराजत्वं, देव्या इत्यनेन कृताभिषेकादिव्यमहिषीत्वं च द्योत्यते "राजा भट्टारको देवः, देवी कृताभिषेकायाम्" इति चामरः। आभ्यां पदाभ्यां "सहस्रशीर्षं देवं, विश्वं नारायणं देवं, महादेव्यै च विद्महे, श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्" इत्यादिश्रुतयः प्रत्यभिज्ञाप्यन्ते। उभयोरपि दिव्यदम्पत्योर्लावण्यरूपद्युतिमत्त्वं, क्रीडाकान्तिमोदवत्त्वं च। तेन "तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्। राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा" इत्युक्तप्रक्रियया परस्परानुरूप्यं, लीलायां सामरस्यं च द्योत्यये॥ "दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु" इति हि धातुः। कान्तिरिच्छा तदितरस्मिन् तस्मात् आलम्बितलक्ष्मीकरकमलात् इतरस्मिन् अन्यस्मिन् स्वस्य दक्षिणे आलम्बितस्वहस्तादन्यस्मिन् लक्ष्म्या वामे चेति भावः। करे हस्ते न्यस्तं निहितं, लीलारविन्दं विलासार्थपद्मं येन स तथोक्तस्सन् लीलाया अरविन्दमित्यश्वघासादिवत्तादर्थ्ये षष्ठ्यास्समासः, न तु तादर्थ्यचतुर्थ्याः। तस्य "चतुर्थी तदर्थे" इत्यत्र बलिरक्षितग्रहणेन ज्ञापकेन प्रकृतिविकृतिभाव एवेति नियमितत्वाल्लीलारविन्दयोश्च कुण्डलहिरण्ययोरिव प्रकृतिविकृतिभावाभावात्। यद्वा—लीला अर्थः

प्रयोजनं यस्य तल्लीलार्थं लीलार्थं च तदरविन्दं चेति विग्रहे शाकपार्थिवादित्वान्मध्यमपदलोपः। आरामस्य उपवनस्य, भूमौ प्रदेशे, "आरामस्स्यादुपवनम्" इत्यमरः। आरामशब्देन सकलजनमनोरमत्वं सूच्यते, आ समन्तात् रमन्तेऽस्मिन्निति विग्रहः। स्वैरं स्वच्छन्दं, अतिमात्रविविक्तोद्देशलाभादसंकुचितविस्रम्भविलासवैभवं यथा स्यात्तथेत्यर्थः। अनेन विगळितवेद्यान्तरतया रससार्वभौमशृङ्गारसर्वस्वनिर्भरानुभवो द्योत्यते। "स्वादीरेरिणोः" इति वृद्धिः। विहरेद्यदि विहारं प्राप्नुयाच्चेत् "कदाचिल्लीलया सार्थं लक्ष्म्या लक्ष्मीपतिर्मुने। संचचार वने तस्मिन् सर्वर्तुकुसुमोचिते। क्रीडन्वै स नदीतीरे पुण्यवृक्षसमाश्रिते" इति हस्तिगिरिमाहात्म्ये तस्य देवाधिराजस्य श्रिया सह वनविहारविनोदित्वस्य प्रसिद्धतया कदाचित्तत्र त्वद्गमनावसर एव काकतालीयनयेन यदि लभ्येत तादृशस्संदर्भ इति भावः। एतद्वचनार्थप्रत्यभिज्ञापनायैव देवश्श्रीमान्देव्या इत्युक्तम्। तदा तस्मिन्नवसरे, त्वमेव वालव्यजनं चामरं तस्य वपुषा तद्रूपेणेत्यर्थः। यद्वा—वालव्यजनं, चमरीवालनिर्मितं व्यजनं तालवृन्तं, तद्वपुषेत्यर्थः। "व्यजनं तालवृन्तकम्" इत्यमरः। मण्डलाकारविकसितपक्षपुच्छत्वे त्वद्वपुषस्तालवृन्ताकृतित्वलाभादिति भावः। व्यक्तस्सन् परिणतस्सन्निति यावत्। तं वरदं वीजयेः विहारजनितश्रमापनोदनाय वीजनेन परिचरेः। अनेन तदीयस्वैरविहारस्य कथंचिदपि संकोचो माभूदिति द्योतितं, न हि तिरश्चां सान्निध्यं स्त्रीपुंसक्रियमाणविविक्तविहारस्वाच्छन्द्यं प्रतिबध्नीयात् ॥ किंच—त्वमेव वालव्यजनवपुषा व्यक्तो वीज-

येरित्यस्य, वीजने कर्त्रन्तरस्य करणान्तरस्य वाऽपेक्षा न त्वया कार्या। किंतु "दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः" इत्युक्तरीत्या गरुत्मत इव कर्तृत्वकरणत्वोभयप्रयुक्ततत्कैङ्कर्यधुर्यता तवैवानेनैव शरीरेण स्यादिति भावः। यद्वा—वालव्यजनवपुषा व्यक्तस्सन् तं त्वमेव वीजयेरिति योजना, तदा "दासस्सखा" इत्याद्युक्तसर्वविधकैङ्कर्यैकरतेः खगपतेरप्यदत्तावकाशस्त्वमेव वीजयेरिति भावः। अनेन हंसस्य भगवदन्तरङ्गताऽतिशयलाभो भविष्यतीति द्योत्यते। अथवा—"यत्र यत्र चरेत्तस्मिन्वने लक्ष्मीसहायवान्। तत्र तत्र चचारोच्चैः पक्षौ विस्तार्य पक्षिराट्" इति हस्तिगिरिमाहात्म्योक्तरीत्या पूर्वमिवाद्याप्युद्यानपद्याविहारावसरे गरुत्मता कृतेऽपि वितानातपत्रादिसाध्यच्छायाकरणोपचारे, उक्तरीत्या व्यजनवीजनोपचारं तु त्वमेव रचयेरिति भावः। विपूर्वकात् "ईज गतिकुत्सनयोः" इति भौवादिकाद्धातोर्णिजन्ताल्लिङ्। "वीज व्यजने" इति चौरदिको वा कल्पनीयः। अत्र "व्यक्तश्चक्षुर्गोचरो भूत्वा, वालव्यजनवपुषा चामरवत्सितशरीरेण पक्षेणेत्यर्थः। तं देवं त्वमेव भृत्यभावनया वीजयेः वीजनं कुरु महिषीस्वेदमार्जनं कुर्वित्यर्थः" इति केषांचिद्व्याख्यानस्यापि स्वरूपव्याक्रियैव पराक्रियेति न तत्र द्वैरथं बध्नीमः। अत्र वालव्यजनात्मनाऽभिव्यक्तेरन्यधर्मस्य राजहंसेऽसंभवेन तत्सादृश्याक्षेपादसंभवद्वस्तुसंबन्धनिबन्धना निदर्शना सरसिजमिवेत्युपमया संसृज्यते। लक्ष्मीवरदाभ्यामालम्बनाभ्यां, देवः, देव्येत्याभ्यां सूचितैरालम्बनगतलाव-

ण्यादिगुणैः, आरामभूमाविति तटस्थोद्दीपनेन च विभावितः, हस्तालम्बनादिभिरनुभावितः, स्वेदादिसात्त्विकेन च भावितः हर्षादिभिर्गम्यमानैस्संचारितस्तद्गतो रतिर्नाम स्थायीभावः परिपोष्यत इति संभोगशृङ्गारो व्यज्यत इति संक्षेपः ॥ ३५ ॥

एवं तुण्डीरमण्डलमहाभाग्यानुभूतिजातप्रीतिस्ततः पुरस्तात्प्रशस्तान्कनकसरित्सारिणीशतपरिपोषितक्रमुकनिवहनिचोळांश्चोळान्प्रयाहीति वदंस्तद्देशवैभवमेकादशभिरभिवर्णयति—

**जातप्रीतिर्जनपदमथो मध्यमं लङ्घयित्वा**
**दूराल्लक्ष्यक्रमुकनिवहश्यामलान्याहि चोळान् ।**
**प्रत्युद्गच्छन्मकरवलन (य) स्तम्भितैस्सह्यजायाः**
**स्रोतोभेदैर्विविधगतिभिस्संविभक्तावकाशान् ॥ ३६**

अथो अनन्तरं ओदन्तमव्ययम् । "मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ" इत्यनुशासनात् । जाता तुण्डीरमण्डलमहाविभवानुभवेनोत्पन्ना, प्रीतिरानन्दो यस्य तथोक्तस्सन् [1]मध्यमं आन्ध्र-

[1] मध्यमं आन्ध्रचोळदेशमध्यममिति रसास्वादिनी ॥ यत्तु—काञ्चीचोलदेशयोर्मध्यभवं जनपदमिति—तन्न. जनपदपूर्वोत्तरावध्योः जनपदवाचिपदाभ्यामेव निर्देष्टव्यतया चोळपदस्य जनपदवाचित्वेऽपि काञ्चीपदस्य जनपदवाचिताविरहेण तथाविवरणासंगतेः काञ्चीपदं हि "काञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च" इति कोशान्नगरविशेषपर्यायः । यदि तु—काञ्चीचोलदेशयोरित्यस्य काञ्चीदेशचोलदेशयोरित्यर्थ इत्युच्यते तदा तन्मध्यवर्तिजनपदस्याप्रसिद्धिः । अस्माकं तु आन्ध्रचोलदेशयोर्मध्यमो जनपदस्तुण्डीरमण्डलमेव प्रसिद्ध्यतीति नानुपपत्तिः॥

चोळदेशमध्यभवं "मध्यान्हः" इति भवार्थे शैषिको मप्रत्ययः। जनपदं राष्ट्रमिति यावत्। लङ्घयित्वा अतीत्य, दूरात् दूरं "दूरान्तिकार्थेभ्यो द्वितीया च" इति प्रातिपदिकार्थमात्रे पञ्चमीत्यादि "पश्यन्दूरात्प्रबलगरुताम्" इत्यत्र विस्तरेणावोचाम। लक्ष्याः दृश्याः, अनेनौन्नत्यं व्यञ्जितं, ये क्रमुकाणां पूगतरूणां निवहाः व्यूहाः "घोण्डा तु पूगः क्रमुकः" इत्यमरः। तैः श्यामलान् अनेन गभीरत्वसान्द्रत्वदुरवगाहत्वरमणीयत्वतापहारित्वादिकं व्यज्यते, भगवद्दिव्यविग्रहवन्नीरदसावर्ण्यं तेन च तावदनुभूतेन तच्छ्यामलिम्नैवैतच्छ्यामलिम्नाऽप्यनुभूयमानेनानन्दातिरेको भावीति व्यज्यते। प्रत्युद्गच्छतां स्रोतोऽभिमुखमुद्गच्छतां मकराणां जलजन्तुविशेषाणां "अथ यादांसि जलजन्तवः। तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः" इत्यमरः॥ मकरा हि स्रोतोऽभिमुखं गच्छन्तीति प्रसिद्धिः। वलनेन चलनेन उत्सर्पणेनेत्यर्थः। स्तम्भितैः निरुद्धैः, तत्रतत्र पङ्क्तीभूतानां मकराणामुत्सर्पणेन सेतुनेव निवारितैरिति भावः॥ अनेन तत्रत्यानां मकराणां सेतुबन्धनानुगुणाश्मवद्द्राघीयस्त्वस्थवीयस्त्वद्रढीयस्त्वादिकं द्योत्यते, अत एव विविधा अल्पत्वमहत्त्वादिनानाप्रकारवती बहुमुखा च गतिर्गमनं येषां तैस्तथोक्तैः। वलनस्तम्भितैरित्यस्य भ्रमण स्तम्भितैरिति व्याख्यानं तु भ्रमणशब्दस्य मण्डलाकारगतिविशेषे रूढस्य केवलचलनवाचिवलनशब्दसमानार्थकत्वायोगादभ्युपगमेऽपि स्रोतस्संस्तम्भनरूपविवक्षितार्थानुपयोगात्प्रत्युद्गच्छदिति विशेषणवैयर्थ्याच्चोपेक्ष्यम्। मकरवलयस्तम्भितैरिति पाठे तु, मकरनिकरप्रतिबद्धै-

रित्यर्थः। स्रोतोभेदैः प्रवाहविशेषैः संविभक्ताः संविभागं प्रापिताः, अवकाशाः, अन्तराळप्रदेशाः, येषां तांस्तथोक्तान् संविभागो नामावैषम्येण सर्वेषां देयद्रव्यविभजनं "संविभागश्च भृत्यानां कर्तव्योऽनुपरोधतः" इत्यादौ तथाविधार्थकत्वप्रसिद्धेः, अनेन बहुष्वपि सुतेष्वौरसेषु स्तन्यदायिन्या मातुरिव कावेर्याः पार्श्वद्वयोपाश्रितेषु देशेषु तुल्यवृत्तिता व्यञ्जिता। तेन च सर्वस्यापि प्रदेशस्य सस्यारामादिसमृद्धिमत्तायां वैषम्यगन्धोऽपि नास्तीति सर्वेभ्योऽपि देशेभ्योऽस्य देशस्य रामणीयकमतिभूमिं गतमिति द्योत्यते॥ केचित्तु— "संविभक्तावकाशान् पृथक्कृतप्रदेशान्" इति व्याचक्षते तन्नातीव रमणीयम्। चोळानां निवासो जनपदश्चोळाः, तान् देशविशेषान् "तस्य निवासः" इति चातुर्र्थिकस्याणो "जनपदे लुप्" इत्यनेन लुपि "लुपि युक्तवद्व्यक्तिवचने" इति प्रकृतिवल्लिङ्गवचने। याहि प्राप्नुहि "या प्रापणे" लोण्मध्यमपुरुषैकवचनं, प्रापणमिह गतिः। अत्र दूराल्लक्ष्यक्रमुकनिवहश्यामलत्वकावेरीस्रोतोभेदसंविभक्तावकाशत्वरूपचोळदेशसंपत्समृद्धिवर्णनादुदात्तालङ्कारः। प्रत्युद्गच्छन्मकरवलनस्तम्भितैरित्यद्भुतातथ्यवस्तुवर्णनात्मकात्युक्तिदत्तहस्त इति संकरः। अत्युक्तिलक्षणं तु—"अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्" इति। ननूदात्तालङ्कारादत्युक्तेः को भेदः "रत्नस्तम्भेषु संक्रान्तप्रतिबिम्बशतावृतः। लङ्केश्वरस्सभामध्ये न ज्ञातो वालिसूनुना" इति तदुदाहरणे कविप्रतिभामात्रगोचरतया असंभावितायास्समृद्धेर्वर्णनेन वैलक्षण्याभावादिति चेन्न, संपदत्युक्तावुदात्तं शौर्याद्यत्युक्तावत्युक्तिरिति भेदाङ्गी-

कारात्। नन्वेवमप्यसंबन्धे संबन्धवर्णनरूपातिशयोक्त्याऽत्युक्तिविषयस्याक्रान्ततया कथमस्यास्ततो भेद इति चेत् "अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः। अवकाशो न पर्याप्तस्तव बाहुलतान्तरे॥ अल्पं निर्मितमाकाशमनालोच्यैव वेधसा। इदमेवंविधं भावि भवत्याः स्तनजृम्भणम्" इत्यसदुक्तितारतम्यादिति गृहाण। इदं च कुवलयानन्द एव स्पष्टम्, अनयोरित्यत्रासदुक्तिमात्रं, अल्पमिति पद्ये त्वत्यन्तासदुक्तिरिति तारतम्यं, तथा च लक्षणे अद्भुतेति विशेषणादत्यन्तातथ्यरूपत्वलाभान्नातिशयोक्तावतिव्याप्तिरिति वैद्यनाथः। विस्तरस्त्वन्यत्र। तस्मात् प्रत्युद्गच्छन्मकरवलनस्तम्भितैरित्यद्भुतातथ्यवर्णनादत्युक्तिरेवेयमिति द्रष्टव्यम्। उक्तं च भोजराजेन—"लौकिकार्थमतिक्रम्य प्रस्थानं यत्र वर्ण्यते। तदत्युक्तिरिति प्रोक्तं गौडानां मनसो मुदे" इति। केचित्त्वेनामप्यतिशयोक्तावेवान्तर्भावयन्तीत्यलं बहुना॥ ३६॥

अथ तद्देशविहरमाणरमणीमणीविलासरामणीयकविलोकनात्तव नयनोत्सवो भावीत्याह—

**सन्ध्यारागं सुरभिरजनीसंभवैरङ्गरागैः**
**केशैर्ज्योत्स्नाकलहि तिमिरं पाळिकापीडगर्भैः।**
**आबिभ्राणास्सरसिजदृशो हंसदोलाधिरोहात्**
**आधास्यन्ते मदकलगिरस्तेषु नेत्रोत्सवं ते॥ ३७॥**

सन्ध्येति ॥ हे हंस! तेषु चोळेषु सुरभिस्सुगन्धिः, या रजनी हरिद्रा "निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी" इत्यमरः ॥ संभवन्तीति संभवाः पचाद्यच्, सुरभिरजन्यास्संभवाः सुरभिरजनीसंभवाः तैस्तथोक्तैः अङ्गरागैः अनुलेपनैः सन्ध्यारागं सायंसन्ध्यासमयजन्यमारुण्यं, आबिभ्राणाः हरिद्राचूर्णाङ्गरागलक्षणं सन्ध्यारागं दधाना इत्यर्थः ॥ पाळिकाः क्रमुककुसुमानि "पाळिका पूगकुसुमे समूहेऽश्रचञ्च्वोस्स्त्रियाम्" इति यादवः । ता एव आपीडश्शेखरः "शिखास्वापीडशेखरौ" इत्यमरः ॥ स एव गर्भे येषां तथोक्तैः, गड्वादिराकृतिगणत्वात्सप्तम्याः परनिपातः, पाळिकापीडो गर्भो गर्भस्थो येषां त इति वा, केशैः केशवेशैः, कबरीभिरिति यावत् । ज्योत्स्नया कलहः, ज्योत्स्नाकलहः सोऽस्यास्तीति ज्योत्स्नाकलहि "पूर्वसदृश" इत्यादिना समासः । ज्योत्स्नाव्यतिकारितमिति भावः । तिमिरं तमिस्रं च आबिभ्राणाः पाळिकापीडगर्भकेशाभिन्नज्योत्स्नाकलहि तिमिरं दधाना इत्यर्थः॥रजनीमुखविसृमरं हि तिमिरं सन्ध्यारागप्रभाऽभिभूतत्वेनासंमूर्छितया ज्योत्स्नयाऽवधीरयितुमशक्यमित्यभिप्रायेण ज्योत्स्नाकलहीत्युक्तम् । [1]ज्योत्स्नातिमिरकलहमिति पाठो लेखकस्खलनकृतः मदेन यौवनमदनसं

[1] ज्योत्स्नातिमिरकलहमिति पाठो लेखकस्खलनकृत इति रसास्वादिनी ॥ यत्तु—ज्योत्स्नातिमिरकलहमिति पाठे ज्योत्स्ना च तिमिरं च तयोः कलहं युद्धं कलहवती ज्योत्स्नातिमिरे चेत्यर्थः । 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति न्यायात् इति । तन्न—एतावताऽपि तत्पाठे आचार्याभिसंहितार्थरूपकप्रकरणानुरोधान्वयासंगतेरपरिहारात् । यथा हि तत्पाठे कलहपदार्थप्राधान्ये

भेदजनितेन चित्तविकारविशेषेण कलाः अव्यक्तमधुराः गिरो यसां तास्तथोक्ताः, सरसिजे इव दृशौ यासां ताः स्त्रियः अनेन हर्षोन्निद्र-

---

कलहे पालिकापीडगर्भैः केशैरिति तृतीयान्तार्थस्य तथाविधकेशरूपोपमानाभेदस्य ज्योत्स्नाकलहविशिष्टतिमिररूपोपमेयान्वययोग्यस्य अन्वयानुपपत्त्या अनन्वितार्थकत्व रूपकप्रकरणभङ्गश्च। तथैव कलहविशिष्टयोः ज्योत्स्नातिमिरयोः ज्योत्स्नातिमिरक-लहपदार्थत्वाभ्युपगमेऽपि तावेव दोषौ जागरूकौ ॥ वस्तुतस्तु ज्योत्स्नातिमि-रकलहपदस्य कलहविशिष्टज्योत्स्नातिमिरार्थकत्वाभिधान शाब्दिकमर्यादाविरुद्धमव। ज्योत्स्नातिमिरयोः कलह इति षष्ठीतत्पुरुषसमासव्युत्पन्ने तस्मिन् उत्तरपदार्थो-पसर्जनत्वस्य पूर्वपदार्थप्राधान्यस्य च "प्रथमानिर्दिष्ट समास उपसर्जनम्" इत्यनुशासनविरुद्धस्य न्यायसहस्रेणापि संपादयितुमशक्यत्वात्। अन्वर्था हि सा उपसर्जनसंज्ञा। स्पष्टं चेद तत्सूत्रभाष्यादौ ॥ एतेन अस्य च न्या-यस्यायमर्थः—कृता कृदन्तेन अभिहितो भावः सिद्धावस्थापन्नो धात्वर्थः द्रव्यवत् द्रव्य इव प्रकाशते भासते। द्रव्यवदिति सप्तम्यन्ताद्वति। द्रव्यविशेषणता पन्नोपि प्रकाशत इति। यावदिति—तन्नयायार्थवर्णनमपि न प्रकृतोपयुक्तमिति व्यक्तीकृतम्। प्रकृतस्य कलं हन्तीति व्युत्पादितस्य कलहशब्दस्य समासरूपस्य कृदन्तत्वाभावात्। अत एव रूढ्या तदर्थस्य युद्धस्य सिद्धावस्थापन्नधात्वर्थ-रूपताविरहाच्च ॥ एतेनैव—अत एव साहचर्यनियम इत्यस्य नियतं साहच-र्यमित्यर्थवर्णनम्। 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः' इत्यत्र लक्ष्मी-विशिष्ट सादृश्यमित्यर्थवर्णनं च संगच्छते इत्यप्ययुक्त वेदितव्यम्। नियमल-क्ष्मीशब्दयोरपि भावकृदन्तत्वाभावात्। तत्र तत्र तथाऽर्थवर्णनस्य पर्यवसितार्थप-रतयैवोपपत्तेः शब्दलभ्यार्थपरत्वाभावात् ॥ अन्यथा "यत्संशयव्यतिरेकनिश्चयौ प्रतियोगितावच्छेदकावच्छिन्न यन्न भवति" इत्यादौ व्यतिरेकपदनञ्पदादिव्यत्यासपु-रस्सरं नैयायिकैः प्रदर्शितानामर्थानां शब्दार्थत्वापत्तेः ॥ तत्त्वन्तु—कृदाभहित इत्येतत् 'सार्वधातुके यक्' इति सूत्रे महाभाष्यकारस्य वाक्यम्। यथा—

लोचनत्वं गम्यते । दोलायाः प्रेङ्खोलिकायाः "दोला प्रेङ्खोलिका स्त्रियाम्" इत्यमरः। अधिरोहात् आरोहणाद्धेतोः दोलाधिरोहं विधायेति वाऽर्थः । अस्मिन् पक्षे "ल्यब्लोपे कर्मण्यधिकरणे च" इति पञ्चमी । ते तव नेत्रोत्सवं नयनानन्दं सन्ध्यारागज्योत्स्नातिमिरयुगपत्समावेशमूलकरामणीयकादिति भावः । आधास्यन्ते रचयिष्यन्ते आङ्पूर्वकाद्धधातेर्लृट् ॥ यद्वा—लोकोत्तराम्बराभरणादिपरिष्कारविधुरा अप्येतावतैव प्रसाधनेन परिपूर्णपरिष्क्रिया इव तव नयनोत्सवमाधास्यन्त इति भावः । अनेन तासां रूपसौभाग्यमतिभोग्यमिति द्योत्यते ॥ यथोच्यते—"आरोप्याविध्यविक्षेप्यपरिहार्यैरभूषितम् । यद्भूषितमिवाभाति तद्रूपमिति कथ्यते" इति । अत्र हरिद्राङ्गरागादिषु सन्ध्यारागादित्वरूपणाल्लिङ्गाल्लुलनास्वरूपितमपि रजनीत्वं गम्यत इत्येकदेशविवर्तिरूपकं नयनोत्सवाधानस्य सन्ध्यारागमित्यादिविशिष्टवाक्यार्थेन सम-

---

"अस्ति खल्वपि विशेषस्तिङभिहितस्य कृदभिहितस्य च कृदभिहितो भावो द्रव्यवत्प्रकाशते" इत्यादि । तथा च तिङ्कृदभिहितयोर्भावयोर्लिङ्गसंख्याऽनन्वयित्वतदन्वयित्वरूपवैलक्षण्यप्रतिपादनपरमेव तत् । न तु भावकृदन्ते भावप्राधान्यभञ्जनाय प्रवृत्तम् । तथा च तद्वाक्यस्य भावोपसर्जनत्वस्थापनपरता भ्रान्तिकृतमेव "अमृतरसप्रस्यन्दिमाध्वीकभूः" "साहचर्यनियमो व्याप्तिः" इत्यादौ प्राचामर्वाचां च केषाञ्चिन्निबन्धनकाराणां तदुदाहरणपूर्वकमर्थवर्णनमिति स्पष्टं यक्षसूत्रमनोरमाशब्दरत्नादौ ॥ एतेनैव—'शशस यः पात्रगुणाद्गुणानां संक्रान्तिमाक्रान्तगुणातिरेकाम्' । 'क्षणमसमये दृश्यचन्द्रोदयश्रीः' इत्यादौ भावकृदन्तेऽपि न भावप्राधान्यभञ्जनेन शब्दार्थवर्णनं साधीय इत्यवधेयम् ॥३७॥

थितत्वात्काव्यलिङ्गभेदः । स्वभावोक्तिश्लेषयेतेषामेकवाचकानुप्रवेशलक्षणस्संकरः ॥ हंसेतिसंबुद्धेस्सूर्यरूपार्थक्रोडीकरणाभिसन्धौ रजनित्वेन रूपितानां ललनानां तन्नयनोत्सवाधानमाश्चर्यमिति विरुद्धात्कार्यसंपत्तिरूपविभावनाभेदश्च "विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना" इति लक्षणात् । न हि जात्वपि विभावरी प्रभाकरलोचनगोचरीभवितुमीष्टे तत्प्रभाप्रसरावसर एव तस्या विलीयमानत्वादिति ॥ ३७ ॥

ततः किंचित्प्रतीच्यां दिशि वर्षनाम्नि प्रदेशे श्वेताद्रिं नाम भगवदभिव्यक्तिस्थानं द्रक्ष्यसीत्याह—

**पृथ्वीलीलातिलकसुभगं पश्चिमं भागमेषां**
**नाम्ना वर्षं जलचरनदीमातृकं गाहमानः ।**
**द्रक्ष्यस्याराप्तरिमिततया मग्नकैलासदृश्यं**
**श्वेतं शैलं फणिपतिमिव क्ष्मातलादुज्जिहानम् ॥३८**

पृथ्वीति ॥ हे जलचर! राजहंस! इदं च वक्ष्यमाणनदीमातृकप्रदेशप्रवेशौत्सुक्योत्पादनाय पृथ्व्याः भूदेव्याः लीलायास्तिलकमिति तादर्थ्ये षष्ठीसमासः । लीलार्थं तिलकमिति मध्यमपदलोपी वा समास इति द्व्यन्तरितश्लोकेऽवोचाम । लीलातिलकं विलासार्थचित्रकमिव सुभगं मनोज्ञं रमणीव तिलकेन धरणी शोभतेऽनेनेति भावः । नाम्ना वर्षं वर्षाभिधानमित्यर्थः । नाम्नेत्यत्र "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया । नाम्ना वर्षमित्यनेन नाममात्रेणायं वर्षत्वेन व्यपदिश्यते न तु वृष्टिप्रा-

चुर्यात्। अतस्तत्प्रदेशावगाहने मा संधिक्षथा इति व्यज्यते। नदी माता, मातृवत्पोषयित्री यस्य तं नदीमातृकं "नद्यृतश्च" इति कप्, नदीस्रोतःप्रसारसंपन्नशालिमुखसस्यसमृद्धिशालिनमित्यर्थः। "देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्" इत्यमरः॥ एषां चोळानां पश्चाद्भवं पश्चिमं प्रतीच्यमित्यर्थः। "अग्रादिपश्चाड्डिमच्" इति भवार्थे शैषिको डिमच्प्रत्ययः, डित्त्वात् "टेः" इति टिलोपः। भागं प्रदेशं गाहमानः प्रविशन् सन् परिमिततया परितो न्युब्जतया मग्नः भूमावन्तर्हितकतिपयावयवः यः कैलासः रजतगिरिः स इव, दृश्यः दर्शनीयः रमणीय इत्यर्थः। तं तथोक्तं यदि कदाचित्क्षितितलेऽन्तर्हितकतिपयावयवो दृश्येत कैलासस्तदा तद्वन्मनोहरमिति भावः। यद्वा—मग्नकैलास इति दृश्यं संभावनीयमित्यर्थः॥ दृशेर्ज्ञानसामान्यार्थकत्वात्, अनतिमात्रोन्नततयाऽवदाततया च मग्नकैलासदृश्यमित्युक्तम्। अत एव क्ष्मातलात् वसुंधराऽधःप्रदेशात् "अधस्स्वरूपयोरस्त्री तलम्" इत्यमरः॥ उज्जिहानं उद्गच्छन्तं उत्पूर्वकात् "ओहाङ्गतौ" इत्यस्माद्धातोर्जौहोत्यादिकात्कर्तरि शानच्। फणिपतिं नागराजं शेषमिव स्थितं उज्जिहानमिति वार्तमानकालिकेन प्रत्ययेन तदानीमेवोन्मज्जनमिति द्योतनात्तस्याप्यन्तर्हितकतिपयावयवतयैव दृश्यत्वं द्योत्यते। श्वेतं शैलं श्वेताद्रिं अन्वर्थमिदं नाम वस्तुतो धवळत्वादद्रेः आरात्, समीपे "आराद्दूरसमीपयोः" इत्यमरः॥ द्रक्ष्यसि विलोकिष्यसे। अत्र पृथ्वीलीलातिलकसुभगमिति वाचकलुप्तोपमा। जलचरेति विशेष्यस्य नदीमातृकप्रदेशावगाहनौत्सुक्यजननाभिप्रायकत्वात्परिकरा-

ङ्करः ॥ मग्नकैलासदृश्यमित्यत्र प्राथमिकार्थवर्णनकक्ष्यायामभूतोपमा द्वैतीयीकार्थवर्णनकक्ष्यायामुत्प्रेक्षा मग्नकैलासतादात्म्योत्प्रेक्षायां परिमितत्वश्वेतत्वरूपनिमित्तोपादानादुपात्तगुणनिमित्तद्रव्यस्वरूपोत्प्रेक्षा सेति ध्येयम् । अनयोरुपमोत्प्रेक्षयोरेकत्रैवाचार्यसंरम्भविश्रान्तेर्दुर्निरूपत्वात्संदेहसंकरः ॥ गिरेर्धरातलोन्मज्जत्फणिपतितादात्म्येन संभावनात्स्वरूपोत्प्रेक्षा । साऽप्युक्तरीत्या उपात्तगुणनिमित्तैव । अत्र फणिपतेस्स्वतस्सिद्धत्वेऽपि क्ष्मातलादुन्मज्जनस्य कविप्रौढोक्तिसिद्धत्वादुत्प्रेक्षैव नोपमा अत एवात्रेवशब्दोऽपि संभावनावाचक एव नोपमावाचकः ॥ तदुक्तं कविचक्रवर्तिना—यदाऽयमुपमानांशो लोकसिद्धिमपेक्षते । तदोपमैव येनेवशब्दस्साधर्म्यवाचकः ॥ यदा पुनरयं लोकादसिद्धः कविकल्पितः । तदोत्प्रेक्षैव येनेवशब्दस्संभावनापरः" इति ॥ "सर्वपद्मप्रभासारस्समाहृत इव क्वचित् । त्वदाननं विभाति" इत्यादाविवात्राप्यभूतोपमेत्यभिसन्धौ तु साऽपि संभवत्येवेत्यनयोरपि संदेहसंकरः ॥ दर्पणकारस्तु इमामभूतोपमामुत्प्रेक्षामेवाह—तथा च तल्लक्षणं "भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति ॥ दीक्षितादयोऽप्येवम् ॥ मल्लिनाथादयस्तु असंबन्धे संबन्धरूपातिशयोक्त्युज्जीवितोपमेति तत्रतत्रेदृशस्थलेषु व्याचक्षते ॥ उपमादीनां सर्वेषामन्योन्यं संसृष्टिः ॥२८॥

अथ तत्र श्वेताद्रौ अर्चात्मनाऽऽविर्भूतं "आस्तां चेतसि मे निरन्तरमसावम्भोधरश्यामलः पुण्ये श्रीमति पुण्डरीकनयनश्श्वेताचले तस्थिवान् ॥ मार्कण्डेयविहङ्गराजभुजगाधीशक्षमासेवितश्चन्द्रादित्यविधूतचाम-

रयुगो लक्ष्मीसहायो हरिः" इत्युक्तप्रकारेण ध्यातव्यं पुण्डरीकाक्षनाम निरतिशयदीप्तियुक्तं परं ब्रह्म नमस्यतस्तव श्रेयांसि भूयांसि भविष्यन्तीत्याह—

स्फारालोकप्रशमिततमस्संचयं तत्र पुंसां
प्रत्यग्रूपं प्रगुणविभवं प्रार्थनीयं बुधानाम् ।
नेदीयांसं कुशलनिवहं नन्तुराधास्यते ते
दिव्यं तेजो जलधितनयास्नेहनित्यानुषक्तम् ॥३१॥

स्फारेति ॥ तत्र श्वेताद्रौ प्रत्यञ्चतीति प्रत्यक् "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इत्यञ्चतेस्सुप्युपपदे क्विन् "क्विन्प्रत्ययस्य कुः" इति कुत्वम् । प्रत्यक् रूपं स्वरूपं यस्य तत्तथोक्तं स्वयंप्रकाशस्वरूपमित्यर्थः ॥ प्रत्यक्त्वं च स्वस्मै स्वयमेव भासमानत्वं, किं तन्निर्विशेषचिन्मात्रमित्यत्राह—प्रगुणेति ॥ गुणाः सत्यत्वज्ञानत्वानन्तत्वादयस्स्वरूपनिरूपकाः सर्वज्ञत्वसर्वशक्तित्वादयस्सृष्ट्याद्युपयुक्ताः वात्सल्यसौशील्यादय आश्रितसंग्रहणरक्षणोपयुक्ताः सत्यकामत्वादय इष्टप्रापणार्थाश्च निरूपितस्वरूपविशेषणीभूताः । तेषां विभवो महिमा प्रकृष्टो गुणविभवो यस्य तत्तथोक्तं प्रेत्युपसर्गेण गुणानां परत्वस्वाभाविकत्वे द्योतिते, तथा चाम्नायते—"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति ॥ अत्र परत्वस्वाभाविकत्वे उभयत्राप्यन्विते इत्याचार्याः। अत्र "सत्यं ज्ञानमनन्तं ब्रह्म, नित्यं विज्ञानमानन्दं, यस्सर्वज्ञस्सर्ववित्, सत्यकामस्सत्यसंकल्पः, रिपूणामपि वत्सलः, ज्ञानशक्तिबलैश्वर्यवीर्यतेजां-

स्यशेषतः" इत्यादिप्रमाणसहस्रमनुसन्धेयम् । अत्र सकलगुणबृन्दकन्द-भूतैराश्रितानाश्रितगोचरव्यापारभेदसाधारणैर्ज्ञानादिभिः परत्वं आश्रितरक्षणैकान्तैस्सौशील्यादिभिस्सौलभ्यं च द्योत्यते, एतावताऽनन्तकल्याणगुणाकरत्वमुक्तं अनेनैवाखिलहेयप्रत्यनीकत्वं चार्थसिद्धम् । यद्वा—प्रगुणः अस्तोकः विभवः ऐश्वर्यं यस्य तत्तथोक्तं अनेनैव सर्वगुणक्रोडीकारः न हि कल्याणगुणगणविधुर ईश्वरो भवितुमर्हति । अत एव बुधानां विदुषां ब्रह्मविदामित्यर्थः । प्रार्थनीयं परमपुरुषार्थदानार्थमभ्यर्थनीयं न ह्यनीश्वरः कल्याणगुणगणविहीनोऽभ्यर्थनीयो भवति विवेकिनामिति भावः ॥ अर्चास्वपि—"तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः" इत्युक्तषाड्गुण्यपरिपूर्णत्वं "बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते । अर्चाऽपि लौकिकी या सा भगवद्भावितात्मनाम् ॥ मन्त्रमन्त्रेश्वरन्यासात्साऽपि षाड्गुण्यविग्रहा । सर्वातिशायिषाड्गुण्यं संस्थितं मन्त्रबिम्बयोः ॥ तेनार्च्यो भगवान् साक्षान्नोपचारधिया क्वचित्" इत्यादिभिरुच्यते ॥ "परव्यूहादिविग्रहवत्तद्विग्रहानुप्रवेशादर्चाऽपि षाड्गुण्यप्रकाशकशुद्धसत्त्वद्रव्यमयीत्यर्थः" इति रहस्यरक्षायां गद्याधिकारेऽन्वगृह्यताचार्यैः, अथैवं प्रार्थितमपि बुधैस्तदीयानादिकालप्रवृत्तापराधभूयस्त्वमालोच्य किं तत्कदाचित् "न क्षमामि वसुंधरे" इत्याद्युक्तरीत्या तद्रक्षणे पराङ्मुखं स्यादित्यत आह—जलधीति ॥ जलधितनयायाः श्रियः, अनेन गभीरत्वकृपार्द्रत्वादिकं द्योत्यते तेन च "ततच्चेतनकृतापराधपरिगणनकृपणतासंबन्धमन्धोऽप्यस्या न

संभवतीति व्यज्यते अगभीरहृदयः कृपाविधुरो हि गणयेद् पराधानाश्रितानां स्नेहेन अनुरागेण स्नेहे अनुरागे वा नित्यं अनारतं अनुषक्तं संबद्धं आसक्तं वा अपराधानुगुणतया दित्सन्नपि दण्डं भगवान् "अनुग्रहपरामृद्धिं नित्यमज्ञातनिग्रहाम्; करुणां वेदमातरम्" इत्याद्युक्तरीत्या करुणैकतानशीलतया स्वयं पुरुषकारतामवलम्ब्य "न कश्चिन्नापराध्यति" इत्युक्तप्रक्रियया "किमेवं निर्दोषः क इह जगति" इति चेतनकृतापराधयूथानि क्षमापयन्त्यास्तस्याः प्रार्थनानुगुणमप्रवृत्तौ तदनुरागभङ्गस्स्यादिति भयादवश्यं भूयसोऽपि चेतनानामपराधान् क्षान्त्वाऽभिमुखी भवेदेवेति भावः ॥ यथोच्यते—"यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्" इति ॥ "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकस्सर्वसिद्धान्ते वेदान्तेष्वपि गीयते" इत्येतदप्यत्रानुकूलम् । अनेन निश्श्रीकाणां परब्रह्मता व्यावर्तिता । अत एव भगवद्भाष्यकारा अपि—"ब्रह्मणि श्रीनिवासे" इति श्रीनिवासत्वेनैव परं ब्रह्म विशिंषन्ति । अत एव पुंसां भजमानानां स्फारेण कृपाऽतिशयविकसितेनेत्यर्थः । "स्फायितञ्चिवञ्चिशकि" इत्यादिना स्फायतेः रकि "लोपोव्योर्वलि" इति यलोपः । आलोकेन ज्ञानदीपदायिना कटाक्षवीक्षितेन प्रशमितः तमसां प्राचीनकर्मरूपाज्ञानजन्यानां भगवदुपासनाप्रतिबन्धकानां तद्व्यतिरिक्तविषयप्रावण्यादिरूपतमसां संचयो निवहो येन तत्तथोक्तं "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता"

इति गानात् "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्स हि विज्ञेयस्स वै मोक्षार्थचिन्तकः" इत्यादिकमपीहानुसन्धातव्यम्। अनेन च "महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः। यत्सत्त्वं स हरिर्देवः" इत्याद्युक्तरीत्या सत्त्वप्रवर्तकत्वेनास्य पुरुषोत्तमस्य परस्य ब्रह्मणः "पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः। रजसा तमसा चैव मानसं समभिप्लुतम्" इत्युक्तरीत्या रजस्तमःप्रवर्तकदेवतान्तरापेक्षयोत्कर्षो द्योतितः। यद्वा—तमश्शब्देनात्र प्रकृतिरुच्यते संचयस्संग्रहः संबन्ध इति यावत्। प्रशमितः तमस्संचयो येन तत्तथोक्तं निश्शेषविनिवर्तितप्रकृतिसंबन्धगन्धमित्यर्थः॥ स्वानुभवदानस्यापीदमुपलक्षणं अर्चाप्रणामादिभिर्भजमानानामपि निश्शेषाविद्यानिवृत्तिपूर्वकपरब्रह्मानुभव उच्यते भगवच्छास्त्रे—"सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्। कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः॥ तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत्। तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत्॥ विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्" इति॥ दिव्यं अप्राकृतं तेजः "अथ यदतः परो दिवो ज्योतिर्दीप्यते, तं देवा ज्योतिषां ज्योतिः, परं ज्योतिरुपसंपद्य" इत्यादिश्रुतिशतप्रतिपादितं निरतिशयदीप्तियुक्तं परं ब्रह्म कर्तृ। नन्वेवं ब्रह्मविदां प्रार्थनीयं चेदस्तुनाम तत् तिरश्चो मम किमुपकुर्यादित्यत्राह॥ नन्तुरिति—नन्तुः नमतः नमनमात्रमेवालं नान्यत्किमप्यपेक्षणीयमिति भावः। ते तिरश्चोऽपीति भावः॥ कुशलनिवहं क्षेमपरंपरां क्रमेण मुक्त्यैश्वर्यपर्यन्तामित्यर्थः। नेदीयांसं अतिशयेनान्तिकस्थम्। अन्तिकशब्दादीयसुनि "अन्तिकबाढयोर्नेदसाधौ" इति

प्रकृतेनैदादेशः। आधास्यते विधास्यते "प्रणम्य कृष्णं सहसा पांसुक्लिष्टे महीतले। निष्कल्मषो भवेत्सद्यो ललाटे पांसुमण्डनात्॥ दुर्गे संसारकान्तारमपारमभिधावताम्। एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः॥ एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः। दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय॥ अतसीगुच्छसंकाशं पीतवाससमच्युतम्। ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम्" इत्यादिप्रमाणसहस्रैः प्रणामवैभवप्रतिपादनात्। न ह्यञ्जलिप्रणामादिव्याजमात्रावलम्बनेनोद्वेलमुत्सर्पन्त्यास्तत्कृपासुधास्रवन्त्यास्सुर-नरतिर्यगाद्युत्तममध्यमाधमतारतम्यविवेचनकक्ष्यावकाशोऽस्तीति भावः॥ अत्राप्रकृतदीपपरमर्थान्तरमप्यनुसन्धेयम्॥ अस्मिन्पक्षे पूर्वापेक्षया विशेषणव्यत्यासश्च किंचित् द्रष्टव्यः॥ तथाहि—प्रत्यग्रूपं स्वप्रकाशरूपं न हि दीपस्वरूपं परप्रकाश्यं गुणास्तन्तवः वर्तीरूपाः॥ "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति रत्नमाला॥ तेषां विभवः अतिशयः प्रकृष्टो गुणविभवो यस्य तत्तथोक्तं विभवति व्याप्नोतीति विभवं; पचाद्यच्॥ प्रगुणेषु प्रकृष्टवर्तीषु विभवं प्रगुणविभवमिति वा विग्रहः॥ न केवलं वर्ती वैभवमेव किंतु तदुचितस्नेहपरिपूर्तिरप्यस्तीत्याह—जलधीति॥ [1]जलधितनयायास्स्नेह एव स्नेहस्तैलमिति श्लिष्टरूप-

---

[1] जलधितनयायाः स्नेह एव स्नेह इति श्लिष्टरूपकमिति रसास्वादिनी॥ यत्तु जलधितनयायाः कस्याश्चित् स्त्रिया यस्स्नेहस्तैलं तेन नित्यानुषक्त इत्यप्रकृतार्थपक्षे श्लिष्टरूपकं विनैव विवरणम् तन्न जलधितनयाशब्दितायाः कस्याश्चिदन्यस्याः स्त्रिया अप्रसिद्धत्वेन तदीयतैलनित्यानुषक्तत्वस्य दीपेऽप्रकृतेऽर्थे

पकम् ॥ " स्नेहस्स्यात्पुंसि तैलादिरसद्रव्ये च सौहृदे " इति मेदिनी ॥ तेन नित्यानुषक्तं सततसम्बद्धं प्रगुणविभवं स्नेहनित्यानुषक्तमित्याभ्यां सामग्रीपौष्कल्यनैरन्तर्यं व्यज्यते । तेन तद्वैकल्यप्रयुक्तकादाचित्कप्रकाशमान्द्यव्युदासोऽपि व्यज्यते । अत एव स्फारैः पुष्कलैः आलोकैः प्रकाशैः " आलोको दर्शने द्योतौ " इत्यमरः ॥ प्रशमितः प्रकर्षेण निरस्तः अपुनरुन्मेषं प्रत्यादिष्टः तमस्संचयः तिमिरनिवहो येन तत्तथोक्तम् । अत एव च बुधानां प्रार्थनीयं बुध्यन्ति चक्षुषा रूपादीनिति बुधाः तेषां चाक्षुषज्ञानवतामित्यर्थः ॥ पुंसां नृणां प्रार्थनीयं अन्धतमसावेष्टितप्रदेशगततत्तद्वस्तुपरिज्ञानाय प्रकर्षेणाशंसनीयं, न हि चक्षुरिन्द्रियविकलानां दीपप्रभासाध्यं नाम किंचित्किंचिद्दृश्यत इति सूचनाय बुधानामित्युक्तिः । दिव्यं दिवि भवं " द्युप्रागपाक् " इत्यादिना भवार्थे यत् । स्नेहादिसामग्रीवैकल्यप्रयुक्तस्तोककालनिर्वाणदीपान्तरापेक्षया तत्साकल्यमहिम्ना चिरकालावस्थायित्वेन दिव्यतुल्यमित्यर्थः ॥ अतिरमणीयमिति वा तेजः कर्तृ दीपरूपं ज्योतिरित्यर्थः ॥ नन्तुः प्रणमतः ; नमतेरनिटस्तृच् । दीपस्याग्नेयत्वेन लक्ष्मीप्रदत्वेन च प्रणामार्हत्वं; अत एव सायं दीपारोपणावसरे अञ्जलिप्रणामकरणाद्याचारोऽपि दृश्यते ॥ ते तव कुशलनिवहं क्षेमस्तोमं, नेदीयांसमाधास्यते ॥ " दीपः पापहरो

---

असंभवात् । पद्मालयायाश्च देव्याः तैलकारसम्बन्धिस्त्रीत्वेन विवक्षणानौचित्येन तदीयतैलनित्यानुषक्ततायास्तत्र सुतरामसंभवाच्च ॥ तस्मात् श्लिष्टरूपकविवक्षयैवाप्रकृतार्थसंगतिः ॥ प्रकृत प्रकृतगोचरश्लेषश्च तादृशश्लिष्टरूपकानुप्राणित इत्येव युक्तमाचार्यदर्शितम् ॥

नृणां दीप आपन्निवारकः । दीपो विधत्ते सुकृतं दीपस्संपत्प्रदायकः ॥ देवानां तुष्टिदो दीपः पितॄणां प्रीतिदायकः । तस्माद्दीपो गृहे पूज्यो गृहस्थैश्शुभमीप्सुभिः ” इति पौराणिकोक्तेस्सकलकुशलानि रचयिष्यतीति भावः ॥ प्राचीनव्याख्यायां तु दीपपरोऽर्थो मात्रयाऽपि न प्रदर्शितः को वा तेषामाशय इति न विद्मः ॥ प्रकृताप्रकृतगोचरश्श्लेषो जलधितनयास्नेहनित्यानुषक्तमिति श्लिष्टरूपकानुप्राणितः ॥ [1]भगवत्पक्षे प्रगुणविभवत्वादेर्बुधप्रार्थनीयतां प्रति स्फारालोकप्रशमित तमस्त्वं प्रति च हेतुत्वात्काव्यलिङ्गविशेषः ॥ दीपपक्षेऽपि प्रगुणविभवत्वस्नेहनित्यानुषक्तत्वयोस्स्फारालोकप्रशमिततमस्त्वं प्रति तस्य च

---

[1] भगवत्पक्षे प्रगुणविभवत्वादेर्बुधप्रार्थनीयतां प्रति स्फारालोकप्रशमिततमस्त्वं प्रति च हेतुत्वात्काव्यलिङ्गविशेष इति रसास्वादिनी ॥ यत्तु – भगवत्पक्षे तमस्सञ्चयनिवारकत्वस्य प्रगुणविभवत्वस्य च प्रार्थनीयतां प्रति हेतुत्वात्काव्यलिङ्गमिति—तन्न प्रत्यग्रूपत्वदिव्यत्वयोरपि प्रार्थनीयताहेतुताया अवश्यवाच्याया अवचनात् । तमस्सञ्चयनिवारकत्वस्येह मुमुक्षुप्रार्थनीयत्वाहेतुतया तद्धेतुताया अवचनीयाया वचनाच्च । भगवति बुधानां प्रार्थनीयत्वं हि प्राप्यतया अभ्यर्थनीयत्वम् । तच्च भगवत्स्वरूपस्य तद्गतानां च प्राप्तिकालिकानां रूपाणामास्वाद्यतया सपद्यते । स्फारेत्यादिविशेषणविवक्षितं तु तमस्सञ्चयनिवारकजायमानकटाक्षवत्त्वं प्राप्त्युपायौपयिकं न प्राप्तिकालिकमिति । दीपपक्षे तु दीपस्य न प्राप्यतया अभ्यर्थनीयत्वं अपि तु प्राप्यवस्तुभोगोपकरणत्वेनैवेति भोगोपकरणतादशायामपि तमस्सञ्चयनिवारकालोकस्फूर्तिमत्ताया अव्याहतत्वात् युज्यत एव स्फारेत्यादिविशेषणस्य प्रार्थनीयताहेतुत्वविवक्षणम् । ततश्च दीपपक्षे स्फारेत्यादिविशेषणस्य प्रार्थनीयताहेतुतया काव्यलिङ्गस्याचार्योपदर्शितस्यानुक्तिरप्ययुक्तैवेति बोध्यं तदिदं सर्वं सुगममत्रत्यां रसास्वादिनीसूक्तिं सावधानं परामृशताम् ॥

बुधप्रार्थनीयतां प्रति हेतुत्वात्काव्यलिङ्गद्वयम् ॥ बुधानामिति विशेष्यस्य प्रार्थनाकरणार्हताभिप्रायगर्भत्वात्परिकराङ्कुरः। [1]पक्षद्वयेऽपि नन्तुरित्यस्य विशेषणगत्या कुशलाधानं प्रति हेतुत्काव्यलिङ्गम्। एवमुभयकक्ष्यागतानामलङ्काराणां पूर्वोक्तश्लेषेण सहैकवाचकानुप्रवेशसंकर इति दिक् ॥३९

अथ तत्र नीलीनाम्न्या राक्षस्या रक्षिततयाऽतिरमणीयदर्शनं वनं परिचिनुया इत्याह—

**स्निग्धच्छायं तदनु विततं तस्य धामेव नीलं**
**नीलीरक्षानियतललितं काननं संविचीयाः।**
**दृष्टे तस्मिन्ननिमिषवधूनित्यनिर्वेशयोग्ये**
**स्वर्गोद्यानश्रियमपि लघुं मंस्यते मानसं ते॥४०॥**

स्निग्धेति ॥ तदनु पुण्डरीकाक्षप्रणामानन्तरं स्निग्धा मनोज्ञा गाढा वा छाया अनातपः यस्य तत्तथोक्तं विततं विस्तृतं तस्य पूर्वो-

[1]पक्षद्वयेऽपि नन्तुरित्यस्य विशेषणगत्या कुशलाधानं प्रति हेतुत्वात्काव्यलिङ्गमिति रसास्वादिनी। यत्तु—नन्तुरिति विशेषणस्य कुशलाधानार्हत्वाभिप्रायकत्वात्परिकर इति—तन्न, प्रणम्य कृष्ण सहसा पांसुक्लिष्टे महीतले। निष्कल्मषो भवेत्सद्यो ललाटे पांसुमण्डनात् ॥ दुर्गसंसारकान्तारमपारमभिधावताम्। एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः ॥ इत्यादिभिः प्रमाणैरत्रैवाचार्यैरुदाहृतैस्स्वेनाप्यनूदाहृतैः नमनस्य कुशलाधानहेतुतायास्स्फुटतया नन्तुरिति विशेषणस्य कुशलाधानहेत्वर्थान्तरव्यञ्जकताकल्पनस्यानावश्यकत्वात्। यस्य हि विशेषणस्य प्रकृतार्थहेतुत्व प्रमाणान्तरैर्नावधृतं तस्य हि प्रकृतार्थहेत्वर्थव्यञ्जकत्वविवक्षया परिकरकथनमालंकारिकसम्मतमिति ॥ ३९ ॥

क्तस्य भगवतः धाम रोचिरिव विग्रह इव वा नीलं श्यामलं "गृहदेहत्विट्प्रभावा धामानि" इत्यमरः । अनेन सबहुमानमवश्यपरिचेयत्वं द्योत्यते । नीलीरक्षानियतललितं नील्याः नीलीनाम्न्या राक्षस्याः, रक्षया पालनेन नियतललितं नियमेन मनोहरं सर्वतोमुखनीलीनामनिशाचरीरक्षणनिराबाधतया किसलयदळकोरककुसुमशलाटुकाफलादिकदर्थनलेशवैधुर्येणातिरमणीयमिति भावः । अत्र नीलीनाम्नी काचन निशाचरी तद्वनं गोपायतीति श्वेताद्रिमाहात्म्यकथाऽनुसन्धेया । ब्रह्माण्डपुराणे च श्रीरङ्गमाहात्म्ये—"तत उत्तरतः पश्चान्नीलीवनमिति श्रुतम् । तत्र व्याघ्रासुरं हत्वा भगवान्भूतभावनः" इत्युक्तम् । नीलीत्यत्र—"जानपदकुण्डगोणस्थलभाजकालनील" इत्यादिसूत्रस्थेन "संज्ञायां वा" इति वार्तिकेन नीलशब्दाद्वैकल्पिको ङीप् ॥ यत्तु—"नीलीपुष्पस्तबकललितम्" इति केषांचिदर्वाक्तनानां पाठप्रकल्पनं तदनुरोधेन व्याख्यानकल्पनं च तत्तु तत्क्षेत्रमाहात्म्यापरिज्ञानमूलकं, भूयिष्ठप्राचीनश्रीकोशगतमूलव्याख्यापाठविरुद्धत्वात्तत्रास्मदुक्तरीत्यैव पाठदर्शनात् । काननं वनं संविचीयाः परिचेषीष्ठाः; संविपूर्वकात् "चिञ् चयने" [1]इत्यस्मात्सौवादि-

[1] चिञ् चयने इत्यस्मात्सौवादिकाद्धातोरित्यादि रसास्वादिनी ॥ यत्तु—चिञ् चयन इत्यस्माद्भौवादिकाद्धातोरिति—तदिदं रसास्वादिनीसर्वस्वचौर्यस्य निदर्शनम् ।' रसास्वादिनीमुद्रितकोशे हि सौवादिकादित्यस्य स्थाने भौवादिकादित्यक्षरयोजकदोषेण निपातितम् । स्पष्टं चेदं शुद्धाशुद्धपत्रिकायां रसास्वादिनीमुद्रितकोशे ॥ ४० ॥

काद्धातोः कर्तर्याशिषिलिङि यासुटि "अकृत्सार्वधातुकयोः" इति दीर्घः। संविचेथा इति पाठस्तु वर्णभ्रममूलकलेखकस्खलननिबन्धनः, तथा रूपासिद्धेः। "ओ विजी भयचलनयोः लिङ्" इति केषांचिद्व्याख्यानं तु प्रकृतानुपयोगादनादर्तव्यम्। यद्यपि क्वचित्प्राचीनव्याख्याकोशेषु "ओ विची भयचलनयोः" इति चवर्गीयप्रथमवर्णघटिततयैव पाठो दृश्यते तथाऽपि तादृशधातोरदर्शनादुक्तदोषतादवस्थ्याच्च सोऽप्यनादरकक्ष्यामेवार्हत्यवगाढुम्। तदेव वनं विशिनष्टि—**दृष्ट** इति॥ अनिमिषवधूनां देवललनानां नित्यं सर्वदा निर्वेशस्योपभोगस्य "निर्वेश उपभोगस्स्यात्" इत्यमरः। योग्ये अर्हे अनेन नन्दनादित्रिदिवोद्यानेभ्योऽप्यस्य रामणीयकातिशयस्तेष्वनादरश्च सूच्यते। तस्मिन् वने **दृष्टे** चक्षुर्गोचरीकृते सति। उपभुक्ते तु किमु वक्तव्यमिति भावः। ते तव दिव्योद्यानविहारिण इति भावः। मानसं चेतः स्वर्गस्य "यन्न दुःखेन संभिन्नं" इत्याद्युक्तनिरतिशयसुखमयप्रदेशस्य उद्यानं आक्रीडं "पुमानाक्रीड उद्यानं राज्ञस्साधारणं वनम्" इत्यमरः। तस्य न तु तत्रत्यस्य यत्किंचित्काननस्येति भावः। श्रियं संपदमपि लघुं अल्पां "त्रिष्विष्टेऽल्पे लघुः" इत्यमरः। "वोतो गुणवचनात्" इत्यस्य वैकल्पिकत्वात् ङीषभावः। मंस्यते ज्ञास्यते "मन ज्ञाने" लट्। किमुत मर्त्यलोकगतोद्यानसंपदमिति भावः। अत एव काव्यार्थापत्तिर्व्यज्यते। अत्र स्वर्गोद्यानसंपदो लघुत्वेन ज्ञानस्यानिमिषवधूनित्यनिर्वेशयोग्यतद्वनदर्शनहेतुकत्वात्काव्यलिङ्गभेदः। तस्य धामेव नीलमित्युपमया संसृज्यते। अत्र पाठकालेऽपि पृथक्पदत्वप्रतीतेः

माधुर्यं नाम गुणः परिपूर्णः "या पृथक्पदता वाक्ये माधुर्यं तन्निगद्यते" इति लक्षणात् ॥ ४० ॥

तत्रैव वनं वर्णयति—

**कुर्वन्नानाकुसुमरजसा यत्र चित्रं वितानं**
**पूगारण्ये मृदु विचलयन्पाळिकाचामराणि ।**
**पादन्यासक्षममवकिरन् क्ष्मातलं पुष्पजालैः**
**प्रायो वायुः परिजनविधिं पञ्चबाणस्य धत्ते ॥**

कुर्वन्निति ॥ यत्र कानने पूगारण्ये क्रमुकवने तत्काननान्तर्वर्तिनीत्यर्थः । "घोण्टा तु पूगः क्रमुके" इत्यमरः । नानाकुसुमानां नानावर्णसुमनसां रजसा परागेण निजनिजप्रकृतितुल्यतया रजसोऽपि नानावर्णत्वमिति भावः । अन्यथा वक्ष्यमाणचित्रवितानत्वरूपणमनालम्बनं स्यात् । चित्रं शबलं "चित्रकिम्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः । वितानं उल्लोचं "अस्त्री वितानमुल्लोचः" इत्यमरः । ऊर्ध्वदेशे वाससा वितन्यत इति वितानं कुर्वन् रचयन् पाळिकाः क्रमुककुसुमानि "पाळिका पूगकुसुमे समूहेऽश्रचक्र्योस्स्त्रियाम्" इति यादवः । तान्येव चामराणि प्रकीर्णकानि "चामरं तु प्रकीर्णकम्" इत्यमरः । चमर्या अवयवश्चामरं "अवयवे च प्राण्योषधिवृक्षेभ्यः" इत्यवयवार्थे वैकारिकोऽण् मृदु सुकुमारं यथा स्यात्तथा सभयमवहिततयेति भावः । विचलयन् कम्प-

यन् वीजयन्नित्यर्थः । "चल कम्पने" ज्वलादिः विपूर्वकादस्मा णिजन्ताच्छता । "कम्पने चलिः" इति घटादिषु पाठात् । "घटादयो मितः" इति मित्त्वे "मितां ह्रस्वः" इति ह्रस्वः । पुष्पजालैः कुसुमसमुदयैः न तु कोरकनिकरैः मुकुळनिवहैर्वा तेषामपरिपाकनिबन्धनकार्कश्यवत्तया सान्द्रतयाऽऽस्तरणेऽपि । तत्र न्यसनेन सुकुमारतरयोः कुसुमायुधचरणयोरभिघातस्स्यादिति भावः । नापि कतिपयैरेव कुसुमैर्वा विरळैः तथा सति वा तदन्तरप्रदेशवर्तिकर्कशशर्करादिव्यतिकरं तच्चरणौ न सहेयातामिति भावः । क्ष्मातलं भूप्रदेशं, [1]पादन्यासस्य चरणविन्यसनस्य क्षमं हितं यथा स्यात्तथा यथास्तोकमपि चरणयोश्शर्करादिव्यतिकरप्रयुक्तक्लेशविसंस्थुलता न स्यात्तथेति भावः । "क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु" इत्यमरः । अवकिरन् सान्द्रतया अवक्षिपन् अनल्पसुखस्पर्शतल्पकल्पनमिव रचयन्निति भावः । वायुः मन्दानिलः पञ्चबाणस्य "अरविन्दमशोकं च" इत्याद्युक्तपञ्चविधसायकस्य मन्मथस्येत्यर्थः । अवश्यं भाविकार्कश्यानां सायकानामप्येवंविधे सौकुमार्ये तत्सौकुमार्यं कियत्स्यादिति भावः । अत्र मन्मथे अरूपितमपि महाराजत्वं

---

[1] पादन्यासस्य चरणविन्यसनस्य क्षमं हितं यथा स्यात्तथा । यथा स्तोकमपि चरणयोश्शर्करादिव्यतिकरप्रयुक्तक्लेशविसंस्थुळता न स्यात्तथेति भाव इति रसास्वादिनी ॥ यत्तु क्षमं योग्यमिति—तन्न तथा सति "पादन्यासोचितं" इत्येव निबद्ध्येताचार्यैः । न तु कषयोगरूपविकटवर्णघटना । तस्मात्क्षमपदस्य हितार्थकत्वमेवात्राचार्याभिमतमिति बोध्यम् ॥ ४१ ॥

गम्यते रजआदिषु वितानत्वाद्यारोपरूपरूपकाल्लिङ्गात् । परिजनविधिं किङ्करकृत्यं धत्ते वितनुते प्राय इत्युत्प्रेक्षाव्यञ्जकं "मन्ये शङ्के ध्रुवं प्रायः" इत्याद्यनुशासनात् । अत्र परिजनकृत्यविधानोत्प्रेक्षाया वितानकरणादिनिमित्तकत्वात्क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा सा च पूर्वोक्तरूपकानुप्राणिता समृद्धिमद्वस्तुवर्णनात्मकोदात्तेनैकवाचकानुप्रविष्टेन संकीर्यते । अत्र कुसुमायुधस्य कुसुममयैरेवोपकरणैः परिजनविधिविधानवर्णनादनुरूपवस्तुवर्णनात्मकस्समालङ्कारो व्यज्यते । माधुर्यादयो गुणा यथासंभवमूहनीयाः ॥ ४१ ॥

अथ तत्र प्रवहन्तीं तद्देशललामभूतां कवेरजातामभिवर्णयति द्वाभ्याम्—

**स्रोतोवेगादथ जनपदं सौम्य सीमन्तयन्ती**
**प्रत्यादेशो विबुधसरितस्स्यन्दते सह्यकन्या ।**
**कालेकाले परिणतिवशात्पर्वभेदावकीर्णैः**
**पुण्ड्रेक्षूणां पुळिनविशदैर्गद्गदा मौक्तिकौघैः॥**

स्रोत इति ॥ हे सौम्य! हंस! [1]अथ अनन्तरं स्रोतसः प्रवाहस्य

---

[1]अथ अनन्तरमिति रसास्वादिनी ॥ एतदादिश्लोकत्रयस्यैकवाक्यतयाऽन्वयोऽङ्गीकार्यः सौम्येति संबुद्ध्यनुसारात् । संबोधनपदं हि मध्यमपुरुषक्रियायामन्वयेनैव पर्यवसिताकाङ्क्षं भवतीति स्पष्टं शब्देन्दुशेखरवाक्यपदीयादौ । अस्ति हि तदन्वययोग्यमेकान्तारितवक्ष्यमाणपद्ये द्रक्ष्यसीति मध्यमपुरुषक्रियापदम् । अत एवास्मादनन्तरपद्यद्वये संबोधनपदान्तरं नोपात्तम् । उपात्तं तस्माच्चतुर्थे पद्ये सौम्ये-

"स्रोतोऽम्बुसरणं स्वतः" इत्यमरः। वेगात् जवात्। जनानां पदं जनपदः चोळदेश इति यावत्। तं 'नीवृज्जनपदौ" इत्यमरः। अत्र वक्तव्यं सर्वं "प्राचीने तु प्रतिजनपदम्" इत्यत्रैवावोचाम॥ सीमन्तयन्ती सीमन्तवन्तं कुर्वती यथा मध्येचिकुरनिकरं विरचितोल्लेखा सीमन्तरेखा तमुभयथा विभजते तथा मध्येजनपदं प्रवहमाना तं द्वेधा विभजन्तीत्यर्थः। [1]सीम्नोः केशसीम्नोः अन्तः

---

त्येव संबोधनपदम्। तस्मादत्रत्यस्य सौम्येति संबोधनस्येव अत्रत्याथशब्दार्थस्य नीलीवनपरिचयानन्तर्यस्य "तस्मिन्द्रक्ष्यसि" इत्येकान्तरितपद्यस्थायां दर्शनक्रियायामन्वय इति भावः। एतेन—तां द्रक्ष्यसीति शेषः। अथेत्यस्यान्वयानुरोधात् इति परास्तम्, अनध्याहारेणैवोपपत्तेर्वर्णितत्वात्॥ यदपि—अत्रेदं बोध्यम् 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यादिकोशेषु देशकालसाधारणस्यानन्तरशब्दस्यैवोपादानात्कालस्येव देशस्याप्यनन्तरशब्दार्थत्वे बाधकादर्शनेन प्रकृते अथशब्दस्य देशानन्तर्यपरत्वमेव युज्यते अथ स्यन्दते इत्यन्वयसम्भवात्। परंतु आचार्याणामीदृशेन प्रयोगेणास्य प्रामाणिकत्वमनुमीयते। आर्षप्रयोगान्तरं त्वन्वेषणीयमिति—तन्न देशानन्तरे क्वचिदप्यथशब्दस्य प्रयोगविरहात्। प्रकृतस्य च प्रयोगस्य प्रकारान्तरेणैवोपपत्तेरुक्तत्वात्। वस्तुतस्तु आनन्तर्यवाची अथशब्दः क्रियानन्तर्यमात्रवाची। यथोक्तं वार्तिककृता - न चाप्यत्राथशब्देन शास्त्रसम्बन्ध उच्यते। सम्बन्धं क्रियया ह्येष ब्रूते शास्त्राच्च ते पृथक्॥ इति॥ तदेवं अथशब्दस्य क्रियानन्तर्यवाचकतया शास्त्ररूपशब्दानन्तर्यबोधकताया एव वार्तिककृता निराकृतत्वे देशानन्तर्यवाचकत्वं न स्वप्नेऽपि स्मर्तुमर्हमिति सुधियो विदांकुर्वन्तु॥

[1] सीम्नोः केशसीम्नोरन्तः अन्तरं मध्यभाग इत्यर्थः। सोऽस्यास्तीति सीमन्तवान् सीमन्तवच्छब्दात्तत्करोतीति . . . यथा विद्युल्लतावदुज्ज्वलम्या सीम-

अन्तरं मध्यभाग इत्यर्थः । "अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे" इति रत्नमाला। शकन्ध्वादिषु पाठात्पररूपम् । "सीमन्तमस्त्रियां स्त्रीणां केशमध्यमुदाहृतम्" इति शब्दार्णवे । "सीमन्तमस्त्रियां स्त्रीणां केशमध्यस्थपद्धतिः" इति वैजयन्ती च। सोऽस्यास्तीति सीमन्तवान् सीमन्तवच्छब्दात्तत्करोतीति णिजन्ताच्छतरि उगित्त्वलक्षणो ङीप् । णाविष्ठवद्भावेन "विन्मतोः" इति मतुपो लुक्। यथा विद्युल्लतावदुज्ज्वलन्त्या सीमन्तरेखया घनाघनबृन्दमिव चिकुरनिकुरुम्बमुल्लसति तद्वदुभयथा विभक्तः क्रमुकनिवहश्यामलोऽयं जनपदः प्रभाकरकरनिकरप्रतिफलनथळथळितसलिलयाऽनया मध्ये प्रवहमानया समुल्लसतीति भावः। विबुधसरितः गङ्गायाः प्रत्यादेशः निराकृतिः "प्रत्यादेशो निराकृतिः" इत्यमरः। निराकृतिहेतुरिति यावत्, गङ्गापेक्षयाऽतिशयितेति भावः। काले काले तत्तत्काल इत्यर्थः। "नित्यवीप्सयोः" इति वीप्सायां द्विर्वचनम्, परिणतिवशात् परिपाकवशात् पुण्ड्रेक्षूणां पुण्ड्राख्याणामिक्षुविशेषाणां "रसाल इक्षुस्त

---

न्तरेखया घनाघनबृन्दमिव चिकुरनिकुरुम्बमुल्लसति तद्वदुभयथा विभक्तः क्रमुकनिवहश्यामलोऽयं जनपदः . . . अनया मध्ये प्रवहमानया समुल्लसतीति भावः इति रसास्वादिनी ॥ यत्तु सीमन्तयन्ती सीमन्तवन्तं केशवेशवन्तं कुर्वती इति व्याख्याय 'सीमन्तमस्त्रियां स्त्रीणां केशमध्यमुदाहृतम्' इत्याचार्योदाहृतकोशस्यैवोदाहरणम्—तन्न कबरी केशवेश इति कोशेन केशवेशस्य कबरीपर्यायतया सीमन्तपदस्यात्र केशवेशपरत्वे उपदर्शितकोशोदाहरणस्याप्रयोजकत्वात् । कबरीवन्तं कुर्वतीत्यर्थस्य प्रकृते असङ्गतेश्च । चोलजनपदस्य मध्ये प्रवहमानया कावेर्या द्वेधा विभागप्रतीतिर्हि विवक्षिताऽत्र ॥ ४२ ॥

द्भेदाः पुण्ड्रकान्तारकादयः" इत्यमरः। पर्वणां ग्रन्थीनां ग्रन्थिर्ना पर्वपरुषी" इत्यमरः। भेदात् विशरणाद्धेतोः अवकीर्णैः समन्ततो विक्षिप्तैः पुलिनानि तोयोत्थितद्वीपानि तानीव विशदैः स्वच्छैः पुलिनवत्तत्रतत्र राशीभूय विशदतया विद्योतमानैरिति यावत्। "द्वीपोऽस्त्रियाम्" इत्युपक्रम्य "तोयोत्थितं तत्पुलिनम्" इत्यमरः। मुक्ता एव मौक्तिकानि "अथ मौक्तिकं मुक्ता" इत्यमरः। विनयादित्वात्स्वार्थे ठक्। यदाह वामनः—"मौक्तिकमिति विनयादिपाठात्" इति। "क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते" इति क्लीबता। एतच्च "कर्मव्यतिहारे णच् स्त्रियाम्" इति सिद्धे "णचस्स्त्रियामञ्" इति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापितं, अत एव "नीतौ च तद्युक्तात्" इति सूत्रे "धानकाः" इत्युदाहरणं च सङ्गच्छते। अन्यथा धानाशब्दस्य नियतस्त्रीलिङ्गतया अनुकम्पायां कनि "केणः" इति ह्रस्वे "प्रत्ययस्थात्" इतित्वेन भाव्यं, लिङ्गातिवर्तनेन पुंस्त्वे तु न कश्चिद्दोष इत्याहुः। तेषां ओघैः बृन्दैः गद्गदा निम्नोन्नता "बन्धुरं गद्गदं त्रिषु" इति विश्वप्रकाशः। सह्यकन्या कावेरी सह्यगिरिजन्यत्वात्सह्यकन्येत्युक्तिः। स्यन्दते प्रस्रवति प्रवहतीत्यर्थः। "स्यन्दू प्रस्रवणे" भौवादिकादस्माल्लट्। पुण्ड्रेक्षूणामपि मौक्तिकोत्पत्तिस्थानत्वमुक्तं स्कान्दे रत्नपरीक्षाध्याये—"अथ वक्ष्यामि मुक्तानां लक्षणं श्रोतुमर्हथ। जलजा स्थलजा चेति मुक्ताजातिर्द्विधा मता॥ वज्रघातप्रकीर्णा या दन्तपङ्क्तिर्बलस्य तु। सा तु त्रयोदशस्थाने विप्रकीर्णाऽभवत्तदा॥ शङ्खे मत्स्यशिरोदेशे मेघे कण्ठे नतभ्रुवाम्। वंशे

वराहदंष्ट्रायां फणेषु पवनाशिनाम् ॥ करिदन्ते बलाकानां कण्ठे पुण्ड्रेक्षुपर्वसु । शालिस्तम्बे च शुक्तौ च भुजे करटवाजिनः ॥ शङ्खजं मौक्तिकं श्वेतं कपोताण्डनिभं परम् । तत्तु मत्स्यशिरोजातं पाटलीपुष्पसन्निभम् ॥ मौक्तिकं घनसंभूतमथ सूर्यप्रभोदयम् । नारीबलाकाकण्ठाभ्यां भुजात्करटवाजिनः ॥ त्रिभ्यो जाताश्च मुक्तास्तु न सन्त्येवातिदुर्लभाः । वंशजं मौक्तिकं श्रेष्ठं वर्षोपलसमप्रभम् ॥ पोत्रिदंष्ट्रोद्भवं रक्तं सार्पं नीलप्रभायुतम् । करिदन्तोद्भवं पीतं तथा पुण्ड्रेक्षुसंभवम् ॥ तथा च शालिस्तम्बोत्थं शुक्तिजं सोमसन्निभम् । एवं त्रयोदशस्थानान्मुक्ताजातिः प्रजायते ॥ शुक्तेश्च शङ्खाज्जायन्ते मौक्तिकानि बहूनि च । बाहुल्याद्गुणबाहुल्याच्छ्लाघ्यं शुक्तिसमुद्भवम् ॥" इति तत्तद्देवताजातिभेदादिकं तत्रैव विस्तरेण प्रतिपादितम् । "शङ्खशुक्तचभ्रपुण्ड्रेक्षुवेणुमेघाहिवारणाः । वराहश्च बलाका च दश मौक्तिकयोनयः" इत्युक्तिस्तु नारीकण्ठादिस्थानत्रयानादरेण, तज्जन्यमुक्तानां दौर्लभ्यात् । "करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्तचुद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्तचुद्भवमेव भूरि" इत्यष्टस्थानकत्वोक्तिरपि प्रशस्ततरत्वाभिप्रायेण । अत्र तत्तत्स्थानजन्यानां मौक्तिकानामुदाहृतप्रमाणसिद्धनीलपीतादिवर्णत्वमपि किंचिन्नैल्यादिमेळनेनैव, न तु सर्वथा नीलत्वादिना, वस्तुतस्सर्वविधमौक्तिकानामपि धवळतयैव कविभिस्तत्रतत्र वर्णनात् । तेन पुण्ड्रेक्षुजन्यमौक्तिकानां पीतत्वस्योदाहृतप्रमाणसिद्धत्वेऽपि पुळिनविशदैरित्युक्तिर्नानुपपन्नेति ध्येयम् । यद्वा—पुळिनविशदैरित्यस्य पुळिनवद्राशी-

भूय विद्योतमानैरित्यर्थः । अथवा “नद्याः पुळिनमाविश्य गोपीभिर्हेमवालुकम्” । इति श्रीभागवतोक्तरीत्या कालिन्दीपुळिनस्यैव कनकसच्छायवालुकत्वे सिद्धे कनकसरितोऽस्याः पुळिनानां तथाविधत्वं कैमुतिकन्यायसिद्धमित्यभिप्रायेण तथोक्तिः । पुलिनवद्भिशदैः भास्वरैरित्यर्थः । तेनोक्तविधमौक्तिकानामापीतत्वेऽपि न कश्चिद्दोष इति ध्येयम् । प्रत्यादेशो विबुधसरित इत्यत्र “पुरावृत्तमिदं चापि श्रोतुमर्हसि राक्षस । विन्ध्यपादे महानद्यस्सर्वास्समुदिताः पुरा ॥ तत्र गन्धर्व आगच्छद्विश्वावसुरिति श्रुतः । स प्रणामाञ्जलिं कृत्वा दक्षिणां दिशमास्थितः ॥ ततो विवादस्संभूतो नदीनां तत्र राक्षस । मम प्रणाममकरोन्ममायमिति वै मिथः ॥ समुद्रं दक्षिणं गत्वा स गन्धर्वपतिः प्रभो । प्राबोधयत्पद्मनाभं सहस्ये मासि संयतः ॥ अयने चोत्तरे प्राप्ते निवृत्तश्चोत्तरां दिशम् ॥ पुनः प्रणाममकरोन्नदीनां तत्र गायकः । त्वया नमस्कृतं कस्या इत्युक्तो याऽधिकाऽत्र वः ॥ तस्यै कृतः प्रणामोऽयमित्युक्त्वा प्रययौ च सः ॥ आधिक्यं प्रति सर्वासां तासां वादो महानभूत् ॥ नाहमित्येव वै नद्यस्तत्क्षणेन विशश्रमुः । गङ्गायाश्चापि कावेर्या न विश्रान्तिस्तदाऽभवत् ॥ वादश्च सुमहानासीदन्योन्याधिक्यकारणात् । सदनं ब्रह्मणो गत्वाऽपृच्छतां परमेष्ठिनम् ॥ गङ्गाऽधिका न संदेह इत्युवाच प्रजापतिः । तच्छ्रुत्वा दुःखिता चेयं कावेरी सह्यपर्वते ॥ तपसा तोषयामास ब्रह्माणं राक्षसाधिप । गङ्गाधिक्यमभीप्सन्ती चिरकालं सरिद्वरा ॥ तस्यै वरं ददौ ब्रह्मा गङ्गासाम्यं महामते । आधिक्यं न मया दातुं

शक्यमित्येव सोऽब्रवीत् ॥ सारक्षेत्रे तु कावेरी संस्थाप्य प्रतिमां मम। चिरमाराधयामास वरो दत्तस्तदा मया ॥ मा स्तुत्वा प्रणिपत्याह कावेरी मां सरिद्वरा। कावेर्युवाच—देव त्वदङ्घ्रिसंबन्धाद्गङ्गा मामतिरिच्यते। गङ्गासाम्यं मया लब्धमाधिक्यं न कदाच न ॥ महेश्वर उवाच—तस्यै वरमदात्तत्र कावेर्यै कमलेक्षणः। श्रीभगवानुवाच—मत्संबन्धोद्भवं तस्या माहात्म्यं केन वार्यते। तथाऽपि मत्प्रसादेन गङ्गाया अधिका भव ॥ मत्संबन्धाय कावेरि त्वन्मध्ये धाम मामकम्। आगमिष्यति रङ्गाख्यं यत्र नित्यं वसाम्यहम् ॥ नित्यवासं करिष्यामि त्वन्मध्ये सरितां वरे। गङ्गाया अधिका भूया नित्ययोगान्मया सह" इत्यादि श्रीरङ्गमाहात्म्यस्था कथाऽनुसन्धेया। अत्र प्रत्यादेशहेतोः कावेर्या हेतुमता प्रत्यादेशेनैक्यवर्णनाद्धेत्वलङ्कारभेदः। "हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते। लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ॥" इति लक्ष्यलक्षणसंग्रहोक्तेः। अयं च समृद्धिमद्वस्तुवर्णनात्मकोदात्तभेदेन संसृज्यते। जनपदं सीमन्तयन्तीति कावेरीविशेषणेनोक्तरीत्या उपमा व्यज्यत इति वस्तुना अलङ्कारध्वनिः। अनेनैव विशेषणेनास्य जनपदस्य भूदेव्या उत्तमाङ्गस्थानीयत्वप्रतीतेः कर्णाटगौडलाटादिसर्वदेशेभ्योऽप्यतिशयितसमृद्धिमत्ता व्यज्यत इति वस्तुना वस्तुध्वनिः। रामगतकावेरीविषयकभावाभिव्यक्तेर्भावध्वनिश्चेति संक्षेपः ॥ ४२ ॥

पूर्वश्लोके सह्यकन्येत्युक्तं कावेर्याः कन्यात्वमेव प्रपञ्चयति—

सह्योत्सङ्गात्सपदि मरुता सागरं नीयमानां
भद्रालापैर्विहितकुशलां त्वादृशानां द्विजानाम्
यामस्कन्नास्सरसकुहळीपत्रपातैर्निशान्ते
मन्दस्मेरां मधुपरिमळैर्वासयन्तीव पूगाः ॥

सह्येति ॥ सह्यस्य सह्याख्यगिरेः उत्सङ्गात् अधित्यकाप्रदेशादित्यर्थः ॥ जनकस्याङ्कादित्यपि व्यज्यते । "उत्सङ्गो मुक्तसंयोगे सक्थन्यूर्ध्वतलेऽपि च" इत्युत्पलमालायाम् । सपदि सद्यः, न हि प्रादुर्भावानन्तरं तत्र सह्यगिरौ किंचित्कालमप्युषितेति भावः । मरुता मारुतेन सागरं सरस्वन्तं नीयमानां प्राप्यमाणां "नीवह्योर्हरतेश्च" इति द्विकर्मकता । अनेन "असिक्रिया मरुद्वृधे" इति श्रुत्युक्तरीत्या मरुदभिवर्धमानत्वमस्या द्योत्यते, भ्रात्रादिना आप्तेन भर्तारं नीयमानामिति च व्यज्यते । त्वादृशानां भवादृशानां, द्विजानां पक्षिणां छाषताक्ष्र्यमयूरप्रभृतीनां निसर्गतश्शिवंकराणामिति भावः । "दन्तविप्राण्डजा द्विजाः" इत्यमरः । भद्रैः मङ्गलकरैः "श्वश्श्रेयसं शिवं भद्रं" इत्यमरः । "अथ त्रिषु द्रव्ये पापपुण्यसुखादि च" इत्यनुशासनाद्वेद्यलिङ्गता । पापपुण्यशब्दौ, सुखादिशस्तान्ताश्च शब्दा गुणवाचित्वे पूर्वोक्तलिङ्गाः द्रव्यवाचित्वे तु त्रिलिङ्गा इति कोशार्थः । आलापैः आभाषणैः "स्यादाभाषणमालापः" इत्यमरः । "गमनागमनोच्यमानवचनमालापः" इति टीकासर्वस्वकारः । विहितं रचितं कुशलं क्षेमं यया तां तथाविधां ताक्ष्र्या-

दिक्षेमंकरविहगविरुतैर्नैमित्तदर्शिनां जनानां कृतक्षेमामित्यर्थः ॥ पक्षे— विहितं कुशलं यस्यास्तां तथोक्तामिति षष्ठीबहुव्रीहिः, प्रस्थानसमये विहगविरुतैश्शुभनिमित्तैराहितस्वकुशलामित्यर्थः । "दर्शनं तार्क्ष्यचक्राङ्कव्याघ्राटच्छाषबर्हिणाम् । प्रस्थाने शुभदं नृणां विरुतं तु विशेषतः" इति निमित्तवेदिनः । शुद्धानां विप्राणां स्वस्त्ययनाशासनैः कृतक्षेमामित्यपि ध्वन्यते । सरसानि गर्भगतकुसुमसंबन्धिमकरन्दासिक्तानीत्यर्थः । यानि कुहळीनां पूगकुसुमानां पत्राणि छदनानि "पाळिका कुहळी चापि पूगस्य कुसुमे स्त्रियाम्" इति नैघण्टुकाः। "कुहळिः पूगपुष्पिका" इति ब्रह्मवर्गे त्रिकाण्डशेषश्च । सरसेति कुहळीविशेषणं वा । तेन च पूगकुसुमानामतिव्याकोचत्वं द्योत्यते। तेन तत्कोशभूतपत्राणां परिपाकविश्लथत्वं ध्वन्यते। तेषां पातैः पतनैः मन्दं यथातथा स्मेरां तेषां धवळतया तत्र तत्र स्वसलिले निपतितैस्तैः क्वचित्क्वचिद्विशदामिति यावत्। हर्षातिरेकेण स्मयमानामित्यपि व्यज्यते । यां सह्यकन्यां निशाया अन्तो निशान्तः तस्मिन् उषसीत्यर्थः। स्वे स्वे भवने इत्यपि गम्यते "निशान्तं त्रिषु शान्ते स्यात् क्लीबं तु भवनोषसोः" इति मेदिनी। अस्कन्नाः अशुष्काः आर्द्रा इत्यर्थः । "स्कन्दिर् गतिशोषणयोः" इत्यस्माद्भौवादिकादनिटः कर्तरि क्तः, "रदाभ्याम्" इति नत्वत् । प्रेमार्द्रा इत्यपि ध्वन्यते । पूगाः क्रमुकशाखिनः तत्तद्बन्धुसमूहा इत्यपि व्यज्यते। "पूगः क्रमुकबृन्दयोः" इत्यमरः ॥ मधूनां[1] मकरन्दानां परिमळैः सौरभैः चन्दनाद्यनुलेपनामोदैरित्यपि

---

[1] मधूनां मकरन्दानां परिमलैस्सौरभैः इत्यादि रसास्वादिनी ॥ यत्तु—मधूनां

गम्यते। वासयन्ति भावयन्तीव सुरभयन्तीवेत्यर्थः। "भावितं वासितं त्रिषु" इत्यमरः। सा सह्यकन्या स्यन्दत इति पूर्वश्लोकेनान्वयः॥ अत्र[1] सह्यकन्यैव कन्येति संरम्भे, उत्सङ्गादेवोत्सङ्गात्, द्विजानामेव द्विजानामित्यादिश्लिष्टरूपकेण सह्यादावरूपितमपि जनकत्वादिरूपणं गम्यत इत्येकदेशविवर्तिरूपकं, तदुत्तम्भिता च पूगकर्तृक-

---

परिमलैः परिमलवद्भिर्मधुभिरित्यर्थ इति—तन्न यथाश्रुतार्थे बाधकविरहात्। तथार्थस्य शब्दमर्यादया कथञ्चिदप्यलाभस्य सन्ध्यारागमिति पद्ये विस्तरेण प्रतिपादितत्वाच्च॥

[1] अत्र सह्यकन्यैव कन्येति संरम्भे उत्सङ्गादेवोत्सङ्गात् द्विजानामेव द्विजानामित्यादिश्लिष्टरूपकेण सह्यादावरूपितमपि जनकत्वादिरूपणं गम्यत इत्येकदेशविवर्तिरूपकम्। तदुत्तम्भिता च पूगकर्तृकवासयितृत्वोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावसंकरः। सह्यकन्येति कावेरीमात्राभिसन्धौ तु वर्णनीये तद्वृत्तान्ते . . कस्याश्चिन्नवोढवध्वा वृत्तान्तः प्रतीयत इति समासोक्तिः। तदुज्जीविता च पूगकर्तृकमधुपरिमळकरणककावेरीकर्मकवासयितृत्वोत्प्रेक्षेति सकर इति रसास्वादिनी॥ यत्तु—कावेरीवृत्तान्ते वर्ण्यमाने जनकोत्सङ्गात् भ्रात्रादिना भर्तारं नीयमानायाः नवोढाया वृत्तान्तः प्रतीयत इति समासोक्तिः। तया चोत्थाप्यमाना पूगानां वासयितृत्वोत्प्रेक्षा पूगेषु बन्धुव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यत इति तस्याश्च तयोश्चाङ्गाङ्गिभावसङ्करः। अङ्गिन्योरुत्प्रेक्षासमासोक्त्योरपि समप्राधान्यसङ्कर इति। तन्न मरुन्नीयमानत्वादिवशेषितकावेरीकर्मकक्रमुककर्तृकवासनवृत्तान्ते प्रस्तुते भ्रात्रादिनीयमानत्वादिविशेषितनवोढाकर्मकबन्धुबृन्दकर्तृकभावनवृत्तान्तसमारोपरूपाया इह विशिष्टसमासोक्तेरेकत्वेन समासोक्तिद्वयभावेन उक्तरीत्या अङ्गाङ्गिभावसङ्करस्य समप्राधान्यसङ्करस्य वा अनवतारात्। न खलु "अयमैन्द्रीमुखं पश्य" इत्यादौ प्रतिपदार्थं नायकव्यवहारनायिकाव्यवहारसमारोपादिभेदेन समासोक्तिर्भिद्यते॥ ४३॥

वासयितृत्वोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावसंकरः ॥ सह्यकन्येति कावेरीमात्राभिसन्धौ तु वर्णनीये तद्वृत्तान्ते उक्तरीत्या जनकसन्निकर्षाद्भ्रात्रादिना भर्तृसदेशं नीयमानायाः वेदविद्ब्राह्मणकृतस्वस्त्ययनायाः हर्षोन्मीलितस्मितायाः कस्याश्चिन्नवोढवध्वा वृत्तान्तः प्रतीयत इति समासोक्तिः। तदुज्जीविता च पूगकर्तृकमधुपरिमळकरणककावेरीकर्मकवासयितृत्वोत्प्रेक्षेति संकरः ॥ एवमुभयथाऽपि संभवेनैकत्रैवाचार्यसंरम्भस्य नियन्तुमशक्यतया उक्ताङ्गाङ्गिभावसंकरयोः सन्देहसंकरः। अयं च सकारनकारादिपुनरुक्तिलक्षणवृत्त्यनुप्रासेनैकवाचकानुप्रविष्टेन संकीर्यत इति सावधानैर्विभावनीयमिति दिक् ॥ ४३ ॥

अथ "सरसामपि सर्वेषां श्रेष्ठं विप्र सरोद्वयम् । उत्तरापथगं शुद्धं पुष्कराख्यं महासरः ॥ दक्षिणापथगं चन्द्रसरस्संज्ञं च पावनम् । स्मृतिकीर्तनमात्रं च ययोस्स्यादघमार्जनम्" इत्युक्तवैभवां तत्र चन्द्रपुष्करिणीं द्रक्ष्यसीत्याह—

**तस्मिन् द्रक्ष्यस्यमरमहिळामौळिगन्धैरवन्ध्यां**
**आतन्वानां व्यपगतरसं मानसे मानसं वः**
**तीर्थैरन्यैरपि परिगतां शुद्धिहेतोस्समन्तात्**
**चन्द्रोल्लास(घ)प्रथितयशसस्संपदं पुष्करिण्याः॥**

तस्मिन्निति ॥ तस्मिन् "स्रोतोवेगादथ जनपदम्" इति प्रकृते जनपदे अमरमहिळानां देवललनानां "ललना महिळा तथा" इत्यमरः। मौळिगन्धैः कबरीसौरभैः "चूडा किरीटं केशाश्च सं-

यता मौळयस्त्रयः" इत्यमरः। अवन्ध्यां गर्भवतीं तासामनारताप्लवेन तत्कबरीनिर्भरसौरभ्यगर्भितामिति भावः। वः युष्माकं न हि त-वैकस्यैव किं तु भवादृशानामन्येषां च तां पश्यतां हंसानामिति भावः। मानसं चेतः मानसे मानसाख्ये सरसि "कैलासपर्वते राम मनसा निर्मितं सरः। ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः" इत्याद्युक्तरीत्या ब्रह्ममनोनिर्मितत्वेन मानसप्रीतिसंपादनेऽभ्यर्हितेऽपि नित्यनिवासभूतेऽपि चेति भावः। व्यपगतः विशेषेणापगळितः रसः अनुरागः यस्य तत्तथोक्तं "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः। गतेति कर्तरि प्रत्ययेन व्यपेत्युपसर्गाभ्यां च रसस्य स्वयमेवापुनरुन्मीलनं विगळितत्वं द्योत्यते। आतन्वानां विदधानां अनेन मानसापेक्षयाऽस्या नैर्मल्यशैतल्यसौरभ्यभोग्यत्वादि-कमतिमात्रमतिशयितमिति व्यज्यते। शुद्धिहेतोः स्वस्वशुद्धिनिमित्तं "निमित्तपर्याये सर्वासां प्रायदर्शनं" इति हेतुशब्दात् षष्ठी। अन्यैः इतरैः तीर्थैः अश्वत्थवकुळादितीर्थैरपि समन्तात् परितः परिगतां परिवेष्टिताम्। यथोक्तं श्रीमति गारुडे पुराणे चन्द्रपुष्करिणीं प्रस्तु-त्य—"इदं पुष्करिणीतीर्थं त्रिषु लोकेषु विश्रुतम्। तदभ्याशे तु तीर्थानि षडुक्तान्यत्र सन्ति हि॥ मुनिभिर्योगिभिस्सिद्धैस्तपो-निष्ठैरकल्मषैः। काषायिभिस्तथाऽन्यैश्च सततं सेवितान्यपि॥ अ-श्वत्थं वकुळं चाम्रं चतुर्थं च कदम्बकम्। जम्बुकं बैल्वमि-त्याहुस्तेषां नामानि चानघ॥" इति। ब्रह्माण्डपुराणे च—"अष्ट-तीर्थसमोपेतामष्टवृक्षोपशोभिताम्। जुष्टां च विष्णुना पुण्यां च-

न्द्रपुष्करिणीं शुभाम्" इति। यद्वा—कृत्स्नधरातलस्थितैस्तीर्थैस्स्व-स्वशुद्धिहेतोरुपाश्रितामित्यर्थः ॥ यस्माच्च तां न प्रजहौ शेषशायी जगत्पतिः। ततस्सा सर्वतीर्थेभ्यश्श्रेष्ठतामगमन्नदी ॥ कावेर्या गमनादूर्ध्वं चन्द्रतीर्थं च साऽपि च। यस्माद्द्वयं संमिळितं तस्माच्छ्रेष्ठा सरिद्वरा ॥" इत्यादिकानि, "परितस्सर्वतीर्थानि सेवन्ते तां नदीं सदा" इत्यन्तान्यन्यानि चैवंविधानि गारुडब्रह्माण्डादिपुराणान्तर्गतानि प्रमाणान्यत्रानुसन्धेयानि। चन्द्रस्य उल्लासेन राजयक्ष्मनिराकरणपूर्वकाप्यायनदानेन चन्द्रोल्लाघेति पाठो दृश्यते. तदा उल्लाघः नीरोगत्वमित्यर्थः। तेन उल्लाघशब्दो धर्मवाचकोऽपि दृश्यते 'शास्त्रौषधोल्लाघभृतो विदोषाः' इत्यादिप्रयोगदर्शनात्। प्रथितं प्रख्यातं यशो यस्याः तथोक्तायाः पुष्कराणि कमलानि अस्यां सन्तीति पुष्करिणी जलाशयविशेषः। तस्याः चन्द्रपुष्करिण्या इत्यर्थः। "अथ पुष्करिणी चेभ्यां सरोजिन्यां जलाशये" इति मेदिनी। "पुष्करादिभ्यो देशे" इतीनिः। संपदं समृद्धिं द्रक्ष्यसि[1] आलोकिष्यसे। अत्र हंसमानसस्य मानससरोविषयकवैरस्य संपादनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः समृद्धिमद्वस्तुवर्णनात्मकोदात्तालंकारेण संकीर्यते ॥ चन्द्रोल्लासप्रथितयशस इत्यत्र, व्यास उवाच—दक्षस्य चात्मजाः पूर्वमुपयेमे स चन्द्रमाः। तासां सोमः परां मत्वा बहु

[1] यत्तु—पुष्करिण्यास्संपदं संप्रयुक्तां पुष्करिणीमित्यर्थः इति तन्न यथाश्रुतार्थे बाधकविरहात्। तथाऽर्थस्य शब्दमर्यादया कथञ्चिदप्यलाभस्य प्रागेवावेदितत्वाच्च ॥

मेने स रोहिणीम् ॥ अन्या रुदन्त्यः पितरं प्रोचुश्चन्द्रव्यतिक्रमम् । वयं त्वयेत्थं वै दत्तास्स न पश्यति नः पितः ॥ स चन्द्रो रोहिणीसक्तो न वेत्त्यस्मान्कदाचन। व्यास उवाच—इति तासां वचश्श्रुत्वा स दक्षश्चन्द्रमाह्वयत् । तमुवाच भृशं तप्तस्तासामर्थे प्रजापतिः ॥ दक्ष उवाच—मामैवं साहसं कार्षीस्समावृत्तिस्तवोचिता । अन्यथा तु कृते पापं महत्स्याद्रोहिणीप्रिय ॥ तुभ्यं कन्या मया दत्ताः पुरा वै सप्तविंशतिः । त्वदधीनात्मभोगा हि सर्वास्तत्साम्यमावह ॥ अतोऽन्यथा चरसि चेन्महांस्ते स्याद्व्यतिक्रमः । गम्यतां काममित्युक्त्वा तश्चन्द्रं विससर्ज ह ॥ व्यास उवाच—चन्द्रोऽपि रोहिणीसक्तो यथापूर्वमवर्तत । पुनश्च पितरं गत्वा प्रोचुस्तत्पापकर्शिताः ॥ मा मेति चोक्तो बहुशो दक्षेणैवाप्यथोडुपः । चचार विषमं तासु तमाहूयाशपत्पिता ॥ दक्ष उवाच—चापल्याद्बहुशोऽप्युक्तो यन्नाकार्षीर्वचो मम । क्षयार्तो भव शीतांशो ह्यधर्मिष्ठेषु न क्षमा ॥ व्यास उवाच—स शापाभिभवात्सद्यो भृशार्तो भयविह्वलः । हतप्रभो गतमतिः कृशगात्रोऽभवच्छशी ॥ तदभ्याशात्तु निर्गच्छंस्तदा पुष्करिणीमिमाम्। समेत्य शापमोक्षार्थं चचारात्र तपो महत् ॥ विगाह्य सलिलं स्थित्वा दशवर्षाणि पञ्च च । महान्तं कालमेवासौ तीर्थाम्भः प्राविशन्मुने ॥ मुहूर्तमिव शीतांशुर्व्यनयत्कालमत्र सः । आरिराधयिषुर्देवमच्युतं पुष्करेक्षणम् ॥ विकसत्पुष्कराण्यस्मात्समादाय दिने दिने । तत्तीरे दश वर्षाणि पूजयामास चन्द्रमाः ॥ पूजितस्तेन

देवेशस्तस्य प्रत्यक्षतां ययौ । ततः स्तुतिभिरग्र्याभिस्तुष्टाव मधुसूधनम् ॥ इत्यादिका, इति स्तुतो देवनिकायसंवृतः प्रफुल्लनीलोत्पलतुल्यदर्शनः । अथोपसृत्येन्दुसरस्तटं प्रियं जगाद चन्द्रं मधुरं वचो हरिः ॥ त्वया स्तुतोऽहं शीतांशो वद किं ते विवक्षितम् । मद्दर्शनात्तव क्षिप्रमिष्टं संपत्स्यतेतराम् ॥ चन्द्र उवाच—गुहां प्रविष्टं पुरुषं पुराणं पश्याम्यदृश्यं च तमीशितारम् । अतः कृतार्थास्सकला मनोरथाः क्षयं गता ह्यार्तिपरंपरा च मे ॥ श्रीभगवानुवाच—अपि पातकिनश्चन्द्र मद्दर्शनसुखोक्षिताः । भवन्त्यतितरां शुद्धाः किं पुनस्त्वं प्रियोऽसि मे ॥ तव क्षयः क्षयं यातु संभुक्ष्य यथापुरम् । जगन्मङ्गलसंभूतिर्भव त्वं नयनोत्सवः॥ यतस्त्वयाऽस्मिन् सरसि तपस्तप्तं सुदुश्चरम् । अतश्च त्वत्समनाम स्यात्पुण्यतीर्थाग्र्यं सरः ॥ इति श्रीगारुडपुराणीया कथाऽनुसंधेया ॥ ४४ ॥

अथ रोधसि तस्याः पुष्करिण्याः श्रीरङ्गविमाननिवासीभविष्यदनन्तपीठं सेवेथाः यत्सेवनेन तव भविष्यति सर्वाऽपि सिद्धिः यदाख्यायते श्रीमति गारुडे पुराणे—यथार्थमेतद्विज्ञाय नमो धाम्ने करोति यः । स सर्वसिद्धिमापन्नो ह्यमृतत्वाय कल्पते ॥ इतीत्यभिप्रयन्नाह दाशरथिः—

**तीरे तस्या विरचितपदं साधुभिस्सेव्यमानं**
**श्रद्धायोगाद्विनमिततनुश्शेषपीठं भजेथाः ।**

यस्मिन्नस्मत्कुलधनतया सौम्य साकेतभाजः
स्थानं भा(भ)व्यं मुनिभिरुदितं श्रीमतो रङ्ग-
धाम्नः ॥४५॥

हे सौम्य! हंस! इदं च संकोच्यगमनरभसं तत्र भविष्यदस्मत्कुलधननिवासप्रदेशे त्वया सावधानेन भाव्यमिति द्योतयितुं सान्त्ववचनं तस्याः चन्द्रपुष्करिण्याः तीरे विरचितं कृतं पदं स्थानं येन तत्तथोक्तं साधुभिस्सेव्यमानं चन्द्रपुष्करिणीतटावस्थितमनन्तपीठं प्रत्यचिरेणैवागमिष्यामीति भगवदुक्ति तथाविभादित्योक्ति च प्रतिपालयद्भिर्मुनिभिराश्रीयमाणमित्यर्थः ॥ तदेतदुच्यते श्रीमति ब्रह्माण्डपुराणे श्रीरङ्गमाहात्म्ये श्रीरङ्गधामलाभार्थं कृतबहुविधतपःकर्माणं धर्मवर्माणं राजानमुद्दिश्य मुनिभिः—अभ्यर्थितस्तदाऽस्माभिर्दाक्ष्येन च महीपते । नित्यं वासं कुरुष्वात्रेत्यादरेण पुनःपुनः ॥ उवाच प्रीयमाणेन वचनेन जनार्दनः । अचिरेणैव कालेन भवतां हितकाम्यया ॥ आगमिष्यामि कावेर्यां चन्द्रपुष्करिणीतटम् । रावणे निहते पापे मया राघवरूपिणा ॥ विभीषणापदेशेन श्रीरङ्गं धाम मामकम् । चन्द्रपुष्करिणीतीरे सह्यजायास्तु सैकते ॥ अनन्तपीठे श्रीरङ्गं यूयं द्रक्ष्यथ मा चिरम् । मुनय ऊचुः—इत्युक्त्वा प्रययौ देवो देवैरनुगतो हरिः ॥ अस्माभिरनुयातश्च यावदादित्यमण्डलम् । तत्र प्रतिनिवृत्तांश्च दृष्ट्वाऽस्मान्भवतां गुरुः ॥ इदमाह महातेजा आदित्यो भगवान्नृप । आदित्य उवाच—आराधितो मया पूर्वं

ब्रह्मलोके जगत्पतिः ॥ श्रीरङ्गशायी नो देवो मया चाभ्यर्थितस्तदा । मद्वंशजैः पुत्रपौत्रैर्नित्यमाराध्यतां भवान् ॥ तदानीमब्रवीद्देवः प्रसन्नो रङ्गराट् स्वयम् । श्रीभगवानुवाच—अयोध्यायां भवद्वंश्यैः कावेर्यां च दिवाकर ॥ अर्चितोऽहं भविष्यामि नरैरन्यैश्च मामकैः । एवमाह हरिः प्रीतः पुरा मां रङ्गकेतनः ॥ तस्माच्छ्रेयोऽर्थिभिर्विप्रैः कावेरी सेव्यतां नदी । ऐक्ष्वाकाश्चापि चोळाश्च मम प्रीतिकरा हि ते ॥ धर्मवर्माणमुद्दिश्य ध्रुवमेष्यति रङ्गराट् । मुनय ऊचुः—इत्यादित्यवचश्श्रुत्वा निवृत्तास्स्म वयं नृप ॥ तदा प्रभृति वासोऽत्र गृहीतोऽस्माभिरेव च । जातो दाशरथी रामो रावणं च हनिष्यति ॥ निर्भयाश्च भविष्यामो वयं राजन्न संशयः । रङ्गं विमानमादाय राक्षसेन्द्रो विभीषणः ॥ आगमिष्यति राजेन्द्र सत्यमस्माभिरीरितम् । स त्वं गच्छ महाराज राज्यं धर्मेण पालय ॥ तुभ्यं निवेदयिष्यामो राक्षसेन्द्रे समागते ॥ इति । शेषपीठं अनन्तासनं आगमिष्यद्रङ्गविमानस्थित्याधारभूतमित्यर्थः । "पीठमासनम्" इत्यमरः । यथोक्तं पारमेश्वरसंहितायां श्रीरङ्गवैभववर्णनावसरे—ततश्च तत्क्रमाल्लेभे देवस्सर्वेश्वरस्स्वयम् । रामो राजीवनयनो भ्रातृभेदैस्त्रिभिस्सह ॥ निहन्ता राक्षसानां यो मनुष्योऽहमिति ब्रुवन् । दशेन्द्रियाननं घोरं यो मनोरजनीचरम् ॥ विवेकशरजालेन शमं नयति योगिनाम् । कृतकृत्यस्तु यो वेत्ति स्वं भावं दिव्यमुत्तमम् ॥ ददौ विभीषणायासौ प्रियाय प्रियकारिणे । शास्त्रोपदेशपूर्वं तु विमानं

दिव्यलक्षणम् ॥ सोऽपि तच्छिरसा गृह्य ययौ देशं स्वकं प्रति । रवौ मध्यंदिने प्राप्ते कवेरतनयातटे ॥ चन्द्रपुष्करिणीतीरेऽनन्तपीठेऽवतारयत् । इति ॥ श्रद्धा आस्तिक्यबुद्धिः तस्याः योगात् संबन्धात् विनमिता विनम्रिता तनुः मूर्तिः यस्य तथोक्तस्सन् अविनीतो हि "द्विधा भज्येयमपि व न नमेयं हि कर्हिचित्" इत्युक्तरीत्या न कदाचिदपि विनमति त्वं तु तथा मा भूरिति भावः । श्रद्धायोगादित्यनेन करिष्यमाणस्य भजनकर्मणो वीर्यवत्तरत्वं भविष्यतीति द्योतितं "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रवणात् । वीर्यवत्तरत्वं च प्रबलकर्मान्तराप्रतिबद्धफलत्वं अन्यथा "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" इति गानात्कृतमपि कर्म नेहोपयुज्यते नामुत्राप्युपकरोतीति भावः । भजेथाः सेवेथाः भजेर्लिङ् "भज इत्येष धातुर्वै सेवायां परिकीर्तितः । सेवा चात्यन्तनीचत्ववृत्तिर्हि स्वामिनं प्रति ॥" इत्युक्तकिंकरवृत्तिं कुर्याः । असंसेव्यैव तदतिवर्तने किमप्यभद्रं भवेत् । यथोच्यते गारुडे—"पश्यन्तो भगवद्बिम्बं धाम वा तत्परिच्छदम् । अकृत्वा तत्प्रणामादि ये यान्ति पुरुषाधमाः ॥ जात्यन्धास्ते भविष्यन्ति ह्यङ्गहीनापरिग्रहाः" इतीति भावः । तदेतच्छेषपीठं विशिनष्टि—यस्मिन्निति । यस्मिन् शेषपीठे अस्माकं इक्ष्वाकूणां कुलधनतया वंशस्य निधानतया हेतुना अनेन श्रीरङ्गधाम्ना आपदर्थसंग्राह्यत्वमयत्नलभ्यत्वमनुकूलोपायत्वं निरतिशयभोग्यत्वं महनीयत्वं नित्यसेव्यत्वं

चेत्यादिकं व्यज्यते । साकेतमयोध्यां भजनीति तथोक्तस्य सांप्रतमयोध्यामधिवसत इत्यर्थः ॥ " स्यात्साकेतमयोध्यायाम् " इत्यमरः । अस्मत्कुलधनतगेत्यनेन " इक्ष्वाकूणां कुलधनमात्मनोऽभ्यधिकं तदा । श्रिमद्रङ्गं महद्धाम " इति ब्रह्माण्डोक्तं प्रत्यभिज्ञाप्यते ॥ श्रीमतः भगवद्वासुदेवनिवासभूततया सर्वसंपत्समृद्धिसंपन्नस्येत्यर्थः ॥ रङ्ग इति धाम, विमानरूपं स्थानं तस्य अनेन " श्रीमत्यायतने विष्णोश्शिश्ये नरवरात्मजः । श्रीमद्रङ्गं महद्धाम " इत्यादिकं स्मारितम् । स्थानं स्थितिः भाव्यं भविष्यत् इतीत्यध्याहारः इति मुनिभिरुदितमित्यन्वयः । यद्वा—भाव्यं स्थानमित्येवान्वयः भाव्यं भविष्यत् स्थानं स्थितिः ॥ स्थाधातोर्भावे ल्युट् ॥ " अवकाशे स्थितौ स्थानम् " इत्यमरः ॥ मुनिभिः उक्तरीत्या श्रीरङ्गधामागमनप्रतिपालकैः ऋषिभिरन्यैर्वा उदितं कथितं वदतेर्यजादेः कर्मणि क्तः " वचिस्वपियजादीनां किति " इति संप्रसारणम् । यस्मिन् श्रीरङ्गधाम्नोऽवस्थानं भविष्यतीति मुनिभिरुक्तमित्यभिप्रायः । अस्य तदनन्तपीठं भजेथा- इति पूर्वेणान्वयः ॥ भाव्यमित्यत्र भाविशब्दात् " भुवश्च " इत्यौणादिकणिन्यन्तात् " भविष्यति गम्यादयः" इति भविष्यदर्थेऽनुशिष्टाच्चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । भव्यमिति पाठस्तु स्वच्छः । तदा " भव्यगेयप्रवचनीय " इत्यादिना निपातनात्कर्तरि कृत्यप्रत्ययः ॥ भवतीति भव्यमिति विग्रहः । शब्दशक्तिस्वाभाव्यादयं भविष्यदर्थमभिधत्ते । तथा च विश्वः—" भव्यं सत्ये शुभे चाथ भेद्यवद्योग्यभाविनोः" इति । " भव्यं शुभे च सत्ये च योग्ये भाविनि

च त्रिषु" इति मेदिनी ॥ "भव्यं सत्ये शुभे क्लीबं त्रिषु स्याद्योग्यभाविनोः" इति रत्नमाला च ॥ अत एव यादवाभ्युदये द्वादशे सर्गे—"भव्यामवस्थामिव भावयन्ति" इत्यत्र "भव्यां भाविनीम्" इति दीक्षितानां व्याख्यानं च योयुज्यते ॥ यद्वा—भाव्यमित्येवास्तु पाठः तदा "भव्यमेव भाव्यमिति राक्षसवायसबान्धवादिवत् प्रज्ञादिभ्यश्च" इति स्वार्थिकोऽण्वा ॥ केचित्तु—"भाव्यं प्राप्यं भवितुमर्हम्" इति व्याचक्षते ॥ तत्तु "भू प्राप्तावात्मनेपदी" इत्यस्माच्चौरादिकाण्णिजन्तात् "अर्हे कृत्यतृचश्च" इत्यर्हार्थे "अचो यत्" इति यत्प्रत्ययेन निर्वाह्य तत्र प्राप्यमित्येतदर्थप्रदर्शनम् । भवितुमर्हमिति तु तत्तात्पर्यस्य प्रदर्शनं न तु विग्रहस्य । तथा सति "भू प्राप्तौ" इत्यस्याधृषीयत्वेन णिजभावपक्षे भवितुमिति रूपसिद्धावपि तस्माद्यत्प्रत्यये वृद्धिनिमित्ताभावाद्भाव्यमिति रूपं न सिद्ध्येत् ॥ भावयितुमर्हमिति पाठसद्भावे विग्रहप्रदर्शनमेव तद्भविष्यति प्राप्तुमर्हमित्यनेनैवार्थाद्भविष्यदर्थकताऽपि गम्यते ॥ भौवादिकात्तु यत्प्रत्यये वृद्ध्ययोगादुक्तरूपासिद्धिस्तुल्यैव "ओरावश्यके" इति ण्यति कृते उक्तरूपसिद्धावपि "तयोरेव कृत्यक्तखलर्थाः" इति भावकर्मणोरेव कृत्यप्रत्ययानुशासनादस्य चाकर्मकत्वेन भावार्थकत्वस्यैव लाभादवहितेन त्वया भाव्यमित्यादाविव भवनकर्तुरनभिधानात्तद्वाचकस्थानशब्दात्तृतीयया भवितव्यम् । तस्मादुक्तैवोपपत्तिस्साधीयसी॥ अत्र "अनन्तपीठे श्रीरङ्गं यूयं द्रक्ष्यथ मा चिरम्" इत्यनुपदमेवोदाहृता पौराणिकी कथा न विस्मर्तव्या । अत्र केचित् "कुलध-

नतया साकेतभाजश्श्रीमतो रङ्गधाम्नः रङ्गराजस्य स्थानं भाव्यम्" इति व्याचक्षते। तत्र यद्यपि तदुक्तरीत्या अनन्तपीठस्य श्रीरङ्गविमानस्थानत्वेनैव तदन्तर्गतश्रीरङ्गराजस्थानत्वमप्यर्थात्सिध्यति तथाऽप्युदाहृतयोर्ब्रह्माण्डपुराणपारमेश्वरसंहितयोश्श्रीरङ्गविमानस्यैव तत्र स्थापितत्वोक्तेस्स्वारस्यात् उत्तरश्लोके तस्य धाम्न इति विमानस्यैव परामर्शस्वारस्याच्चास्माभिः रङ्गधाम्न इत्येतद्विमानपरतया व्याख्यातम्। अन्यत्रापि ब्रह्माण्डपुराणे—"नभोमध्यं गते सूर्ये चन्द्रपुष्करिणीतटे। अनन्तपीठे श्रीरङ्गं स्थापयामास राक्षसः॥" इत्युक्तं तद्व्याख्याने तूक्तस्वारस्यद्वयमपि दुर्लभमेव। उत्तरश्लोके तस्येत्यनेन श्रीरङ्गराजस्यैव तैः परामृष्टतयाऽत्रापि श्लोके तदनुरोधेन भगवत्परतया व्याख्यानमुचितमेवेति चेन्न तद्व्याख्यानास्वरसत्वस्योत्तरत्र प्रदर्शयिष्यमाणत्वात्॥ कुलधनतयेति निर्दिशतामाचार्याणामप्ययमेवार्थो विवक्षित इति गम्यते॥ "इक्ष्वाकूणां कुलधनम्" इत्यनुपदोदाहृतप्रमाणानुगुण्यात् "लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः" इति श्रीरामायणानुरूप्याच्च। तत्र हि "कुलधनं श्रीरङ्गविमानमिति संप्रदायः" इति गोविन्दराजादिभिर्व्याख्यातम्। ननु—"लब्ध्वा कुलधनं राजा" इत्यत्र कुलधनशब्दस्य न श्रीरङ्गविमानमित्यर्थवर्णनमुचितम्। किंतु पूर्वमेव रामानुज्ञातं राक्षसकुलधनं लङ्काराज्यं लब्ध्वेत्यनुवादः क्रियत इति वक्तुं अभिषेकावसर एव कुलधनशब्दित श्रीरङ्गविमानदानोक्तौ "किंचान्यद्वक्तुमिच्छामि राक्षसेन्द्र महामते। आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम्॥ आराधनीयमनिशं सर्वैर्दे-

वैस्सवामवैः। तथेति प्रतिजग्राह रामवाक्यं विभीषणः ॥ राजा राक्षसमुख्यानां राघवाज्ञामनुस्मरन्।" इत्युत्तरश्रीरामायणग्रन्थेन, "यावच्चन्द्रश्च सूर्यश्च यावत् स्थास्यति मेदिनी। तावद्रमस्व राज्यस्थः काले मम पदं व्रज ॥ इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे। श्रीरङ्गशायिनं स्वस्थमिक्ष्वाकुकुलदैवतम् ॥ रङ्गं विमानमादाय लङ्कां प्रायाद्विभीषणः" इति पद्मपुराणग्रन्थेन चावतारपरिसमाप्तिसमये समागताय विभीषणाय रङ्गविमानदानप्रतिपादकेन विरोधापत्तिरिति चेन्न उदाहृतयोरुत्तरश्रीरामायणश्लोकयोर्गोविन्दराजादिभिरव्याख्याततया प्रक्षिप्तशङ्कास्पदीभूतत्वात् "इदं श्लोकद्वयं प्रक्षिप्तमित्यन्ये" इति महेश्वरतीर्थेनाप्युक्तत्वाच्च विरोधाभावात् ॥ वस्तुतः श्रीरामायणसंहितान्तर्गतत्वेऽपि नानेन श्लोकद्वयेनोक्तार्थो विरुध्यते। अस्य पूर्वमभिषेकावसरे प्रदत्तस्यैव कुलधनस्य रङ्गधाम्नोऽभ्यर्चनायामप्रमत्तेन भाव्यमित्यनुशासनाभिप्रायकत्वात् ॥ तत्र हि "आराधय जगन्नाथम्" इत्येतावदेवोच्यते न तु रङ्गविमानदानमपि अनन्तरं च "तथेति प्रतिजग्राह रामवाक्यं विभीषणः" इति रामवाक्यप्रतिग्रह एवाभिधीयते न तु श्रीरङ्गविमानप्रतिग्रहोऽपि अतो मात्रयाऽपि न पूर्वोत्तरग्रन्थविरोधः ॥ अत एव "राजा राक्षसमुख्यानां राघवाज्ञामनुस्मरन्" इत्यनुस्मरणोक्तिरपि संगच्छते अनुस्मरणं हि पूर्वं श्रुतस्य स्मृतिपथस्थस्यैव न तु तदानीमेव श्रूयमाणस्य तस्मात् पूर्वमभिषेकावसर एव श्रीरङ्गविमानदानं तदर्चनाज्ञापनं च। अवतारोपरमसमये तु तदाराधनावश्यकताद्रढिम्ने

तत् स्मारणमेवेति स्पष्टमेव प्रतीयते । अत एवेदंपरतया प्रवृत्ते श्रीमति गारुडे पुराणे त्रयोविंशाध्याये अभिषेकावसर एव स्वस्मै कुलधनरूपश्रीरङ्गविमानदानं स्फुटतरमभिधीयते विभीषणेनैव । तथाहि—"सुग्रीवो विजितारिं तं सुहृद्भिस्सह सादरम् । राघवं मुनिभिस्सार्धं वसिष्ठस्य मतेन च । अमात्यमन्त्रिप्रवरैरन्यैर्जानपदैस्सह ॥ सुहृद्भिर्नागरैः पौरैः रामप्रियचिकीर्षुभिः । जगतामुपकाराय कपीन्द्रस्त्वभ्यषेचयत्" इत्युपक्रम्य सर्वेषां वानराणामाभिषेचनिकप्रीतिदानमुक्त्वा "वानरेन्द्रेऽभिनिर्याते रामो मामित्युवाच ह । सर्वधर्मभृतां श्रेष्ठो मेघगम्भीरनिस्वनः ॥ यावद्भवति भूरेषा चन्द्रादित्यौ नभस्स्थले । तावद्दत्तं तवाक्षय्यं लङ्कैश्वर्यमिदं मया ॥ गच्छ लङ्कापते लङ्कां कृतार्थस्ससुहृज्जनः । तत्र भुङ्क्ष्व यथाकामं राज्यमक्षय्यभूतिदम् ॥ प्रियस्य प्रियकामेन मयैतत्प्रियकारिणः । श्रीमद्रङ्गमिति ख्यातं मया दत्तं तवाधुना ॥ महद्भूषणमेतद्वा इक्ष्वाकूणां कुलस्य नः । बहुमानात्प्रियत्वेन प्रणयात्प्रीतिकारिणः ॥ ददामि तव तद्धाम जीवितं त्वात्मनो यथा । प्रथितं भवनं लोके गृहाणास्मद्धनं महत् ॥ तत्राराधनमीहस्व वृणीष्व प्रियमात्मनः । आनीयैतत्सुसंहृष्टो लङ्कायां तु रमस्व ह ॥ इत्युक्त्वा मां महातेजा ददौ तद्धाम चात्मन" इति ॥ पाद्मे अवतारावसानावसरे ब्रह्माण्डे अश्वमेधावभृथावसरे च तद्दानोक्तिस्तु कल्पान्तरवृत्तान्ताभिप्रायेण नेया तयोरपि प्रत्ययिततममुनिप्रणीतत्वात् । तदन्वगृह्यताचार्यैः—"आप्तवाचोर्विरोधे स्यात्सृष्टिभेदादियं गतिः । अ-

निश्चितात्मभावानां निश्चितैस्स्यादनादरः" इति ॥ न च प्रतिकल्पं श्रीरङ्गविमानस्य भूतलावस्थानं दुर्वचमिति वाच्यं "कल्पेकल्पे दिवो भूमिमागमिष्यति रङ्गराट्। द्विपरार्धावसाने च स्वधाम प्रतिपत्स्यते" इति ब्रह्माण्डपुराणे प्रतिकल्पं तस्य भूतलावतरणोक्तेः। तस्मात्कुलधनमित्यस्य कुलधनभूतं श्रीरङ्गविमानमित्येवार्थस्सांप्रदायिकः ॥ एतेनैव लब्ध्वा कुलधनमित्यत्र कुलधनशब्देन पूर्वमेव रामाभ्यनुज्ञातं राक्षसकुलधनं लङ्काराज्यं लब्ध्वेति ऋषिणाऽनुवादः क्रियते केचित्तु कुलधनमित्यस्य इक्ष्वाकुकुलदैवतं रङ्गविमानमिति वर्णयन्ति तन्नोपपद्यते इक्ष्वाकुकुलधनमित्यश्रूयमाणत्वात्; अवतारावसानसमये "किं चान्यद्वक्तुमिच्छामि इत्यादिना विभीषणाय तद्दानस्योत्तररामायणे वक्ष्यमाणत्वात् "यावच्चन्द्रश्च सूर्यश्च" इत्यादिना "रङ्गं विमानमादाय लङ्कां प्रायाद्विभीषणः" इत्यन्तेन पद्मपुराणग्रन्थेनावतारपरिसमाप्तिसमय एव तद्दानकथनाच्च। कुलधनशब्देन लङ्काराज्यमेवोक्तमिति वेदितव्यम्" इति महेश्वरतीर्थियव्याख्यानं संप्रदायविद्भिरनादरणीयमेवेति द्रष्टव्यम्; तत्र कुलधनस्येक्ष्वाकुसंबन्धित्वकण्ठोक्त्यभावेऽपि "रामेण सर्वकामैश्च यथार्हं प्रतिपूजितः" इति तत्पूर्वार्धे विभीषणसम्माननस्य रामकर्तृकत्वकण्ठोक्तेस्सामर्थ्यादौचित्याद्वा रामसंबन्धित्वलाभात् ॥ "इक्ष्वाकूणां कुल धनमात्मनोऽभ्यधिकं तदा। श्रीमद्रङ्गं महद्धाम" इति ब्रह्माण्ड पुराणे इक्ष्वाकुसंबन्धित्वकण्ठोक्तेरिहापि कुलधनशब्देन तत्प्रत्यभिज्ञानात्तत्संबन्धित्वसिद्धेश्च ॥ वस्तुतस्तु कुलधनमित्यस्य लङ्काराज्यमित्यर्थ-

वर्णनमेव न युक्तिमत् । तस्य प्रागेव लब्धत्वेन पुनस्तल्लाभवर्णनस्यानावश्यकत्वात् ॥ अनूद्यत इत्युक्तमिति चेत्सत्यमुक्तं न सम्यगुक्तं तु तत् । यदि विभीषणस्य लङ्काराज्यलाभोऽत्रानूद्येत, तर्हि किष्किन्धाराज्यलोभोऽपि सुग्रीवस्य कुतो नानूद्यते ॥ न हि विभीषणेनैकेनैव लब्धं राज्यं अथ स्वतन्त्रतया मुनिना न तदनुवादः कृतः न हि सर्वस्याप्यनुवादः कर्तव्य इति राजाज्ञा अतः स्थितगतिचिन्तननयेन विभीषणराज्यलाभानुवाद एव कृत इति वक्तुं युक्तमिति चेन्न ह्यत्रानुपपद्यमानं नाम किंचिदस्ति येन स्थितगतिचिन्तननयावतारणेनोक्तार्थो निरुह्येत अस्मदुक्तार्थस्यैवोदाहृतप्रमाणैस्सम्यगुपपन्नत्वात् ॥ अत ईदृशागतिकगतिकल्पनादप्युदाहृतवचनान्तरार्थसंवादिरङ्गविमानलाभकथनस्यैव युक्ततमत्वेन निष्प्रयोजनानुवादोक्तिप्रयासो नावश्यकः । अथ मन्यसे " किंचान्यद्वक्तुमिच्छामि " इत्युत्तरकाण्डस्थावतारपरिसमाप्तिकालिकरङ्गविमानदानकथनपरग्रन्थविरोधप्रसङ्गपरिहाराय लङ्काराज्यलाभानुवाद एव युक्त इति इदं पूर्वमेवदत्तोत्तरत्वात्पिष्टपेषणमिति नोत्तरदानमर्हति सांप्रतम् । अथ मतं तुल्येऽपि सुग्रीवविभीषणयोस्सख्ये समक्षमेव सुग्रीवस्य विभीषणायैव लोकोत्तरविमानदाने महदेव प्रकाशितं स्याद्भगवतो दाशरथेर्वैषम्यमिति भियाऽनुवादोक्तिरेव युक्तेति तदाऽपि त्वद्विवक्षिते रामस्य परमव्योमप्रस्थानावसर एव विभीषणाय तद्दानेऽप्युक्तानुपपत्तिस्तदवस्थैव ॥ तस्मिन्नप्यवसरे सुग्रीवसांनिध्यस्य श्रीरामायण एव प्रतिपादनात् ॥ अतस्त्वयाऽपि परिहार्यैव सा अथोभयोस्सान्निध्यतो-

ल्येऽपि तत्तत्कर्मानुगुणफलदातुर्भगवतो न वैषम्यगन्धप्रसङ्गः "वैष म्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति" इति सूत्रितत्वादिति चेत्—इदं तु सम्यगुक्तमायुष्मता ॥ विभीषणस्य तादृशविमान-लाभतदर्चनाद्यौपयिककर्मपरिणतिसद्भावपर्यालोचनयाऽभिषेकावसर एव तद्विश्राणनेऽपि विरोधाभावात् ॥ किंच—उत्सवे महति सुग्रीवा-दितुल्यकक्ष्यतया विश्राणिते विभीषणायापि रत्नादिसातिशयपारितो-षिके प्रसजेत्ककुत्स्थकुलशिरोमणेः रघुनन्दनस्य प्रपन्नाप्रपन्नप्रदेयव-स्तुविभागानभिज्ञत्वलक्षणमानैपुण्यं तच्च "य आत्मदा बलदाः" इत्याद्युक्तरीत्या प्रपन्नजनानामात्मपर्यन्तसर्वस्वदानधूर्वहस्य "ज्ञानी-त्वात्मैव मे मतम्; तेषामेकान्तिनश्श्रेष्ठास्ते चैवानन्यदेवताः ॥ अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् । सकृदेव प्रपन्नाय तवास्मीति च याचते ॥ अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति वदतस्त स्यानुचितं न चायं विभीषणो न प्रपन्नः "भवन्तं सर्वभूतानां शरण्यं शरणं गतः" इत्यादिस्ववचनैरेव तस्य प्रपन्नतायाः स्फु-टत्वात् ॥ अतो महीयस्याभिषेचनिकोत्सवे वितीर्णेऽपि सर्वसाधा-रण्येन रत्नादिसातिशयपारितोषिके तस्यानन्यप्रयोजनतया तदुचि-तकैङ्कर्योपयिकस्वात्मभूतरङ्गविमानरूपसर्वातिशायिपारितोषिकान्तरवित-रणमप्यावश्यकमेव । न च विभीषणो न सर्वात्मनाऽनन्यप्रयो-जनः, तस्य लङ्कैश्वर्यार्थितयैव शरणागतत्वात् ॥ अत एव "राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः" इति हनूमता । "न वयं तत्कु-लीनाश्च राज्यकाङ्क्षी च राक्षसः" इति श्रीरामचन्द्रेणाप्युच्यमानं

संगच्छेते अत एव चास्मदुक्तरीत्या लब्ध्वा कुलधनमित्यस्य लङ्काराज्यलाभानुवादोक्तिरेव स्वारसिकीति वाच्यम् । शरणवरणावसरे "त्यक्त्वा दारांश्च पुत्रांश्च राघवं शरणं गतः" इति विषयान्तरनैराश्यस्य तेनैव कण्ठरवेणोक्तत्वादनन्तरं च श्रीचक्रवर्तिनन्दनसन्निधौ "परित्यक्ता मया लङ्का मित्राणि च धनानि च । भवद्गतं मे राज्यं च जीवितं च सुखानि च" इति सर्वपुरुषार्थत्वेन भवच्चरणारविन्दमेवाध्यवसितवानिति विज्ञापितत्वाच्च तस्यानन्यप्रयोजनाधिकारित्वस्य स्फुटत्वात् ॥ अतो यत् "राज्यं प्रार्थयमानस्तु" इति हनुमद्वाक्यं यच्च "राज्यकाङ्क्षी च राक्षसः" इति श्रीरामवाक्यं तत्सर्वं रामभक्त्याविलस्य महाराजसुग्रीवस्य व्यामोहप्रशमनाय नीतिशास्त्रोदितराजवृत्तान्तमर्यादाप्रदर्शनमिति वेदितव्यम्; हनुमद्रामवाक्ययोर्विभीषणवाक्यस्य च विरोधे "अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः" इति न्यायेन विभीषणवाक्यस्यैव बलीयस्त्वात् ॥ कुतस्तर्हि "अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम् । राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते" इति रामस्यानाकाङ्क्षिततद्राजताकलनप्रतिज्ञारभस इति चेत् सोऽपि "शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः" इत्युक्तन्यायेनोद्वेलकृपासागरपरीवाहझरीरूपानुषङ्गिकभोगप्रदानपर एव न त्विदंपरतया राज्यप्रदानायैव प्रवृत्तः । अत एव ह्येवं प्रतिज्ञातवतोऽपि भगवतः किंचिदप्यनभिधाय प्रति-

वचनम्; "राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे । करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम्" इति यथोचितं कैङ्कर्यमेव करिष्यामीति विज्ञापितं विभीषणेन ॥ यथा "परमापद्गतस्यापि धर्मे मम मतिर्भवेत्" इति प्रार्थितवतेऽप्यमुष्मै प्रीतेन ब्रह्मणाऽमरत्वमपि दत्तं तथा कैङ्कर्यमेव प्रार्थितवतेऽपि तदौपयिकमैश्वर्यं चानुगृहीतं भगवतेति ध्येयम् ॥ किञ्च—यथा भगवत्पादुकाऽधीनतया भरतस्य कोसलदेशनियमनाभ्युपगमः तथा धर्मसंस्थापनार्थमेव कृतावतारस्य भगवतो दाशरथेर्नियोगेनावशिष्टान्निशाचरान् सुपथा सञ्चारयितुमेव तस्य राज्याभ्युपगमः न त्वात्मभोगाय इदमप्याज्ञानुपालनतया कैङ्कर्यकोटावेवान्वितं विभीषणस्य तात्पर्यवैधुर्येऽप्यनतिलङ्घनीयशपथपूर्वकश्रीरामभद्रशासनेनैव राज्याभ्युपगम इति व्यक्तमेवोक्तमुत्तरकाण्डे—"यावत्प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण । राक्षसेन्द्र महावीर्य लङ्कास्थस्त्वं धरिष्यसि ॥ शापितस्त्वं सखित्वेन कार्यं ते मम शासनम् । प्रजास्संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि" इत्यभयप्रदानसारे विस्तरेणानुगृहीतमाचार्यैः ॥ तस्मात् "तत्पादभक्तिज्ञानाभ्यां फलमन्यत्कदाचन । न याचेत्पुरुषो विष्णुं याचनान्नश्यति ध्रुवम् ॥ न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति ये वै भगवत्प्रपन्नाः" इत्याद्युक्तरीत्या अनन्यप्रयोजनस्य भगवत्कैङ्कर्यैकाभिलाषिणो विभीषणस्य पारितोषिकमात्मदानादन्यत्किमप्यसंभावयमानेन भगवता सकृत्प्रपन्नजनतासंरक्षणैकव्रतिना

दाशरथिना स्वात्मभूतेक्ष्वाकुकुलधनशब्दितश्रीरङ्गविमानमेवानुगृहीत मिति कुलधनशब्दस्य श्रीरङ्गविमानमित्यर्थवर्णनमेव सांप्रदायिक-मित्यलं प्रसक्तानुप्रसक्तिकाविचारकुतूहलेन ॥ प्रकृतमनुसरामः अ-त्रोत्तरार्धवाक्यार्थेन हंसकर्तृकानन्तपीठभजनानुशासनस्य समर्थित-त्वात्काव्यलिङ्गम्, श्रीरङ्गधामावस्थितेश्शेषपीठोपलक्षकतया निबद्धत्वा-दुदात्तालंकारश्चेत्यनयोस्संकरः । श्रीरामचन्द्रगतशेषपीठविषयक भावं प्रत्याचार्यगततद्विषयकभावस्याङ्गत्वात्प्रेयोऽपराङ्गव्यङ्ग्यमित्यादि विभावनीयम् ॥ ४५ ॥

एवं श्रीरङ्गविमानप्रसङ्गेन तदन्तश्शयानो भगवान्वासुदेव इदानीं साकेतनगरमधिवसन्मम स्मरणपदवीमधिरोहतीत्याह दाश-रथिः—

**सत्त्वे दिव्ये स्वयमुदयतस्तस्य धाम्नः प्रसङ्गात्**
**मञ्जूषायां मरकतमिव भ्राजमानं तदन्तः ।**
**चेतो धावत्युपहितभुजं शेषभोगे शयानं**
**दीर्घापाङ्गं जलधितनयाजीवितं देवमा-**
**द्यम् ॥ ४६ ॥**

सत्त्व इति ॥ दिव्ये सत्त्वे शुद्धसत्त्वसमये नित्यविभूतिप्रदेशे स्वयं साधनान्तरनैरपेक्ष्येण उदयतः आविर्भवतः "इटकिटकटी" इत्यत्र प्रश्लिष्टस्य इधातोरीधातोर्वा शता । अत्र "दिव्यस्य महतो धाम्न-

स्साक्षाद्रथचक्रस्य चान्तरे । दिव्यं ह्येतन्महद्धाम । अनन्तशक्तियुक्तं तद्विमानं हि स्वयंभवम्" इति पारमेश्वरसंहिताद्युक्तिः, "इदं च धाम प्रियमस्मदिच्छया स्वयंभवं दर्शितमम्बुजासन । श्रिया युतं श्रीमदिदं तु वै जगद्विभूतिमद्रङ्गमुदाहरिष्यति" ॥ इत्यादिगारुडपुराणोक्तिरप्यनुसंधेया ॥ यद्वा—दिव्ये सत्त्वे सत्त्वोत्तरे क्षीरसागर इति यावत् । स्वयमुदयतः "तस्य वर्षसहस्रान्ते तप्यमानस्य वेधसः । आविरासीन्महद्धाम श्रीरङ्गं क्षीरसागरात् ॥ दिव्यं विमानं तदृष्ट्वा स्वयंव्यक्तं महर्द्धिमत्" इति ब्रह्माण्डपुराणोक्तेः तस्य पूर्वस्मिन् श्लोकेऽनन्तपीठे स्थापयिष्यमाणतयोक्तस्य धाम्नः श्रीरङ्गविमानस्य "गृहदेहत्विड्प्रभावा धामानि" इत्यमरः ॥ प्रसङ्गात् प्रसक्तेः इदानीं रङ्गविमानवृत्तान्तस्यैव प्रस्तुतत्वादित्यर्थः ॥ तदन्तः तस्य विमानस्य अन्तः अभ्यन्तरे षष्ठीसमासः । न चात्र "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इति निषेधादव्ययेन षष्ठ्यास्समासो न साधुरिति वाच्यं तत्र सत्तव्ययोः पूर्वोत्तरयोस्साहचर्यात्कृदव्ययस्यैव ग्रहणात् । अत एव तदुपरीत्यादि सिद्धमिति रक्षितेनोक्तं संगच्छते ॥ यद्यपि कैयटहरदत्तौ अव्ययप्रतिषेधे वृक्षस्योपरीत्युदाहरन्तौ अकृदव्ययेनापि प्रतिषेधं मन्येते ॥ तथाऽपि "अनेकमन्यपदार्थे" इति सूत्रे "सर्वपश्चात्" इति भाष्यप्रयोगेणाकृदव्ययनिषेधासंभवात्तदनादर एव युक्तः । किंच—"प्रकृतसूत्रे भाष्येऽपि अकृदव्ययैरुच्चैरादिभिरसामर्थ्येन समासाभावमनुभाष्य कृदव्ययमेवोदाहृतम् । तेनान्याव्ययैस्सति सामर्थ्ये समास इष्ट इति गम्यते" इति शब्दे-

न्दुशेखरे स्थितं अन्तरित्येतच्च स्वरादिपठितमव्ययं न तु कृदन्तं, तस्मादकृदन्तत्वात्सामर्थ्यसद्भावाच्च नात्र षष्ठीसमासनिषेधः। अत एव "महार्णवान्तः को मज्जनोरणुकुलाचलयोर्विशेषः, ककुब्भिकन्यावक्त्रान्तर्वासिलब्धाधिवासया, यत्कृतेऽरीन्निगृह्णीमः, आदेयाः किंकृते भोगाः" इत्यादयः प्रामाणिकाः प्रयोगास्संगच्छन्ते। यद्वा—"सप्तमी शौण्डैः" इत्यनेन तस्मिन्नन्तस्तदन्तरिति सप्तमीसमासः शौण्डादावन्तश्शब्दपाठात् स चाधिकरणत्वशक्तिप्रधानः मध्ये इत्यर्थात् तद्योगेऽवयविन आधारत्वविवक्षायां सप्तमी यथा वृक्षे शाखेति। अत एव "तस्मिन्यदन्तस्तदन्वेष्टव्यम्, तस्मिन्यदन्तस्तदुपासितव्यम्" इत्यादयः प्रयोगास्संगच्छन्ते। तद्विमानवृत्तिमध्यभागे इति बोधः। नन्वन्तर्वणमित्यादावन्तश्शब्दस्य विभक्त्यर्थेऽव्ययीभावो नित्यः तत्कथमत्र तत्पुरुषप्रवृत्तिरिति चेदित्थं अन्तश्शब्दोऽधिकरणत्वशक्तिप्रधानः, अधिकरणमात्रवृत्तिश्चेति द्विविधः। तत्राधिकरणत्वशक्तिप्रधानस्य योगे अवयविन आधारत्वविवक्षायां सप्तमी तत उक्तरीत्या सप्तमीसमासः। यथा वने अन्तः वनान्तर्वसतीति यस्त्वधिकरणत्वमात्रवृत्तिः तस्य विभक्त्यर्थेऽव्ययीभावः, "अव्ययं विभक्ति" इति सूत्रे वचनग्रहणसामर्थ्यात्। अन्यथा वृक्षस्योपरीत्यादावतिप्रसङ्गात् अधिकरणत्वमात्रवृत्तिरित्यस्य मध्यानालिङ्गिततद्वृत्तिरित्यर्थः। तस्मादत्र मध्य इत्यर्थकस्यान्तश्शब्दस्याधिकरणत्वशक्तिप्रधानतयाऽधिकरणमात्रवृत्तित्वाभावान्नाव्ययीभावप्रसङ्गः। किंतु तत्पुरुष एवेति मनोरमादौ विस्तरः। मञ्जूषायां पेटि-

कायां "पिटकः पेटकः पेटा मञ्जूषा" इत्यमरः । मरकतं गारुत्मतमिव भ्राजमानं अनेन "क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदळाद्वैतमापादयन्तम्" इत्युक्तरीत्या दिव्यमङ्गळविग्रहरुचिभिर्विमानान्तःप्रदेशमखिलमपि मेचकीकुर्वन्तमिति द्योत्यते । उपहितः उपधानीकृतः भुजः बाहुर्यस्मिन्कर्मणि तद्यथातथा । उपपूर्वकाद्दधातेः कर्मणि क्तः "दधातेर्हिः" इति हिरादेशः । "उपधानं तूपबर्हम्" इत्यमरः । सौकुमार्यसौगन्ध्यादिभिश्शेषभोगशय्यानुगुणमुपधानान्तरं दुर्लभमिति तदनुरूपमनन्तभोगिभोगमनोहरं स्वबाहुमेवोपधायेति भावः । अनेनानुरूपवस्तुवर्णनात्मकस्समालङ्कारो व्यज्यते । शेषस्य अनन्तस्य भोगे दिव्यविग्रहे "भोगस्सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । भोगशब्देन मृदुस्पर्शादिभिस्तस्य निरतिशयभोगावहत्वं सूच्यते । शयानं "ऐन्द्रीं पाटलयन्नलक्तकरुचामङ्घ्रित्विषां पल्लवैर्नानारत्नकिरीटकोटिघृणिभिः प्राचेतसीयामपि । पर्यङ्के पवमानतूलभरिते पारे कवेरात्मजं मुद्रा काचन मुक्तिदानकुशला निद्राति जागर्ति वा" इत्युक्तरीत्या निद्राणं अनेन "आत्मप्रमाणरचिते मृदुस्पर्शे मनोहरे । शुद्धस्फटिकसंकाशे दीप्यमानेऽतिभास्वरे ॥ फणामण्डलमध्यस्थैर्मणिभीर्दीपिते तथा । दक्षिणं भोगिभोगाभमुपधाय महाभुजम्" ॥ इति पारमेश्वरसंहितोक्त आकारः प्रत्यभिज्ञापितः अनेन वासुदेवनागराजदिव्यविग्रहप्रभयोरन्योन्यसंबन्धेन परभागसमृद्धिर्द्योत्यते । सर्वलोकसाधारणनिद्रातोऽस्या निद्राया व्यावृत्तिमभि

प्रेत्याह—दीर्घेति ॥ दीर्घाः भक्तरक्षणैकप्रावण्येन दयासुधासारनिर्भरतया तदपराधविचारावधीरणेन निरर्गळं सुदूरविसृमराः अपाङ्गाः कटाक्षाः यस्य तं तथोक्तं अनेन "करुणापूर्णहृदयं जगदुद्धरणोद्यतम् । शीतलैर्दृष्टिपातैस्तु जगदाप्यायकारिणम्" इति पारमेश्वरसंहितोक्तः प्रकारस्सूचितः । अनेनैव "निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम्" इत्युक्तरीत्या तन्निद्रायास्सकलभुवनावनजागरूकता द्योत्यते । न हि लोके कस्यचिदपि सर्वात्मना निद्राणस्य दीर्घापाङ्गता संभवति । ईदृशदीर्घापाङ्गत्वे हेतुमाह—जलधितनयाजीवितमिति ॥ जलधितनयायाः लक्ष्म्याः जीवितं प्राणतुल्यमिति यावत् । जलधितनयेत्यनेन दयार्द्रत्वादिकं द्योत्यते । तद्वल्लभत्वादेव हि कृतापराधेष्वप्यस्य कृपासुधाशीतलः कटाक्षप्रसर इति "जलधितनयास्नेहनित्यानुषक्तम्" इत्यत्र विस्तरेणावोचाम । यद्वा—जलधितनयैव जीवितं यस्येति बहुव्रीहिः । दीर्घापाङ्गमित्यनेन कर्णान्तविश्रान्तलोचनत्वमपि द्योत्यते तेन सौन्दर्यातिशयो व्यज्यते । यदाहुः—"सौन्दर्यं नयनाधीनम्" इति ॥ आद्यं आदौ भवम् । दिगादित्वाद्यत् । देवं सर्वव्यूहनिदानभूतं श्रीवासुदेवमित्यर्थः । "विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः" इति पूर्वस्य वासुपदस्य लोपः । तथाचोक्तं भगवच्छास्त्रे—"नित्योदितात्संबभूव तथा शान्तोदितो हरिः" इति ॥ "मुक्तानुभाव्यनित्योदितसंज्ञकपरवासुदेवोत्पन्नशान्तोदितसंज्ञको व्यूहत्रयहेतुभूतो वासुदेव इत्यर्थः" इति न्यायसिद्धाञ्जनव्याख्यायां श्रीमद्रङ्गरामा-

नुजमुनयः। अन्यत्रापि भगवच्छास्त्रे—"स वासुदेवो भगवान् सृष्टिस्थित्यन्तमुक्तिदः। आत्मानं स द्विधा चक्रे पुनः केनापि हेतुना॥ तयोरेको वासुदेवश्शुद्धस्फटिकसन्निभः। नारायणो द्वितीयस्तु नीलाम्बुदसमप्रभः॥ संकर्षणो वासुदेवात्तस्मात्प्रद्युम्नसंभवः। प्रद्युम्नादनिरुद्धोऽभूत्सर्व एते चतुर्भुजाः॥ ज्ञानादिगुणवानेव वासुदेवः प्रकीर्तितः। षण्णां गुणानां वैषम्ये वक्ष्यन्ते मूर्तयः क्रमात्॥ ज्ञानाधिको भवेत्षण्णां संकर्षणसमाह्वयः। बलाधिकः प्रद्युम्नस्स्यादैश्वर्ये चानिरुद्धक" इत्यादि, "अनन्तभोगिशयने शयानः पङ्कजेक्षणः। प्रकाशयिष्यति पुरो वासुदेवः परात्परः॥ तमाराधय देवेशं विमानाभ्यन्तरस्थितम्। सर्वेषामपि लोकानां सृष्टिस्थित्यन्तकारिणम्॥ वासुदेवं तु परमं पुमांसं भक्तवत्सलम्। द्वादशाक्षरमन्त्रेण भोगैस्सांस्पर्शिकादिभिः" इति, 'योगिध्येयमजं नित्यं जगज्जन्मादिकारणम्। अनादिनिधनं देवं साक्षाल्लक्ष्मीपतिं प्रभुम्॥ अप्राकृततनुं शान्तं वासुदेवं परात्परम्" इति च पारमेश्वरसंहितादौ भगवच्छास्त्रे साक्षाद्वासुदेव एव श्रीरङ्गधाम्नि प्रकाशत इति प्रतिपाद्यते। "कावेरी विरजा सेयं वैकुण्ठं रङ्गमन्दिरम्। स वासुदेवो रङ्गेशः प्रत्यक्षं परमं पदम्" इत्याद्यप्यत्रैवानुकूलम्। चेतः मम मनः धावति अतिक्षिप्रं गच्छति। धावु गतौ, अस्माल्लट्, सृ गतावित्यस्माद्वा लट् "पाघ्राध्मा" इत्यादिना शिति धावादेशः। स्मरतीति यावत्। [1]अत्र मञ्जूषायां

[1] अत्र मञ्जूषायां मरकतमिवेत्युपमा। भगवति जलधितनयाजीवितत्वारोपात्...रूपकं....श्रीरङ्गराजविषयकरतिभावं प्रति स्मृतेस्संचारिणोऽङ्गत्वात्....

मरकतमिवेत्युपमा भगवति जलधितनयाजीवितत्वारोपात् जलधितनयायां भगवज्जीवितत्वारोपाद्वा रूपकमित्येते अन्योन्यं संसृज्येते । श्रीरामचन्द्रगतश्रीरङ्गराजविषयकरतिभावं प्रति स्मृतेस्संचारिणोऽङ्गत्वात् "अत्युच्चाः परितस्स्फुरन्ति गिरयस्स्फारास्तथाऽम्भोधयस्तानेतानपि बिभ्रती किमपि न श्रान्ताऽसि तुभ्यं नमः। आश्चर्येण मुहुर्मुहुस्स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः" इत्यत्रेव प्रेयोऽलंकारः। न चात्र स्मृतेर्निबद्धत्वात् स्मृत्यलंकार एव कुतो न स्यादिति भ्रमितव्यं भगवत्स्मरणस्यात्र प्रस्तुतविमानसंबन्धिनया सादृश्यनिबन्धनत्वाभावात् । सादृश्यनिबन्धनत्वे हि स्मरणस्य तदवतारः। यथा हि सा लक्ष्यते चित्रमीमांसायां–"स्मृतिस्सादृश्यमूला या वस्त्वन्तरसमाश्रया । स्मरणालंकृतिस्सा स्याद्व्यङ्ग्यत्वाविशेषिता" इति इयं चालंकृतिः पूर्वोक्तसंसृष्टालंकाराभ्यामेकवाचकानुप्रविष्टतया संकीर्यते । तस्य च श्रीरामचन्द्रगतभावस्याचार्यगतभगवद्विषयकभावं प्रत्यङ्गत्वादन्यश्च प्रेयोऽलङ्कारस्तदुज्जीवित इत्यपि ध्येयम् ॥

---

प्रेयोऽलङ्कारः इत्यादिरसास्वादिनी ॥ यत्तु—"धावति त्वरितं गच्छति स्मरतीति यावत्" इति व्याख्याय "देवं धावतीति स्मरणस्य भङ्ग्यन्तरेणोक्त्या पर्यायोक्तम्" इत्यलङ्कारकथनम् –तन्न अत्र धावतेः त्वरितस्मरणलाक्षणिकतया वाच्यकक्ष्यापन्नस्य स्मरणस्य भङ्ग्यन्तरेण कथनाभावेन पर्यायोक्तानवतारात् । न खलु "मुखं विकसितस्मितम्" इत्यादौ पर्यायोक्तमङ्गीकुर्वन्त्यालङ्कारिकाः । अत एव 'पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः'। इत्यादौ गाहत्यादेस्स्मरणलाक्षणिकतया स्मरणालङ्कारवर्णनमालङ्कारिकाणां संगच्छते॥

वैद्यनाथस्तु—"स्मृतिभ्रान्तिसंदेहैस्सादृश्यान्निबध्यमानैः स्मृतिमान्" इत्यादिस्मृत्याद्यलंकारकुवलयानन्दप्रतीकमादाय सादृश्यान्निबध्यमानैरिति चमत्कारित्वोपलक्षकं न त्वेतस्यापि स्वातन्त्र्येण लक्षणे प्रवेशः सादृश्यामूलकानामपि स्मृत्यादीनां चमत्कारित्वे अलंकारताया अनिवार्यत्वाच्चमत्कारितैकजीवातुत्वात्तस्याः अचमत्कारित्वे तु तेनैव वारणमिति व्यर्थं सादृश्यहेतुकत्वविशेषणमित्याचष्टे। तन्मतेऽत्र श्रीरङ्गनाथस्मरणस्य सादृश्यमूलकत्वाभावेऽपि चमत्कारितया स्मरणालंकारो भवत्येव एवमुभयथाऽपि संभवान्निरुक्तप्राथमिकप्रेयोऽलंकारस्यास्य स्मृत्यलंकारस्य च संदेहसंकरः। अस्य संकरस्य द्वैतीयीकप्रेयोऽलंकारस्य चैकवाचकानुप्रवेशसंकरः। यत्तु—"दिव्ये सत्त्वे शुद्धसत्त्वरूपे विमान इत्यर्थः। स्वयमुदयतः स्वयमेवाविर्भवतः तस्य श्रीरङ्गराजस्य धाम्नः प्रसङ्गात् अंशुप्रसरणात्। मञ्जूषायां मरकतमिव तदन्तः विमानस्यान्तःप्रदेशे भ्राजमानं उपहितभुजं आद्यं देवं चेतो धावति" इति व्याचक्षते तन्न सम्यक् पूर्वस्मिन् श्लोके उदाहृतभगवच्छास्त्रादिवचनानुरोधाद्रङ्गधाम्न इति रङ्गविमानस्यैव प्रस्तुतत्वेनात्र श्लोकेऽपि तस्येत्यस्य धाम्न इत्येतद्विशेषणतया तस्यैवावश्यपरामर्शनीयत्वेन भगवतः परामर्शायोगात्। ननु च पूर्वस्मिन् श्लोके रङ्गधाम्न इत्यस्य भगवत्परतयाऽस्माभिर्व्याख्यातत्वेनात्रापि तस्यैव परामर्शो युक्त इति चेन्न, तत्रैवास्माभिस्तदस्वरसताया उपपादितत्वात्। तथैवाभ्युपगमे तस्य भगवतः किरणप्रसङ्गात्तस्यैव मर-

कतसादृश्यमुक्तं स्याच्चासमञ्जसम् । किंच—भवत्पक्षे पूर्वश्लोके रङ्गराजस्यैव प्रस्तुतत्वेन तदन्तरित्यत्र तच्छब्देन विमानपरामर्शोऽपि न संभवति प्रकृतस्यैव योग्यत्वात्परामर्ष्टुं अस्मत्पक्षे तु यथा तस्येत्यनेन विमानस्यैव परामर्शस्तथा तदन्तरित्यत्र तच्छब्देनापि तस्यैव परामर्शो नाक्लिष्टः अपिच प्रसङ्गशब्दस्य प्रसक्त्यर्थे रूढस्य केवलयोगाश्रयणेन प्रकृष्टसङ्गार्थकत्वकथने अन्यार्थरूपदोषापत्तिश्च ॥ तथा च सूत्रितं वामनेन—"रूढिच्युतमन्यार्थम्" इति। "रूढेषु रूढिमनपेक्ष्य यौगिकार्थमात्रोपादानादन्यार्थं पदं यथा—ते दुःखमुच्चावचमावहन्ति ये प्रस्मरन्ति प्रियसंगमानाम् । अत्रावहतिः करोत्यर्थो धारणार्थे प्रयुक्तः प्रस्मरतिर्विस्मरणार्थः प्रकृष्टस्मरणे" इति तद्वृत्तौ स्पष्टम् । अतोऽस्मद्व्याख्यैव ज्यायसीत्यलम् ॥ ४६ ॥

अथ चोळदेशात्पाण्ड्यदेशं प्रयाहीत्यादिशंस्तदन्तरप्रदेशस्यातिघोरतया तत्र मूकीभूय गन्तव्यमित्याह—

**चोराक्रान्तं तदनु विपिनं चोळपाण्ड्यान्तरस्थं**
**झिल्लीनादश्रवणपरुषं शीघ्रमेव व्यतीयाः ।**
**तीर्णे तस्मिन्प्रकटय सखे शीतलांस्ते निनादान्**
**शब्दायन्ते न खलु कवयस्सन्निधौ दुर्जनानाम् ॥**

चोरेति ॥ हे सखे! अनेन वक्ष्यमाणप्रदेशस्यातिघोरतया स्वस्तिमानयं गच्छत्विति भगवतो दाशरथेर्वात्सल्यातिशयादाशंसा व्यज्यते ।

तदनु अनन्तपीठसेवनानन्तरं चोरैः दस्युभिः आक्रान्तं समन्ततो व्याप्तं अनेन क्वचिदपि तस्मिन्प्रदेशे मा विलम्बिष्ठा इति द्योत्यते। न त्वेतावदेव श्रुतिसुखभवादृशशकुनिनिनदोऽपि तत्र दुर्लभो येन सोढ्वाऽपि चोरभयं किञ्चिदपि विलम्बेथा इत्यभिप्रयन्नाह—झिल्लीनादश्रवणपरुषमिति। झिल्लीनां कठोरतमनिनदानां चीरिकाख्यसूक्ष्मजन्तुविशेषाणां "भृङ्गारी चीरिका चीरी झिल्लिका च समा इमाः" इत्यमरः। झिल्ल्याख्यवाद्यविशेषसदृशध्वनिमत्त्वाज्झिल्लीति तन्नाम। नादैः ध्वनिभिः श्रवणयोः श्रोत्रयोः परुषं निष्ठुरं शूलजनकं "निष्ठुरं परुषं ग्राम्यमश्लीलम्" इत्यमरः। अतिदुस्सहमिति यावत्। अनेन "अहो वनमिदं दुर्गं झिल्लिकागणनादितम्" इत्युक्तताटकावनवदतिरौद्रत्वद्योतकेन तत्र श्रोत्रसुखाशालेशोऽपि न कार्य इति व्यज्यते। चोळपाण्ड्यान्तरस्थं चोळानां निवासो जनपदश्चोळाः "जनपदे लुप्" इति चातुरर्थिकस्याणो लुपि "लुपि युक्तवत्" इति प्रकृतिवल्लिङ्गवचने॥ [1]पाण्डूनां राजा पाण्ड्यः "पाण्डो-

[1] पाण्डूनां राजा पाण्ड्यः . . . तत्र साधवः पाण्ड्याः . . . देशे त्वौपचारिक इत्यादिरसास्वादिनी॥ यत्तु—पाण्डूनां जनपदानां राजानः पाण्ड्याः पाण्डोर्ड्यणिति ड्यण् इति, तन्न—ड्यणः ते तद्राजा इति तद्राजसंज्ञतया "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इत्यनेन लुगापत्त्या पाण्डव इत्यस्यैव साधुतया पाण्ड्या इत्यस्यासाधुत्वात्। स्पष्टं चेदं 'पाण्डोर्ड्यण्' इत्यत्र कौमुद्यामेव॥ तस्मात् पाण्डूनां राजा पाण्ड्यः तत्र साधवः पाण्ड्याः। जनवाचिनो जनपदे वृत्तिरुपचारादिति रसास्वादिन्युक्तमेव युक्तम्॥ एतेन—अत्र राजवाचकस्य देशे औपचारिकः प्रयोगः। चोलाश्च पाण्ड्याश्च तयोरन्तरे इत्याद्यप्ययुक्तमिति व्यक्तीकृतम्॥

ञ्यण्" इति ञ्यण्। तत्र साधवः पाण्ड्याः पाण्ड्यशब्दात् "तत्र साधुः" इति यत्। देशे त्वौपचारिकः। न तु पाण्ड्यानां निवासो जनपद इति विग्रहः। न हि पाण्ड्यशब्दो जनपदवाची किंतु पाण्डुशब्द एवेति "पाण्डोर्ड्यण्" इति वार्तिकेन "जनपदशब्दात्क्षत्रियादञ्" इति सूत्रस्थेन स्पष्टं प्रतीयते। चोळाश्च पाण्ड्याश्च चोळपाण्ड्याः तयोः अन्तरस्थं मध्यवर्ति विपिनं गहनं शीघ्रं त्वरितमेव एवकारेण निमिषमात्रमपि मा विलम्बिष्ठा इति द्योतितम्। व्यतीयाः व्यतिवर्तेथाः वि अति इत्युपसर्गद्वयपूर्वकात् "इण् गतौ" इत्यस्मादादादिकाल्लिङ्। वीत्युपसर्गेण तद्वनप्रदेशैकदेशसंबन्धोऽपि सर्वात्मना वर्जनीय इति द्योत्यते। तस्मिन् विपिने तीर्णे व्यतिक्रान्ते सत्येव न तु तद्वनप्रदेशगमनावसर इति भावः। शीतलान् श्रवणसुभगान्, अनेन श्रोतॄणां सर्वतापापहरणक्षमत्वं द्योत्यते। ते तव निनादान् निस्वनान्, चतुर्मुखादिसहृदयजनभोग्यानिति भावः। प्रकटय, प्रकाशय "साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः। यत्तस्य दैत्या इव लुण्टनाय काव्यार्थचोराः प्रगुणीभवन्ति" इत्युक्तविधकाव्यार्थचोरैर्मेदुरस्य, श्रुतिकटुरटच्छुष्कतार्किककर्कशतर्ककोलाहलमुखरितस्य प्रदेशस्य व्यतिवर्तनादनन्तरं विगळितवैद्यान्तरमानन्दमुन्मीलयतस्सत्काव्यालापानिव कवय इति भावः॥ यथा ह्युच्यते—"अजनि शनैर्विशदं जगदपसर्पति कालकूटसंतमसे। तात्पर्यमिव कवीनां तार्किककोलाहलोपरमे" इति। मा भूत्तत्र विलम्बः, निनाद-

प्रकटनस्य को निरोध इत्यत्राह—शब्दायन्त इति ॥ दुर्जनानां सुकविप्रणीतप्रबन्धसौगन्ध्यगन्धानभिज्ञतामूलकहृदयकार्कश्यलक्षणदौ- र्जन्यभाजां कोकिलालापे काकानामिव सत्काव्यालापे मत्सरिणां चेति भावः। सन्निधौ सविधे, कवयः उत्तमकाव्यप्रणेतारः, ता- दृशकाव्यपरिपाकसर्वस्ववेदितया सहृदयमूर्धन्याश्चेति भावः। न श- ब्दायन्ते शब्दं न कुर्वन्ति, "शब्दवैरकलहाभ्रकण्वमेघेभ्यः क- रणे" इति शब्दशब्दात्करणार्थे क्यङ्, ङित्त्वात्तङ् ध्वनिमपि न प्रकाशयन्ति किमुत सहृदयहृदयैकवेद्यसौभाग्यां स्वकवितामिति भा- वः। त्वमपि कवित्वान्न शब्दायस्वेत्यभिप्रायः। कविर्जलचरपक्षी, खल्विति प्रसिद्धावनुनये वा ॥ यथोच्यते—"नास्ति सम्मानना यत्र मात्सर्यं तु महद्भवेत्। तत्रालपन्नाकुलस्स्यात्काकोलेष्विव को- किलः" इति। अत्र चोराक्रान्तत्वझिल्लीनादश्रवणपरुषत्वयोर्विशेष- णगत्या विपिनशीघ्रव्यतिवर्तनहेतुत्वात्काव्यलिङ्गभेदः। शब्दायन्त इत्यादिसामान्येन विशेषस्य समर्थितत्वादर्थान्तरन्यासः। कविश- ब्दवाच्यार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणित इ- ति संकरः ॥ ४७ ॥

घोरतमविपिनव्यतिवर्तनानन्तरं विरचितश्रवणाह्लादान्निनादान्प्रकट- यन्तं त्वां पाण्ड्यदेशललनास्संमानयिष्यन्तीत्याह—

**स्रस्तापीडं प्रचलदलकं व्यक्तताटङ्करत्नं**
**मुक्ताचूर्णस्फुरिततिलकं वक्त्रमुत्तानयन्त्यः**

देशे तस्मिन् कुवलयदृशो जातकौतूहलास्त्वां
मालादीर्घैर्मधुरविरुतं मानयिष्यन्त्यपाङ्गैः॥ ४८

स्रस्तेति ॥ तस्मिन् देशे पाण्ड्यदेशे कुवलयदृशः । इदं च तदपाङ्गानां वक्ष्यमाणमालासाधर्म्योत्तेजनाय । जातकौतूहलाः शीतलतमत्वन्निनादनिशमनोन्मिषितकौतुकाः अत एव स्रस्तः विश्लथः आपीडः शिखाबन्धपरिवेष्टितमाल्यविशेषशेखरापरपर्यायः यस्मिन्कर्मणि तद्यथा भवति तथा । "शिखास्वापीडशेखरौ" इत्यमरः । शिखासु क्षिप्ते माल्ये आपीडशेखरौ वर्तेते इति कोशार्थः । प्रचलन्तः व्याकीर्णाः अलकाः चूर्णकुन्तलाः यस्मिन्कर्मणि तद्यथा स्यात्तथा । स्रस्तापीडप्रचलदलकमिति समस्ततया पाठोऽपि दृश्यते । तदा खञ्जकुब्जादिवत्समासः । इतोऽपि व्यस्ततया पाठ एव रमणीयः । व्यक्तानि रविकिरणप्रतिफलनादुज्ज्वलानि ताटङ्कानां कर्णाभरणविशेषाणां "ताटङ्कः कर्णदर्पणे" इति त्रिकाण्डशेषः । इदं त्रयमुत्ताननक्रियाविशेषणम् । वक्तृविशेषणत्वेन व्याख्यानं तु नातीव स्वरसं आपीडस्रंसनादीनां वदनोन्नमनभावित्वात् । मुक्ताचूर्णेन मौक्तिकक्षोदेन स्फुरितं भ्राजितं चूर्णे स्वप्रकृतिभूतमौक्तिकथाळथळ्यानुवर्तनात्तस्य च रविकिरणप्रतिफलनोत्तेजितत्वादिति भावः । ईदृशं तिलकं यस्मिंस्तदिति वक्तृविशेषणम् । यद्वा—इदमप्युत्ताननक्रियाविशेषणमेव तदा तु मुक्ताचूर्णं स्फुरितं यस्मिंस्तत् तादृशं तिलकं यस्मिन्कर्मणि तद्यथा स्यादिति विग्रहस्स्वरसः स्फुरितमुक्ताचूर्णतिलकं यथा स्यात्तथेत्यर्थः । "जातिकालसुखादिभ्यः परा निष्ठा वाच्या"

इति निष्ठायाः परनिपातः। वक्त्रं वदनं उत्तानयन्त्यः उन्नमयन्त्यः उत्तानशब्दात् 'तत्करोति' इति णिजन्ताच्छतरि ङीप्॥ मालादीर्घैः—"सपदि विरचिताऽभूदङ्गनानामपाङ्गैर्दिवि कुवलयदामश्यामला तोरणश्रीः" इत्युक्तरीत्या कुवलयमाल्यवदृजुतया सुदूरविसर्पिभिरित्यर्थः॥ अपाङ्गैः—अत्रापाङ्गशब्देन "यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम्। तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते" इत्युक्तलक्षणाः कटाक्षा विवक्षिताः। तैः मधुरं श्रोत्रसुखं विरुतं ध्वनिर्यस्य तं तथोक्तं त्वां मानयिष्यन्ति पूजयिष्यन्ति "मान पूजायाम्" लृट्। अतस्तत्रावश्यं मधुरालापान्प्रकाशयेति भावः। यदाहुः—यत्र सम्मानना नृणां श्लाघा वाऽपि च तद्विदाम्। तत्र प्रकाशयेद्धीमानुदारमधुरा गिरः॥ इति। अत्र मालादीर्घैरिति विशेषणेन कटाक्षाणां स्मेरत्वसोत्सुकत्वतरङ्गितत्वानि व्यज्यन्ते। तथा च तेषां लक्षणानि भावप्रकाशे—"अपरिच्छिन्नविषयं मदमन्थरमीलितम्। स्फुरद्भ्रूपक्ष्मतारं यत्तत् स्मेरमिति कथ्यते॥ सोत्सुकं तद्यदालोक्य भूयोभूयो विलोकनम्। कल्लोल इव यः कान्तिविच्छेदस्तत्तरङ्गितम्" इति॥ इतोऽपि किमन्यत्तव भोग्यं महद्भाग्यम्, यदिह—"अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः क्षणमभिमुखैर्लीलालोलैर्निमेषपराङ्मुखैः। हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते" इत्युक्तरीत्या तत्तादृशीनां पाण्ड्यदेशललनानामुक्तविधैः कटाक्षैरयत्नविसृमरैर्बहुमन्यस इतीति भावः। अनेन च प्रबुद्धनीलोत्पलदाम-

समानाभिः कटाक्षमालाभिश्शरच्चन्द्रमण्डलपाण्डुरस्य राजहंसस्य भ्रमरश्रेणीभिरिव पुण्डरीकस्य परभागातिशयो भविष्यतीति सूच्यते ॥ अत्र कुवलयदृश इत्यस्य विशेष्यस्योक्तरीत्या अपाङ्गानां मालातौल्याभिप्रायगर्भत्वात्परिकराङ्कुरः—"साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः" इति लक्षणात् ॥ न च कुवलयदृश इत्यस्य विशेषणतया विशेष्यार्थसमर्पकत्वं न घटत इति नोपपादितालङ्कारसंगतिरिति वाच्यम्, अस्मिन् श्लोके विशेष्यान्तरादर्शनात्प्रत्युत आरट्टजसागराम्बरादिशब्दवत्तेनैव विशेष्यप्रतिपत्तेः। तथा च वामनः—"विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ" इति। अत एव "गिरिस्तटित्वानिव, क्रुद्धस्य तस्याथ पुरामरातेः" इत्यादयो विशेषणभूता अपि विशेष्यप्रतिपत्तिसंपादकास्सर्वसंप्रतिपन्नाः प्रयोगा निर्विचिकित्साः ईदृशस्थले विशेष्याध्याहारेण केषांचिन्निर्वाहस्तु नालंकारिकसम्मतः। मालादीर्घैरित्युपमानगर्भितविशेषणस्यापाङ्गानां सम्माननोचितोपकरणताभिप्रायगर्भत्वात्परिकरः—"अलंकारः परिकरस्साभिप्राये विशेषणे" इति लक्षणात् ॥ मधुरविरुतमित्यस्य जातकौतूहलत्वं प्रति तस्य च वक्त्रोन्नमनं प्रति च हेतुत्वादन्यत्काव्यलिङ्गद्वयं संकीर्णं, मधुरविरुतमित्यस्यैव मालादीर्घापाङ्गकरणकसम्माननं प्रति हेतुत्वादितरच्च काव्यलिङ्गम्। वर्णनीये राजहंसे युगपदनेकनायिकाकटाक्षसम्मानितत्ववर्णनेनोदारतरमहानायकवृत्तान्तप्रतीतेस्समासोक्तिरित्येतेषां यथासंभवं संकरस्संसृष्टिश्च। उक्तानामेषां स्वभावोक्त्यैकवाचकानुप्रवेशसंकर इति विभावनीयम् ॥ अत्रावलोक-

नावसरे पाण्ड्यमहिळानां वदनादौ सातिशयविशेषकथनाद्विलासः। "तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु" इति लक्षणात् ॥४८॥

अथ तत्र सुन्दरबाहुनाम्नो भगवतो निवासभूतं वृषभनामानमचलं नमस्कुर्या इत्याह—

**नित्यावासं वृषभमचलं सुन्दराख्यस्य विष्णोः**
**प्रत्यासीदन्सपदि विनमद्भागधेयं नतस्स्याः।**
**यस्योत्सङ्गे बलिविजयिनस्तस्य मञ्जीरवान्तं**
**पाथो दिव्यं पशुपतिजटास्पर्शशून्यं विभाति॥४९**

नित्येति॥ सुन्दर इत्याख्या यस्य तथोक्तस्य सुन्दरबाहोरेवेदं नामान्तरं, यथाऽऽहुश्श्रीवत्साङ्कमिश्राः—"तं वन्दे सुन्दराख्यं वन गिरिनिलयं पुण्डरीकायताक्षम्" इति, 'वन्देय सुन्दरभुजं भुजगेन्द्रभोगसक्तम्' इति च॥ विष्णोः व्यापनशीलस्य भगवतः "विष्लृ व्याप्तौ" वेवेष्टीति विष्णुः "विषेः किच्च" इत्यौणादिको नुप्रत्ययः। अनेन "त्रेधा विष्णुरुरुगायो विचक्रमे। महीं दिवं पृथिवीमन्तरिक्षम्, इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्, अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्यास्सप्तधामभिः" इत्यादिश्रुतिगतविष्णुपदप्रत्यभिज्ञापकेन वक्ष्यमाणगङ्गाप्रसूतिहेतुभूतचरणकमलमञ्जीरत्वमस्य द्योत्यते॥ नित्यावासं अश्रान्तनिवासभूतं विनमतां भागधेयं विनमद्भागधेयं नमस्कुर्वतां महाभाग्यभूतम्। "भागरूप" इत्यादिना स्वार्थिको धेयप्रत्ययः॥ विनतो भागधेयमि-

ति पाठस्तु लेखकप्रमादनिदानकः। नतस्स्या इत्यनेन विनत इत्यस्य पौनरुक्त्यप्रसङ्गात् न च विनत इति पाठान्तरमङ्गीकृत्य विनतो विनीत इति प्राचीनैर्व्याख्यातत्वान्न पौनरुक्त्यमिति वाच्यम्। णमुधातुप्रकृतिकविनतशब्दस्य णीञ्प्रकृतिकविनीतशब्दस्य चैकार्थकत्वाप्रसिद्धेः। अभ्युपगमेऽपि भागधेयशब्दस्य पुत्रादिशब्दवत्प्रतियोगिसापेक्षतया तदभावप्रयुक्तन्यूनपदतारूपदोषापत्तेः। अस्माकमित्यादिपदान्तराध्याहारेणोपपत्तिस्त्वनध्याहारेणैव निर्वाहे न युक्ता। अतो विनमद्भागधेयमिति पाठ एव साधीयान्। वृषभं वृषभनामानं, अचलं गिरिं, तथाचोक्तं सुन्दरबाहुस्तवे—"वृषगिरिरयमच्युतस्य यस्मिन्" इति। प्रत्यासीदन् उपेयिवान् सन्, सपदि तत्क्षणमेव नतः प्रह्वीभूतः स्याः भवेः नमस्कुर्या इत्यर्थः। "दर्शनादेव भगवद्धामानि प्रणमेन्नरः" इति स्मरणादिति भावः। "अस भुवि" अस्मादादादिकाल्लिङ्। "श्नसोरल्लोपः" इत्यकारलोपः। अवश्यनमस्कार्यतायां भगवन्नित्यनिवासत्व एव पर्याप्तेऽपि निमित्ते हेत्वन्तरमप्यभ्युच्चिन्वानस्तमेव विशिनष्टि—यस्येति। यस्य वृषभाद्रेः उत्सङ्गे ऊर्ध्वप्रदेशे "उत्सङ्गो मुक्तसङ्गे स्यात्सक्थन्यूर्ध्वतलेऽपि च" इत्युत्पलमालायाम्। बलिविजयिनः वैरोचनिनिग्रहीतुः तस्य सुन्दरनाम्नो विष्णोः बलिविजयिन इति विशेषणेनापि पूर्वोक्तरीत्या गङ्गाजनननिदानभूतचरणारविन्दत्रिविक्रमावतारवृत्तान्त एव प्रत्यभिज्ञाप्यते। मञ्जीरेण नूपुरेण "पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः। वान्तं व्याकीर्णमिति यावत्। "टु वमु उद्गिरणे" अ-

स्मात्कर्मणि क्तः "उदितो वा" इति क्त्वायां वेट्कत्वात् "यस्य विभाषा" इत्यनेनेण्णिषेधः । वान्तशब्दस्यात्र गौणार्थकत्वेनाजुगुप्सावहत्वान्न केवलमग्राम्यत्वमेव । प्रत्युत काव्यस्यातिसौन्दर्यावहत्वमपि ॥ यथाऽऽह दण्डी—"निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते" इति ॥ अत एव "अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चैः धारानिपातैस्सह किन्नु वान्तः" इत्यादयः प्रयोगास्संगच्छन्ते । दिव्यं दिवि भवं पाथः अम्भः गङ्गारूपमिति भावः । ऊर्ध्वोत्क्षिप्तस्य त्रिविक्रमचरणारविन्दस्य चतुर्मुखकर्तृकावनेजनावसरे तन्नूपुराघट्टनेनोत्पत्त्याऽधस्ताद्यद्विच्युतं किंचित्सलिलं तदत्र वृषभाचलेऽवतीर्णं नूपुरगङ्गेत्यभिधीयते—तदाक्रमणकाले तु ब्रह्मणा क्षालितं पदम् । इत्युपक्रम्य—त्रिविक्रमपदाश्लिष्टमणिनूपुरपूरितम् । जलं तच्चोदनादभ्राद्रिरिमूर्ध्नि समापतत् ॥ इति पौराणिकी कथाऽत्रानुसंधेया ॥ आहुश्च श्रीवत्साङ्कमिश्राः—"सुन्दरायतभुजं भजामहे वृक्षषण्डमग्यमद्रिमाश्रितम् । यत्र सुप्रथितनूपुरापगातीर्थमर्थितफलप्रदं विदुः" इति ॥ पशुपतेः गिरीशस्य जटानां स्पर्शेन संबन्धेन शून्यं विरहितं अस्य तदसंबन्धेनैव तत्र दिव्यदेशे प्रस्तुतत्वात् [1]विभाति विशेषेण दीप्यते । नेदमपलापार्हमिति भावः ॥

---

[1]विभाति विशेषेण दीप्यते . . . इत्यादि रसास्वादिनी ॥ यत्तु अयमाशयः न गाहन्ते गङ्गामित्याद्युक्तरीत्या शिवजटासारत्वेन स्नानायनर्हमिति केषांचिद्वचनीयमपि नात्र किञ्चिदस्ति । अप्राप्यैव शिवशीर्षं वृषभाद्राववतीर्णत्वादिति । अत एव प्रमाणानुसारिभिराचार्यैः "सवित्री . . . . दिव्यत-

यद्यपि भगवच्चरणारविन्दविनिस्सृतं भात्येव गाङ्गमपि तीर्थम्। तथाऽपि तद्भानस्य पशुपतिजटास्पर्शवत्त्वेन देवतान्तरसंबन्धरूपाशुद्ध्यतिसंभावनाग्रस्ततया न विशेषतो भानं तन्नूपुरविनिर्गळितस्यास्य तु तथाविधातिसंभावनाबीजस्यैवाभावात्ततोऽपि सर्वथा वैशिष्ट्यं वीत्यनेनोपसर्गेण द्योत्यते। इदं च नहिनिन्दान्यायेन प्रस्तुतनूपुरगङ्गाप्राशस्त्यवर्णनपरमेव न तु गङ्गाया न्यूनताऽभिधानेऽभिसन्धिमत्। तथासति सा प्रपन्नानामस्प्रष्टव्यैव स्यात् "वाङ्मनःकर्मजैर्ग्रस्तः पापैरपि पुमानिह। वीक्ष्य गङ्गां भवेत्पूतो ह्यत्र मे नास्ति संशयः॥ सप्तावरान् सप्तपरान्पितॄंस्तेभ्यश्च ये परे। पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च॥ श्रुताऽभिलषिता पीता स्पृष्टा दृष्टाऽवगाहिता। गङ्गा तारयते नृणामुभौ वंशौ विशेषतः॥ दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्तनात्। पुनात्यपुण्यान्पुरुषान् शतशोऽथ सहस्रशः॥ अपहृत्य तमस्तीव्रं यथा भात्युदये रविः। तथाऽपहृत्य पाप्मानं भाति गङ्गाजलोक्षितः" इत्याद्यानुशासनिकादिपरस्सहस्रप्रमाणप्रख्यापितसर्वपातकनिर्मूलनदर्शनस्पर्शनादिवैभवायास्तस्यास्त्रयीतनुमयूखमालिकाया इव को हि नामान्यसंसर्गतोऽशुद्धिसंभावनागन्धोऽपि। यां हि सर्वज्ञो महादेवोऽपि स्वपावनार्थमेव मू-

---

टिनी" इत्यादिकमुक्तमिति—तन्न. यतिपतिदयायां गङ्गात्वरूपणपरस्य 'सवित्री मुक्तानाम्' इत्यादिपद्यस्य गङ्गायां प्रपन्नजनास्पृश्यत्वशङ्कावारकत्वासंभवेन अत एवेत्युपष्टम्भासंगतेः। तस्मात् आनुशासनिकादिप्रमाणोपन्यासपुरस्सरं रसास्वादिनीदर्शित तच्छङ्कावारणमेव युक्तमित्यवधेयम्॥

र्भोऽगृह्णादित्युद्घुष्यन्ति प्रमाणसहस्राणि। तथाहीश्वरसंहितायाम्— त्रैविक्रमचरणारविन्दार्चनपरेण ब्रह्मणैवोच्यते—“ द्रवीभूतस्तदा धर्मो हरिभक्त्या महामुने। गृहीत्वा धर्मपानीयं पदं नाथस्य तुष्टये॥ क्षाळितं परया भक्त्या पाद्यार्घ्यादिभिरर्चितम्। तदम्बु परया भक्त्या दधार शिरसा हरः॥ पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात्। वर्षायुतानथ बहून्न मुमोच तदा हरः” इति॥ पाद्मेऽपि पुराणे वामनावतारकथायां स्वयमेवाह महेश्वरः—“ततः पितामहो दृष्ट्वा चक्रपद्मादिचिह्नितम्। श्रीपादं देवदेवस्य हर्षसंभ्रमचेतसा॥ धन्योऽस्मीति वदन्ब्रह्मा गृहीत्वा स्वकमण्डलुम्। भक्त्या प्रक्षाळयामास तत्र संस्थितवारिणा॥ अक्षय्यमभवत्तोयं तत्र विष्णोः प्रभावतः। तत्तीर्थं मेरुशिखरे पपात विमलं जलम्॥ जगतः पावनार्थाय चतुर्दिक्षु प्रवाहितम्। सीता चालकनन्दा च चक्षुर्भद्रा यथाक्रमात्॥ ततश्चालकनन्दा च मेरोर्दक्षिणतस्स्थिता। त्रिधा नाम्ना त्रिपथगा त्रिस्रोता लोकपावनी॥ ऊर्ध्वं मन्दाकिनी प्रोक्ता अधो भोगवती तथा। मध्यमेनाथ गङ्गा च पावनार्थं शिवा नृणाम्॥ तां दृष्ट्वा मेरुमध्यात्तु प्रवहन्तीं शुभानने। आत्मनः पावनार्थाय शिरसाऽहमधारयम्॥ दिव्यवर्षसहस्रं तु धृत्वा गङ्गाजलं शिवम्। शिवत्वमाप्नुवं देवि सर्वलोकेषु पूजितम्॥ यो वहेच्छिरसा गङ्गातोयं विरणुपदोद्भवम्। प्राशयेद्वा जगत्पूज्यो भविष्यति न संशयः” इति। श्रीभागवते च— “ संचिन्तयेद्भगवतश्चरणारविन्दम्” इत्युपक्रम्य—“ यच्छौचनिस्सृत-

सरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवश्शिवोऽभूत्" इति। नन्वेवं गङ्गायाः पशुपतेरपि पावनत्वे "भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः" इति श्रीरामायणे भवाङ्गसंसर्गादेवास्याः पवित्रतोक्तिः कथमिव संगच्छत इति चेत् शृणु "तत्र हि स्वतः पवित्रत्वस्य स्प्रष्टव्यताहेतुत्वमुच्यते। अश्रुतमनाकाङ्क्षितं चान्यसंसर्गस्य तत्पवित्रताहेतुत्वं कल्पयितुमयुक्तम्। कल्प्यमानेऽपि ज्ञापकहेतुत्वमात्रं कामं कल्प्यतां भवेन शिरसा धृतत्वात्पवित्रमिति पस्पृशुरित्यर्थः" इति रहस्यरक्षायामाचार्यपादाः। पवित्रत्वं चास्या भगवत्पादारविन्दसंबन्धादेव न तु भवाङ्गसंबन्धादिति यद्यप्युदाहृतप्रमाणैर्व्यक्तं तथाऽपि स्फुटतरप्रतिपत्त्यर्थमुदाह्रियन्ते प्रमाणान्तराण्यपि। तथाहि श्रीभागवते प्रथमस्कन्धे—"या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री। पुनाति लोकानुभयत्र सेशान्कस्तां न सेवेत मरिष्यमाणः" इति। "आप्लुता हरिपादाब्जरजःपूतसरिज्जले" इति च। नवमस्कन्धेऽपि—"तथेति राज्ञाऽभिहितस्सर्वलोकहितश्शिवः। दधारावहितो गङ्गां पादपूतजलां हरेः" इति। तत्रैव "यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि। सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः॥ भस्मीभूताङ्गसङ्गेन स्वर्यातास्सगरात्मजाः। किं पुनश्श्रद्धया देवीं ये सेवन्ते धृतव्रताः॥ न ह्येतत्परमाश्चर्यं स्वर्धुन्या यदिहोदितम्। अनन्तचरणाम्भोजप्रसूताया भवच्छिदः" इति चोक्तम्। "महापुण्यां च गगनात्पतन्तीं वै महेश्वरः। दधार शिरसा गङ्गां तामेव दिवि सेवते"

इत्यानुशासनिकादिषु हरशिरस्स्पर्शात्प्रागेव पुण्यतमत्वोक्तिरप्यत्रैवानुकूला। नन्वेवमस्या अन्यसंसर्गादपवित्रताभावे श्रीभागवते नवमस्कन्धे—" किं चाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम्। मृजामि तदघं क्वाहं राजंस्तत्र विचिन्त्यताम्" इति गङ्गयोक्ते—साधवो न्यासिनश्शान्ता धर्मिष्ठा लोकपावनाः। हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः" इति भगीरथेनोक्तं कथं संगच्छत इति चेन्न, भगवद्भक्तप्रशंसापरत्वादस्य। अन्यथा—" अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः। सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः" इत्यादयः पूर्वोदाहृताश्च सर्वलोकपावनत्वोक्तयस्सर्वपुराणप्रसिद्धा व्याकुप्येयुः। महाभागवतैरेवानुदिनं स्नानावसरे—" विष्णुवामपदाङ्गुष्ठनखस्रोतोविनिर्मिते। तद्भक्तिविघ्नरूपात्त्वं गङ्गे मां मोचयैनसः" इति तस्याः प्रार्थनम्। "वैष्णवानां यथा शम्भुः, शिवं महाभागवतं स्मरामि" इत्याद्युक्तरीत्या महाभागवतमूर्धन्यतया प्रसिद्धेन महादेवेनापि—" तां दृष्ट्वा मेरुमध्यात्तु प्रवहन्तीं वरानने। आत्मनः पावनार्थाय शिरसाऽहमधारयम्॥ तदम्बु परया भक्त्या दधार शिरसा हरः। पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात्" इति। प्रागुदाहृतप्रमाणरीत्या आत्मनः पावनाय धारणं च तस्या न घटेतेति दिक्। यद्वा—पशुपतिजटास्पर्शशून्यं विभातीत्यस्यैवं भावः—विष्णुपदीयतीर्थं हि गगनाच्छिवशिरसि निपतितम् " नैव सा निर्गमं लेभे जटामण्डलमोहिता। तत्रैवाबभ्रमद्देवी संवत्सरगणान्बहून्" इत्युक्तरीत्या ब-

हुतिथं कालमप्रकाशमेवावसत्ततो भगीरथाभ्यर्थनयाऽभात् । इदं नूपुरगङ्गातीर्थं तु तत्संस्पर्शवैधुर्येण जन्मप्रभृत्येव सकललोकलोचनगोचरतया विशेषतो भातीति ततोऽस्य वैलक्षण्यमिति । अत्र विष्णोरिति विशेष्यस्य बलिविजयिन इति विशेषणस्य चोक्तरीत्या त्रिविक्रमत्वाभिप्रायगर्भत्वात्परिकराङ्कुरपरिकरावलङ्कारौ । वृषभाचलस्य विनमद्भागधेयत्वेन रूपणाद्रूपकं चेत्येतेषां संसृष्टिः । भगवन्नित्यनिवासत्वविनमद्भागधेयत्वरूपपदार्थयोः उक्तविधनूपुरगङ्गाविभानरूपवाक्यार्थस्य च वृषभाचलकर्मकनमनं प्रति हेतुत्वात्पदार्थवाक्यार्थोभयहेतुकं काव्यलिङ्गम् । उक्तलक्षणनूपुरगङ्गावस्थानस्य वृषभाचलोपलक्षणतया निबद्धत्वादुदात्तभेदश्च [1] पशुपतिजटास्पर्शशून्यमिति गङ्गापेक्षया विशेषोक्तेर्व्यतिरेकालङ्कारश्च वर्ण्याधिक्यपर्यवसायी "व्यतिरेको विशेषश्चेदुपमानोपमेययोः" इति लक्षणात् । सर्वेषामेषामेकवाचकानुप्रवेशसंकरः । अत्र नूपुरगङ्गाया भागीरथ्यपेक्षयाऽऽधिक्यवर्णनेन गम्यमानोऽद्भुतरसः प्रेमभावातिशयपर्यवसन्नतया श्रीरामचन्द्रगतवृषभगिरिविषयकभावपोषकत्वात्तदङ्गमिति रसवन्नामापराङ्गव्यङ्ग्यं "रसे रसाङ्गे भावाङ्गेऽप्येषु स्याद्रसवद्द्विधा" इति लक्षणात् । अस्याप्यलङ्कारत्वपक्षे तु पूर्वोक्तालङ्कारैस्सहास्यैकवाचकानुप्रवेशलक्षणस्संकरः ॥ ४९ ॥

[1] पशुपतिजटास्पर्शशून्यमिति गङ्गाऽपेक्षया विशेषोक्तेर्व्यतिरेकालङ्कारश्चेति रसास्वादिनी ॥ यत्तु दिव्यं पाथस्साक्षान्निपतितमिति वक्तव्ये पशुपतिजटेत्यादिभङ्ग्यन्तरेण कथनात्पर्यायोक्तमिति तन्न. साक्षादित्यस्याव्यवधानार्थकस्य प-

पुरा खलु चेरचोळपाण्ड्यदेशाधीशास्स्वदेशेषु ग्रहवैपरीत्येन दुर्निग्रहावग्रहपीडितेषु तन्निरासोपायमगस्त्यं पृष्ट्वा तदुपदिष्टेन मार्गेण हालास्यक्षेत्राधीशं महेशमाराध्य तत्र च जनपदेषु भवतामिन्द्रो वर्षिष्यति मदाज्ञया दिवमुपेत्य तमभ्यर्थयध्वमित्यशरीरिणीं वाणीं निशम्य त्रयोऽपीन्द्रसदनमभ्यगमन् । तत्र च पुरस्तादेव विज्ञाय तदागमनममराधिनाथेन परिकल्पितानि तेषां त्रीण्यासनानि अथ पुरस्ताच्चेरचोळाधिनाथौ पुरन्दरमभिनन्द्य तदाज्ञया समुन्नतयोर्भद्रपीठयोर्न्यषीदताम् । पाण्ड्यराजस्तु ततो नीचीनं स्वार्थं परिकल्पितमासनमभिवीक्ष्य तदसहमानो महेन्द्राध्युषितमेवाध्यरुक्षत्सिंहासनं महेन्द्रस्त्वभिवीक्ष्य तस्य धृष्टतामन्तरभ्यसूयति स्म तस्मै । अथ चेरचोळाविन्द्रमभिष्टूय स्वविषययोः प्रसक्तमवग्रहं न्यवेदयतां इन्द्रस्तदभ्यर्थनया प्रसन्नस्तज्जनपदेषु वर्षितुमम्भोदान् शशास । पाण्ड्यस्तु नीचीनासनपरिकल्पनजनितावमानः किंचिदपीन्द्रमनभ्यर्थयमान एवोदतिष्ठत् । तत इन्द्रेण यथाऽर्हं सम्मानितास्ते त्रयोऽपि न्यविशन्त स्वस्वजनपदान् । अथ च—संजाता महती वृष्टिस्स्वकाले चेरचोळयोः । देशयोः पाण्ड्यदेशे तु नैव वृष्टिरजायत ॥ धान्यानामायतिरभूद्देशतश्चेरचोळयोः । पाण्ड्यस्तु लज्जितोऽप्यन्तर्धीरत्वाद्धृतिमेयिवान् ॥ वनेषु श्वापदाभावान्मृगयार्थं स जातुचित् । मलयं प्राप्य विक्रीडन्मृगाद्यैः परितो भ्रमन् ॥ पुष्कलावर्तकाद्यांस्तांश्च-

शुपतिजटानिपतनादिव्यवधानराहित्यार्थकतया वाच्यकक्ष्यापन्नस्य साक्षान्निप्रतनस्य व्यङ्ग्यत्वासंभवात् पर्यायोक्तानुत्थितेः ॥ ४९॥

तुरो मेघनायकान् । आसीनांस्तत्तटे दृष्ट्वा जग्राहानुगतो भटैः ॥ आनीय सद्यः कारायां चिक्षेप निगळान्वितान् । तच्छ्रुत्वा योद्धुमायातो देवराजो रुषाऽन्वितः ॥ पाण्ड्यभूपोऽपि धीरात्मा निर्गतोऽन्तःपुराज्जवात् । ततश्च स पाण्ड्यो हालास्यक्षेत्राधीशमहेशप्रसादासादितदिव्यास्त्रप्रभावादायोधनेन महता पराजेष्ट सुराधीशम् ॥ तदनन्तरमिन्द्राभ्यर्थनया महेशं यथाकालवर्षणे प्रतिभुवं विधाय, अथ पाण्ड्यमहीपालो मुमोच जलभृद्वरान् । तदा प्रभृति तद्राष्ट्रे सुवृष्टिस्सुतरामभूत् ॥ सुभिक्षमभवद्राष्ट्रे प्रजास्सर्वास्सुनन्दिताः" ॥ इति स्कान्दान्तर्गतहालास्यक्षेत्रमाहात्म्ये कथा दृश्यते ॥

तामेतां संक्षेपेणानुक्रामन् सर्वसस्यसमृद्धिमत्प्रदेशान्पाण्ड्यदेशान्प्रयाहीत्याह भगवान्—

**ईशादस्त्राण्यधिगतवतां क्षत्रियाणां प्रभावात्**
**काराऽऽवासस्मरणचकितैस्सिक्तसस्यां पयोदैः ।**
**पश्यन्यायाः परमलकया स्पर्धमानैरजस्रं**
**पुण्यावासैः पुरजनपदैर्मण्डितान्पाण्ड्यदेशान् ॥**

ईशात् पिनाकिनः अस्त्राणि आग्नेयवारुणपाशुपतादीन्यस्त्राणि अधिगतवतां तपश्चर्यया प्राप्तवताम् । अधिपूर्वाद्गमेः कर्तरि क्तवतुः । क्षत्रियाणां राज्ञां छत्रिन्यायेन बहुवचनम् । एकस्यैव राज्ञस्तथाविधत्वप्रसिद्धेः, प्रभावात् तेजसः "प्रभावश्शक्तितेजसोः" इति रत्नमाला । कारावासस्मरणचकितैः कारा बन्धनालयः "कारा

स्याद्गन्धनालयः" इत्यमरः। तस्यां आवासस्य अवस्थानस्य स्मरणात् स्मृतेः चकितैः भीतैः। आवासस्येति कर्मणि षष्ठी "कर्तृकर्मणोः कृति" इत्यनुशासनात्। तस्याश्च स्मरणशब्देन "षष्ठी" इत्यनेन समासः। न च स्मरणार्थकशब्दयोगात् "अधीगर्थदयेशां कर्मणि" इत्यनेनैव षष्ठी तस्याश्च प्रतिपदविधानत्वात् "प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्" इत्यनेन समासनिषेधश्शङ्कनीयः कर्मणश्शेषत्वेनाविवक्षायां प्रतिपदविधानत्वाप्रसक्त्या कर्तृकर्मणोः" इत्येव षष्ठी। एवं च प्रतिपदविधानषष्ठ्यास्समासनिषेधेऽपि कर्मणि षष्ठ्या न समासनिषेधः। तथा च कारकषष्ठ्या समासात्कृदुत्तरपदप्रकृतिस्वरो भवति शेषषष्ठ्या समासे त्वन्तोदात्तता स्यात्। एवं चान्तोदात्तनिवृत्तये "ज्ञोविदर्थस्य" इत्यादिप्रकरणं मातुः स्मृतमित्यादौ समासाभावार्थं च। न हि तत्र कारकषष्ठी लभ्यते "नलोकाव्ययनिष्ठा" इति प्रतिषेधादिति निष्कृष्टोऽर्थः। आह च हरिः "निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते। शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते" इति। अत एव "हरिस्मरणं विशेषस्मृतिहेतवः पदात्पदार्थस्मरणम्" इत्यादयो निर्विचिकित्साः प्रयोगाः। विस्तरस्तु शब्दकौस्तुभादौ द्रष्टव्यः। स्मरणादित्यत्र "भीत्रार्थानां भयहेतुः" इत्यनेनापादानसंज्ञायां "अपादाने पञ्चमी" इति पञ्चमी। तस्याश्च "कर्तृकरणे कृता बहुलम्" इत्यत्र बहुलग्रहणेन विभक्त्यन्तरस्यापि क्वचित्कृदन्तेन समासस्य ज्ञापितत्वात्पादाभ्यां हारकः पादहारक इत्या-

दाविव चकितशब्देन कृदन्तेन समासः ॥ पादाभ्यामिति पञ्चमीद्विवचनम् । यद्वा—भोगोपरत इत्यादाविव 'सुप्सुपा' इति समासः ॥ अथवा "कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च" इत्यादाविव स्मरणेत्यत्र संबन्धसामान्ये षष्ठीं विवक्षित्वा तस्याश्चोक्तरीत्या समासः । न तु "पञ्चमी भयेन" इति सूत्रस्थ "भयभीतभीतिभीभिरिति वाच्यम्" इति वार्तिकेन तत्र हि भीतेति स्वरूपस्यैव ग्रहणं न त्वर्थस्य प्रमाणाभावात् ॥ अन्यथा "पञ्चमी भयेन" इत्यनेनैव सिद्धे वार्तिकानारम्भापत्तिः । नापि "पञ्चमी" इति योगविभागात्समासः ॥ तस्य भाष्यानारूढत्वादिति दिक् ॥ पयः ददतीति पयोदाः तैः मेघैः पूर्वं केनचित्तद्देशाधीशेन राज्ञा कारागारान्तर्निगळितत्वादधुनाऽपि तदनुस्मरणभीततया यथाकालं वर्षद्भिरिति भावः ॥ अत एव पयोदपदस्योपादानं न तु घनादिपदस्य [1]सिक्तानि कृतसेचनानि सस्यानि येषु तांस्तथाभूतान् अ-

[1] सिक्तानि कृतसेचनानि सस्यानि येषु तांस्तथाभूतान् । एतेन सस्यानां क्वचिदप्यम्लानतया परिपूर्णफलाधायकत्वं द्योतितम् । एतावता देशानां धान्यसमृद्धिस्सूचिता इति रसास्वादिनी ॥ अनेन सस्यपदस्य व्रीहियवाद्योषधिपरत्वं लोकप्रसिद्धमेवात्र गृहीतमिति स्फोरितम् ॥ यत्तु—अत्र सस्यपदं तद्धेतुवृक्षादिपरं बोध्यम् । 'वृक्षादीनां फलं सस्यम्' इति तत्फलस्यैव सस्यत्वानुशासनात् । इति तन्न. सस्यपदस्य वृक्षे क्वचिदप्यप्रयोगादननुशासनाच्च वृक्षादिपरत्वानुपपत्तेः । "कणिशं सस्यमञ्जरी" "धान्यार्थवृष्टिसस्यानां परिपूर्तिं करोति सः" "परिणतफलसस्यां प्रास्य चोलक्षितिं किं" इत्यादौ ओषधिमात्रे हि सस्यपदं प्रयुज्यते । तस्मात् "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना-

नेन सस्यानां क्वचिदप्यम्लानतया परिपूर्णफलाधायकत्वं द्योतितम् । एतावता देशानां धान्यसमृद्धिस्सूचिता ॥ अथ धनसमृद्धिं सूचयन्नाह—परमिति ॥ अलकया धनाधिपनगर्या "कुबेरस्त्र्यम्बकसखः" इत्युपक्रम्य "कैलासस्स्थानमलका पूः" इत्यमरः ॥ अजस्रं निरन्तरं न तु यदाकदाचित् परं अत्यन्तं न तु यथाकथंचित्, स्पर्धमानैः संघर्षमारचयद्भिः अनेन धनसंपत्तिस्सार्वकालिकी निरतिशयेति च व्यज्यते ॥ न केवलं धनधान्यसमृद्धिरेव अपि तु पुण्यसमृद्धिरप्यस्तीत्याह—पुण्येति ॥ [1]पुण्यानां यज्ञदानतपःप्रभृति-

स्तिष्ठन्ति" इत्यादिश्रुतिमूलकं "वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः" इत्यादिस्मृतिवचने स्थानप्रमाणानुरोधात्सस्यपदस्यावधारितमोषधिपरत्वमेवेह युक्तमाश्रयितुम् । अत एवास्य देशविशेषणस्य धान्यसमृद्धिद्योतकत्वं स्वेनाप्युक्तमुपपद्यते । धान्यानि ह्योषधिफलान्येव भवन्ति । न वृक्षफलानि ॥ एतेन—क्षेत्रगतं धान्यं सस्यमित्यन्ये । यद्वा—सस्यानामपि सिक्तत्वे कैमुतिकन्यायेन वृक्षादीनामतिशयेन सिक्तत्वं सिध्यतीति बोध्यमिति पक्षान्तरमप्ययुक्तं वेदितव्यम् । सस्यपदस्य क्षेत्रगतधान्यवाचकतायाः प्रकृतानुपयुक्तत्वात् वृक्षादिसेकातिशयहेतुभूताया धान्यस्य सिक्तताया इह विवक्षितत्वे धान्यानां क्लेदनसाङ्कुरभावाद्यापत्त्या अतिवृष्टिजनितदुर्भिक्षप्रसरस्यैव प्रतीतिप्रसङ्गाद्विवक्षितधान्यसमृद्धिप्रत्ययभङ्गप्रसङ्गाच्च ॥

[1] पुण्यानां यज्ञदानतपःप्रभृतिसुकृतानामित्यादि रसास्वादिनी ॥ यत्तु—पुण्यानां यज्ञदानादिसाध्यधर्माणामिति—तन्न. यज्ञादीनामेव धर्मतया पुण्यपदार्थत्वसंभवे तत्साध्यापूर्वपर्यन्तपरताश्रयणस्यायुक्तत्वात् ॥ तत्साध्यापूर्वस्य आत्मधर्मतया तदावासत्वस्य देशेऽसंभवाच्च । कर्माधारत्वं तु "सोमे दर्शपूर्णमासाभ्यां यजेत" "स ज्ञेयो याज्ञियो देशः" इत्यादिश्रुतिस्मृतिबलादेव प्रति-

सुकृतानां आवासैः स्थानभूतैः ॥ "न यत्र धर्माः प्रचरन्ति संततं देशान् समृद्धानपि तान्परित्यजेत्" इत्युक्तरीत्या धनधान्यसमृद्धिरूपगुणसद्भावेऽपि पुण्यप्रचाराभावनिबन्धनत्याज्यतादोषोऽत्र नास्तीति भावः ॥ यद्वा—पुण्यशब्दस्तद्वति वर्तते "अथ त्रिषु द्रव्ये पापपुण्यसुखादि च" इत्यनुशासनात् ॥ पुण्यानां "पुण्यः पुण्येन कर्मणा भवति" इति श्रुत्युक्तरीत्या पुण्यकर्मकृतां पुरुषाणां आवासैः "तामग्निमद्भिर्गुणवद्भिरावृतां द्विजैर्वरैर्वेदषडङ्गपारगैः ॥ सहस्रदैस्सत्यरतैर्महात्मभिर्महर्षिकल्पैः ऋषिभिश्च केवलैः" इत्युक्तरीत्याऽऽहिताग्निवेदवेदाङ्गपारगादिपुण्यपुरुषाणामाश्रयैरिति भावः ॥ पुरजनपदैः पुराणि राजधान्यः जनानां पदानि जनपदाः ग्रामसमूहाः तैः "नाञ्यपजनोपपदानि व्रणाङ्गपदानि" इति पुंस्त्वं मण्डितान् अलंकृतान् "मडि भूषायाम्" कर्मणि क्तः। लोके हि नागरकाः प्रवीणतया पुण्यनिरतास्स्युः प्रायेण ग्रामेयकास्तु वामदक्षिणहस्तानभिज्ञतया सर्वत्र दृश्यन्ते पशुप्रायाः। तत्र तु पुण्यावासत्वविशेषणस्य पुरजनपदोभयसाधारणतया निर्देशादुभयेषामपि पुण्यकर्मनिरतत्वे न कश्चिद्विशेषो लक्ष्यत इति द्योतितम्। पाण्डूनां जनपदानां राजा पाण्ड्यः "जनपदशब्दात्क्षत्रियादञ्" इति सू-

पन्नं देशस्य ॥ यज्ञादिक्रियाया धर्मरूपत्वं द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता इति वार्तिकभाष्यादिष्वेव दृष्टमिति दिक् ॥ यदपि—पाण्डूनां जनपदानां राजानः पाण्ड्या इति विवरणम्—तदप्यसमञ्जसमिति चोराक्रान्तमिति श्लोक एव निरूपितम् ॥ ५० ॥

त्रस्थेन "पाण्डोर्ड्यण्" इति वार्तिकेन ड्यण्प्रत्ययः ॥ डित्त्वात् "टेः" इति टिलोपः ॥ "क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्" इत्यतिदेशाद्राजार्थेऽप्ययं प्रत्ययः अतोऽस्यापत्याधिकारस्थत्वेऽपि न दोषः। तस्य राज्ञः। देशान् विषयान् पाण्ड्याश्च ते देशाश्चेति तु न विग्रहः पाण्ड्यशब्दस्य देशवाचित्वायोगात्। यद्वा— पाण्ड्ये राज्ञि साधवः पाण्ड्याः पाण्ड्याश्च ते देशाश्चेत्येव विग्रहः अन्यत्तु 'चोळपाण्ड्यान्तरस्थम्' इत्यत्र निरूपितमधस्तात्। पश्यन् विलोकयन् दर्शनमात्रमेव तत्र कार्यं न तु रामणीयकातिशयेन तत्रैव चिरकालावस्थानमिति भावः। यायाः गच्छेः "या प्रापणे" लिङ्। एतावता प्रबन्धेन "ततो धान्यधनोपेतान् दानशीलजनान् शिवान्। अकुतश्चिद्भयान्रम्यांश्चैत्ययूपसमावृतान् ॥ उद्यानाम्रवणोपेतान् संपन्नसलिलाशयान्। तुष्टपुष्टजनाकीर्णान्गोकुलाकुलसेवितान् ॥ लक्षणीयान्नरेन्द्राणां ब्रह्मघोषाभिनादितान्। रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत" इत्याद्युक्तरीत्या कोसलदेशसदृशी पाण्ड्यदेशसमृद्धिरिति। एवं समृद्धानपि कोसलानहमिव त्वमपि तथाविधान्पाण्ड्यदेशान्निस्संगेनात्मना व्यतीया इति द्योत्यते ॥ अत्र कारावासस्मरणचकितैरित्यस्य विशेषणगत्या पयोदकर्तृकयथाकालसस्यसेचनं प्रति हेतुत्वात्काव्यलिङ्गभेदः ॥ अलकया स्पर्धमानैरित्यत्रोपमा। यद्यपि स्पर्धमानैरित्ययं नोपमावाचकः तथाऽपि "स्पर्धते ह्वयति द्वेष्टि" इति दण्डिना स्पर्धतेरुपमाबोधकेषु परिगणनादुपमायां निरूढ इति ध्येयम्। एवमेव यादवाभ्युदयव्याख्यायामुक्तम्। अनयो-

स्संसृष्टिः, समृद्धिमद्वस्तुवर्णनात्मकोदात्तेन सहैकवाचकानुप्रवेशसंकरश्च ॥ ५० ॥

ततस्ताम्रपर्णी सेव्यतामित्याह—

**मुक्ताजालैर्जनितपुळिनां शुक्तिसंतानमुक्तैः**
**तारापूर्णां दिवमिव ततस्ताम्रपर्णीं भजेथाः ।**
**प्रत्यासत्त्या नियतविशदं पीतसिन्धोर्महर्षेः**
**पानीयं ते परिणमयिता तत्र मुक्तामयत्वम् ॥ ५१**

मुक्तेति ॥ ततः तदनन्तरं शुक्तीनां मुक्तास्फोटानाम् "मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः ॥ संतानात् समूहात् "संतानस्संततौ गोत्रे स्यादपत्ये सुरद्रुमे" इति विश्वमेदिन्यौ। मुक्तैः गळितैः मुचेः कर्तरि क्तः। "अपेतापोढमुक्तपतितापत्रस्तैरल्पशः" इति पञ्चमीसमासः। यद्वा—मुक्तैरिति कर्मणि क्तः। शुक्तिसंतानेन मुक्तैरिति तृतीयासमासः "कर्तृकरणे कृता बहुलम्" इत्यनुशासनात्। अथवा—संतानेन अविच्छेदेन मुक्ताः शुक्तिभिस्संतानमुक्ता इति समासः "संतानास्स्युरविच्छेदवंशापत्यसुरद्रुमाः" इति रत्नमाला। अनेन पुळिनीभवनोचितं मौक्तिकानां भूयस्त्वं सूचितम्। मुक्ताजालैः मौक्तिकनिवहैः जनितानि उत्पादितानि पुलिनानि तोयोत्थितद्वीपानि यस्यां तथोक्ताम्। ताम्रपर्णीशुक्तिपुटेषु मौक्तिकोत्पत्तिः प्रसिध्यति रत्नशास्त्रे—"ताम्रपर्ण्याश्शुक्तिकान्तस्संरुद्धास्तोयबिन्दवः ॥ षड्भिर्मासैर्घनीभूता जायन्ते शुद्धमौक्तिकाः" इति। मुरारिमिश्रोऽप्याह—"इयमितो मौक्तिकीयानाम-

पामाधारस्ताम्रपर्णी ॥ शुक्तिकागर्भसंबन्धस्तम्भितास्तोयबिन्दवः । भ्रमन्ति सुभ्रुवामङ्कादङ्कमस्याः प्रसूतयः ॥ अपि च—युवतिकुचभोगकर्मभिरुद्भूतैश्शुक्तिसंपुटभृतानि । दधतीह ताम्रपर्ण्याः स्थिरकरकाभावमम्भांसि " इति ॥ अत एव ताराभिः आपूर्णा समन्ततो व्याप्तां दिवं द्यामिव स्थितां यथा दिवि ताराराशयोऽसंख्यातास्तथा ताम्रपर्ण्यां मुक्ताराशय इति द्योत्यते ॥ ताम्रपर्णीं तन्नाम्नीं तरङ्गिणीं भजेथाः सेवेथाः ॥ तत्र भाविनं हंसस्याभ्युदयमाह—प्रत्यासत्त्येति ॥ तत्र ताम्रपर्ण्यां पीतस्सिन्धुर्येन सः तस्य तथोक्तस्य आचान्तसागरस्य महर्षेः अगस्त्यस्येत्यर्थः । इदानीं शरदागमेऽभ्युदितस्येति भावः ॥ अगस्त्योदयकालश्चोक्तो दिवोदासीये—" उदेति याम्यां हरिसंक्रमाद्रवेरेकादिके विंशतिमे ह्यगस्त्यः । ससप्तमेऽस्तं वृषसंक्रमाच्च प्रयाति गर्गादिभिरभ्यभाणि " इति ॥ प्रत्यासत्त्या अत्यन्तासन्नतया तत्रैव दिशि तस्य नित्यनिवासादिति भावः ॥ प्रत्याङ्पूर्वकात्सदेः क्तिन् । नियतं विशदं नियतविशदं विस्पष्टपटुवत्समासः ॥ नियमेन निर्मलं अव्यभिचरिततया निर्दोषमित्यर्थः । तस्य जलनैर्मल्यावहत्वं चोक्तं विष्णुरहस्ये अगस्त्यार्घ्यं प्रक्रम्य—" विन्ध्यवृद्धिक्षयकर मेघतोयविषापह । रत्नवल्लभ देवेश लङ्कावासिन्नमोऽस्तु ते " इति ॥ काळिदासश्चाह—" प्रससादोदयादम्भः कुम्भयोनेर्महौजसः " इति ॥ मुरारिमिश्रोऽपि " चतुरब्धिपानचेष्टादृष्टपिपासे मुनावुदयमाने । पाययितुमिवात्मानं विशुध्य सज्जीभवन्त्यापः " इति ॥ एतदभ्युदयमात्रेण यत्र क्वचित् स्थित-

स्यापि सलिलस्यानाविलत्वसिद्धावेतत्प्रत्यासन्नायास्ताम्रपर्ण्यास्सलिलं नियतविशदमेव भवतीति किमु वक्तव्यं, पानीयं तोयं, निर्दोषतया पानार्हत्वं सूचयितुं पानीयशब्दः, ते तव मुक्तैव मुक्तामयः, तस्य भावः मुक्तामयत्वं मौक्तिकत्वमित्यर्थः ॥ स्वार्थिको मयट् "तत्प्रकृतवचने" इत्यत्र "तद्ग्रहणं वाक्यभेदेन प्राचुर्याभावेऽप्यत्यन्तस्वार्थिकमयडर्थं तेन चिन्मयं ब्रह्मेति सिद्धम्" इति शब्देन्दुशेखरे स्थितं, परिणमयिता, परिणमयिष्यति ॥ परिपूर्वकान्नमतेर्णिजन्तादनद्यतनभविष्यत्यर्थे लुट्, अमन्तत्वेन मित्त्वाद्ध्रस्वः ॥ अनेन ताम्रपर्णीतटप्राप्तिस्तव श्वोभाविनीति सूच्यते ॥ रत्नवल्लभागस्त्यसन्निधानातिशयबलादतिस्वच्छं ताम्रपर्णीसलिलं स्वयं मौक्तिकीभवितुमर्हं तव मौक्तिकत्वेन परिणतिं संपादयिष्यतीत्याश्चर्यमेतदिति भावः ॥ मुक्तः त्यक्तः आमयो व्याधिर्येन स तथोक्तः तस्य भावः मुक्तामयत्वं परिणमयिता नीरोगत्वं परिणमयिष्यतीति वास्तवार्थः ॥ "येनोदितेन पापानि विलयं यान्ति व्याधयः । तस्मै नमोऽस्त्वगस्त्याय" इति विष्णुरहस्योक्तप्रकारेण सर्वव्याधिबाधाविधूननधूर्वहागस्त्यातिसान्निध्यमहिम्ना निवृत्तनिखिलदोषं ताम्रपर्णीसलिलं त्वया सेवितं सत्तव सुदूरव्यायामजनितग्लानिजडिमानमपनीयोल्लाघतां संपादयितेति भावः ॥ अत्र पूर्वार्धे तारापूर्णां दिवमित्युपमा, ताम्रपर्ण्यां मुक्ताजालजनितपुळिनत्वासंबन्धेऽपि तत्संबन्धोक्तिरूपयाऽतिशयोक्त्याऽङ्गभूतया संकीर्यते ॥ उत्तरार्धे अगस्त्यस्येति वक्तव्ये तस्यैव भङ्गचन्तरेण वर्णनात्पर्यायोक्तं, अग-

स्त्यप्रत्यासत्त्या ताम्रपर्णीजलस्य वैशद्यनैयत्यासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः, [1] हंसस्य ताम्रपर्णीसलिलरूपत्वतच्छुक्तचन्तस्संलग्नत्वरूपकारणवैधुर्येऽपि मौक्तिकत्वेन परिणामरूपकार्योत्पत्तेर्वर्णनाद्विभावनाविशेषः "विभावना विनाऽपि स्यात्कारणं कार्यजन्म चेत्" इति लक्षणात्, सा च मुक्तामयशब्दवाच्यमौक्तिकरूपत्वनीरोगत्वरूपार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्युत्तम्भितेति संकरः ॥ उपमापर्यायोक्तातिशयोक्तिविभावनानां संसृष्टिः, अनुप्रासश्चाप्यभ्युच्चीयते ॥ ५१ ॥

अथ समुद्रं लङ्घिष्यमाणेन भवता मनाक्तत्र विश्रम्य गम्यतामित्यनुशास्ति—

**तस्यास्स्वैरं सरसिजमुखास्वादसंप्रीतचेताः**
**शीतीभूतस्तरळलहरीबाहुसंश्लेषणेन ।**
**अध्यासीनः पुलिनमनिलैर्वीजितश्चन्दनाद्रेः**
**श्रान्तिं शान्तिं गमयतु भवान् सागरं**
**लङ्घयिष्यन् ॥ ५२ ॥**

---

[1] हंसस्य ताम्रपर्णीसलिलरूपत्वतच्छुक्तयन्तस्संलग्नत्वरूपकारणवैधुर्येऽपि मौक्तिकत्वेन परिणामरूपकार्योत्पत्तेर्वर्णनाद्विभावनाविशेषः इति रसास्वादिनी ॥ यत्तु—हंसस्य मौक्तिकत्वपरिणामासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । सा च मुक्तामयशब्दश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्युत्थापितेति—तन्न. मुक्तामयशब्दश्लेषेण मौक्तिकत्वनिरामयत्वयोरभेदाध्यवसाये सति निरामयत्वसम्बन्धवति मौक्तिकत्वपरिणामासम्बन्धोक्तेरसंभवात् । अन्यथाऽभेदाध्यवसायस्यैव निष्फलत्वापत्तेः ॥

तस्या इति ॥ सागरं सिन्धुं, लङ्घयिष्यन् उत्तरिष्यन् सन् "समुद्रं तरीतुकामः" इति केषांचिद्व्याख्यानं त्विच्छार्थकसन्नभावादुपेक्ष्यं, भवान्, तस्याः ताम्रपर्ण्याः, स्वैरं स्वच्छन्दं यथा स्यात्तथा न हि तत्र कश्चिदपि त्वां निरोद्धेति भावः ॥ सरसिजमेव मुखं, तस्य, आ समन्तात्, स्वादनेन चुम्बनेनाधरामृतास्वादेन चेत्यर्थः ॥ संप्रीतं सम्यगानन्दितं, चेतो हृदयं यस्य, तथोक्तस्सन्, विस्रब्धतन्मुखास्वादेन तवानन्दोऽतिभूमिं गमिष्यतीति भावः ॥ एवं हंसारब्धस्य रत्यनुभावस्यानुरूपं ताम्रपर्ण्यारब्धं रत्यनुभावमपि वर्णयंस्तमेव विशिनष्टि ॥ शीतीभूत इति ॥ तरळाः मन्दमारुतव्यतिकरपारिप्लवाः, याः, लहर्यः ऊर्मयः, ता एव बाहवः, तेषां संश्लेषणेन गाढालिङ्गनेन, तरळेति बाहुविशेषणेन वल्लभसंपर्कजनितस्सात्विकोद्भेदो द्योत्यते । अशीतश्शीतस्संपद्यमानो भूतश्शीतीभूतः, अमृतार्णवान्तर्निमग्नमिवात्मानं मन्यमान इति भावः ॥ अध्वश्रमजनितसकलसंतापनिवृत्तिरनेन सूच्यते ॥ अथ संभोगसर्वस्वं सूचयन्विशिनष्टि—अधीति ॥ पुलिनं तोयोत्थितद्वीपं अनेन तस्यापि तापहारित्वं द्योतितं, सरसिजादिषु मुखत्वाद्यारोपरूपाल्लिङ्गात्पुलिने अरूपितमपि जघनत्वं गम्यते ॥ अध्यासीनः अधितिष्ठन् "अधिशीङ्स्थाऽऽसां कर्म" इत्याधारस्य कर्मत्वं, अधिपूर्वकात् आस उपवेशने ; इत्यस्माच्छानचि "ईदासः" इतीत्वं, अनेन जघनाभोगसंभोगसौभाग्यसर्वस्वं द्योतितं, अथ तत्संभोगनिबन्धनः कश्चिच्छ्रमस्स्यादित्यत आह—अनिलैरिति ॥ चन्दनाद्रेः मलयगिरेः,

अनेन शैत्यसौरभ्यमान्द्यानि व्यञ्जितानि, अनिलैः मारुतैः वीजितः कृतवीजनोपचारस्सन्नित्यर्थः, विपूर्वकाद्वीजनेर्भौवादिकात्कर्मणि क्तः। श्रान्तिं सुदूरपथोड्डयनजनितं श्रमं, शान्ति गमयतु शमयतु "शेषे प्रथमः" इति प्रथमपुरुषः। भवच्छब्दस्य युष्मदस्मद्भ्यां भिन्नत्वेन शेषत्वात् "गतिबुद्धि" इत्यादिना श्रान्तेरण्यन्तावस्थायां कर्त्र्याः, ण्यन्तावस्थायां कर्मत्वम्॥ अत्र वर्णनीये राजहंसस्य ताम्रपर्णीसरोजमकरन्दास्वादादिवृत्तान्ते उत्सुकतमनायककर्तृकयदृच्छालब्धलोकोत्तरोत्सुकनायिकासंभोगवृत्तान्तः प्रतीयत इति समासोक्तिः सरसिजमुखेत्याद्येकदेशविवर्तिरूपकप्रसादासादितवैभवेति संकरः अनुप्रासोऽप्यभ्युच्चीयते, शृङ्गाररसो व्यज्यत इति संक्षेपः॥ ५२॥

अथ किंचिदतीत्य तद्वामभागं द्रक्ष्यसि सागरवेलामित्याह—

**सव्यं तस्याः कियदिव गतश्श्यामताळीतमालां**
**त्वत्प्रायाणां तरुणवयसां चेतसो नन्दयित्रीम्।**
**वेलामब्धेर्विविधलहरीदत्तमुक्ताभिरामां**
**द्रक्ष्यस्याराद्द्विगुणपुळिनां केतकीनां परागैः॥५३**

सव्यमिति॥ तस्याः ताम्रपर्ण्याः किं परिमाणमस्य कियत् "किमिदम्भ्यां वोघः" इति परिमाणार्थकवतुपो वस्य घादेशः॥ घस्य इयादेशः॥ "इदं किमोरीश्की" इति वतुपि परे किमः की इत्यादेशः॥ "यस्य" इति लोपः। कियदिव, इवशब्दो वाक्या-

लङ्कारे यत्किंचिदित्यर्थः ॥ सव्यं वामभागं "वामं शरीरे सव्यं स्यात्" इत्यमरः ॥ गतस्सन् ताळ्यः श्रीताळवृक्षाः तमालास्तापिञ्छाः "खर्जूरः केतकी ताळी खर्जूरी च तृणद्रुमाः । कालस्कन्धस्तमालस्स्यात्तापिञ्छोऽपि" इति चामरः ॥ ताळ्यश्च तमालाश्च ताळीतमालम्, ताळीतमाला इति वा "विभाषा वृक्षमृग" इत्यादिना वैकल्पिकस्समाहारद्वन्द्वः "जातिरप्राणिनाम्" इति प्राप्तनित्यसमाहारद्वन्द्वापवादः ॥ श्यामं ताळीतमालं यस्यां सा, श्यामास्ताळीतमाला यस्यां सेति वा, तथोक्तां, अनेनाविश्लथच्छदनतया सान्द्रच्छायत्वगभीरत्वादिकं द्योत्यते ॥ अतएव त्वया सदृशानि त्वत्प्रायाणि "प्रायो वयसि बाहुळ्ये तुल्यानशनमृत्युषु" इति वैजयन्ती, "प्रायश्चानशने मृत्यौ प्रायो बाहुळ्यतुल्ययोः" इति विश्वश्च ॥ प्रायशब्दस्योत्तरपदत्व एव तुल्यवाचित्वमस्त्रपदविग्रहश्च समास इति "प्रायो भूम्नचन्तगमन" इत्यत्र टीकासर्वस्वकृदादयः ॥ युक्तं चैतत् "स्युरुत्तरपदे त्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः" इत्यत्रादिशब्देन प्रायादिशब्दानामपि संगृहीतत्वात् तेषां त्वत्प्रायाणां, तरुणानि वयस्थानि यानि वयांसि पक्षिणः "वयस्थस्तरुणो युवा । खगबाल्यादिनोर्वयः" इति चामरः ॥ चेतसः चित्तस्य, कर्मणि षष्ठी । नन्दयित्रीं हर्षजननीमित्यर्थः ॥ विविधाभिः नानाप्रकाराभिः लहरीभिः वीचीभिः, दत्ताः वितीर्णाः, याः मुक्ताः मौक्तिकानि ताभिः अभिरामां मनोहरां, केतकीनां परागैः पुष्परजोभिः, द्वौ गुणौ आवृत्ती येषां

तानि, अभिवृद्धानीत्यर्थः, तथाविधानि पुलिनानि यस्यास्तां "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति रत्नमाला ॥ अब्धेः दक्षिणसमुद्रस्य, वेलां मर्यादां "वेला काले च जलधेस्तीरनीरविकारयोः" इति प्रतापः ॥ आरात् समीपे द्रक्ष्यसि विलोकिष्यसे ॥ अत्र प्रस्तुते समुद्रवेलावृत्तान्ते श्यामताळीतमालमित्यादिविशेषणैः "नीलनागाभया वेण्या जघनं गतयैकया। नीलया नीरदापाये वनराज्या महीमिव" इत्युक्तरीत्या नीलवेणीरमणीयायाः युवजनमनोनन्दयित्र्याः सखीजनसमर्पितमुक्ताहारायाः विपुलजघनाया ललनाया वृत्तान्तस्सारूप्यात्प्रतीयत इति समासोक्तिस्समृद्धिमद्वस्तुवर्णनात्मकोदात्तेन पुलिनानां केतकीपरागैर्द्वैगुण्यासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्त्या चैकवाचकानुप्रविष्टाभ्यां संकीर्यते ॥ ९३ ॥

अथ समुद्रवेलारामणीयकावलोकनेन तत्रैव चिरं मा विषज्जिष्ठाः किंतु त्वरितमेव तां व्यतीया इत्याह—

स्थित्वा तत्र क्षणमुभयतश्शैलशृङ्गावतीर्णैः
स्रोतोभेदैरधिगतगुणं चारुविष्फारघोषैः।
लक्षीकुर्वन्दशमुखपुरीं सौम्य पत्रप्रकृष्टो
वेलाचापं शर इव सखे वेगतस्त्वं व्यतीयाः ॥

स्थित्वेति ॥ हे सौम्य! अनुग्रस्वभाव "सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते" इति विश्वः ॥ मन्दगामिन्निति यावत्। अनतिविप्र-

कृष्टा लङ्केत्यपि मान्द्यं नानुवर्तनीयमिति व्यतिरेकमुखेन द्योतयितुं सौम्येति विशेषणम् ॥ तत्र हेतुमभिप्रयन् संबोधयति ॥ सखे इति ॥ आत्मन इव सख्युरपि कृत्यमविलम्बेनैव कार्यमिति भावः। समानचित्तवृत्तित्वं हि सखित्वं "समानचित्तवृत्तित्वं सखित्वमिति दर्शितम्" इत्युक्तेः। तत्र सागरवेलायां क्षणं अत्यल्पकालं "व्यापारविकलतायामुत्सवपरतन्त्रतामुहूर्तेषु। परमाणुकालभेदे घटीषडंशे क्षणस्तथाऽवसरे"॥ इति रत्नमाला। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। स्थित्वा श्रमनिरासाय निवृत्तगतिर्भूत्वा शरः बाण इव पत्राभ्यां सहजाभ्यां अन्यत्र क्षिप्रगमनायोभयतो निबद्धाभ्यां पक्षाभ्यां प्रकृष्टः उत्कृष्टः। प्रकृष्टे पत्रे यस्येति बहुव्रीहिर्वा "जातिकालसुखादिभ्यः परा निष्ठा वाच्या" इति निष्ठायाः परनिपातः। इदं च वक्ष्यमाणे वेगतो व्यतिवर्तने साभिप्रायम् ॥ न हि पतत्रदौर्बल्ये पत्रिणामुत्पतनशैघ्र्यं संभवति ॥ यद्वा—हंसपक्षे पत्रप्रकृष्ट इत्यस्य वाहनेषूत्कृष्ट इत्यर्थः ॥ तस्य चतुर्मुखौपवाह्यत्वेनाधस्तादुक्तत्वात् ॥ "पत्रं वाहनपक्षयोः" इत्यमरः ॥ अस्मिन्नपि पक्षे वेगवद्गमनाभिप्रायगर्भत्वं नापैति ॥ त्वं दशमुखपुरीं रावणनगरीं लङ्कां पुर्या दशमुखसंबन्धित्वकथनेन दुराधर्षता द्योत्यते ॥ तेन तत्र गतेन त्वयाऽतिमात्रमवहितेन भवितव्यमिति व्यज्यते ॥ अलक्षं लक्षं कुर्वन् लक्षीकुर्वन् लक्षशब्दादभूततद्भावे च्विः "लक्ष्यं लक्षं शरव्यं च" इत्यमरः ॥ एकत्र गमनोद्देश्यं अपरत्र भेद्यं च कुर्वन् सन्नित्यर्थः ॥

[1]उभयतः पार्श्वद्वये विद्यमानयोः शैलयोः अचलयोः। सार्वविभक्तिकस्तसिः ततः 'सुप्सुपा' इति समासः। शृङ्गाभ्यां अटनिस्थानीयाभ्यां अवतीर्णैः अधोनिस्सृतैः विष्फारघोषैः धनुष्टंकारः "विष्फारो धनुषां स्वाने" इत्यमरः॥ अत्र धनुस्स्वनार्थकस्य विष्फारशब्दस्य विशिष्टवाचितया विशेष्यभूतध्वनिरूपार्थवाचकघोषशब्दस्य पृथगुपादानाद्विशेषणभूतधनुर्मात्रपरत्वमिति न पौनरुक्त्यम्। यदाहुः—"विशिष्टवाचकानां पदानां पृथग्विशेष्यसमवधाने विशेषणमात्रपरत्वम्" इति॥ चारुः श्रोत्रसुखः विष्फारस्य धनुषो घोषो येषां तैस्तथोक्तैः। यद्वा—कैलासाद्रिर्भावपदार्थस्तर्कविद्याव्याकरणशास्त्रमित्यादाविव व्याप्यव्यापकभावापन्नवस्तुवाचिनोर्विष्फारघोषशब्दयोः "विशेषणं विशेष्येण" इति कर्मधारयः। अथ वा—चारुः कर्णानन्दकरः यः विष्फारो धनुर्ध्वनिः स इव घोषो येषां तैरिति विग्रहः। स्रोतोभेदैः स्वतः प्रसृतप्रवाहविशेषैः एकीभूय विसृत्वरैरिति भावः॥ अन्यथा मौर्वीसाधर्म्यं वक्ष्यमाणमसुन्दरं स्यात् "स्रोतोऽम्बुसरणं स्वतः" इत्यमरः। अधिगतः प्राप्तः गुणः मौर्वी येन तत्तथोक्तं "मौर्वी

[1] उभयतः पार्श्वद्वये विद्यमानयोः शैलयोरिति रसास्वादिनी॥ यत्तु—उभयतः वेलायामेव स्थानद्वये तव पार्श्वद्वये इति यावत्. इति. तन्न. पार्श्वद्वये वेलासम्बन्धित्वस्येह विवक्षितत्वे सत्येव पार्श्वद्वयवर्तिशैलशृङ्गयोरटनिस्थानीयत्वलाभेन वेलायां चापत्वारोपसंपत्तेः "वेलायाः पार्श्वद्वय" इति विवरणस्यैव युक्तत्वात्॥ स्पष्टीकृतं चेदमाचार्यैः वेलानुबद्धोभयपार्श्ववर्तिगिरिशिखराभ्यामृजुतयैकीभूय स्यन्दमानानां स्रोतसामभिमुखमेलनेन वक्ष्यमाणवेलारूपचापमौर्वीत्वेन रूपणमिति वेदितव्यमित्यनेन संदर्भेण॥

ज्या शिञ्जिनी गुणः" इत्यमरः ॥ स्रोतोभेदाभिन्नमौर्वीविशिष्टमित्यर्थः ॥ वेलानुबद्धपूर्वापरोभयपार्श्ववर्तिगिरिशिखराभ्यामृजुतयैकीभूय स्यन्दमानानां स्रोतसामभिमुखमेळनेन वक्ष्यमाणवेलारूपचापमौर्वीत्वेन रूपणमिति वेदितव्यम्। वेला मर्यादाभूमिरेव चापं धनुः कर्म वेगतः वेगात्। आद्यादित्वात्तसिः। व्यतीयाः व्यतिवर्तेथाः "यथा राघवनिर्मुक्तश्शरश्श्वसनविक्रमः। गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम्" इत्युक्तरीत्या हनूमानिव त्वमपि क्षिप्रमेव वेलाचापप्रदेशाच्छर इवोड्डीयेथाः न तु मनागपि विलम्बेथा इति भावः। अत्र चारुविष्फारघोषैरित्यत्र प्राथमिकसमासद्वयपक्षे विष्फारस्यान्यधर्मस्यान्यत्र स्रोतस्स्वसंभवेन सादृश्याक्षेपादसंभवद्वस्तुसंबन्धनिदर्शना तार्तीयिकसमासपक्षे तूपमेत्युभयथाऽपि संभवादनयोस्संदेहसंकरः ॥ [1]चारुविष्फारघोषैरिति विशेषणस्य स्रोतस्सु मौर्वीत्वारोपानुगुण्याभिप्रायगर्भत्वात्परिकरः इति पूर्वोक्तसंदेहसंकरेणास्यैकवाचका-

---

[1] चारुविष्फारघोषैरिति विशेषणस्य स्रोतस्सु मौर्वीत्वारोपानुगुण्याभिप्रायगर्भत्वात्परिकर इति रसास्वादिनी ॥ यत्तु—उभयतोऽवतीर्णैश्चारुविष्फारघोषैरित्यनयोः प्राप्तगुणत्वं प्रति हेतुत्वात्काव्यलिङ्गमिति तन्न. तयोर्विशेषणयोस्स्रोतोभेदेषु मौर्वीत्वारोपोपयिकतयैवोपात्ततया मौर्वीप्राप्त्यहेतुत्वात्। स्रोतस्सु मौर्वीत्वारोपे सति मौर्वीप्राप्तौ हेत्वन्तरानपेक्षणाच्च। मौर्वीत्वारोपद्वारा मौर्वीप्राप्तिहेतुत्वविवक्षायां च मौर्वीत्वारोपोपयोगिमौर्वीसादृश्याभिप्रायगर्भत्वात्तादृशविशेषणयोः परिकरालङ्कार इत्येव युक्तम् ॥ उभयपार्श्वगतशैलशृङ्गावतीर्णचारुविष्फारघोषस्रोतोभेदनिष्ठाभेदप्रतियोगिमौर्वीप्राप्तिमन्तं वेलानिष्ठाभेदप्रतियोगिनं चापं इत्यादिर्हि तत्र वाक्यार्थः ॥ ९४ ॥

नुप्रवेशसंकरः ॥ स्रोतोभेदेषु शिञ्जिनीत्वारोपाद्रूपकं तच्च तथावि-धारोपानुगुण्याय स्रोतसामुक्तरीत्योभयपार्श्ववर्तिशैलशृङ्गावतीर्णत्वासं-बन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्त्या कविप्रतिभोन्मीलितप्रौढोक्ति-सिद्धया पूर्वोक्तसंदेहसंकरैकवाचकानुप्रवेशसंकराभ्यां चोपष्टभ्यत इत्य-ङ्गाङ्गिभावसंकरः ॥ वेलायां चापत्वारोपादन्यद्रूपकं शर इवेति पू-र्णोपमात्वमित्युपमेयस्य शर इत्युपमानस्य पत्रप्रकृष्ट इत्यादिसाधा-रणधर्मस्य इवेति वाचकस्य चोपादानात् पत्रप्रकृष्ट इत्यादौ समा-नधर्मत्वं श्लेषकृतमिति तद्भित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनु-प्राणितत्वादुपमायास्तया सहाङ्गाङ्गिभावसंकरः ॥ उक्तविधप्राथमिक रूपकेणोत्थाप्यमाना शर इवेत्युपमा वेलायां चापत्वारोपरूपरूपकग-र्भैवोत्थाप्यते ॥ प्राथमिकरूपकस्योभयोपकारकत्वात् ततो द्वैतीयी-करूपकोपमयोरैककालिकत्वमितरेतरापेक्षया चारुत्वोन्मीलनं चोभ-योस्तुल्यमिति विनिगमनाविरहात्समप्राधान्यसंकरः ॥ पत्रप्रकृष्ट इत्य-स्य विशेषणस्य शीघ्रव्यतिवर्तनाभिप्रायगर्भत्वात् सखे इत्यस्य वि-शेष्यस्याप्युक्ताभिप्रायगर्भत्वात्परिकरपरिकराङ्कुरौ संसृज्येते चारुवि-स्फारघोषैरित्यत्रोक्तनिदर्शनादीनां पत्रप्रकृष्ट इत्याद्युक्तश्लेषादीनां च परस्परनैरपेक्ष्यात्संसृष्टिरिति सूक्ष्मया दृशा नरसिंहाकाराः पश्चा-प्यलंकारास्तत्संकरसंसृष्टयश्च यथायोगं विभावनीया विद्वद्भिरलंकार-सारसर्वस्ववेदिभिरिति दिक् ॥ यद्यप्यत्र वेलाचापमित्यत्र वेलैव चापमिति मयूरव्यंसकादिसमासाश्रयणेन रूपकवद्वेलाचापमिवेत्युप-मितसमासाश्रयणेनोपमाऽपि शक्या वक्तुं तथाऽपि स्रोतोभेदैरधि-

गतगुणमिति स्रोतोभेदेषु मौर्वीत्वारोपरूपरूपकगर्भितविशेषणानुगुण्याद्रूपकसिद्धिः। तस्य हि विशेषणस्य प्रधानेन सहान्वयेन भाव्यं न तु गुणेन तथा च पारमर्षं सूत्रं—"गुणानां च परार्थत्वादसम्बन्धस्समत्वात्" इति ॥ अस्यार्थस्तु गुणानां अप्रधानभूतानां पदार्थानां परार्थत्वात् मुख्यप्रधानार्थत्वात् परस्परं न संबन्धः कुतः समत्वात् अप्रधानत्वसाम्यादिति ॥ यथा भाष्यकारमते पावमानेष्टीनामाधानस्य चाहवनीयाद्यर्थत्वात्परस्परं नाङ्गाङ्गिभावसंबन्धः। यथा च वार्तिककारमते अग्निसमिन्धनार्थानां मन्त्रविशेषरूपाणां निविदां सामिधेनीनां चेति संक्षेपः। एतदधिकरणपूर्वपक्षसिद्धान्तौ प्रकृतानुपयोगादिह न प्रदर्श्येते उपमितसमासाश्रयणे तस्य पूर्वपदार्थप्रधानतया वेलायाः प्राधान्यं भवेत् ॥ न च तत्राधिगतमौर्वीकृत्वरूपविशेषणार्थान्वयस्वारस्यमस्ति मयूरव्यंसकादिसमासाश्रयणे तु तस्योत्तरपदार्थप्राधान्यादस्ति तदन्वयस्वारस्यमिति रूपकमेवाश्रयितुं युक्तमित्यलमतिवेलोत्तरोत्तरविचारचापलेन ॥ एतेन चापवत् स्थितवेलामिति केषांचिद्व्याख्यानं तु नातीव रमणीयमिति वेदितव्यम् ॥ ९४ ॥

अथ वेलाप्रदेशादुड्डीयमानः प्रथमं पयोनिधिं चक्षुर्गोचरीकरिष्यसीत्याह—

**दावासक्तं वनमिव नभस्सन्ध्ययेवानुविद्धं**
**सिन्दूराङ्कं द्विपमिव हारिं स्वाम्बरेणेव जुष्टम्।**

विद्युद्भिन्नं घनमिव सखे विद्रुमारण्ययोगात्
देहेनैकं मिथुनमिव च द्रक्ष्यसि त्वं पयोधिम् ॥ ५५

दावेति ॥ हे सखे ! विद्रुमारण्यस्य प्रवालवनस्य “ अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम् ” इत्यमरः ॥ योगात् संबन्धात् दावासक्तं दवानलावलीढं वनमिव सन्ध्यया सन्ध्यारागेणेति यावत् ॥ अनुविद्धं मिलितं नभः गगनमिव सिन्दूरं नागसंभवं अङ्कश्चिह्नं यस्य तं तथोक्तं “ सिन्दूरं नागसंभवम् ” इत्यमरः ॥ द्विपमिव गजमिव स्वाम्बरेण स्वकीयेन वाससा पीताम्बरेणेत्यर्थः ॥ जुष्टं सेवितं हरिं नारायणमिव विद्युद्भिन्नं तटिन्मिश्रं “ अन्यशारितामिश्रेषु भिन्नमेते त्रयस्त्रिषु ” इति रत्नमाला । घनमिव जीमूतमिव च स्थितं सागरस्य श्यामलत्वाद्विद्रुमवनस्यारुणत्वाच्च दावासक्तवनाद्युपमा । पयोधिं सरस्वन्तं देहेन शरीरेण एकं “ प्रकृत्यादिभ्य उपसंख्यानम् ” इति तृतीया । ‘ नाम्ना सुतीक्ष्णम् ’ इत्यादाविव देहज्ञाप्यैकत्वविशिष्टमित्यर्थः ॥ मिथुनमिव च स्त्रीपुंसात्मकदेहद्वयोपलक्षितं द्वंद्वमिव च । चकार उक्तसमुच्चायकः । द्रक्ष्यसि एकमेव विद्रुमलतानुविद्धैकदेशतया लोहितश्यामलस्त्रीपुंसात्मकद्वंद्वमिव च स्थितं निर्वर्णयसीत्यर्थः ॥ एतेनैव “ देहेन नीलरूपेण पीतरूपेण चोपलक्षितं एकं मुख्यं मिथुनमिव लक्ष्मीनारायणाख्यं मिथुनमिवेत्यर्थः ” इति व्याख्यानमसारमिति वेदितव्यम् । स्वाम्बरेण जुष्टं हरिमिवेति भगवदुपमानस्य पूर्वमेवोक्ततया पौनरुक्त्यापातात्तात्पर्य-

स्य क्लिष्टत्वाच्च। [1]अत्र विद्रुमलतारण्यानुविद्धस्य सागरस्य दावासक्तं वनमिवेत्याद्युपमानां मालारूपेण दर्शितत्वान्मालोपमा। तदुक्तं काव्यादर्शे—"पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः। विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता" इति॥ मालायां यथैकेन पुष्पेणापरस्य पुष्पस्य ग्रथनं तथोपमानां परस्परसंबन्धान्मालोपमेत्येषा व्यवह्रियते॥ एवंविधवैचित्र्य एवैषा। केवलमुपमानबाहु-

---

[1] अत्र विद्रुमलतारण्यानुविद्धस्य सागरस्य दावासक्तं वनमिवेत्याद्युपमानां मालारूपेण दर्शितत्वात् मालोपमेति रसास्वादिनी॥ यत्तु—दावासक्तं वनमिवेत्याद्युपमानानां बहूनां दर्शितत्वाद्बहूपमा—इति तन्न. उपमानमात्रबाहुल्य एव बहूपमाप्रसरात्॥ यथोक्तमाचार्यैरत्रैव—"मालायां यथैकेन पुष्पेणापरस्य ग्रथनं तथोपमानां परस्परसम्बन्धान्मालोपमैषा व्यवह्रियते। एवंविधवैचित्र्य एवैषा केवलमुपमानबाहुल्ये तु बहूपमेत्यनयोर्भेदः॥ सा चैवं लक्ष्यते तत्रैव—चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः। स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा" इति॥ इति संदर्भे। प्रकृते तूपमानामेव बाहुल्येन मालोपमाया एव युक्तप्रसरत्वात्। बहूपमाननिरूपितैकोपमात्वं बहूपमालक्षणम्। एकोपमेयघटितानेकोपमात्वं मालोपमालक्षणमिति हि वैलक्षण्यमुभयोराश्रयणीयमिति॥ यद्यपि—धर्मभेदकृतोपमाबाहुल्य एव मालोपमा रुद्रटेन स्वीक्रियते। स्पष्टं चेदं वर्षाकीर्णामिव कमलिनीमित्यादिश्लोकरसास्वादिन्यामुदाहृते रुद्रटपद्ये एव। तथाऽपि दण्डिना पूष्ण्यातप इवेत्यादौ धर्मैक्ये सत्यपि मालोपमोदाहरणात्तद्रीत्या मालोपमाया इहाभिधानं अत एव दण्डिलक्षणमेवात्रोदाहृतम्। अग्रे तु वर्षकीर्णामित्यत्र रुद्रटपद्यमात्रोदाहरणं तद्रीत्याऽपि तत्र मालोपमा संभवतीति सूचयितुम्। रुद्रटेन तु बहूपमा नैव लक्षिता गणिता वा। तस्मादिह बहूपमाभिधानं न दण्डीरीत्या नापि रुद्रटरीत्या संगच्छत इति सुधियो विदांकुर्वन्तु॥ ५५॥

ळ्ये तु बहूपमेत्यनयोर्भेदः । सा चैवं लक्ष्यते तत्रैव—"चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः । स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा" इति ॥ विद्रुमारण्ययोगेन निमित्तेन जलेधरेकस्यैव मिथुनतादात्म्यसंभावनादुपात्तनिमित्तवस्तुस्वरूपोत्प्रेक्षा । यद्वा—देहेनैकमपि विद्रुमारण्ययोगान्मिथुनमिव च स्थितमित्युपमा । अत्र साधकं बाधकं वा प्रमाणमन्यतरस्य नास्तीति संदेहे पर्यवसानादनयोस्संदेहसंकरः ॥ अथ वा—देहेनैकमित्येतन्मिथुनस्यैव विशेषणं देहेनैकं मिथुनमिव एकदेहयोगिस्त्रीपुंसात्मकद्वंद्वमिवेत्यर्थः ॥ अस्मिन्नपि पक्षे यदि क्वचिदेवंविधं पाटलश्यामलवर्णस्त्रीपुंसात्मकद्वन्द्वमर्धनारीश्वरवदेकशरीरकमेव दृश्येत तदा तेन सहास्योपमेत्यभिसन्धौ भवत्यभूतोपमालंकारः । तादृशमिथुनतादात्म्यसंभावनाभिसन्धावुत्प्रेक्षेत्यनयोस्संदेहसंकर एव ॥ अयं च पूर्वोक्तमालोपमोपस्कृत इति संक्षेपः ॥ ९९ ॥

पूर्वमेकान्तरितश्लोके "शर इव सखे वेगतस्त्वं व्यतीयाः" इति संभ्रमातिशयादुदैरिरं तेन यथाऽधिज्याच्चापाद्विनिर्गतश्शरो लक्ष्यमविध्वा न शक्नुयादन्तराऽवस्थातुं तथाऽयमपि लङ्कामगत्वा न शक्नुवीत मध्येऽवस्थातुं तथा सति—"तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति । इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥ साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः । करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ॥ अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ॥ इक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति । तथा मया विधातव्यं वि-

श्रमेत यथा कपिः ॥ शेषं च मयि विश्रान्तस्सुखेनातितरिष्यति । इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि । हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम्" इत्यादिना "काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् । श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि" इत्यन्तमुक्तरीत्या मदर्थे प्रवृत्तं मारुतिमिवामुमपि राजहंसं सभाजयितुं सागरः क्वचित्प्रेरयेदपि हिरण्यनाभादीन् शिलोच्चयांस्तत्रैतस्याविश्रान्तौ प्रतिहन्येत तन्मनोरथ इति संभावयन्नाह भगवान्नामभद्रः—

**अस्मत्पूर्वैस्सुरपतिहृतं द्रष्टुकामैस्तुरङ्गं**
**भित्वा क्षोणीमगणितबलैस्सागरो वर्धितात्मा ।**
**सत्कारार्थं तव यदि गिरीनादिशेदुत्तपक्षान्**
**अश्रान्तोऽपि प्रणयमुचितं नैव बन्धोर्विहन्याः॥५६**

अस्मदिति ॥ सुरपतिना मखवता हृतं मुषितं "तस्य पर्वणि तं यज्ञं यजमानस्य वासवः । राक्षसीं तनुमास्थाय यज्ञियाश्वमपाहरत्" इत्येतदत्रानुसन्धेयम् । तुरङ्गं अश्वमेधीयाश्वं द्रष्टुं कामो येषां तैः तथोक्तैः "तुं काम" इति मलोपः ॥ "गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः । मन्त्रपूतैर्महाभागैरास्थितो हि महाक्रतुः ॥ तद्गच्छत विचिन्वध्वं पुत्रका भद्रमस्तु वः । समुद्रमालिनीं सर्वां पृथिवीमनु गच्छत ॥ एकैकयोजनं पुत्रा विस्तारमधिगच्छत । यावत्तुरगसंदर्शस्तावत्खनत मेदिनीम्" इति पितुराज्ञामनुरुध्य द्र-

ष्टुमभिलष्यद्भिरित्यर्थः । तत्र तेषामशक्तिसंभावनां व्युदस्यति—अगणितबलैरिति ॥ अगणितं अपरिमितं बलं सामर्थ्यं येषां तैस्तथोक्तैः "इत्युक्ता हृष्टमनसो राजपुत्रा महाबलाः । ते तु सर्वे महात्मानो भीमवेगा महाबलाः" इत्येतदनेन प्रत्यभिज्ञाप्यते ॥ ईदृशप्रभावाः किमीया इमे वीरा इत्यत्राह—अस्मत्पूर्वैरिति ॥ "सर्वा पूर्वमियं येषामासित्कृत्स्ना वसुंधरा" इत्याद्युक्तप्रभावाणामस्माकमन्वये पूर्वजैरित्यर्थः ॥ न ह्यनीदृशकुलीनानां वक्ष्यमाणोऽतिशयस्संभवेदिति भावः । क्षोणीं भुवं भित्वा "योजनायामविस्तारमेकैको धरणीतलम् । बिभिदुः पुरुषव्याघ्र वज्रस्पर्शसमैर्नखैः । शूलैरशनिकल्पैश्च हुलैश्चापि सुदारुणैः" इत्युक्तरीत्या नखादिभिर्विदार्येत्यर्थः । वर्धितः समेधितः आत्मा स्वरूपं यस्य स तथोक्तः "राघवस्य कुले जातैरुदधिः परिवर्धितः । अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः" इत्येतदनेन स्मार्यते । सगरस्यैव पुत्रकर्तृकसागरखननप्रयोजकत्वात्सगरेण विवर्धित इत्युक्तं अतो न रामायणपूर्वोत्तरविरोधः ॥ सागरः सरस्वान्, सगरवर्धितत्वज्ञापनायैवात्र सागरशब्दः प्रयुक्तः ॥ तव हनूमत इव मत्कार्योद्देशेन प्रवृत्तस्येति भावः, सत्कारार्थं सपर्याविधानाय, गुप्ताः रक्षिताः पक्षाः येषां तांस्तथोक्तान्, अनेन "पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् । तेऽभिजग्मुर्दिशस्सर्वा गरुडानिलवेगिनः ॥ ततस्तेषु प्रयातेषु देवसंघास्सहर्षिभिः । भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥ ततः क्रुद्धस्सहस्राक्षः पर्वतानां शतक्रतुः । पक्षांश्चि-

च्छेद वज्रेण तत्र तत्र सहस्रशः ॥ समामुपागमत्क्रुद्धो वज्रमु-द्यम्य देवराट् । ततोऽहं सहसा क्षिप्तश्श्वसनेन महात्मना ॥ अ-स्मिन्लवणतोये च प्रक्षिप्तः प्लवगोत्तम । गुप्तपक्षसमग्रश्च तव पि-त्राऽभिरक्षितः" इत्यन्ता कथा स्मारिता । गिरीन् शैलान् आदि-शेत् आज्ञापयेद्यदि "दिश अतिसर्जने" तौदादिकादस्मादाशीर्लि-ङ्गि लिङ् । शैलानिति बहुवचनं प्रयुञ्जानस्यायं भावः—हनूमद्गमना-वसरे सागरेणैक एव प्रेषितस्सपक्षश्शैलः त्वद्गमनदशायामादराति-भूम्ना यदि नाम बहूनपि प्रेषयेदचलान् सपक्षांस्तर्हि सर्वानपि वि-श्रान्तिपारितोषिकदानेन यथार्हं संमानयेथा एव, न तु कंचि-दप्युदासीथा इति ॥ नन्वेक एव हिरण्यनाभश्शैलो गुप्तपक्ष उ-दाहृतः श्रीरामायणवचनैस्तथा प्रतीतेः, न तु बहवो गिरयस्तथा-विधाः, येन शैलानिति बहुवचनं संगच्छेतेति चेन्मैवं, तत्र हि-रण्यनाभेन मैनाकेन स्ववृत्तान्तमात्रावेदनप्रवृत्ततया तथोक्तेऽपि सा-गरे भूयसामपि तथाविधगिरीणां सद्भावसंभवात् ॥ यथोच्यते शि-शुपालवधे—"ये पक्षिणः प्रथममम्बुनिधिं प्रविष्टा येऽपीन्द्रबाहुतु-लितायुधलूनपक्षाः । ते जग्मुरद्रिपतयस्सरसीर्विगाढुमाक्षिप्तकेतुकुथ-सैन्यगजच्छलेन" इति ॥ अनर्घराघवे च—"निपीते येनाब्धौ स्तिमितगुरुभिः पक्षपटलैः प्रयत्नादुड्डीय प्रतिपदमपव्यस्तपतिताः । विशन्तः कौळीरं कुहरमशरण्याश्शिखरिणः क्षणं दृष्टास्तस्य स्तु-तिषु न गिरां साहसरसः" इति ॥ तत्रातिशयोक्तिरिति चेदि-हापि तथैवास्त्वित्येव संतोष्टव्यमायुष्मतेति यत्किंचिदेतत् ॥ त्वं अ-

श्रान्तोऽपि दूरोल्लङ्घनेन श्रममप्राप्तोऽपि, बन्धोः सख्युः उक्तरीत्या सागरस्यास्मद्बन्धुत्वात्तव चास्मत्सखत्वादिति भावः ॥ "बन्धुस्स्यात्पुंसि बन्धूके मित्रे भ्रातरि बान्धवे" इति मेदिनी ॥ उचितं युक्तं "उचितं प्रोक्तमभ्यस्ते मिते ज्ञाते समञ्जसे" इति विश्वः ॥ प्रणयं विस्रम्भं प्रेमाणं वा "प्रणया अमी । विस्रम्भयाच्ञाप्रेमाणः" इत्यमरः ॥ नैव विहन्याः किंचिदपि व्याहतं मा कार्षीः । विपूर्वकाद्धन्तेर्लिङ् । अयं भावः—हनूमता पूर्वं सागरोल्लङ्घनावसरे तद्बन्धुत्वापरिज्ञानेनात्मसत्कारायैव तत्प्रेषितोऽपि मैनाको गमनान्तरायातिसंभावनया प्रथममुरसा निपात्य पश्चात्तदावेदिततत्संबन्धपरिज्ञाने करावमर्शमात्रेण संभावितः । यथोच्यते श्रीरामायणे—"तमुत्थितमसङ्गेन हनूमानग्रतस्स्थितम् । मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥ स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः । उरसा पातयामास जीमूतमिव मारुतः ॥ स तदा पातितस्तेन कपिना पर्वतोत्तमः । बुध्वा तस्य कपेर्वेगं जहर्ष च ननन्द च ॥ तमाकाशगतं वीरमाकाशे समुपस्थितम् । प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् । मानुषं धारयन्रूपमात्मनश्शिखरे स्थितः ॥ दुष्करं कृतवान्कर्म त्वमिदं वानरोत्तम । निपत्य मम शृङ्गेषु विश्रमस्व यथासुखम् ॥ राघवस्य कुले जातैरुदधिः परिवर्धितः । स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ॥ कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः । सोऽयं तत्प्रतिकारार्थी त्वत्तस्सम्मानमर्हति ॥ तिष्ठ त्वं हरिशार्दूल विश्रम्य मयि गम्यताम् । त्वन्नि-

मित्तमनेनाहं बहुमानात्प्रचोदितः ॥ योजनानां शतं चापि कपिरेष समाप्लुतः । तव सानुषु विश्रान्तश्शेषं प्रक्रमतामिति ॥ तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु । तदास्वाद्य हरिश्रेष्ठ विश्रान्तोऽनुगमिष्यसि " इत्युपक्रम्य "त्वया ममैष सम्बन्धः कपिमुख्य महागुणः । अस्मिन्नेवं गते कार्ये सागरस्य ममैव च । प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाकपे ॥ श्रमं मोचय पूजां च गृहाण कपिसत्तम । प्रीतिं च बहु मन्यस्व प्रीतोऽस्मि तव दर्शनात् ॥ एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ॥ प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोपनीयताम् ॥ त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते ॥ प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरे ॥ इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः । जगामाकाशमाविश्य वीर्यवान्प्रहसन्निव " इत्यन्तेन ग्रन्थेन ॥ त्वया तु प्रथममेव मदुक्तिपरिज्ञाततत्संबन्धतया मनागपि माकारि तदवज्ञानं अपि तु तत्प्रेमानुगुणं तत्र विश्रमेण सम्माननैव क्रियताम् । यथोच्यते—"प्रियेषु प्रियकारी स्यात् नाप्रियं किञ्चिदाचरेत् । तद्दुस्सहमवज्ञानं यत्प्रियोऽप्रियमाचरेत् " इति ॥ अत्र सुरपतिहृताश्वमेधीयाश्वदिदृक्षायाः क्षोणीभेदनं प्रति हेतुत्वादेकं काव्यलिङ्गं अस्मत्पूर्वैरित्यादिवर्धितात्मेत्यन्तस्य वाक्यार्थस्य हंससत्कारार्थं पर्वताज्ञापनं प्रति हेतुत्वादन्यत्काव्यलिङ्गं अगणितबलैरिति विशेषणस्य क्षोणीभेदनेषत्करत्वाभिप्रायगर्भत्वात्परिकरः ॥ बन्धोरित्यस्य विशेषणगत्या प्रणयव्याहतिनिषेधं प्रति हेतुत्वादितरच्च काव्यलिङ्गमित्येतेषां सङ्करो द्रष्टव्यः ॥ ९६ ॥

सागरकर्तृकोचितप्रणयस्याभ्याहतिमेव सप्रकारां कथयन्नग्रे सुवेलं द्रक्ष्यसीत्याह—

**तत्रासीनः क्वचन सरसि स्मेरहेमारविन्दे**
**लब्धास्वादो मधुभिरमितैस्संविनीताध्वखेदः ।**
**द्रक्ष्यस्यग्रे लघुतरगतिश्शेषमुल्लङ्घ्य सिन्धोः**
**तोयाघातान्मसृणितशिलारम्यवेलं सुवे-**
**लम् ॥ ५७**

तत्रेति ॥ तत्र सत्कारार्थं सागरेण यद्यादिष्टास्स्युर्गिरयस्तेषु गिरिष्वित्यर्थः ॥ स्मेराणि ईषद्विकसितानि "ष्मिङ् ईषद्धसने" अस्मात् "नमिकम्पिस्म्यजसि" इत्यादिना रप्रत्ययः । हेमारविन्दानि सुवर्णकमलानि यस्मिंस्तथोक्ते क्वचन कस्मिंश्चित् सरसि कासारे । स्मेरहेमारविन्द इत्यनेन तत्सरसो मानससरस्तौल्यं द्योत्यते ॥ प्रसिध्यति हि मानससरसि हेमारविन्दस्थितिः ॥ यथोच्यते श्रीमत्युत्तररामायणे—"तस्माद्गच्छ महाबाहो कैलासं धरणीधरम् । निवेशाय निवासार्थं त्यक्त्वा लङ्कां सहानुगः ॥ तत्र मन्दाकिनी रम्या नदीनामुत्तमा नदी । काञ्चनैस्सूर्यसङ्काशैः पङ्कजैस्संवृतोदका" इति ॥ मानससरश्च मन्दाकिन्येकदेश एव ॥ काळिदासश्चाह—"हेमाम्भोजप्रसवि सलिलं मानसस्यादधानः" इति ॥ अनेन तस्य सरसो हंसं प्रति स्वावासनिवासतुल्यसुखाधायकत्वं व्यज्यते ॥ आसीनः उपविष्टः सर्वेषामपि तत्रत्यानां सरसां रमणीयतमत्वाविशे-

षाद्यस्मिन्कस्मिंश्चिद्यथारुचि निषीदन्निति भावः ॥ अमितैः भूयोभिः मधुभिः मकरन्दैः, लब्धः प्राप्तः, आस्वादः पानं येन स तथोक्तः अत एव संविनीतः व्यपगमितः अध्वखेदः मार्गश्रमो येन स तथोक्तश्च सन् संवीत्युपसर्गाभ्यां खेदस्यापुनरुन्मज्जनं निरासो द्योत्यते ॥ "पीत्वा मधु यथाकामं विश्रान्ता वनचारिणः" इत्युक्तरीत्या मधुपानेन निरस्तसुदूरव्यायामश्रमतया विश्रान्तस्सन्निति भावः । अत एव अग्रे पुरस्तात् लघुतरगतिः क्षिप्रतरगमनस्सन् न ह्यध्वश्रमपरिखिन्नानां संभवति जङ्घालतेति भावः ॥ अतिशयेन लघुः लघुतरेत्येव विग्रहः, न तु "वोतो गुणवचनात्" इति वैकल्पिकङीषि, अतिशयेन लघ्वीति विगृह्य "तसिलादिष्वाकृत्वसुचः" इत्यनेन पुंवद्भावे लघुतरेति । तथा सति लघ्वितरेति स्यात् ॥ "घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः" इत्यनेन तरप्प्रत्ययपरकत्वे भाषितपुंस्कानां ङ्यन्तानां ह्रस्वविधायकेन परशास्त्रेण तस्य बाधात् ततो लघुतरा गतिर्यस्येति बहुव्रीहिः ॥ यद्यपि द्व्यर्थवाचके विभजनीये चोपपद एवातिशायनिकः प्रत्ययोऽनुशिष्टः "द्विवचनविभज्योपपदे तरबीयसुनौ" इति ॥ तथाऽपीह साक्षात्तादृशोपपदाभावेऽपि तरप्प्रत्ययो बुद्धिपरिकल्पितप्रतियोग्यपेक्षयेति न दोषः । तथा च सूत्रितं वामनेन प्रायोगिके पञ्चमाधिकरणे— "बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः" इति ॥ बौद्धस्य प्रतियोगिनोऽपेक्षायामप्यातिशायनिकास्तरबादयो भवन्ति । घनतरं तमः, बहुलतरं प्रेमेति तत्सूत्रवृत्तिः । सिन्धोः सागरस्य शेषं अवशिष्टं

मार्गं उल्लङ्घ्य अतिक्रम्य तोयानां उन्नमदानमत्कल्लोलरूपाणामम्भसां आघातात् आस्फालनात् मसृणाः कृताः मसृणिताः मसृणशब्दात्तत्करोतीति ण्यन्तात्कर्मणि क्तः । श्लक्ष्णीकृताः याः शिलाः ताभिः "मसृणोऽकर्कशे स्निग्धे" इति मेदिनी । रम्या रमणीया वेला मर्यादा भूमिः यस्य तं तथोक्तं "अथ धौतोपलतलां तोयौघैस्सहसोत्थितैः । वेलामासाद्य विपुलाम्" इत्येतदत्र स्मर्तव्यम् । सुवेलं सुवेलनामानं शैलं तोयाघातमसृणितशिलारम्यवेलत्वादेवास्य सुवेल इति संज्ञेति भावः ॥ द्रक्ष्यसि अग्रे इत्येतदत्र वा संबध्यते ॥ तदा अग्रे द्रक्ष्यसीत्यन्वयः ॥ अत्र स्मेरहेमारविन्द इति विशेषणस्य मकरन्दभूयस्त्वाभिप्रायगर्भत्वात्परिकरः ॥ लब्धास्वाद इत्यस्य विशेषणगत्याऽध्वखेदविनिवर्तनं प्रति हेतुत्वादेकं काव्यलिङ्गं संविनीताध्वखेद इत्यस्याग्रे लघुतरगतित्वं प्रति हेतुत्वादितरच्च काव्यलिङ्गं त्रयाणामेषामङ्गाङ्गिभावसङ्करः ॥ तोयाघातादित्यादौ स्वभावोक्तिरनुप्राससंकीर्णा पूर्वोक्तसङ्करेण संसृज्यते ॥ ५७ ॥

अथ हंसस्य सुवेलाभ्याशदेशचङ्क्रमावसरे सामुद्रसलिलोन्निद्रविद्रुमशोभामुद्रैवं भाविनीति संभावयन् समुद्रानुविद्धतया तमेव सुवेलगिरिं विशिनष्टि—

**यस्यासन्ने पयसि जलधेस्त्वत्प्रतिच्छन्दचन्द्राः**
**पक्षच्छेदक्षरितरुधिरस्तोमसन्दर्शनीयाः ।**
**वीचीप्राप्ते(प्तै)र्विषमितरुचो मौक्तिकैस्तारकाभैः**
**सन्ध्यामन्यां नियतमवनौ दर्शयन्ति प्रवालाः॥५८**

यस्येति ॥ यस्य सुवेलस्य आसन्ने सन्निकृष्टे जलधेः समुद्रस्य पयसि सलिले त्वत्प्रतिच्छन्दः त्वत्प्रतिबिम्बमेव चन्द्रो येषां ते तथोक्ताः पक्षयोः सुवेलगिरिगरुतोः छेदेन छेदनेन क्षरितः स्रुतः यः रुधिरस्तोमो रक्तनिवहः स इव संदर्शनीयाः द्रष्टुं योग्याः तत्त्वेन संभावनार्हा इति यावत् ॥ अनेन जपाकुसुमसच्छायतासूचकेन विद्रुमाणामत्युत्तमत्वं द्योतितम् । यथोक्तं रत्नपरीक्षायां—पक्वबिम्बफलाकारं जपाकुसुमसन्निभम् । शुकतुण्डसमच्छायं प्रवाळमतिशोभनम् " इति ॥ वीचीप्राप्तैः अहमहमिकयाऽऽपततां तरङ्गाणां संघट्टनादित्यर्थः ॥ विषमितरुचः दन्तुरितद्युतयः विष्वक्प्रसारितप्रकाशा इति यावत् ॥ तारा एव तारकाः; स्वार्थिकः कन् "केण" इति ह्रस्वः । नात्र "प्रत्ययस्थात्कात्पूर्वस्य" इत्यादिना कात्पूर्वस्येत्वं "नयासयोः" इति सूत्रस्थेन "तारका ज्योतिषि" इति वार्तिकेन तन्निषेधात् । तारकाणां ऋक्षाणां आभेवाभा येषां तैस्तथोक्तैः ॥ "सप्तम्युपमान" इत्यादिना उत्तरपदलोप इत्यवोचाम सविस्तरं प्रथमश्लोके । मौक्तिकैः मुक्ताफलैः उपलक्षिताः मुक्ता एव मौक्तिकानीति स्वार्थिको विनयादित्वाट्ठगिति द्विचत्वारिंशश्लोके "गद्गदा मौक्तिकौघैः" इत्यत्रोदैरिराम विस्तरेण। वीचीप्राप्तैरिति तृतीयान्तपाठे वीचीप्राप्तैः तरङ्गोत्क्षेपणेन स्वसन्निकर्षमागतैरित्यर्थः । तारकाभैः मौक्तिकैः विषमितरुचः स्वसन्निकर्षमिळितस्वच्छतममौक्तिकरुचिसंभिन्नत्वेनायथावस्थितकान्तय इत्यर्थः ॥ पाटला इति यावत् अयमेव पाठस्साधीयानिति भाति ॥ प्रवा

ळाः विद्रुमाः "अथ विद्रुमः पुंसि प्रवाळं पुंनपुंसकम्" इत्यमरः ॥ अवनौ भूम्यां अन्यां पूर्वोक्तस्य प्रकारस्य त्वद्गमनावसर एव सम्भवाल्लोकविलक्षणामित्यर्थः ॥ सन्ध्यां सायं स ध्यामित्यर्थः ॥ दर्शयन्ति नियतं प्रकाशयन्तीव नियतमित्येतदुत्प्रेक्षाव्यञ्जकं अत्र त्वत्प्रतिच्छन्दचन्द्रा इत्यत्र रूपकं पक्षच्छेदेत्यादौ प्रवाळानां सुवेलपक्षच्छेदक्षरितरुधिरस्तोमतादात्म्यसंभावनादुक्तविषया स्वरूपोत्प्रेक्षा । न च तादृशरुधिरस्तोमसाधर्म्यादुपमैव कुतो न स्यादिति भ्रमितव्यं यत्र क्वचन स्थितेन रुधिरस्तोमेनाप्युपमायास्सुवचतया सुवेलपक्षक्षतिक्षारितत्वविशेशणानपेक्षणात् इह तदुपादानं विद्रुमाणां तादृशरुधिरस्तोमतादात्म्यसंभावनामेवावगमयति तथा सत्येव तद्विशेषणसाफल्यात् यद्यपीवशब्दस्योपमानार्थकस्यैव घनश्याम इत्यादौ लोपो दृश्यते नोत्प्रेक्षावाचकस्य तथाऽप्यस्या उत्प्रेक्षाया उपमोपक्रमत्वादुत्प्रेक्षापर्यवसेयस्येवशब्दस्योपक्रमे उपमावाचकत्वाल्लोप इति विभावनीयम् ॥ यद्वा—पक्षच्छेदक्षरितरुधिरस्तोमा इति संदर्शनीया इति विग्रहः, तादृशरुधिरस्तोमत्वेन संभावनीया इति तदर्थः । अस्मिन्पक्षेऽप्युक्तरीत्या उत्प्रेक्षैव । मौक्तिकाभैरित्यत्र लुप्तोपमाभेदः॥ एतैरङ्गैर्दत्तहस्ता प्रवाळानां लोकविलक्षणसन्ध्याप्रकाशनोत्प्रेक्षेति सङ्करः ॥ त्वत्प्रतिच्छन्दचन्द्रा इत्याद्युक्तानामलङ्काराणामन्योन्यनैरपेक्ष्यात्संसृष्टिः । यद्वा—पक्षच्छेदेत्यादेरेवमर्थः ॥ पक्षच्छेदक्षरितरुधिरस्तोमात् सन्दर्शनीयाः दृश्याः सञ्जाता इति यावत् ॥ प्रसिद्धं हि शैलपक्षच्छेदरुधिरजन्यत्वं प्रवाळानाम् । तथा च स्कान्दे रत्नपरीक्षा-

ध्याये—"वज्रपाणिः पुरा शक्रो लोकनाशं वितन्वताम् । पक्षयोः कदनं चक्रे पततां धरणीभृताम् ॥ न्यपतन्नम्बराच्चैते लूनपक्षा महीधराः । गिरीणां पतमानानां पक्षशातसमुद्भवाः ॥ निपेतुः क्षतजा यत्र खनिस्तत्र व्यजायत । फुल्लकिंशुकसच्छाया विद्रुमास्तत्र जज्ञिरे" इति ॥ अस्मिन्नर्थे वस्तुकथनमात्रपरत्वाद्द्वितीयपादे न कश्चिदप्यलङ्कार इति ध्येयम् ॥ ५८ ॥

पुनरपि सुवेलमेव विशिनष्टि—

**यत्रारण्यं वरुणवसतेर्वीचिवेगापनीतैः**
**मुक्तारत्नस्तबकशबलैर्विद्रुमैरुत्प्रवाळम् ।**
**रक्षोभीतैस्स्वयमनिमिषैराहृतस्थापितानां**
**मन्दाराणां मधुपरिमळैर्वासितं मौळिदघ्नैः ॥ ५९**

यत्रेति ॥ यत्र सुवेले अरण्यं विपिनं, वरुणस्य वसतिः स्थानं समुद्र इत्यर्थः । तस्य "तराम वरुणालयम्" इत्यादिप्रयोगाद्वरुणवसतिशब्दस्समुद्रवाची, वीचीनां ऊर्मीणां, वेगेन जवेन "वेगः प्रवाहजवयोरपि" इत्यमरः ॥ अपनीतैः बहिर्निष्कासितैः मुक्तारत्नान्येव[1] स्तबकाः पुष्पगुच्छाः "स्याद्गुच्छकस्तु स्तबकः" इत्यमरः,

[1] मुक्तारत्नस्तबकशबलैरित्यत्र मुक्ताश्च रत्नानि चेति द्वन्द्वसमासं प्रथममुपन्यस्य तत्र सामान्यविशेषवाचिनोश्च द्वन्द्वो न भवतीति वार्तिकभाष्यादिविरोधमुपन्यस्य तत्परिहाराय मुक्ताश्च तानि रत्नानि चेति कर्मधायम् यद्वा—मुक्तानां रत्नानि मौक्तिकश्रेष्ठानीति तत्पुरुषं चाश्रित्य अन्ते—अथवा मुक्तायु-

तैः शबलाः चित्रवर्णाः, तथोक्तैः, मुक्ताश्च रत्नानि चेति द्वन्द्वः, न च रत्नमुक्ताशब्दयोस्सामान्यविशेषवाचिनोः कथं द्वन्द्वः "सामान्यविशेषवाचिनोश्च द्वन्द्वो न भवतीति वक्तव्यम्" इति "त्यदादीनि सर्वैर्नित्यम्" इति सूत्रस्थभाष्यवार्तिकेन तन्निषेधादिति वाच्यं, तस्यानित्यत्वात्, तथा च प्रकृतसूत्रशब्दकौस्तुभे—"अनित्योऽयं निषेधः 'प्राच्यभरतेषु' इति निर्देशाल्लिङ्गात् तेन प्रमाणप्रमेयेत्यादिषु 'द्वन्द्वस्सिद्धः" इत्युक्तं एतेन "मणिमुक्ताप्रवाळानां, मणिमुक्ताप्रवाळांस्तु, मणिविद्रुमवैदूर्यमुक्ताविरचितान्तरः, । नक्षत्रताराग्रहसङ्कुलाऽपि" इत्यादिप्रयोगा व्याख्याताः, वस्तुतस्तु प्राच्यभरतेष्वित्यादिनिर्देशस्य सौत्रतयाऽप्युपपत्तेर्महता प्रयत्नेन सिद्धान्तितस्य

क्तानि च तानि रत्नानि चेति मध्यमपदलोपिसमासः । रत्नशब्दो मुक्ताव्यतिरिक्तमणिपरः इत्युपसंहृतं रसास्वदिन्याम् ॥ यत्तु—मणिमुक्ताप्रवाळानामित्यादिप्रयोगानुसारेणात्र रत्नशब्दोऽश्मजातिमात्रपरो द्रष्टव्यः । नातो द्वन्द्वविरोधः । एतेन मणिमुक्ताप्रवाळकृतसोपानैरिति भगवद्रामानुजाचार्यसूक्तिराचार्यैरनुसृतेति बोध्यमिति प्रथमपक्षमात्रस्य रसास्वादिनीदूषितस्याप्यभिधानं तन्न. "रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपिच।" इति कोशे किं रत्नमणिशब्दयोः अश्मजातौ मुक्तादिके च पृथक् शक्यतावच्छेदकभेदेन शक्तिद्वयं विवक्षितम्. उत अश्मजातिमुक्तादिसाधारणरत्नजात्यवच्छिन्ने एकैव शक्तिः। आद्ये नानार्थकत्वात् नानार्थवर्ग एव "रत्नं मणिः" इत्यारब्धव्यं स्यात्। न तु वैश्यवर्गे। उक्तं च रसास्वादिन्यामेव नापि गोबलीवर्धवद्द्वन्द्वः ॥ गोशब्दस्येव रत्नशब्दस्येह नानार्थकत्वाभावात् इति ॥ अन्ये तु सामान्यवाचकस्याप्यत्र रत्नशब्दस्य अश्मजातिरूपविशेषमात्रपरत्वं द्वन्द्वसाधुत्वार्थमेवाश्रयणीयम्। तदिदं "त्यदादीनि" इति सूत्रभाष्यविरुद्धम्। तत्र हि गोबलीवर्दमिति द्वन्द्वोपप-

सामान्यविशेषवाचिपदद्वन्द्वानिषेधकृत्यदादिसूत्रभाष्यवार्तिकस्यानित्यता - कल्पनमयुक्तमेव ॥ अत एवैतत्सूत्रभाष्यप्रदीपोद्योते "प्राच्यभरतेषु' इति सौत्रो निर्देशः, प्रमाणप्रमेयेत्यादि तु एतद्भाष्यरीत्याऽसाध्वेव" इत्युक्तम्। वस्तुतस्तु–प्रमाणप्रमेयेत्यादेरपि न्यायसूत्रत्वेन तत्रापि सौत्रनिर्देशत्वेनैवादोषत्वकल्पनं युक्तं, मणिविद्रुमेत्याद्युदाहृतमनुवाल्मीक्यादिप्रयोगाणामप्यार्षतयैवादोषः, आधुनिकानां तूपपत्त्यन्तरसंभवे साधुत्वमन्यथात्वसाधुतैव, तथा च मुक्तारत्नेत्यत्र द्वन्द्वो न युक्त एवेति ध्येयं, न च मुक्तानां रत्नत्वजात्यनाक्रान्ततया रत्नमौक्तिकयोस्सामान्यविशेषभावाभावः, येन शूद्राभीरमित्यादाविव

त्तये गोत्वस्य स्त्रियां गवि बलीवर्दे च वर्तमानस्य विभिन्नत्वं तादृशधर्मद्वयावच्छिन्ने गोपदस्य शक्तिद्वयं च साधितम्। भवत्पक्षे तु गोपदस्य सामान्यवाचित्वेऽपि बलीवर्दातिरिक्तपरतयैव द्वन्द्वोपपत्तेस्तत्समर्थनं व्यर्थमेवेति स्पष्टमेव। तस्मात्सामान्यवाचिपदस्य उपात्तविशेषातिरिक्तपरतास्वीकारेणापि न विशेषवाचिना सह द्वन्द्वः इति भाष्याशयावगमात्कथमिह द्वन्द्वः। तस्मात् रसास्वादिन्यां चरममुपन्यस्तः "मुक्तायुक्तानि च तानि रत्नानीति मध्यमपदलोपी समासः तत्र रत्नपदं मुक्तातिरिक्तरत्नपरम्" इत्येष पक्ष एवाभ्युपगन्तव्यो भाष्याद्यविरुद्धस्सकलजातीयरत्नप्रत्ययौपयिकः "मणिमुक्ताप्रवालानाम्" "मणिमुक्ताप्रवालकृतसोपानैः" इत्यादयः प्रयोगा अप्यनयैव रीत्या मुनित्रयविरोधरहितेन मध्यमपदलोपिसमासेनैवोपपन्ना न तद्विरुद्धस्य द्वन्द्वसमासस्य साधने दृष्टान्तभावं भजन्ते ॥ इयांस्तु विशेषः—यत् मुक्तारत्नेत्यत्र सामान्यवाचिपदमुत्तरपदम्। मणिमुक्तेत्यादौ तु सामान्यवाचिपदं पूर्वपदमिति। मध्यमलोपिसमासाश्रयणं सामान्यवाचिपदस्योपात्तविशेषातिरिक्तपरत्वावलम्बनंच निराबाधमेवोभयत्रेति ॥ ५९ ॥

द्वन्द्वो निरुह्येतेति वाच्यं “वलो नामाभवच्छ्रीमान्दानवेन्द्रो महाबलः। लोकत्रयाधिपत्यं च संप्राप्य सुमहानभूत् ॥ तस्यास्थि वज्रं दशनाश्च मुक्तास्तथा च रक्तं खलु पद्मरागः। रोमाणि वैदूर्यमिति प्रसिद्धं प्रवाळमासीत्पिशितं महार्घम् ॥ नेत्रे महानीलमभूत्प्रशस्तं पित्तं च गारुत्मतरत्नमासीत्। आसीत्कफस्तस्य तु पुष्यरागो मेदस्तु गोमेदकतामवाप” ॥ इत्युपक्रम्य “इमानि नव रत्नानि धार्याण्यासन्महीभुजाम्” ॥ इति स्कान्दरत्नपरीक्षाध्यायोक्तेर्मौक्तिकानामपि रत्नजात्यन्तर्भावात्। अत एव “रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च” इति कोशश्च सङ्गच्छते ॥ शूद्राभीरमित्यत्र तु आभीराणां शूद्रत्वानाक्रान्ततया द्वन्द्वो युक्तः, तथा च त्यदादिसूत्रे भाष्ये “यदि सामान्यविशेषवाचिनोर्द्वन्द्वो न भवतीत्युच्यते शूद्राभीरं, गोबलीवर्दं, तृणोलपम्; इति न सिध्यति” इत्याशङ्क्य “नैष दोषः इह तावच्छूद्राभीरमिति, आभीरा जात्यन्तराणि” इति समाहितम्। “ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते” इति स्मृतिमुदाहृत्याभीराणां शूद्रापेक्षया जात्यन्तरत्वं स्पष्टीकृतं कैयटेन ॥ नेह तथा मुक्तानां जात्यन्तरत्वनिर्णायकमस्ति प्रमाणं, प्रत्युत रत्नजातीयत्वमेवोदाहृतप्रमाणेन सिध्यति नापि गोबलीवर्दवद्द्वन्द्वोपपत्तिः गोशब्दस्येव रत्नशब्दस्येह नानार्थकत्वाभावात् ॥ अत एव भाष्ये—“गोबलीवर्दमिति न सिध्यति” इत्याशङ्क्य “गाव उत्कालितपुंस्का वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते” इति समाहितम्। अत्र स्त्रिय एवेति भाष्यप्रतीकमादाय “ततश्च

गोशब्दस्य स्त्रीत्वसमानाधिकरणं गोत्वं प्रवृत्तिनिमित्तं, पुंस्त्वसमानाधिकरणं चेति नानार्थो गोशब्दः तत्राद्यः, प्रसिद्धः अन्त्यस्तु क्वचिदेव। एवं च—गोशब्दः स्त्रीगवीणामेव वाचकः प्रायेण, क्वचिदेव तात्पर्यग्राहकवशेन पुंगवानां वाचकः, यथा "एतान्गाश्चतुरो बलीवर्दान्पश्य" इति 'प्रथमयोः' इति सूत्रस्थभाष्यप्रयोगे गौर्वाहीक इत्यादौ चेति भावः। एवं च—बलीवर्दसमभिव्याहाराद्गोशब्दस्तद्व्यतिरिक्तपर इति कथा चिन्त्या, वाहाद्यर्थं निष्कासितपुरुषा एव गावो गोपदवाच्याः न तु तत्सहिता इत्यर्थः" इति भाष्यप्रदीपोद्योते विवृतम्। "एतान्गा इत्युदाहरणे बलीवर्दानिति त्ववस्थाविशेषप्राप्तत्वबोधनायेत्याह" इत्युपक्रम्य "ततश्चात्र गोशब्दः स्त्रीगवीणामेव वाचकः" इति कैयटप्रतीकमादाय "अत्रोदाहरणे पुंतात्पर्यग्राहकरहिते इत्यर्थः। "भाष्याल्लोकाच्च गोशब्दव्यवहारः प्रायेण स्त्रीगवीष्वेवेति द्रष्टव्यम्" इति च निरूपितम्। अतो गोशब्दवद्रत्नशब्दस्य प्रकृतेऽनेकार्थकत्वायोगेन सामान्यविशेषभावाभावसमर्थनायोगान्न गोबलीवर्दमितिवद्द्वन्द्व उपपद्यते ॥ नापि तृणोलपमितिवदुपपत्तिः तत्राप्युलपशब्दस्य तृणविशेषव्यतिरिक्तार्थान्तरपरत्वेनेह तत्तौल्यायोगात्। अत एव "तृणोलपमिति उलपा इत्यपां नाम" इत्यभाषि। तस्मात् मुक्ताश्च तानि रत्नानि चेति कर्मधारय एव युक्तः शिंशुपावृक्षः कैलासाद्रिरित्यादाविव "विशेषणं विशेष्येण बहुलम्" इत्यनेन समासः। व्याप्यव्यापकभावापन्नशब्दयोस्समभिव्याहारे व्यापकस्यैव विशेष्यत्वनियमाद्रत्नशब्दस्य

विशेष्यतेति ध्येयम् । यद्वा—मुक्तानां रत्नानि मुक्तारत्नानीति षष्ठीतत्पुरुषः मौक्तिकश्रेष्ठानीत्यर्थः । "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः ॥ शबलत्वं च वर्णद्वययोगेऽपि भवत्येवेति न शबलपदस्वारस्यभङ्गः । "वैदूर्यमणिचित्रे च वज्ररत्नविभूषिते । वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ" इत्यत्र हि वज्रवैदूर्याभ्यामेव चित्रत्वमुच्यते । तत्रापि वैदूर्यवज्रशब्दयोर्व्याप्यवाचिनोर्मणिरत्नशब्दाभ्यां व्यापकवाचिभ्यां विशेषणसमास एव न तु द्वन्द्वः उक्तानुपपत्तितौल्यात् एवं "मुक्तामणिविचित्रेण काञ्चनेन विराजितम्" ॥ इत्यादावपि वर्णद्वयमेळनेनैव चित्रत्वमुक्तं, अथ वा शबलशब्दश्चित्रच्छबलमचिच्छबलमित्यादाविव विशिष्टपर इति न तदस्वारस्यं अथ वा मुक्तायुक्तानि च तानि रत्नानीति मध्यमपदलोपी समासः रत्नशब्दो मुक्ताव्यतिरिक्तमणिपरः । ब्राह्मणवसिष्ठन्यायात् मौक्तिकयुक्तानि मरकतपद्मरागादीनीति तदर्थः, अस्मिन्पक्षे न काऽप्यनुपपत्तिरित्यलमतिविचारचापलेन ॥ प्रकृतमनुसरामः—मुक्तारत्नान्येव स्तबकाः गुच्छाः । तैः शबलाः कल्माषाः विशिष्टा वा तैस्तथोक्तैः विद्रुमैः प्रवाळैः उल्लसितानि प्रवाळानि नवकिसलयानि यस्य तदुत्प्रवाळं "वीणादण्डे प्रवाळोऽस्त्री विद्रुमे नवपल्लवे" इति त्रिकाण्डशेषः ॥ मुक्तारत्नस्तबकविचित्रविद्रुमाभिन्ननवपल्लवोल्लसितमित्यर्थः ॥ रक्षसो रावणात् भीतैः त्रस्तैः "भयभीतभीतिभीभिरिति वाच्यम्" इति पञ्चमीसमासः ॥ अनिमिषैः देवैः "सुरमत्स्यावनिमिषौ" इत्यमरः ॥ स्वयं तन्नियोगानपेक्षमेवेत्यर्थः ॥ आहृताश्च

ते स्थापिताश्चेति स्नातानुलिप्तवत्समासः ॥ स्थापनापेक्षया आहरणस्य पौर्वकालिकत्वेन "पूर्वकालैक" इत्यादिना आहृतशब्दस्य पूर्वनिपातः त्रिदिवादाहृत्य सुवेलप्रान्ते प्ररोपितानामित्यर्थः ॥ मन्दाराणां देवतरुभेदानां "पञ्चैते देवतरवो मन्दारः पारिजातकः" इत्यमरः ॥ मौळिशिखा प्रमाणमेषां मौळिदघ्नाः तैस्तथोक्तैः "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति दघ्नच्प्रत्ययः। "चूडा किरीटं केशाश्च संयता मौळयस्त्रयः" इत्यमरः ॥ उन्मस्तकैरित्यर्थः। निरवधिकैरिति यावत् ॥ मधुपरिमळैः मकरन्दसौरभैः वासितं भावितं च सत् अस्ति "भावितं वासितं त्रिषु" इत्यमरः "अस्तिर्भवन्ति परोऽप्रयुज्य मानोऽप्यस्ति" इति भाष्यानुशासनादप्रयुज्यमानस्याप्यस्तेस्सत्त्वाभ्युपगमान्नात्र "क्रियापदेन रहितमशरीरं तदुच्यते" इत्युक्ता शरीराख्यकाव्यदोषप्रसक्तिः; भवन्तिरिति लटस्संज्ञा "भुवो झिच्" इत्यौणादिकसूत्रेण भूधातोर्झिचि "झोऽन्तः" इत्यन्तादेशः। भवन्तिर्वर्तमानकाल इत्युक्तं मूले ॥ अत्र मुक्तारत्नस्तबकेत्यादिरूपकेण मन्दारमधुपरिमळवासितत्वासंबन्धेऽपि सुवेलारण्यस्य तत्संबन्धोक्तिरूपातिशयोक्त्या च संपत्समृद्धिवर्णनात्मकोदात्तमेकवाचकानुप्रविष्टतया सङ्कीर्यते ॥ ५९ ॥

तत्र स्थितस्य तव लङ्का नयनपथमधिरोक्ष्यतीत्याह—

**तस्मिन्दृश्या तदनु भवतश्चारुसौधावदाता**
**लङ्का सिन्धोर्महति पुलिने राजहंसीव लीना।**

त्वामायान्तं पवनतरलैर्या पताकापदेशैः
पक्षैरभ्युज्जिगमिषुरिव स्थास्यति श्राव्यनादा॥६०

तस्मिन्निति ॥ तदनु सुवेलविलोकनान्तरं, तस्मिन् सुवेले स्थितस्येत्यध्याहारः। भवतः तव, त्वयेत्यर्थः ॥ दृश्येति कृत्यप्रत्यययोगात् "कृत्यानां कर्तरि वा" इति कर्तरि षष्ठी, चारुभिः रुचिरैः, सौधैः राजसद्नैः अवदाता विशदा अनेन "गृहैश्च गिरिसङ्काशैश्शारदाम्बुदसन्निभैः, गिरिमूर्ध्नि स्थितां लङ्कां पाण्डुरैर्भवनैश्शुभैः" इत्यादिकं स्मार्यते ॥ राजहंसीपक्षे चारुसौधवदवदातेत्यर्थोऽनुसन्धेयः। अत एव महति विशालोन्नते सिन्धोः पुलिने तोयोत्थितद्वीपे त्रिकूटागिरिरूपे इति भावः। महितपुलिन इति पाठस्तु न स्वच्छः पुलिनमुद्दिश्य महितत्वे विधेये तस्योपसर्जनत्वप्रतीत्या अविमृष्टविधेयांशाख्यकाव्यदोषापातात् "अविमृष्टविधेयांशं गुणीभूतविधेयकम्" इति तल्लक्षणम्। अत्र त्रिकूटस्य पुलिनत्वेन निर्देशो लङ्काया विवक्षितराजहंसीत्वोत्प्रेक्षानुगुण्याय लीना निषण्णा, राजहंसीव त्वत्प्रियेव लङ्का दृश्या द्रष्टुं योग्या भविष्यतीत्यर्थः॥ तदनु भवत इत्येव सार्वत्रिकः पाठः भवति भवत इति तु काचित्कः, तदा वर्तमानसामीप्याभिप्रायेण लट्प्रयोगः ॥ त्रिकूटतुल्योन्नत्ये सुवेले स्थितस्य तव त्रिकूटशिखरस्था लङ्का सुखेन द्रष्टुं योग्या भविष्यतीति भावः॥ अत एव युद्धकाण्डे—"रामस्सुवेलं वासाय चित्रसानुमुपारुहत्" इत्युपक्रम्य "ते त्वदीर्घेण कालेन

गिरिमारुह्य सर्वतः । ददृशुश्शिखरे तस्य विषक्तामिव खे पुरीम्" इति सुवेलारूढानामेव लङ्कादर्शनमुक्तं, तस्य सुवेलस्य शिखरे स्थित्वेत्यध्याहारः, खे विषक्तामिव स्थितां पुरीं ददृशुरित्येव तदर्थः । न तु तस्य सुवेलस्य शिखरे स्थितामिति ॥ अन्यथा—"शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशम् । समन्तात्पुष्पसञ्छन्नं महारजतसन्निभम् ॥ शतयोजनविस्तीर्णं विमलं चारुदर्शनम् । श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥ मनसाऽपि दुरारोहं किं पुनः कर्मणा जनैः । निविष्टा तत्र शिखरे लङ्का रावणपालिता" इति तदुत्तरस्मिन्नेकोनचत्वारिंशे सर्गे लङ्कायास्त्रिकूटशिखरस्थत्ववर्णनम्, ततोऽप्युत्तरत्रैकचत्वारिंशे सर्गे "तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः" इति लङ्कागमनार्थं सुवेलादवरोहणकथनं, "तौ तु दीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ । रावणस्य पुरीं लङ्कामासेदतुररिन्दमौ" इति तदनन्तरमेव लङ्काप्राप्तिवर्णनं च विरुध्येत, एवं "कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् । लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा" इति सीतां प्रति रामोक्तिः "त्रिकूटशिखरे लङ्कां स्थितां स्वस्थो ददर्शह" इति सुन्दरकाण्डोक्तिः । "लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता" इत्युत्तरश्रीरामायणोक्तिश्च विरुध्येरन्, अत एव "ददृशुश्शिखरे तस्य" इत्यत्र "तस्य प्रसिद्धस्य त्रिकूटस्य" इति गोविन्दराजादिव्याख्यानं च सङ्गच्छते ॥ यदि नाम ते सुवेलशिखरस्थतामेव लङ्काया निरणेष्यन् तर्हि तस्येत्यस्य सुवेलस्ये-

त्येव व्याख्यास्यन्, न हि लङ्कायास्सुवेलशिखरस्थताग्राहकमनन्यथासिद्धं किञ्चिदुपलभ्यते प्रमाणं, येनोक्तरीत्यैव ते विवृण्वीरन् प्रत्युत तन्निग्राहकाण्येव प्रमाणानि सन्ति भूयांसि यानि पूर्वमुदाहृतानि ॥ न च "ददृशुश्शिखरे तस्य" इत्यत्र तच्छब्दस्य पूर्वप्रकृतसुवेलपरामर्शस्यैव स्वारसिकतया सुवेलशिखरेऽपि लङ्कास्तित्वं कल्पनीयमिति वाच्यं उक्तरीत्या तच्छब्देन सुवेलपरामर्शस्यैव स्वारसिकत्वेऽपि स्थितेत्यध्याहारस्यैव युक्तत्वात् वस्तुनि विकल्पासम्भवाल्लङ्कायास्त्रिकूटसुवेलोभयशिखरव्याप्ततयाऽवस्थानस्य विना प्रमाणान्तरमशक्यवचनत्वात् क्लृप्तेऽर्थे कल्पनायोगाच्चेति दिक् । अत एव "सुवेलारोहणे बुद्धिं चकार मतिमान्मतिम् । रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम्" इति श्लोकव्याख्याऽवसरे "आरोहणेच्छाहेतुमाह—रमणीयमिति "सौन्दर्यावलोकनमेव तदारोहणे हेतुर्न तु लङ्काप्राप्तिः अत एव लङ्कोपरोधायावरोहणं वक्ष्यति" इति गोविन्दराजोक्तिश्च सङ्गच्छते ॥ तदुत्तरश्लोके—"प्रहृष्टरूपोऽभिजगाम लङ्काम्" इत्यत्र "लङ्कैकदेशं सुवेलम्" इति तद्व्याख्यानं तु लङ्कासामीप्येऽपि तद्व्यपदेशविवक्षयेति निर्वाह्यम् अन्यथा तदीयस्यैव पूर्वोत्तरग्रन्थस्यासङ्गतिः प्रसजेत् । वस्तुतस्तु—सुवेलाभिमुखगमनेऽपि लङ्काभिमुखगमनस्यावर्जनीयतया लङ्कामभि लङ्काभिमुख्येनेति व्याख्यातुमेवोचितम् न च त्रिकूटस्यैव सुवेल इति नामान्तरमिति वाच्यं उक्तविरोधात् ॥ "दक्षिणस्योदधेस्तीरे त्रिकूटो नामपर्वतः । सुवेल इति चाप्यन्यो द्वितीयस्तत्र सत्तम" इत्युत्तरकाण्ड-

ग्रन्थविरोधाच्चेत्यलं बहुना। लङ्कामेव विशिनष्टि। त्वामिति। आव्यनादा "क्रौञ्चबर्हिणसङ्घुष्टे राजहंसनिषेविते:। तूर्याभरणनिर्घोषैस्सर्वतः प्रतिनादिताम्" इत्युक्तरीत्या रमणीयनानाविधनिनादेत्यर्थः॥ हंसीपक्षे तु—आव्यः श्रुतिमधुरः नादः स्वागताचारप्रयुक्तस्स्वाभाविको ध्वनिर्यस्यास्तथाविधा सतीत्यर्थः। या राजहंसीत्वेन संभाव्यमाना लङ्का आयान्तं दूरादागच्छन्तं त्वां प्रियतममिति भावः। पवनेन[1] मारुतेन तरळैः परिप्लवैः "चञ्चलं तरळं चैव पारिप्लवपरिप्लवे" इत्यमरः। पताका इत्यपदेशो व्याजो येषां तैस्तथोक्तैः "व्याजोऽपदेशो लक्ष्यं च" इत्यमरः। पक्षैः गरुद्भिः अभ्युज्जिगमिषुरिव प्रत्युद्गन्तुमिच्छुरिव अभ्युत्पूर्वकाद्गमेस्सन्नन्तादुप्रत्ययः। पक्षिणो ह्यभ्युज्जिगमिषायामादौ पक्षानुद्धून्वन्तीति

[1] पवनतरळैः . . . पक्षैः . . . अभ्युजिगमिषुरिव . . . पक्षिणो ह्यभ्युजिगमिषायामादौ पक्षान्धून्वन्तीति भावः इति रसास्वादिनी॥ यत्तु—यद्यपि पवनतरलत्वं पताकास्वेव वक्तव्य न पक्षेषु तथाऽप्युपमाया भेदाभेदप्रधानत्वादत्राभेदांशोपजीवनेन पक्षेषु तदुक्तिरित्यवगन्तव्यमिति तन्न. अभ्युजिगमिषादशायां स्वप्रयत्नोत्थापितशारीरपवनतरलत्वस्य पक्षिणां पक्षेषु स्वभावसिद्धतया तत्प्रतिपिपादयिषया पक्षेष्वेव पवनतरलत्वस्य वक्तव्यत्वात् तदवक्तव्यत्वाशङ्काया असङ्गतेः। अत एव पक्षेषु पताकाऽभेदोपजीवनेन समाधानमप्यसत्। पताकाऽभेदोपजीवनमन्तराऽपि स्वभावत एव पक्षेषु पवनतरलत्वसंभवस्योपपादितत्वात्। पताकासु पवनतरलत्वं सार्वकालिकमिति न तद्वक्तव्यम्। पक्षिणां तु पक्षेषु न तत्सार्वकालिकमिति तद्वक्तव्यमेव। पताकासु पवनतरलत्वविशिष्टपक्षत्वारोपणे हि पवनतरलत्वं तास्वर्थसिद्धमपीति॥ ६०॥

भावः ॥ स्थास्यति वर्तिष्यते अत्र “डीयमानामिवाकाशमुच्छ्रितैर्भवनोत्तमैः । खमिवोत्पतितुं कामाम्” इत्यादिकं स्मार्यते । अत्रलङ्कारूपद्रव्यस्य राजहंसीरूपद्रव्यान्तरतादात्म्यसंभावना चारुसौधावदातत्वरूपगुणलक्षणानिमित्तोपादानपूर्विकेत्युपात्तगुणनिमित्तकद्रव्य-भावस्वरूपोत्प्रेक्षा । पवनतरळेषु ध्वजपटेषु पक्षत्वारोपफलकस्य तद्धर्मनिह्नवस्यापदेशशब्देन प्रतीयमानतया कैतवापह्नुतिः “कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः” इति लक्षणात् । तदुज्जीविता लङ्काया अभ्युद्गमनक्रियास्वरूपोत्प्रेक्षेति संकरः उक्तयोरुत्प्रेक्षयोरन्योन्यसापेक्षत्वाच्च संकर इति सर्वमनवद्यम् ॥ ६० ॥

एवं श्रीरामचन्द्रेण कृतं राजहंसमुद्दिश्य सुवेलपर्यन्तमार्गोपदेशप्रकारमभिवर्ण्य विवक्षितलङ्कावृत्तान्तवर्णनस्य भूयस्तया तन्मध्ये विच्छेदकल्पनस्यानुचितत्वात्तावत्पर्यन्तानुधावने आश्वासस्य द्राघीयस्तयाऽध्येतॄणां भूयानायासो भविष्यतीति तद्विश्रान्तिकृते “कविकाव्यप्रशंसादिकाव्येऽवश्यं विधीयते” इत्युक्तरीत्याऽऽत्मनः काव्यस्य च नाम संगृह्णानः प्रबन्धमध्ये आश्वासाख्यं विच्छेदविशेषमाह भगवानाचार्यः—

## इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु हंससंदेशे महाकाव्ये प्रथम आश्वासः.

इतीति ॥ इतिरत्र समाप्त्यर्थकः "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" इत्यमरः । कवयः काव्यकर्तारः तर्काः वादाः "काङ्क्षोहकर्मवादेषु तर्कः" इति रत्नमाला । तर्कैर्दीव्यन्तीति दुराक्षेपदृन्प्रतिवादिनो जयन्तीति वा तार्किकाः "तेन दीव्यति खनति जयति जितम्" इति दीव्यतीत्यर्थे जयतीत्यर्थे वा प्राग्वहतीयष्ठक् । तेषु श्रेष्ठः कवितार्किकसिंह इत्यस्वपदविग्रहः । अत एव "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः" इत्यमरसिंहोक्तिस्संगच्छते । अत्र "सप्तमी" इति योगविभागेन निर्धारणसप्तम्यास्समासः । न तु निर्धारणषष्ठ्याः "न निर्धारणे" इति निषेधादत्र निर्धार्यमाणादित्रितयसन्निधानसद्भावेन निर्धारणषष्ठ्या निरर्गळप्रवृत्तिकत्वात्, अत एव नागोत्तमादिवन्न शैषिकषष्ठीसमासेनापि निर्वाहः । वस्तुतस्तु—योगविभागस्य भाष्यानारूढतया 'सुप्सुपा' इति समास एवोचितः ॥ यद्वा—कविश्चासौ तार्किकश्चेति विशेषणोभयपदकर्मधारयः । ततः कवितार्किकस्सिंह इवेत्युपमितसमासः । अनेनापि कवितार्किकश्रेष्ठ इत्येव फलिष्यति अत एवोपमालङ्कारः । यद्वा—तार्किका इत्येतत्कवीनामेव विशेषणं कवयस्तार्किकाः कवितार्किकाः 'मयूरव्यंसकः' इत्यत्र व्यंसकशब्दस्येव तार्किकशब्दस्य परनिपातः, मयूरव्यंसकादेराकृतिगणत्वात् ॥ अथ वा—कवितार्किकाणां सिंहः सिंह इव भयङ्कर इत्यर्थः, अनेन कवितार्किकेषु महागजत्वं प्रतीयते । यथोच्यते—"कवितार्किककलभव्रजकबळीकृतिसिंहम्" इति । अत एवैकदेशविवर्तिरूपकं, उक्तो-

पमाया अस्य च संदेहसङ्करः अनेन स्वप्नेऽपि केसरिण इवास्य स्मरणेण द्विरदानामिव प्रत्यर्थिकवितार्किकाणां निर्वीर्यत्वं भविष्यतीति द्योत्यते ॥ श्रीयुक्तश्चासौ कवितार्किकसिंहश्चेति मध्यमपदलोपी समासः । नायं केवलकविस्स्वकाव्ये प्रत्यवस्थातॄन्प्रति समाधातुमनीश्वरः किन्तु तद्दुराक्षेपकूलङ्कषतया स्वकाव्यप्रतिष्ठापनधुरन्धर इति भावः । यद्यपि तर्कमधीयते तार्किका इति विग्रहे नैयायिकश्रेष्ठत्वमप्युक्तं स्यात् तथाऽपि सर्वतन्त्रस्वतन्त्रशब्देनैव तस्यापि लाभादिहान्यथा व्याख्यातम् कुत एतादृशी कवितार्किकसिंहतेत्यत्राह—सर्वतन्त्रस्वतन्त्रस्येति ॥ सर्वाणि च तानि तन्त्राणि च, तेषु काणादाक्षपादपाणिनीयपातञ्जलजैमिनीयहैरण्यगर्भकापिलशैववैष्णवादिसिद्धान्तेषु विशाखिलप्रणीतगजतुरगादिलक्षणप्रतिपादकेषु वात्स्यायनीयादिषु शास्त्रेषु च "तन्त्रं कुटुम्बकृत्ये स्यात्कारणेऽपि परिच्छदे । शास्त्रे प्रधाने सिद्धान्ते तन्तुवायेऽगदोत्तमे ॥ तन्त्वादिसाधनोपाये श्रुतिशाखान्तरेऽपि च । इति कर्तव्यतायां च" इति विश्वः । स्वतन्त्रस्य निरवग्रहस्य "स्वतन्त्रोऽपावृतस्स्वैरी स्वच्छन्दो निरवग्रहः" इत्यमरः । स्वेच्छया यं कं चिदर्थं सिद्धान्तयितुं प्रतिक्षेप्तुं च निस्सहायशूरस्येत्यर्थः । अनेन सर्वज्ञताहेतुभूतलोकोत्तरप्रतिभाशालित्वं सूचितम् ईदृशशक्तिमत्त्वं चास्य न्यायपरिशुद्धिसर्वार्थसिद्ध्यादिषु संकल्पसूर्योदयादिषु च तदीयप्रबन्धेष्वेव स्पष्टम् । यथा ह्युच्यते—"सर्वज्ञत्वं तत्त्वमुक्ताकलापे" इत्यादि । ईदृशसामग्रीसंपन्नस्य महाप्रतिभाशालिन एव लोकोत्तरकाव्यप्रणयन-

प्रौढिमा सिद्ध्यति, न त्वल्पज्ञस्य । तथा चोक्तम्—"शक्तिः कवित्वबीजं हि प्राक्तनी काऽपि संस्क्रिया । यया विना न प्रसरेत्काव्यं शिक्षावतामपि ॥ व्युत्पत्तिगौरवबलाद्यदि किंचित्कथंच न । प्रसारितं परं तच्च हास्यमेव न संशयः ॥ नाकवित्वमधर्माय मृतये दण्डनाय वा । कुकवित्वं पुनस्साक्षान्मृतिमाहुर्मनीषिणः ॥ प्रतिभां नामतामेतां कवयस्समुपासते । परा या जीवितसखी देव्या वाचस्त्रिधा तनोः ॥ स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता ॥ प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः । तदनुप्राणनाज्जीवेद्रचनानिपुणः कविः ॥ सति वक्तरि सत्यर्थे सति शब्दानुशासने । अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥ व्युत्पत्तिरपि शक्त्यैव सङ्गता ह्यनुवर्तते । सा हि तस्याः प्रियसखी नित्यमव्यभिचारिणी ॥ परिबर्हवतीं कर्तुं प्रतिभां प्रतिभानवान् । साधीयसीं तु व्युत्पत्तिं सविधे सन्निधापयेत् ॥ व्युत्पत्तिर्लोकचारित्रशास्त्रकाव्याद्यवेक्षणम् । अभ्यास उपदेशेन काव्यज्ञानां च सम्मतः ॥ चरस्थिरानेकविधलोकवृत्तानुवर्तिनः । काव्यस्य करणे लोकज्ञानमुच्छ्वसितं कवेः ॥ अज्ञातलोकवृत्तो यश्शास्त्रकाव्यविदप्यसौ । ऋश्यशृङ्ग इवाशेषैर्घुष्यते मुग्धसंसदि ॥ शब्दशुद्धिविवेकाय शब्दशास्त्रनिरूपणम् । वृत्तसंशयविच्छित्त्यै च्छन्दश्शास्त्रनिरूपणम् ॥ चतुर्वर्गैः कलाभिश्च काव्यं निर्मीयते यतः । अतस्तच्छास्त्रविदुषा भाव्यं काव्यं चिकीर्षता ॥ नृपाणां काव्यनेतृणां खड्गाश्वगजशि-

क्षणम्। वर्णनीयं काव्यकृता तस्मात्तच्छास्त्रवेदनम् ॥ इतिहासपुराणानामभ्यासेनापि भूयते। राजवंशकथातीर्थलोकभेदावबुद्धये ॥ लोकशास्त्रविशेषज्ञः काव्यनिर्माणकौतुकी। काव्यानि काळिदासादेस्सततं परिशीलयेत् ॥ लोकशास्त्रपुराणादि ज्ञानवानपि सीदति। अज्ञातकाव्यसरणिः काव्यनिर्माणकर्मणि ॥ अन्या हि गतिरश्वस्य गतिरन्या खरोष्ट्रयोः। मदक्लिन्नकपोलस्य गतिरन्या हि दन्तिनः ॥ वेदशास्त्रपुराणानां रीतयो हि पृथक्पृथक्। रीतिरन्यैव काव्यानां लोकोत्तरपदस्पृशाम् ॥ रसभावगुणौचित्यघटनालंक्रियादयः। काव्यादन्यत्र दृश्यन्ते कुत्र वा वेदशास्त्रयोः ॥ एवं लोकस्य शास्त्राणां काव्यानामपि वेदिता। प्रतिभावान्प्रवर्तेत काव्यज्ञैः काव्यकर्मणि ॥ किमेवं बहुनोक्तेन लोके यद्यद्विभाव्यते। तत्तत्सर्वं वेदितव्यं काङ्क्षता काव्यनिर्मितिम् ॥ न स शब्दो न तद्वाच्यं न सा विद्या न सा कला। जायते यन्न काव्याङ्गमतो भारो महान्कवेः" इत्यादि। विस्तरस्त्वस्मदीयायां काव्योत्कर्षरक्षायां द्रष्टव्यः ॥ अनीदृशश्चेत्कविर्नैव शक्नुयाद्ग्रथितुं प्रबन्धं कथंचिद्ग्रथ्नन्नप्यनुयोक्तृणां प्रतिवक्तुमाक्षेपानक्षमः कदर्थीक्रियेत विद्वद्भिः। यथोच्यते चमत्कारचन्द्रिकायां—"वर्णानामुद्भवः पश्चाद्व्यक्तिस्सङ्ख्या ततः परम्। बीजबिन्दुविचारश्च ततो वर्णग्रहा अपि" इत्यारभ्य। सर्वशास्त्रज्ञतावश्यंभावमुक्त्वा "एतत्सर्वमविज्ञाय यदि पद्यं वदेत्कविः। केतकारूढकपिवद्भवेत्कण्टकपीडितः" इति। काव्यं हि नाम महदेव निधानं सर्वलोकवृत्तशास्त्रसिद्धान्तरत्नानां काव्यस्यैवंविध-

त्वादेव भगवता श्रीदाशरथिना तत्तच्छास्त्रादिवेदिभिस्सर्वैस्सहैवाश्रावि श्रीरामायणम् तथा चोक्तमुत्तरकाण्डे—“अथ कर्मान्तरे राजा समाहूय महामुनीन्। पार्थिवांश्च नरव्याघ्रः पण्डितान्नैगमांस्तथा॥ पौराणिकान् शब्दविदो ये च वृद्धा द्विजातयः। स्वराणां लक्षणज्ञांश्च उत्सुकान्द्विजसत्तमान्॥ लक्षणज्ञांश्च गान्धर्वान्नैगमांश्च विशेषतः॥ पदाक्षरसमासज्ञान् छन्दस्सु परिनिष्ठितान्॥ कलामात्राविभागज्ञान् ज्यौतिषे च परं गतान्। क्रियाकल्पविदश्चैव तथा काव्यविशारदान्॥ भाषाज्ञानिङ्गितज्ञांश्च नैगमांश्चाप्यशेषतः। हेतूपचारकुशलान्वचने चापि हैतुकान्॥ छन्दोविदः पुराणज्ञान्वैदिकान्द्विजसत्तमान्। चित्रज्ञान्वृत्तसूत्रज्ञान् गीतनृत्तविशारदान्॥ शास्त्रज्ञान्नीतिनिपुणान्वेदान्तार्थप्रबोधकान्। एतान् सर्वान् समानीय गातारौ समवेशयत्” इति॥ “एतान् सर्वान् त्समानीयेत्यनेनाशेषविद्यास्थानं रामायणमिति दर्शितम्” इति गोविन्दराजाः॥ कुतोऽस्येदृशं सार्वज्ञ्यमित्यत आह—श्रीमद्वेङ्कटनाथस्येति॥ श्रीरस्यास्तीति श्रीमान्। नित्ययोगे मतुप् ज्ञानादिसर्वगुणैश्वर्यपूर्ण इत्यर्थः। स चासौ वेङ्कटनाथश्च “वें पापमिति संप्रोक्तं कटस्तस्य तु दाहकः। पापानां दाहकत्वाद्धि वेङ्कटाद्रिरितीर्यते” इति निरुक्तनाम्नोऽद्रेः नाथ ईश्वरः भगवान् श्रीनिवास इत्यर्थः। तस्य “यस्सर्वज्ञस्सर्ववित्” इत्यादिश्रुतिशतोद्घुष्यमाणसार्वज्ञ्यश्रीवेङ्कटेशसाक्षादवतारत्वादस्येदृशं सार्वज्ञ्यमिति भावः॥ यथाहुः—“वेंकटेशावतारोऽयम्” इति। अनेन पापमूलकाज्ञाननिवर्तनपटीयस्त्वं

चास्य द्योत्यते । तेन च—"गुशब्दस्त्वन्धकारस्स्याद्रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते" इति निरुक्तगुरुशब्दप्रवृत्तिनिमित्तमस्मिन्पुष्कलमिति व्यज्यते । अत एव वेदान्ताचार्यस्य वेदान्तानामाचार्यस्तत्त्वार्थोपदेष्टेत्यर्थः । तस्य न ह्यभगवदवताराणां वेदान्तविद्योपदेशेनाखिलचेतनोज्जिवयितृत्वं सुलभं, यथोच्यते—"साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना" इत्यादि ॥ वेदान्ताचार्यत्वं च—हंसमत्स्यहयग्रीवनरनारायणगीताचार्याद्यवतारैस्स्वयमेव तत्त्वहितपुरुषार्थान्प्रकाशयतो भगवत एवासाधारणं तच्चास्याचार्यस्य श्रीभाष्यप्रवचनवैभवं वीक्ष्य प्रसन्नहृदयेन भगवता श्रीरङ्गराजेन वेंकटेशावतारायामुष्मै व्यतारि सानुग्रहमिति गुरुपरंपराप्रभावादौ प्रसिद्धम् वेदान्तानामाचार्य इत्यनेन—"अन्तेवासिभिराम्नायैस्साकं मानुषरूपधृत् । त्रिदण्डधारी भूत्वाऽहं निरास्थमहमीदृशान्" इत्युक्तरीत्या दत्तात्रेयस्येवास्यापि वेदान्ताश्शिष्यभावापन्ना एतत्प्रदर्शितेनैव सुपथा संचरन्त इति व्यज्यते ॥ अत्र "श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यपदः । विश्वस्मिन्नामरूपाण्यनुविहितवता तेन देवेन दत्तां वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि" इत्याचार्यैरेवोक्तं, "इह रङ्गपतिप्रसादलब्धोभयवेदान्तधुरन्धरत्वकीर्तिः । अपि तत्सहधर्मिणीकृपात्ताखिलतन्त्रप्रतिभा क एष सूरिः" इत्यादि प्रतिवादिभयङ्कराचार्याद्युक्तं चानुसन्धातव्यम् ॥ वेंकटनाथस्येति सांस्कारिकं शर्म अन्यत्त्रितयं तु बिरुदनामेति विवेकः । किञ्च—सर्व-

तन्त्रस्वतन्त्र इत्यनेन "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेद-माथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि सोऽहं भगवो मन्त्रविदेवास्मि" इति भूमविद्योक्तरीत्या मन्त्रप्रधानकर्मनिष्ठतारूपं मन्त्रवित्त्वं वेदान्ताचार्यस्येत्यनेन "तरति शोकमात्मवित्" इत्युक्तमात्मवित्त्वं च द्योत्यते। यद्वा आभ्यां पदाभ्यां व्युत्क्रमेण "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदोऽथर्ववेदश्शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषम्" इति॥ अथ परा यया तदक्षरमधिगम्यते—तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने। आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते॥ शब्दब्रह्मागममयं परं ब्रह्म विवेकजम्" इत्युक्तब्रह्मप्राप्त्युपायभूतागमोत्थविवेकजन्यरूपद्विविधज्ञानपरिपूर्णता द्योत्यते॥ भाव्यं चेदृशेनैव कविना॥ यथोच्यते—सत्कुलीनश्शुचिर्दक्षश्छन्दोव्याकरणादिवित्। कर्मब्रह्मविचारज्ञः प्रशान्तश्च कविर्भवेत्" इति॥ क्रियन्त इति कृतयः; कर्मणि क्तिन् प्रबन्धा इत्यर्थः। तासु मध्ये "यतश्च निर्धारणम्" इति सप्तमी। बहुवचनेन सर्वेष्वपि तन्त्रेष्वनेन कृतीनां प्रणीतत्वं, "परश्शतं वाऽपि परस्सहस्रं श्रीवेङ्कटेशेन कृताः प्रबन्धाः" इत्युक्तरीत्या तासामानन्त्यं च द्योत्यते। हंससंदेश इति काव्यनाम हंसस्य संदेशो हंससंदेशः संदेशो

नाम "संदेशस्तु प्रोषितस्य स्ववार्ताप्रेषणं भवेत्" इत्युक्तलक्षणो वागनुभावविशेष इति "संदेशेन प्रणयमहता" इत्यत्र प्रापञ्चयाम। स च सीतामुद्दिश्य हंसं प्रति रामेण वाचिकस्योक्तत्वेन हंससंदेशशब्दवाच्यः हंससंदेशमधिकृत्य[1] कृतो ग्रन्थो हंससंदेशः "अधिकृत्य कृते ग्रन्थे" इत्यणि तस्य "लुबाख्यायिकाभ्यो बहुलम्" इति लुपि प्रकृतिवल्लिङ्गता। अंशतः कल्पितत्वेऽप्यस्य काव्यस्याख्यायिकात्वमक्षतमुपलब्धार्थकथनस्यैवात्र भूयस्त्वात् "आख्यायिकोपलब्धार्था" इत्यमरः॥ कवेः कर्म काव्यं "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति कर्मार्थे ष्यञ्, अन्यथा "इगन्ताच्च लघुपूर्वात्" इत्यनेनाणि वैरूप्यं स्यात् तच्च "लोकोत्तरवर्णनानिपुणकविकर्म" इति काव्यप्रकाशिकाकारः। लोकोत्तरवर्णनारूपं यन्निपुणकविकर्मेत्यर्थः॥ न तु लोकोत्तरवर्णना विभावादिप्रत्यायनं तस्यां निपुणस्य कवेः कर्मेति स्थपत्यधिकरण-

[1] हंससन्देशमधिकृत्य कृतो ग्रन्थो हंससन्देश इत्यादि रसास्वादिनी॥ यत्तु—यद्वा हंसस्य सन्देशो यस्मिन् प्रतिपादके काव्य इति व्यधिकरणबहुव्रीहिः तत् हंससन्देशमिति नपुंसकं काव्यविशेषणमिति—तन्न. तथाविधव्यधिकरणबहुव्रीहेरनुशासनविरहेणासाधुत्वात्॥ क्वचिदप्याचार्यसूक्त्यादौ हंससन्देशपदस्य क्लीबतया प्रयोगादर्शनात्। उपलभ्यमानप्रयोगाणां पुंस्त्वेनैवोपपत्तेः। यदपि—प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण वा काव्यं हंससन्देश इति—तन्न. तथा सत्युपोद्घातोपसंहारगतपद्यानां एतत्काव्यान्तःपातानुपपत्तेः॥ हंससन्देशमधिकृत्य कृतो ग्रन्थ इत्याचार्योपदर्शितव्युत्पत्तौ तु न किञ्चिद्बाधकमिति दिक्॥

इति श्री रसास्वादिनीपादुकायां हंससन्देशटिप्पण्यां प्रथमाश्वासः श्रीः

श्री श्रीकृष्णब्रह्मतन्त्रपरकालमहादेशिकाय नमो नमः.



न्यायेन तत्पुरुषस्य दुर्बलत्वात्कवेर्भोजनोत्थानादिकर्मण्यतिव्याप्तेरिति कमलाकरादयः। तच्च "अदोषसगुणसालङ्कारशब्दार्थरूपम्" इति प्राञ्चः॥ "रमणीयार्थप्रतिपादकश्शब्दः" इति जगन्नाथः; विस्तरस्त्वन्यत्र। महच्च तत् काव्यं च महाकाव्यं तस्मिन् "आन्महतः" इत्यात्वं; काव्यस्य महत्त्वं च नगराद्यष्टादशवर्णनात्मकत्वं एतच्चोत्तराश्वासान्ते प्रपञ्चयिष्यते॥ यद्वा—महत्त्वमुत्तमत्वं तच्च वाच्यातिशायिव्यङ्ग्यत्वं "वाच्यातिशायिव्यङ्ग्यं यदुत्तमं तद्ध्वनिश्च सः" इति तल्लक्षणम्। महाकाव्ये ध्वनिकाव्ये इत्यर्थः। व्यङ्ग्यस्य वाच्यातिशायित्वं च तत्र तत्र प्रदर्शितमस्माभिः॥ अथवा—महत्त्वं विषयकृतं वेदितव्यम्, अत्र भगवान्दाशरथिर्हि प्रधानविषयः। प्रथम आश्वासः आद्यो भागविशेषः प्रबन्धभागविशेषाश्च कविभिस्सर्गादिरूपेण व्यवहार्याः तथा चोक्तं शम्भुरहस्ये—सर्गाश्वासोल्लासगुच्छस्तबकाख्यान्पदे पदे। विच्छेदान्कल्पयेत्काव्ये पञ्च सप्त नवापि वा॥ दश द्वादश वाऽदीर्घान्यावदिष्टमथापि वा" इति॥ अत्र संदेशस्याश्वासहेतुत्वेन संदेशशब्दाभिलपनीयकाव्यभाग आश्वासशब्देन व्यवहृतः इति समाप्त इत्यर्थः। इतिशब्दस्य प्रकारवाचित्वाभिसन्धौ तु इति एवंप्रकारेण समाप्त इति शेषः। अत्र कवितार्किकसिंहस्येत्यत्रोक्तरीत्या सङ्करः कवितार्किकसिंहत्वं प्रति सर्वतन्त्रस्वतन्त्रत्वस्य तत्प्रति वेदान्ताचार्यत्वं प्रति च श्रीमद्वेङ्कटनाथत्वस्य च हेतुत्वात्काव्यलिङ्गं वृत्त्यनुप्रासश्चेत्येतेषामेकवाचकानुप्रवेशसङ्करः वेदान्ताचार्यस्येत्यत्रोक्तरीत्या उपमा व्यज्यते॥

हंससंदेश इत्यत्र सुब्वैचित्र्यात्सौशब्द्याख्यो गुणः “सुपां तिङां च व्युत्पत्तिस्सौशब्द्यमिति कथ्यते” इति लक्षणात्। एवमुत्तरत्रापि द्रष्टव्यमिति सर्वमनवद्यम् ॥—॥ सकलमुनिहृदययोज्यं सीताभ्रूभङ्गसंततनियोज्यम्। तन्मनुकुलसाम्राज्यं मन्मनसि विभातु निखिलसुरपूज्यम् ॥ १ ॥ कानपि कुशलारम्भान्कलये निर्धूतनतजनस्तम्भान्। तोतारम्बाडिम्भान्धूताखिलविमतकथकसंरम्भान् ॥ २ ॥

इति श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीमत्कविकथककण्ठीरवचरणनळिनयुगळविन्यस्तसमस्तात्मभर श्रीमद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीमद्ब्रह्मतन्त्रपरकालदिव्यास्थानमूर्धाभिषिक्त श्रीमच्छ्रीनिवासब्रह्मतन्त्रपरकालसंयमिसार्वभौमकरुणाकटाक्षवीक्षितस्य, तत्कृपासमधिगतनिगमान्तद्वितयतात्पर्यस्य तादृश श्रीमच्छ्रीनिवासदेशिकेन्द्रब्रह्मतन्त्रपरकालगुरुवरचरणारविन्दसमर्पितात्मभरस्य तादृश श्रीश्रीरङ्गनाथब्रह्मतन्त्रपरकालमुनिवरकृपासंप्राप्तमोक्षाश्रमस्य श्रीमद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदोन्मत्ततत्तद्राजमण्डलखण्डनशौण्डलोकैकवीरयदुकुलपयःपारावारकलानिधिशङ्खचक्राङ्कुशकुठारमकरमत्स्याद्यनेककनकमयबिरुदाङ्कितश्रीमत्कर्णाटमहीमण्डलमण्डनायमानमहीशूरपुरवरमध्यविद्योतमान सर्वतोभद्रदिव्यरत्नसिंहासनाधीश्वर श्रीमच्चामराजेन्द्रसार्वभौमसंततिसंततदेशिकस्य श्री श्रीकृष्णब्रह्मतन्त्रपरकालयतीन्द्रस्य कृतिषु

श्रीहंससन्देशव्याख्यायां रसास्वादिन्याख्यायां

प्रथम आश्वासः.



शुभमस्तु.

श्रीहयवदनपरब्रह्मणे नमोनमः.

# द्वितीयाश्वासप्रारम्भः.

प्रमदाय जनकनेतुस्तनयाया जलधिमध्यकृतसेतुः । हंसान्वयमणिकेतुर्हरति मनो नश्शुभाभ्युदयहेतुः ॥ १ ॥ विधुता विद्याविद्या वेदाञ्चलदेशिकाभिधा हृद्या । कल्याणगुणनिषद्या कलयतु नः कुशलमखिलमनवद्या ॥ २ ॥ पूर्वस्मिन्नाश्वासे लङ्कापर्यन्तं मार्गमुपदिश्याथास्मिन्नाश्वासे लङ्कायां हंसस्य कर्तव्यं विवक्षुस्तावत्पूर्वाश्वासान्ते "तस्मिन्दृश्या तदनु भवतश्चारुसौधावदाता लङ्का" इत्युपात्तां तामेव लङ्कां वर्णयन्विशिनष्टि चतुर्भिः श्लोकैर्दाशरथिः—

**लीलाखेलं ललितगमनाश्चारुनादं सशिञ्जाः**
**भल्लाक्षं त्वां स्मरशरदृशो गौरमापाण्डुराङ्ग्यः**
**(ङ्गाः) ।**
**मुग्धालापं मधुरवचसो मानसार्हं मनोज्ञाः**
**यत्रानीतास्सुरयुवतयो रञ्जयेयुस्समक्षम् ॥ १ ॥**

लीलेति ॥ ललितं "सुकुमाराङ्गविन्यासो ललितं परिकीर्त्यते" इत्युक्तलक्षणः "पदन्यासक्रीडारणितमणिमञ्जीररशनम्" इत्याद्युक्त-

प्रकारो गात्रानुभावविशेषः, तद्युक्तं गमनं यासां तास्तथोक्ताः स-शिञ्जाः भूषणनिनादसहिताः "भूषणानां तु शिञ्जितम्" इत्यमरः। स्मरशराः[1] कन्दर्पसायका इव दृशो यासां तास्तथोक्ताः अर-विन्दसुन्दरनयनाः कटाक्षवीक्षणेनैव मनांस्यपि मुनिबृन्दानां भिन्दा-ना इति भावः॥ आपाण्डुराणि विरहातिशयेन समन्ततो गौराणि अङ्गानि यासां तास्तथोक्ताः "अङ्गगात्रकण्ठेभ्यो वक्तव्यः" इति ङीष्, एतच्चानुक्तसमुच्चायकेन "नासिकोदरोष्ठ" इति सूत्रस्थच-कारेण संग्राह्यमिति केचित्॥ भाष्याद्यनुक्तत्वादप्रमाणमिति प्रा-माणिकाः। आपाण्डुराङ्गा इति पाठस्तु स्वच्छः मधुराणि अमृत-वदास्वादनीयानि वचांसि सल्लापाः यासां तास्तथोक्ताः अनेन वा-

श्रीहयवदनपरब्रह्मणे नमः.

[1] स्मरशराः कन्दर्पसायका इव दृशो यासां ता इति रसास्वादिनी॥ यत्तु—स्मरशरा दृशो लोचनान्ता यासांताः स्मरशरदृशः "पक्ष्मलदृशां दृशां कोणो बाणः" इत्युक्तेरिति—तन्न. दृक्पदस्य दृगन्तपरत्वे लक्षणापत्तेः। स्म-रशरदृश इत्यस्य भल्लाक्षमित्येतदुपमागर्भविशेषणप्रतिबिम्बताभङ्गेन प्रक्रमभङ्गा-पत्तेश्च॥ एतेन—स्मरशरत्वस्य चूतादिसाधारणत्वात् हर्षणरोचनद्रावणशोषण-मारणानीत्युक्तबाणपञ्चकसाधारण्याश्च स्मरशरा अरविन्दानीव दृशो यासामिति न व्याख्यातम्—इत्यप्यसमञ्जसमिति व्यक्तीकृतम्॥ अरविन्दमिव वदनमि-त्यादौ अरविन्दत्वेन रूपेण परिम्लानासुरभिपरिहारेणारविन्दविशेषस्यैवोपमान-तायाः "वनराजिमिव पाण्डुश्यामलवलीलतालंकृतमध्याम्" इति कादम्बरीवा-क्यादिषु लवलीलतायुक्ताया एव वनराजेरुपमानतायाश्च प्रत्ययवदत्रापि स्मर-शरत्वेन रूपेणारविन्दानामेव विवक्षाबलादुपमानताप्रत्ययोपपत्तेः॥ तस्मात्स्वरस-तममाचार्यविरचितव्याख्यानमुल्लङ्घ्य दृक्पदलक्षणाप्रक्रमभङ्गयोरप्यङ्गीकारेण व्या-

गनुभावसंपत्तिस्सूचिता ॥ मनोज्ञाः मनोहरदर्शनाः अनेनालम्बनगुणाः रूपलावण्यादयस्सूचिताः । यद्वा—मनोज्ञाः इङ्गितज्ञा इत्यर्थः । अनेन "आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् । गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः" इत्युक्तरीत्या चातुर्यातिशयस्सूच्यते ॥ यत्र लङ्कायां आनीताः रावणेन प्रापिताः यामानीता इति यावत् नयतेर्द्विकर्मकत्वेऽपि गुणकर्मणोऽधिकरणत्वविवक्षया सप्तम्यास्त्रलिति केचित् । वस्तुतस्तु—आनीताः रावणेनाहृताः यत्र स्थिता इति योजना स्वारसिकी यत्र रञ्जयेयुरिति वा । सुराणां युवतयः तरुण्यः "यूनस्तिः" इति तिप्रत्ययः । खेला गतिः खेलतेश्चलनार्थकाद्भौवादिकात् "गुरोश्च हलः" इत्यप्रत्यये टाप् । लीलायुक्ता खे-

ख्यानमसमंजसमेवेति सुधियो विदांकुर्वन्तु ॥ एतेन भल्लाक्षमित्यत्र "भल्लात्मकाक्षिमन्तमिति च प्रतीयते" इत्यनेन अनुपयुक्तायाः बाधितार्थप्रतीतेः कथनमपि परास्तम् ॥ न च स्मरशरा दृशो यासामित्यर्थकस्मरशरदृश इत्येतत्प्रतिबिम्बतोपपत्तय एव तथाप्रतीतिर्बाधिताऽप्युपयुज्यत इति वाच्यम् ॥ एवं सति भल्लाविवाक्षिणी यस्येत्येतदर्थकभल्लाक्षमित्येतत्प्रतिबिम्बतोपपत्तये स्मरशरा इव दृशो यासामिति प्रतीतेरबाधितायाः परित्यागानौचित्यात् ॥ वस्तुतस्तु—रसास्वादिन्यां "स्मरशराः कन्दर्पसायका इव दृशो यासां इत्येव विवृतम् । स्मरशरोपमा च दृशां कविभिर्निबद्धा । यथा—शिला सम्यग्धौतोज्ज्वलधवलधारापरिसरानिमानन्तश्श्यामानिव विषमबाणस्य विशिखान् । दृढप्रज्ञावर्माण्यपि हृदयमर्माणि रुजतः कटाक्षानेतस्या मुनिरपि न सोढुं प्रभवति ॥ इत्यादौ ॥ अत एव अरविन्दसुन्दरनयनाः कटाक्षवीक्षणेनैव . . . मनांसि मुनिबृन्दानामपि भिंदाना इति भाव इति मुनिहृदयभेदकत्वं साधारणधर्मतया विवृतमाचार्यैः तत्रारविन्दोपमापरत्वदूषणमनुक्तोपालम्भ एवेति ॥ १ ॥

ला गतिर्यस्य तं तथोक्तं, लीलया खेलतीति लीलाखेलः तं तथोक्तमिति वा "कर्मण्यण्" सविलासगमनमित्यर्थः ॥ लीलासुभगमिति व्याख्यानं तु विवक्षितसुरललनासंबन्धिललितगमनताप्रतिद्वन्द्वित्ववर्णनाननुगुणत्वादुदासितव्यम् । चारुः श्रवणसुभगो नादो ध्वनिर्यस्य तं तथोक्तम् । भल्लौ बाणविशेषाविवाक्षिणी लोचने यस्य तं तथोक्तं "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच् । "राजहंसस्तु भल्लाक्षो मराळो वाटराटकः" इत्युत्पलमालायां, "भो भोयि भल्लाक्ष भल्लाक्ष" इति छान्दोग्ये प्रयोगश्च । गौरं पाण्डुरवर्णं मुग्धाः मनोहराः आलापाः प्रियोक्तयो यस्य तं तथोक्तं "आलापस्तु प्रियोक्तिस्स्यात्" इति लक्षणं "मुग्धस्सुन्दरमूढयोः" इति विश्वः ॥ मानसस्य मनसः अर्हं योग्यं मनोहरमिति यावत् । परहृदयाभिज्ञमिति वा मानससरोऽर्हमिति तु वास्तवार्थः । "मानसं सरसि स्वान्ते" इति मेदिनी । समक्षं प्रत्यक्षगतं "प्रतिपरसमनुभ्योऽक्ष्णः" इत्यव्ययीभावे टचि अर्शआद्यजन्तोऽयम् । त्वां रञ्जयेयुः आनन्दयेयुः अनुरक्तं कुर्युरिति वा । यद्वा—त्वां समक्षमिति योजना अक्ष्णस्समं समक्षं रञ्जयेयुः दर्शनेन रञ्जयेयुः कटाक्षप्रसरैः रञ्जितं वर्णान्तरवन्तं कुर्युरित्यपि गम्यते ॥ यत्र रञ्जयेयुः सा लङ्का दृश्येति पूर्वाश्वासान्तिमश्लोकेनान्वयः । एवमुत्तरश्लोकत्रयेऽपि बोध्यम् । अत्र भल्लाक्षं, स्मरशरदृश इत्युभयत्रापि लुप्तोपमा ॥ उपमानोपमेय भूतसुरयुवतिराजहंसधर्माणां ललितगमनादीनां यथासङ्ख्यमन्योन्यसादृश्यप्रतीतेस्तासां तस्य च परस्परसादृश्यं गम्यत इति बिम्बप्रति-

बिम्बभावेनोपमाविशेषो व्यज्यते ॥ तेन चानुरूपवस्तुवर्णनात्मकस्समालङ्कारो व्यज्यते ॥ रञ्जनस्यान्योन्यसादृश्यहेतुकत्वात्काव्यालिङ्गभेदः ॥ रञ्जयेयुरित्यनेन हंसस्य स्वपाण्डुरिमत्यजनपूर्वकललनाकटाक्षनीलिमादिग्रहोक्तेस्तद्गुणालङ्कारः ॥ स च रञ्जयेयुरिति पदवाच्यवर्णान्तरकरणानन्दनरूपार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणित इति सङ्करः । भूयसीभिस्सुरयुवतिभिस्तुल्यवृत्तितयाऽनुरञ्जितत्ववर्णनाद्राजहंसे तदनुरूपदक्षिणनायकवृत्तान्तः प्रतीयत इति समासोक्तिश्चेत्येतेषां यथायोगं संसृष्टिसङ्करौ द्रष्टव्यौ बुद्धिमद्भिः। अस्मिन् श्लोके प्रतिपादितस्यार्थस्य "विद्युत्वन्तं ललितवनितास्सेन्द्रचापं सचित्रास्संगीताय प्रहतमुरजास्स्निग्धगम्भीरघोषम् ॥ अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः" इति मेघसन्देशद्वितीयसर्गादिमश्लोकच्छायाकारणकत्वात्समाधिर्नाम गुणः ॥ यथोक्तं वामनेन द्वाभ्यां सूत्राभ्यां "अर्थदृष्टिस्समाधिः । अर्थो द्विविधोऽयोनिरन्यच्छायायोनिर्वा" इति ॥ अनयोरर्थस्तद्वृत्तावेवं विवृतः—"अर्थस्य दर्शनं दृष्टिस्समाधानकारणत्वात्समाधिः ॥ अवहितं हि चित्तमर्थान्पश्यतीत्युक्तं पुरस्तात् यस्यार्थस्य दर्शनं समाधिस्सोऽर्थो द्विविधः अयोनिरन्यच्छायायोनिर्वेति ॥ अयोनिरनन्यकारणः अवधानमात्रकारण इत्यर्थः ॥ अन्यस्य काव्यस्य छाया अन्यच्छाया तद्योनिर्वा" इति ॥ एवमन्यत्राप्यूह्यम् ॥ १ ॥

पूर्वस्मिन् श्लोके यत्रानीतास्सुरयुवतय इत्युक्तं न केवलं सा-

मान्यास्सुरयुवतय एव रावणेन तत्रावरुद्धाः अपि तु लोकपालावरोधा अपीति तद्वैभवमभिवर्णयंस्तामेव विशिनष्टि—

**उग्रैश्शापैरुपहतिभिया रक्षसा दूरमुक्ताः**
**दग्धुं योग्या हुतवहमपि त्वत्प्रियावर्णशुद्धाः ।**
**उत्पश्यन्तो जनकतनयातेजसैव स्वरक्षां**
**रोधं यस्यामनुविदधते लोकपालावरोधाः ॥२॥**

उग्रैरिति ॥ उग्रैश्शापैः "पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम्। चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ सा प्रसह्य मया भुक्ता कृता विवसना ततः । स्वयंभुभवनं प्राप्ता लोलिता नळिनी यथा ॥ तच्च तस्य तदा मन्ये ज्ञातमासीन्महात्मनः । अथ संकुपितो देवो मामिदं वाक्यमब्रवीत् ॥ अद्य प्रभृति यामन्यां बलान्नारीं गमिष्यसि । तदा ते शतधा मूर्धा फलिष्यति न संशयः" इति पुञ्जिकस्थलाधर्षणानन्तरं "अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता । तस्मात्स युवतीमन्यां नाकामामुपयास्यति ॥ यदा ह्यकामां कामार्तो धर्षयिष्यति योषितम् । मूर्धा तु सप्तधा तस्य शकलीभविता तदा" इति रम्भाधर्षणानन्तरं च पितामहेन नलकूबरादिभिश्च दत्तैरतिभयानकैराक्रोशवचनैः "शप आक्रोशे" इत्यस्मात्करणे घञ् "शापश्शपथ आक्रोशे" इति विश्वः ॥ हेतौ तृतीया । उपहतिः क्षतिः स्वनाशः तस्मात् या भीः भीतिः तया, पितामहादिदत्तशापहेतुकमूर्धफल-

नाद्युपघातभयादित्यर्थः ॥ "उपहतिभिया दोषभीत्या" इति व्याख्यानं तु नातिसुन्दरम्, न हि शापैर्दोष आधीयते ॥ किं त्वात्मनाश एव, उपहतिभियेत्यत्र "भयभीतभीतिभीभिरिति वाच्यम्" इत्यनेन पञ्चमीसमासः ॥ रक्षसा रावणेन, दूरमुक्ताः अतिमात्रत्यक्ता इत्यर्थः । दूरं दूरेण दूरे वा मुक्ता इति समासः दूरशब्दात् "दूरान्तिकार्थेभ्यो द्वितीया च, सप्तम्यधिकरणे च" इत्याभ्यां द्वितीया, तृतीया, सप्तमी वा । ततः द्वितीयेति, तृतीयेति, सप्तमीति वा योगविभागात्समासः । सुप्सुपेति वा "कर्तृकरणे कृता बहुळम्" इत्यत्र बहुळग्रहणेन वा यथायथं समासः । बहुळग्रहणात्क्वचिद्विभक्त्यन्तरस्यापि कृदन्तेन समासो भवतीत्यवोचामाधस्तात् ॥ यद्वा—दूरमिति क्रियाविशेषणं, तस्य मुक्ता इत्यनेन सुप्सुपेति समासः, न तु "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इत्यनेन पञ्चमीसमासः । तथा सति "पञ्चम्याः स्तोकादिभ्यः" इत्यलुगापत्तेः । बलादपहृतेष्वपि लोकपालावरोधेषु शापभयादस्य क्लीबतुल्यतयैवावस्थानमिति द्योतयितुं रक्षश्शब्दनिर्देशः "यातुधानः पुण्यजनो नैरृतो यातुरक्षसी" इत्यमरः ॥ न केवलं पितामहादिशापप्रभावेणैवैता दूरमुक्ताः अपि त्वेतासामपि प्रभावस्तादृश इत्यभिप्रयन्नाह—दग्धुमिति ॥ हुतवहं सकलचराचरदहनोद्दण्डतेजसं जातवेदसमपि दग्धुं भस्मीकर्तुं योग्याः अर्हाः "तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि । अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति" इत्युक्तरीत्या सीतेव दहनमपि दग्धुं शा-

क्ताः किमुत तद्रक्षोमात्रमिति भावः । वहतीति वहः पचाद्यच् ॥ हुतस्य वह इति षष्ठीसमासः, न तु हुतं वहतीति । तथा सति कर्मण्यणः प्रसङ्गाद्धुतवाह इति स्यात् ॥ यद्वा—उग्रैश्शापैरुपहतिभिया "इदं त्वसदृशं कर्म परदाराभिमर्शनम् । यस्मादेष परक्यासु रमते राक्षसाधमः ॥ तस्माद्वै स्त्रीकृतेनैव प्राप्स्यते दुर्मतिर्वधम् । शप्तः स्त्रीभिस्स तु समं हतौजा इव निष्प्रभः ॥ पतिव्रताभिस्साध्वीभिर्बभूव विमना इव" इत्युत्तरश्रीरामायणोक्तरीत्या तदीयशापोपहतिभयेनैव दूरमुक्ता इत्यर्थः ॥ ननु का हि नाम शक्तिस्तेषां महाप्रभावं दशाननमपि शप्तुमित्यत आह—दग्धुं योग्या इति ॥ हुतवहं निरङ्कुशनिखिललोकदाहशक्ति पवित्रतमं लोकपालमपि दग्धुं योग्याः किं पुनरेतदल्पतेजश्शक्तिकमकृत्यशतमलीमसं रक्षोमात्रमिति भावः ॥ तत्र हेतुमाह—त्वत्प्रियावर्णशुद्धा इति ॥ त्वत्प्रियायाः राजहंस्याः, वर्ण इव शुद्धाः "उपमानानि सामान्यवचनैः" इति समासः । हंसीवर्णे शुद्धत्वं विशदत्वं लोकपालावरोधेषु तु पातिव्रत्यप्रयुक्तं नैर्मल्यमिति समानधर्मत्वमत्र श्लेषकृतं वेदितव्यं "शुद्धं स्यात्त्रिषु केवले । निर्दोषे च पवित्रे च" इति मेदिनी ॥ त्वया तेष्वादरातिशयः कार्य इत्यभिप्रायेण त्वत्प्रियावर्णशुद्धा इत्युक्तिः । [1] केचित्तु—कान्तविरहात्त्वत्प्रियावच्छु-

[1] केचित्तु कान्तविरहात्त्वत्प्रियावच्छुद्धाः . . . इति व्याचक्षते ॥ तन्नातीव हृदयङ्गमम् . . . अनपेक्षितविरहपाण्डिमवर्णनस्यास्वरसत्वात् इति रसास्वादिनी ॥ यत्तु—नात्र विरहपाण्डिमाऽभिप्रेतः । तथा सति त्वत्प्रि-

द्धवर्णाः "वाऽऽहिताग्न्यादिषु' इति निष्ठायाः परनिपातः" इति व्याचक्षते तन्नातीव हृदयंगमम्, अपेक्षितहुतवहदाहक्षमताहेतुभूतशुद्ध्यतिशयप्रतिपादनस्यैव स्वारसिकतयाऽनपेक्षितविरहपाण्डिमवर्णनस्यास्वरसत्वात् ॥ ननु—तर्हीदृशप्रभाववत्त्वे स्वयमेव रक्षो निगृह्य दिवमुत्पतितुं क्षमाणां तेषां कुतस्तत्र निरोध इत्यत्राह—उत्पश्यन्त इति ॥ जनकतनयायाः सीतायाः "जनकस्य सुता साध्वी सीता भर्तृहिते रता" इत्यादिभिः प्रख्यापितपातिव्रत्यायाः "असंदेशात्तु रामस्य तपसश्चानुपालनात्। न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा ॥ न तदग्निशिखा कुर्यात्संस्पृष्टा पाणिना सती। जनकस्यात्मजा कुर्याद्यत्क्रोधकलुषीकृता ॥ निमित्तमात्रं रामस्तु वधे तस्य भविष्यति" इत्याद्युक्तमहाप्रभावायाश्चेति भावः। तेजसैव "सीतायास्तेजसा दग्धाम्" इत्युक्तरीत्या लङ्कैश्वर्यभस्मीकरणदक्षिणेन प्रभावेणैव न तु स्वतेजसेति भावः। स्वेषां आत्मनां रक्षां अक्षतपातिव्रत्यतया पुनस्स्ववल्लभावाप्तिरूपां रक्षां उत्पश्यन्तः उत्प्रेक्षमाणा इत्यर्थः ॥ स्वप्रभावेणैव ततो मुक्तत्वे "कामं त्वमसि पर्याप्तो निहन्तुं सर्वराक्षसान्। राघवस्य यशो हीयेत्त्वया शस्तै-

---

याशुद्धवर्णा इति वक्तव्यं स्यात् ॥ अत एव लक्ष्मिया शुद्धा इत्यनुक्त्वा वर्णपर्यन्तानुधावनमिति हेत्वन्तरेण तत्पक्षखण्डनम्—तन्न. लक्ष्मिया वर्णशुद्धा इत्युक्तावप्यत्र वर्णपदेन विरहपाण्डिम्नो ग्रहणे अन्वयानुपपत्त्यादेरभावात् विरहपाण्डिमविवक्षायां लक्ष्मिया शुद्धवर्णा इत्येव वक्तव्यं स्यादित्यापादनासङ्गतेः ॥ अत एवेत्युपष्टंभकमप्यसंबद्धम्। विरहपाण्डिम्नोऽविवक्षायां यया रीत्या वर्णपदसार्थक्यं तयैव रीत्या तद्विवक्षायामपि तदुपपादनसंभवात् ॥ १ ॥

स्तु राक्षसैः" इत्युक्तप्रक्रियया सीताप्रभावयशसोरपकर्षस्संभवेदिति तत्प्रभावेणैव स्वरक्षणं संभावयमाना इति भावः ॥ अनेन तेषां स्वाधीनस्वार्थकर्तृत्वादिवैधुर्यलक्षणं पारतन्त्र्यं द्योतितम् । न हि नाथवतां स्वकार्यं स्वयमारम्भणीयं भवति ॥ यथोच्यते श्रीमन्महाभारते—"ये नाथवन्तो हि भवन्ति लोके ते नात्मकार्याणि समारभन्ते । तेषां हि कार्येषु भवन्ति नाथाश्शैब्यादयो राम यथा ययातेः" इति ॥ यद्वा—"प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा । अलमेषा परित्रातुं राक्षस्यो महतो भयात्" इत्युक्तरीत्या प्रणिपतनमात्रेण प्रसन्नहृदया निरवधिकप्रातिकूल्यविधायिनीर्यातुधानीरपि रक्षितुं क्षमा निसर्गादेवानुकूल्यैकरसानानन्यशरणानाश्रितानस्मानप्येषैव रक्षिष्यति नास्माभिर्विधेयं नाम किञ्चिदप्यस्तीति तत्तेजसैव स्वरक्षणमुत्प्रेक्षमाणा इति भावः ॥ तेषामीदृशानुकूल्यैकरसत्वं च "तां तर्ज्यमानां संप्रेक्ष्य राक्षसेन्द्रेण जानकीम् । देवगन्धर्वकन्यास्ता विषेदुर्विकृतेक्षणाः ॥ ओष्ठप्रकारैरपरा वक्त्रनेत्रैस्तथाऽमराः । सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा" इत्यादौ स्पष्टम् ॥ लोकपालानामिन्द्रादीनां अवरोधाः अवरुध्यन्तेऽत्र राजस्त्रिय इत्यवरोधाः अन्तःपुराणि "करणाधिकरणयोश्च" इति घञ् "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च" इत्यमर ॥ शुद्धान्तललना इति यावत् । यस्यां लङ्कायां रोधं निरोधं, अनुविदधते अनुसरन्ति विडम्बयन्तीति यावत् ॥ वस्तुतस्तेषां महाप्रभाववत्त्वेन स्वस्वभर्तृलोकपाला-

वरोधातिरिक्तप्रदेशेष्वन्यैर्दुर्निरोधत्वाछङ्कायां रोधो विडम्बनमात्रमेवेति भावः ॥ यद्वा—सीताप्रभावेण रावणवधोऽवश्यंभावीति तत एव स्वरक्षां संभावयमानास्तत्कालप्रतीक्षया तद्वत्स्वयमपि रोधमनुवर्तन्त इति भावः ॥ लोकपालावरोधा अपि यत्र रोधमनुविदधत इत्याश्चर्यमेतदिति च भावः ॥ अत्रावरोधशब्दस्य तात्स्थ्यात् स्त्रीषु लक्षणा । दृश्यते हि तात्स्थ्यादपि लक्षणा ॥ तथा च—"पुंयोगादाख्यायाम्" इति सूत्रे भाष्ये गोपीत्यादौ गोपसंबन्धिस्त्रीत्वेन लक्षणायां "तस्येदम्" इति शास्त्रेण तादृशार्थे अणूप्रत्ययान्तस्यैव तादृशवाक्यस्यैव वा साधुत्वनियमादसाधुत्वापत्तिरिति दूषणमभिसन्धाय "नावश्यमयमेवाभिसंबन्धो भवति 'तस्येदम्' इति । किं तु तन्मूलकस्सोऽयमित्यप्यभिसंबन्धोऽस्ति" इत्युक्त्वा "चतुर्भिः प्रकारैस्तस्मिन् स इत्येतद्भवति तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्यात् मञ्चा हसन्ति सिंहो माणवकः गङ्गायां घोषः यष्टीः प्रवेशय" इत्युक्तं सोऽयमित्यपीत्यादेस्सोऽयमित्यपि विशेषणविशेष्यभावेऽस्तीत्यर्थः ॥ गौतमोऽप्याह—"सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणबालककटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावेऽपि तदुपचारः" इति "तस्य भावस्तद्धर्मः तदभावेऽपि तदुपचारः तच्छब्दव्यवहार इत्यर्थः । स च तद्धर्मारोपेण । आरोपनिमित्तानि च सहचरणादीनि; यष्टीः प्रवेशय; मञ्चाः क्रोशन्ति; वीरणेष्वास्ते; अयं राजा यमः; प्रस्थस्सक्तुः; चन्दनं तुला; गङ्गायां घोषः; कृष्णश्शकटः; अन्नं प्राणाः; अयं

कुलस्य राजा, इत्युदाहरणानि क्रमेण यष्टित्वारोपो ब्राह्मणे साहचर्यात्। मञ्चत्वारोपो बालेषु तात्स्थ्यात्। कटेषु वीरणत्वारोपस्तादर्थ्यात्। राज्ञि यमत्वारोपो वृत्तात्। सक्तौ प्रस्थत्वारोपस्तन्मानकत्वात्। चन्दने तुलात्वारोपस्तद्धार्यत्वात्। गङ्गायां तीरधर्माधारत्वारोपस्तत्सामीप्यात्। कृष्णगुणयोगाच्छकटे तद्धर्मकृष्णत्वारोपः। प्राणसाधनत्वादन्ने प्राणत्वारोपः। कुलाधिपत्वेन पुरुषे राजत्वारोपः" इति तद्व्याख्यातारः॥ अत्र उग्रशापोपहतिभयेन दूरमुक्ततां प्रति हुतवहमपि दग्धुं योग्या इत्यस्य तत्प्रति त्वत्प्रियावर्णशुद्धा इत्यस्य च हेतुत्वादन्योन्यसापेक्षं काव्यलिङ्गद्वयं, जनकतनया[1] तेजसैव स्वरक्षोत्प्रेक्षणस्य रोधानुविधानं प्रति हेतुत्वादन्यत्काव्यलिङ्गं, महाप्रभावा लोकपालावरोधा अप्यत्र रोधमनुविदधत इत्यननुरूपवस्तुघटनात्मको विषमालङ्कारश्चेत्येते संसृज्यन्ते। हुतवहदाहयोग्यत्वासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्तेस्त्वत्प्रियावर्णशुद्धा इति लुप्तोपमायाश्च प्राथमिककाव्यलिङ्गाभ्यामेकवाचकानुप्रवेशसङ्करः॥ अन्यैस्सहानयोस्संसृष्टिरिति विभावनीयम्॥ २॥

---

[1] जनकतयातेजसैव स्वरक्षणोत्प्रेक्षणस्य रोधानुविधानं प्रति हेतुत्वादन्यत्काव्यलिङ्गमिति रसास्वादिनी॥ यत्तु—उत्पश्यन्त इत्यन्तार्थं प्रति दग्धुं योग्या इत्यस्य हेतुत्वादपरं काव्यलिङ्गमिति तन्न. जनकतनयातेजःकरणकस्वकर्मकरक्षणप्रतीक्षायां हुतवहकर्मकदाहयोग्यतायाः कथञ्चिदप्यहेतुत्वात्। "उत्पश्यन्तः उत्प्रेक्षमाणाः स्वतेजसैव स्वरक्षायां सीतातेजोतिशयस्यापकर्षस्स्यादिति भावः" इत्येवं सीतातेजोपकर्षशङ्काया एव तत्र हेतुतायास्स्वयमपि विवृतत्वाच्च॥ २॥

अथामरनगरीपरिष्कारतिरस्कारिवैभववत्तया तामेव पुनर्विशिनष्टि—

**अध्यासीना बहुमणिमयं तुङ्गशृङ्गं त्रिकूटं (सुवेलं)**
**दिक्पालेषु प्रथितयशसा रक्षसा रक्ष्यमाणा ।**
**अग्रे मेरोरमरनगरीं या परिष्कारभूम्ना**
**त्वाहूयेव ध्वजपटमयानग्रहस्तान्धुनोति ॥ ३ ॥**

अधीति ॥ बहुमणिमयं नानाविधरत्नप्रचुरं प्राचुर्यार्थे मयट् "बहुगणवतुडतिसङ्ख्या" इति सङ्ख्यासंज्ञकस्य बहुशब्दस्य तद्धितार्थे प्राचुर्ये विवक्षिते "तद्धितार्थोत्तरपदसमाहारे च" इति मणिशब्देन समासः ॥ अन्यथा "दिक्सङ्ख्ये संज्ञायाम्" इति नियमादिह समासो न स्यात् ॥ बहुमणिमयमिति विशेषणं त्रिकूटस्य वक्ष्यमाणरत्नसानुसाधर्म्यलाभाय । तुङ्गशृङ्गं उच्चैश्शिखरं त्रिकूटं त्रिकूटाचलं अध्यासीना अधितिष्ठन्ती "शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशम्" इत्युपक्रम्य "निविष्टा तत्र शिखरे लङ्का रावणपालिता" इत्युक्तरीत्या उन्नततमे त्रिकूटशिखरे निविष्टेति यावत् ॥ "अधिशीङ्स्थाऽऽसाङ्कर्म" इत्यधिकरणस्य कर्मत्वे द्वितीया । त्रिकूटमिति पाठ एव स्वच्छः "लब्धसंस्थां त्रिकूटे" इत्युपक्रमानुगुण्यादुदाहृतरामायणवचनानुगुण्याच्च ॥ तुङ्गशृङ्गं सुवेलमिति पाठस्तथैव व्याख्यानं च पूर्वोक्तविरोधादुपेक्ष्यम् । तथैव पाठ इत्यभिमाने सुवेले लङ्काधिकरणत्वबाधात्सुवेलपदेन तत्समीपवृत्तिस्त्रिकूटो लक्ष्यते गङ्गापदेनेव तीरं तत्र गङ्गागतशैत्यपावनत्वादिप्रतीतिवत्

क्षिप्रसुगमत्वादिप्रतीतिरत्र फलं अनेन इतःपरमपि लङ्कां प्रति कियद्दूरं गन्तव्यं वेति हंसस्य सुदूरव्यायामश्रमसंभावना व्युदस्यते ॥ ननु—सुवेलमित्येव पाठेऽपि न लक्षणा कल्पनीया मुख्यार्थस्वीकारे बाधकाभावात्। तथाच—"ददृशुश्शिखरे तस्य" इति रामायणश्लोके "तस्मिन् दृश्या तदनु भवतः" इति पूर्वाश्वासान्तिमश्लोके च तच्छब्देन पूर्वप्रस्तुतस्य सुवेलस्यैव परामर्शस्स्वारसिको भवति नापि तत्र स्थितवत इत्याद्यध्याहारक्लेशोऽपीति चेन्नैवं "लब्धसंस्थां त्रिकूटे" इत्युपक्रमविरोधप्रसङ्गस्योक्तत्वात् भूयः प्रमाणाविरोधाभ्युपगमापेक्षया स्थितवत इत्याद्यध्याहारस्यादोषत्वाच्च ॥ न च तत्र त्रिकूटपदस्यैव सुवेले लक्षणा कुतो न कल्प्यतामिति वाच्यं फलाभावात्स्वायत्ते शब्दप्रयोगे सत्यपार्थकावाचकपदप्रयोगस्यानुचितत्वाल्लङ्कायास्त्रिकूटशिखरस्थताग्राहकाणामुदाहृतप्रमाणानां भूयस्तया तद्द्वयश्रीप्रसङ्गाद्भूयसामनुरोधस्यैव न्यायतया तदनुरोधेनात्रत्यसुवेलपदलक्षणाकल्पनाया एव युक्तत्वाच्च ॥ तस्मात्सुवेलमिति पाठे प्रामाणिके उक्तरीत्या लक्षणैव युक्तेति दिक् ॥ दिक्पालेषु इन्द्रादिषु प्रथितं प्रख्यातं यशो यस्य तेन तथोक्तेन "लोकपालो यमः पाशी श्रीदश्शक्रो भवानपि" इत्युक्तरीत्या इन्द्रादिषु स्वयमपि लोकपालत्वेन परिगणनयिनेति भावः ॥ अत एव "गुणोत्कृष्टैस्समीकृत्य वचोऽन्या तुल्ययोगिता" इत्युक्तलक्षणस्तुल्ययोगितालङ्कारो गम्यते। स चासंबन्धे संबन्धरूपयाऽतिशयोक्त्योत्तम्भित इति सङ्करः ॥ यद्वा—सकलदिक्पालविदितकीर्तिनेत्यर्थः ॥ अथवा—

नैरृतत्वेनास्यापि दिक्पालकतामभिसंधाय तेष्वपि प्रख्यातयशसेत्युक्तं अस्मिन्नर्थे दिक्पालेष्विति निर्धारणसप्तमी ॥ अनेन दिक्पालकान्तरापेक्षयाऽस्यैव कीर्तिमत्तातिशयस्सूचितः ॥ रक्षसा रावणेन रक्ष्यमाणा पाल्यमाना अनेन 'दिक्पालेषु[1] प्रथितयशसा' इति विपक्षगुणवर्णनेन भगवतो दाशरथेर्धीरोदात्तगुणोत्तरत्वं व्यज्यते ॥ यथा हि तल्लक्षणम्—"गम्भीरस्सारसंपन्नः कृपावानविकत्थनः । परकीयगुणग्राही धीरोदात्तो निगद्यते" इति ॥ एवमनसूयतया शत्रोरपि गुणप्रशंसनं रावणप्रथमावलोकनावसरे "प्रत्युवाच ततो रामो विभीषणमरिंदमः । अहो दीप्तो महातेजा रावणो राक्षसेश्वरः ॥ आदित्य इव दुष्प्रेक्षो रश्मिभिर्भाति रावणः । सुव्यक्तं लक्षये ह्यस्य रूपं तेजस्समावृतम् ॥ देवदानववीराणां वपु-

[1] दिक्पालेषु इत्यस्य यशःपदार्थेऽन्वयतात्पर्येण प्रथमं कंचन पक्षमभिधाय प्रथितपदार्थेऽन्वयतात्पर्येण "यद्वा सकलदिक्पालविदितकीर्तिनेत्यर्थः" इति पक्षमभिधाय रक्षःपदार्थेऽन्वयतात्पर्येण "अथवा नैरृतत्वेनास्यापि दिक्पालकतामभिसंधाय तेष्वपि प्रख्यातयशसेत्युक्तम् ॥ अस्मिन्नर्थे दिक्पालेष्विति निर्धारणसप्तमी" इत्युक्तं रसास्वादिन्याम् ॥ अत्र अथवेति वाकारोऽनास्थायाम् । रावणस्य नैरृतत्वमात्रेण दिक्पालत्वासंभवात् । अन्यथा दिक्पालसंख्यातिरेकप्रसङ्गात् ॥ दिक्पालान्तःपातकथनादपि निखिलदिक्पालविदितकीर्तित्वेन तेभ्योऽप्यतिशयवर्णन एव । यद्वेति कल्पाभिमते स्वारस्यातिशयात् ॥ यत्तु—"दिक्पालेषु अष्टदिक्पालकेषु इन्द्रादिषु निर्धारणे सप्तमी" इत्येवमन्ते आचार्योपदर्शितपक्षमात्रस्य अथवेत्यादेः प्रदर्शनम्—तत्तूपदर्शिततत्पक्षीयास्वारस्यानवबोधनिबन्धनं तत्र रसास्वादिन्यां प्रदर्शितपक्षेषु चरमत्वमात्रेण स्वारस्यातिशयभ्रान्तिनिबन्धनं चेति सुधियो विभावयन्तु ॥

नैवंविधं भवेत् । यादृशं राक्षसेन्द्रस्य वपुरेतत्प्रकाशते ॥ सर्वे पर्वतसङ्काशास्सर्वे परिघयोधिनः । सर्वे दीप्तायुधधरा योधाश्चास्य महौजसः ॥ भाति राक्षसराजोऽसौ प्रदीप्तैर्भीमविक्रमैः । भूतैः परिवृतस्तीक्ष्णैर्देहवद्भिरिवान्तकः" इत्यादौ स्पष्टम् । एवं महाप्रभावस्यापि रावणस्य पौरुषं "सुदुष्टो वाऽप्यदुष्टो वा किमेष रजनीचरः । सूक्ष्ममप्यहितं कर्तुं ममाशक्तः कथं च न ॥ पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर" इत्युक्तप्रभाववति स्वस्मिन्नकिंचित्करमिति द्योतयितुं रक्षसेति क्लीबतया निर्देशः ॥ "दिक्पालेषु प्रथितयशसा रक्षसा रक्ष्यमाणा" इत्यनेन "या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने । सा राक्षसगृहे सर्वा नित्यमेवानपायिनी ॥ या च राज्ञः कुबेरस्य यमस्य वरुणस्य च । तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह" इत्युक्तरीत्या सकलदिक्पालसंपत्समृद्धितुल्या ततोऽप्यतिशयिता वा लङ्कासंपत्समृद्धिरिति द्योत्यते ॥ एवंविधा या लङ्का परिष्कारस्य अलङ्कारस्य । "संपरिभ्यां करोतौ भूषणे" इति परेः परस्य करोतेस्सुटि इणः परत्वात् षत्वम् । भूम्ना बाहुल्येन तु बहुशब्दादिमनिच् तुशब्देन न केवलमस्याः पूर्वोक्तलोकपालान्तःपुरजनावरोधनप्रभाव एव किंतु परिष्कारसौभाग्यमप्यन्यादृशमिति द्योत्यते ॥ मेरोः रत्नसानोः अग्रे शिखरे स्थितामित्यध्याहारः अमरनगरीं अमरावतीं महेन्द्रेण रक्ष्यमाणामिति भावः ॥ आहूय स्पर्धयाऽऽकार्य 'स्पर्धायामाङः' इति सूत्रेणाङः परस्य ह्वयतेस्स्पर्धायां तङ-

नुशासनादीदृशार्थसिद्धिः 'अमरनगरीमाहूय स्पर्धां कृत्वा' इति व्याख्यानं त्वनन्वितत्वादुदासितव्यम् । ध्वजपटमयान् वैजयन्तीरूपान् । स्वार्थिको मयट् । अग्राणि च ते हस्ताश्च अग्रहस्ताः तान् हस्ताग्राणीत्यर्थः । अवयवावयविनोरग्रहस्तयोरभेदोपचारात्सामानाधिकरण्येन निर्देशः । यदसूत्रयद्वामनः—'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्' इति, गुणगुणिनोर्भेदाद्धस्ताग्रादयः अभेदादग्रहस्तादय इति तदर्थः । धुनोतीव[1] कंपयतीव 'धुञ् कम्पने' इत्यस्मात्तौदादिकात्कर्तरि लट् । आत्मना स्पर्धितुमशक्नुवतीममरावतीं वीक्ष्य धिक्के सौ-

[1] धुनोतीव कंपयतीव . . . हस्ताग्राधूननं च परावधीरणाभिव्यञ्जकोऽनुभावविशेषः इति रसास्वादिनी ॥ यत्तु—स्वारसिकमिममर्थमुपेक्ष्य "आस्य व्यादाय स्वपितीत्यादाविव पूर्वकालत्वाभावेऽपि आहूयेत्यत्र ल्यप् आह्वयमाना धुनोतीवेत्यर्थः ॥ धूननमत्र आह्वानचिह्नभूतं लोकप्रसिद्धं बोध्यमिति व्याख्यानम् तन्न. मुखं व्यादाय स्वपितीत्यादावपि पूर्वकालतायामेव क्त्वाप्रत्ययस्य भाष्य एव स्थापिततया पूर्वकालत्वाभावेऽपि क्त्वाप्रत्ययप्रवृत्तेर्भाष्यविरुद्धत्वात् ॥ स्पष्टं चेदं कौमुद्यामेव "विभाषा परेः" इति सूत्रे "कथं मुखं व्यादाय स्वपिति नेत्रे निमील्य हसतीति ॥ व्यादानसम्मीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यति" इति ॥ हस्ताग्राधूननस्याह्वानचिह्नत्वाभिधानमप्यसत् ॥ मुहुर्मुहुर्हस्ताग्राकुञ्चनस्यैव आह्वानचिह्नत्वात् । हस्ताग्रधूननस्य परनिष्कासनपरावधीरणादिचिह्नत्वेनैव प्रसिद्धत्वात् ॥ धूननस्यात्र परावधीरणाचिह्नत्वानाश्रयणे "ललनान्तराण्यवधीरयन्त्याः कस्याश्चित्प्रगल्भायाः वृत्तान्तः प्रतीयते" इत्यस्या रसास्वादिनीप्रदर्शितसमासोक्त्यनुवादपरस्वोक्तेरेवासंगत्यापत्तेश्च ॥ तस्मात् आह्वानानन्तर्यं परावधीरणानुभावत्वं च धूननस्येहाश्रित्यैव व्याख्यानं न्याय्यमाचार्यैः कृतमिति ध्येयम् ॥ ३ ॥

भाग्यविकत्थनं या मयाऽऽहूताऽपि नाभ्यागच्छसीति हस्ताग्राणि धुनोतीवेति भावः। हस्ताग्राधूननं च परावधीरणाभिव्यञ्जकोऽनुभावविशेषः ॥ अग्रहस्तानिति बहुवचनेन लङ्काया बहुबाहुशालिनिजाधीशदशाननानुरूप्यं द्योत्यते। अत्राध्यासीनेत्यादिविशेषणमहिम्ना स्त्रीलिङ्गस्वारस्येन च सौभाग्यसौन्दर्यवीरपत्नीत्वादिगर्वितस्वतुल्यललनान्तरावधीरयितृप्रगल्भप्रमदावृतान्तप्रतीतेस्समासोक्तिः। अनया चोन्नम्यमाना अग्रहस्तावधूननलक्षणक्रियास्वरूपोत्प्रेक्षा ध्वजपटेष्वग्रहस्तत्वरूपणरूपरूपकगर्भैवोन्नम्यते ॥ अत उक्तसमासोक्तेरुभयोपकारकत्वाद्रूपकोत्प्रेक्षयोरैककालिकत्वादन्योन्यापेक्षया चारुतातिशयतौल्याच्च समप्राधान्यसङ्कर इति भावनीयम् ॥ ३ ॥

पुनरपि तामेव लङ्कां विशिनष्टि—

**काले यस्यां व्यपगतघने त्वद्विहारोचितेऽस्मिन्**
**चन्द्रालोकैर्विलुलितधियां शर्वरीगर्वहासैः।**
**स्वर्गस्त्रीणां विरहजनितं बाष्पमुद्वेलयन्त्यः**
**निष्यन्दन्ते सलिलकणिकाश्चन्द्रकान्तस्थलीनाम् ॥ ४ ॥**

काल इति ॥ यस्यां लङ्कायां व्यपगताः घनाः यस्मिन् तथाभूते 'त्यक्त्वा नभस्तोयधराः प्रणष्टाः' इत्युक्तरीत्या निश्शेषविनष्टाम्बुदे अत एव तव राजहंसस्येत्यर्थः। विहारस्य क्रीडायाः उचिते अर्हे 'महानदीनां पुलिनोपयातैः क्रीडन्ति हंसास्सह चक्रवाकैः" इति

शरदागमस्य हंसविहारोचितत्वोक्तेः अस्मिन्काले शरत्काल इत्यर्थः। शर्वर्याः रजन्याः स्त्रीलिङ्गमहिम्ना नायिकात्वं प्रतीयते यो गर्वः वल्लभविश्लेषविक्लबलङ्कावरुद्धसुराङ्गनापेक्षयाऽऽत्मनश्चन्द्रवल्लभसंश्लेषसौभाग्यवत्ताप्रयुक्तोऽहङ्कारः तेन, ये हासाः तैरिव स्थितैरिति यावत् 'साधनं कृता' इति वार्तिकेन समासः। चन्द्रालोकैः ज्योत्स्नाभिरित्यर्थः। विलुलिता विक्षुभिता धीः मतिः यासां तास्तथोक्ताः विपूर्वकात् "लुड विलोडने" इत्यस्माद्गौवादिकात्कर्मणि क्तः। विलोडनं प्रतिघातः प्रतिहतचेतसामित्यर्थः। यद्वा—चन्द्रालोकैरेव शर्वरीगर्वहासैरिति व्यस्तरूपकं तैर्विलुलितधियां दुस्सहो हि सौभाग्यवत्तामत्तानां गर्वावहासो दीनैरिति भावः॥ स्वर्गस्त्रीणां त्रिदिवललनानां विरहेण स्ववल्लभविश्लेषेण जनितं उन्मिषितं बाष्पं ऊष्माणं तापमित्यर्थः॥ यद्वा—नयनसलिलमित्यर्थः। "बाष्पो नेत्रजलोष्मणोः" इति विश्वः। उद्गतो वेलायाः उद्वेलः "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः॥ उद्वेलंकुर्वत्यः उद्वेलयन्त्यः उद्वेलशब्दात्तत्करोतीति णिजन्ताच्छतरि ङीप्॥ लोके प्रवाहास्स्वसंसर्गेण प्रवाहान्तरमुद्वेलयन्ति इमास्सलिलकणिकास्तु दवीयस्य एव बाष्पप्रवाहमुद्वेलयन्तीत्याश्चर्यमेतदिति भावः। उद्दीपनातिशयेन मर्यादातीतं विदधानास्सत्य इत्यर्थः। चन्द्रस्योपलाश्चन्द्रकान्ता[1] इत्यस्व-

[1] चन्द्रस्योपलाश्चन्द्रकान्ता इत्यस्वपदविग्रहः" इति कान्तपदस्य वृत्तावेवोपलपरत्वनियमपक्षः प्रथमः॥ तादृशनियममनादृत्य स्वपदविग्रहपक्षो द्वितीयः॥ तदिदं पक्षद्वयमुपन्यस्य "वस्तुतस्तु—प्राथमिकपक्ष एव युक्त इति प्रतिभाति॥

पदविग्रहः । सूर्येन्दुपर्यायाद्यश्शब्दाच्चोत्तरपदीभूतस्यैव कान्तशब्दस्याश्मवाचित्वमिति सांप्रदायिकाः, अत एव 'कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्यायःपर्यायान्तशिलासु च " इति मेदिनीकोशश्च संगच्छते ॥ केचित्तु—कान्तं चारौ स्त्री तु योषित्प्रियङ्गावुपले च ना ॥ कान्तोऽश्मनि गृहे चारौ कान्ता तु फलिनीस्त्रियोः " इति रत्नमालाविश्वकोशावलम्बनेन उक्तपदेभ्योऽनुत्तरपदत्वेऽपि शिलावाचकत्वमङ्गीकृत्यास्वपदविग्रहे निर्बन्धं नाद्रियन्ते । वस्तुतस्तु—प्राथमिकपक्ष एव युक्त इति प्रतिभाति ॥ केवलकान्तशब्दस्य क्वचिदप्युपलविषये प्रामाणिकप्रयोगादर्शनात् । रत्नमालाविश्वकोशयोरप्युक्तरीत्या उत्तरपदीभूतकान्तशब्दार्थाभिधानतत्परतयाऽप्युपपत्तेः। चन्द्रकान्तानां इन्दुकान्ताख्यमणीनां

---

केवलकान्तशब्दस्य क्वचिदप्युपलविषये प्रामाणिकप्रयोगादर्शनात्" इत्यभिहितं रसास्वादिन्याम् ॥ यत्तु—अस्वपदविग्रहपक्षमुपन्यस्य "स्वपदविग्रहेऽपि न दोषः ॥ चन्द्रस्य कान्त इति वा चन्द्रः कान्तो यस्येति वा व्युत्पत्तिसंभवात् ॥ अत्र च कान्तपदमभीष्टार्थे स्वरसम्—इत्युक्तम्—तन्न. एवं सति कान्तपदस्य विश्वमेदिनीरत्नमालादिकोशेषु उपलपर्यायत्वाभिधानस्य वैफल्यप्रसङ्गात् ॥ केवलस्य कान्तपदस्य उपलार्थे क्वचिदप्यप्रयोगेण चन्द्रकान्तादिशब्दप्रयोगोपपादकतयैव तत्साफल्यस्य वाच्यतया तत्प्रयोगस्याप्यन्यथोपपादने तद्वैफल्यस्य स्पष्टत्वात् ॥ तस्मात् चन्द्रकान्तपदघटकं कान्तपदमुपलत्वावच्छिन्नवाचीत्येव स्वीकार्यम् । तद्वाचिता च कान्तपदस्य चन्द्रादिपदोत्तरवृत्तित्व एव ॥ "कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्यायःपर्यायान्तशिलासु च ॥" इति मेदिनीकोशाद्यनुसारादित्यस्वपदविग्रहपक्ष एव स्वीकार्यः प्रकारान्तरानुपपत्तेरिति ध्येयम् ॥ यत्तु—अत एव वामनेन क्लिष्टस्योदाहरणे

" अमृतांशुकरस्पर्शाद्यत्क्षरत्यमृतं क्षणात् । चन्द्रकान्तं तदाख्यातं दुर्लभं स्यात्कलौ युगे " इति स्कान्दोक्तलक्षणानां अत्र; प्रमाणे चन्द्रकान्तमिति क्लीबत्वमार्षम्; " कान्तस्सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च " इत्यमरसिंहेन पुल्लिङ्गशेषे उपलवाचिकान्तशब्दस्य परिगणनादुदाहृतमेदिन्यादिकोशाच्चास्य नित्यपुल्लिङ्गतायास्स्फुटत्वात् ॥ स्थल्यः अकृत्रिमप्रदेशाः तासां " जानपदकुण्डगोणस्थल " इत्यादिना स्थलशब्दादकृत्रिमार्थे ङीष् ॥ कणा एव कणिकाः अल्पार्थे अत्यन्तस्वार्थे वा कन् " क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते " इति स्त्रीलिङ्गता, सलिलानां अपां कणिकाः कणाः निष्यन्दन्ते

---

दक्षात्मजादयितवल्लभवेदिकानामित्यत्र दक्षात्मजास्ताराः तासां दयितश्चन्द्रः तस्य वल्लभाश्चन्द्रकान्ता इति व्याख्यातम् । इति स्वोक्तार्थे उपष्टम्भकप्रदर्शनं— तन्न. दोषोदाहरणपरेण तादृशवामनग्रन्थस्थसन्दर्भेण चन्द्रकान्तपदगतकान्तपदस्याभीष्टत्वावच्छिन्नवाचकत्वासिद्धेः ॥ अन्यथा उपदर्शितमेदिनीकोशासङ्गतिप्रसङ्गस्य दुर्वारत्वात् ॥ चन्द्रकान्तपदस्य चन्द्रोपलत्वावच्छिन्नवाचकत्वेऽपि दक्षात्मजादयितवल्लभत्वेन रूपेणोपलानुपलसाधारणेन चन्द्रोपलानां चन्द्रकान्तपदार्थभूतानां दक्षात्मजादयितवल्लभपदतः प्रतीतिविवक्षया हि दक्षात्मजेत्यादेः क्लिष्टोदाहरणता तत्र विवक्षिता वामनेन ॥ तथा सत्येव हि – सामान्यशक्तात्प्रकरणाद्यभावे विवक्षितविशेषस्य द्रागनुपस्थितेरर्थप्रतीतिविलम्बरूपं क्लिष्टत्वं नाम पददोषस्तत्र पदमादधाति ॥ यथा—अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः । सदृशं भासतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ इति काव्यप्रकाशोदाहृते पद्ये अत्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरिति विवृते ॥ न खल्वत्रैवं काव्यप्रकाशकृतविवरणेन अत्रिलोचनसम्भूतपदचन्द्रपदयोः तदुद्गमभासिपदकुमुदपदयोश्च पर्य्यायता सिद्ध्यति ॥ येन दक्षात्मजादयितवल्लभाः चन्द्रकान्ता इति वामन-

नितरां प्रस्रवन्ति 'स्यन्दू प्रस्रवणे' लट्, अत्र स्यन्दनस्याप्राणिकर्तृकत्वात् "अनुपर्यभिनिविभ्यस्स्यन्दतेरप्राणिषु" इति वैकल्पिकं षत्वम्। नीत्युपसर्गेण प्रस्रवणस्य निरवधिकत्वं द्योतितं सा लङ्का दृश्येति पूर्वेणान्वयः। चन्द्रकान्तस्थलीनामित्यत्र चन्द्रकान्तत्वविशेषितस्थलीशब्दस्त्रीलिङ्गमहिम्ना तासु चन्द्रप्रियललनात्वं सलिलकणिकास्वानन्दबाष्पत्वं च प्रतीयते॥ अयं भावः—प्रसन्नतमनिजप्रियकलानिधिसंश्लेषसुभगंभावुकशर्वरीगर्वहासत्वेन संभाव्यमानैः रूप्यमाणैर्वा चन्द्रालोकैः क्षुभितस्वान्तानां त्रिदिवकान्तानां प्रियविरहदीनतया प्रथमतरमेव जनितशोकबाष्पस्तादृशस्ववल्लभसुधा-

---

वृत्तिविवरणेनापि पर्यायतासिद्धिप्रसङ्गेन चन्द्रकान्तपदघटककान्तपदवल्लभपदयोरपि पर्यायता प्रसज्येत॥ किन्तु—चन्द्रतादितरचक्षुर्ज्योतिरादिसाधारणेन अत्रिलोचनसंभूतज्योतिष्ट्वेन चन्द्रमात्रस्य तादृशज्योतिरुद्गमभासित्वेन कुसुमान्तरसाधारणेन कुमुदमात्रस्य च प्रतीतिर्विवक्षितेत्येव तत्र क्लिष्टोदाहरणता॥ स्पष्टं चेदं प्रदीपोद्योतादौ॥ भवद्रीत्या तु चन्द्रकान्तपदाच्चन्द्राभीष्टत्वेन बोधे विवक्षिते दक्षात्मजादयितवल्लभपदादपि तेनैव रूपेण प्रतीतेः क्लिष्टोदाहरणता तत्र दुरुपपादा॥ उक्तं हि "यत्र तु विशेषणं नान्यसाधारणं तत्र न दोषः॥ यथा शतार्धपञ्चांशभुजो द्वादशार्धार्धलोचन इत्यत्र दशभुजत्वं त्रिलोचनत्वं च रावणशिवयोरेव" इत्युद्द्योतादौ॥ तस्मात् वामनसन्दर्भस्य स्वोक्तार्थे प्रतिकूलस्य तदुपष्टम्भकतया वर्णनं विस्मयावहमेव विदुषाम्॥ एतेन—अत एव च तारानाथेन चन्द्रः कान्तोऽभीष्टो यस्येति विगृह्य तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वमित्युक्तम्—इत्यप्ययुक्तं वेदितव्यम्। संप्रतिपन्नप्रामाणिकतमोदाहृतमेदिनीकोशादिविरुद्धस्य सांप्रतिकभूयःपरिदृष्टविपुलप्रमादतारानाथकृतचन्द्रकान्तपदविग्रहस्य तादृशमेदिनीकोशाद्यपर्यालोचनमूलकतया बहुश्रुतपारिषद्यनाद-

करकरस्पर्शजनितानन्दबाष्पाभिसन्धिविषयचन्द्रकान्तस्थलीसलिलशीकरनिकरैरुद्वेलित इति ॥ अविषह्यतमं हि नाम किमितोऽप्यन्यात्प्रियविप्रयोगदीनानां ललनानां यत्प्रियतमोपलालनातिमात्रग्रहिळमहिळाजनहर्षसौभाग्यपारवश्यसंपद्ः क्रियासमभिहारेण साक्षात्करणं, अत्र चन्द्रालोकानां गर्वहासतादात्म्यसंभावनाद्व्यस्वरूपोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या गर्वहासत्वेन रूपणाद्रूपकं वेत्यनयोरेकत्रैवाचार्यसंरम्भस्य दुरवगमतया संदेहसङ्करः ॥ स च शर्वर्या नायिकाव्यवहारसमारोपरूपसमासोक्त्या उत्तम्भ्यत इत्यनयोरङ्गाङ्गिभावसङ्करः ॥ व्यपगतघन इति कालविशेषणस्य हंसविहारोचित-

---

रणीयत्वात् ॥ एतेनैव—कान्तस्सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि चेत्यमरकोशादिकं तु पुल्लिङ्गमात्रनिर्बन्धपरं न त्वर्थविशेषविग्रहविशेषनिर्बन्धपरमित्यपि परास्तम् । कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्याद्यःपर्यायान्तशिलासु च ॥ इति मेदिनीकोशस्य अर्थविशेषविग्रहविशेषनिर्बन्धपरताया दुरपलपत्वात् ॥ यत्तु "कथं तर्हि—अमृतांशुकरस्पर्शाद्यत्क्षरत्यमृतं क्षणात् । चन्द्रकान्तं तदाख्यातं दुर्लभं स्यात्कलौ युगे ॥ इति स्कान्दोक्तलक्षणे नपुंसकत्वमिति चेत्" इति रसास्वादिनीसन्दर्भदर्शितामेवाशङ्कामनूद्य "तद्रत्नमिति विशेष्याभिप्रायमार्षं वेति संक्षेपः" इति समाधानम्—तन्न. पुल्लिङ्गशेषाद्यनुशिष्टलिङ्गविशेषाणां शब्दानां विशेष्यलिङ्गानुरोधिलिङ्गान्तरकत्वासंभवेन रत्नमिति विशेष्याभिप्रायकतया तत्संगमनस्यासमञ्जसत्वात् । अन्यथा एतत्काव्यान्तिमपद्ये एव "प्राप्तिहेतुं" इति हेतुपदे हंससन्देशरत्नमिति विशेष्यानुरोधेन क्लीबताप्रसङ्गात् । आर्षत्वेन समाधानं तु आचार्योपदर्शितमेवेति न तत्र भवतां समाधानकल्पनाकौशलावकाशो मादृशामपि तद्दूषणसंरम्भावकाशश्चेत्यलमधिकेन ॥ ४ ॥

त्वाभिप्रायगर्भत्वात्परिकरालङ्कारः ॥ चन्द्रकान्तस्थलीनां सलिलकणिका इत्यत्रापि नायिकानन्दबाष्पस्यन्दनरूपाप्रस्तुतवृत्तान्तप्रतीतेरन्या समासोक्तिः बाष्पशब्दस्योष्मार्थकत्वे चन्द्रकान्तस्थलीसलिलशीकराणामतिशिशिरतया तापापनोदनक्षमाणां तदुद्वेलनहेतुत्ववर्णनाद्विरुद्धात्कार्यसंपत्तिरूपो विभावनाविशेषः ॥ "विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना । शीतांशुकिरणास्तन्वीं हन्त संतापयन्ति ताम्" इति लक्ष्यलक्षणसंग्रहात् । नयनसलिलरूपार्थकत्वे तु निष्यन्दनोद्वेलनयोः कार्यकारणयोर्विभिन्नदेशस्थत्ववर्णनादसंगतिर्नामालङ्कारः ॥ 'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः' इति लक्षणात् ॥ अनयोरप्येकत्रैव संरम्भस्य नियन्त्रयितुमशक्यतया संदेहसङ्कर एव ॥ स च सलिलकणिकानां बाष्पप्रवाहोद्वेलनसामर्थ्यासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्त्या द्वैतीयीकसमासोक्त्या चोपस्क्रियत इति सङ्करः । प्राथमिकसंदेहसङ्करप्रभृत्येतावत्पर्यन्तालङ्काराणां परस्परं नैरपेक्ष्यात्संसृष्टिरिति विभावनीयम् । अत्र स्वर्ललनारूपालम्बनेन शरच्चन्द्रिकाद्युद्दीपनेन च विभावितः अश्रूपलक्षितैस्स्वेदवैवर्ण्यादिभिस्सात्त्विकैर्भावितः निर्वेदविषाददैन्यग्लानिशङ्कात्रासादिभिर्गम्यमानैस्सञ्चारितस्स्वस्ववल्लभविषयकस्तल्ललनागतो रतिभावः परिपोष्यत इति विप्रलम्भशृङ्गारो व्यज्यत इति संक्षेपः ॥ ४ ॥

सत्यमेवं समृद्धवैभवैव लङ्काऽथापीदानीं हनूमद्वालानलप्रदीपिततया इतःपरमिरिणप्रायैव स्यादित्यत आह—

भासा तादृक्परिणतिजुषा मैथिलीशोकवह्नेः
भस्मीभूतां पवनतनयस्नेहिना पावकेन ।
अन्तस्त्रासादवहितधियस्संविधास्यन्त्यवश्यं
प्रत्यादिष्टप्रथमरचनं(नां)विश्वकर्मादयस्ताम् ॥ ५

भासेति ॥ तादृक्परिणतिजुषा अग्निवद्दाहशक्तिपरिपाकभाजा मैथिलीशोकवह्नेः सीतामन्युज्वलनस्य "मन्युशोकौ तु शुक् स्त्रियाम्" इत्यमरः। भासा यत्किञ्चिद्धर्मभूततेजसेव स्थितेन अनेन मैथिलीशोकाग्नेर्लङ्कादहनमीषत्करमिति द्योत्यते ॥ स्नेहोऽस्यास्तीति स्नेही पवनतनये स्नेही पवनतनयस्नेही तेन तथोक्तेन 'अत इनिठनौ' इति मत्वर्थीय इनिः स चातिशायने, स्वसुहृत्तनयतयाऽतिशयितस्नेहवतेत्यर्थः। ननु रसादिगणे स्नेहशब्दपाठात् "रसादिभ्यश्च" इत्यनेन मतुबेव स्यान्न त्विनिः, तस्यान्यमत्वर्थीयनिवृत्त्यर्थत्वादिति चेन्न ॥ तत्र 'रसरूपवर्णगन्धस्पर्शशब्दस्नेहगुणात्' इति गुणस्य रसादिविशेषणतया पाठाद्गुणवाचिभ्य एव रसादिशब्देभ्योऽन्यमत्वर्थीयनिषेधः न तु तदितरवाचिभ्योऽपि 'तेन रूपिणी कन्या' 'रसिको नटः' इत्यादिसिद्धिः, रूपिणीत्यत्र रूपशब्देन सौन्दर्यं गृह्यते न तु चक्षुर्ग्राह्यो गुणः। रसिक इत्यत्र तु रसशब्देन भावो गृह्यते न तु रसनग्राह्यो गुणः। एवमिह स्नेहशब्देन प्रेमा गृह्यते न तु चूर्णादिपिण्डीभावहेतुर्गुणः। तस्मात् स्नेहिनेत्यत्र "अत इनिठनौ" इत्यनेनेनौ न बाधकं किञ्चित्। पवनतनये स्निह्यतीति पवनतनयस्नेहीति

ताच्छील्ये णिनिर्वा ; पावकेन हेतुना भस्मीभूतां अभस्मभस्मसंप-द्यमाना भूता भस्मीभूता तां तथोक्तां 'कृभ्वस्तियोगे संपद्यक-र्तरि च्विः' इति च्वौ नलोपे 'अस्य च्वौ' इतीकारः ॥ यद्वा—मैथिलीशोकवह्निभासा तादृक्परिणतिजुषा पवनतनयस्नेहिना पावके-नेति योजना ॥ तदैवमर्थः—मैथिल्याः सीतायाः "शोकजालेन महता विततेन विराजतीम् । संसक्तां धूमजालेन शिखामिव वि भावसोः ॥ दहन्तीमिव निश्श्वासैर्वृक्षान्पल्लवधारिणः । संघातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम्" इत्युक्तावस्थाशालिन्याः "अ-कृतात्मानमासाद्य राजानमनये रतम् । समृद्धानि विनश्यन्ति रा-ष्ट्राणि नगराणि च ॥ तथैव त्वां समासाद्य लङ्का रत्नौघसंकु-ला । अपराधात्तवैकस्य नचिराद्विनशिष्यति ॥ चिताधूमाकुल-पथा गृध्रमण्डलसङ्कुला । अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ॥ ता-दृशानि हि दृश्यन्ते लङ्कायामशुभानि वै । अचिरेण तु कालेन भविष्यति हतप्रभा ॥ सान्धकारा हतद्योता हतराक्षसपुङ्गवा । भवि-ष्यति पुरी लङ्का निर्दग्धा रामसायकैः" इत्याद्युक्तरीत्या शपन्त्याश्चेति भावः ॥ शोक एव वह्निः मयूरव्यंसकादित्वात्समासः । तस्य भासा प्रभावेण हेतुना 'भाः प्रभावे मयूखे स्त्री' इति मेदिनी ॥ 'भाः प्रभावे मयूखे च' इति विश्वश्च ॥ तादृक्परिणतिजुषा तथाविधदाह-शक्तिमत्तापरिपाकभाजेत्यर्थः ॥ सीताशोकाग्निमहिमोपबृंहिततयैवाग्ने रीदृशदाहक्षमत्वं अन्यथा 'कालस्य चाप्यहं कालो दहेयमपि पा-वकम् । दहेयमपि संक्रुद्धस्तेजसाऽऽदित्यपावकौ' इत्याद्युक्तप्रभाव

वत्तयाऽखिललोकपालविद्रावणेन रावणेन निराबाधमभिगुप्तां 'वायुरप्यत्र न ज्ञातश्चरेदिति मतिर्मम' इत्याद्युक्तप्रक्रियया दुर्निरोधगतेस्सदागतेरपि दुष्प्रवेशदुर्गसंविधानां यातुधानराजधानीं स्प्रष्टुमपि का हि नामास्य शक्तिरिति भावः ॥ पवनतनयस्नेहिना पवनस्य स्वसखत्वात्तत्तनये हनूमत्यपि सौहार्दशालिनेति भावः ॥ अनेन 'श्वसनेन च संयोगादतिवेगो महाबलः । कालाग्निरिव जज्वाल प्राववर्धत हुताशनः' इत्युक्तप्रकारेण लङ्कां दिधक्षोस्तस्य लाङ्गूलेऽतिवेलप्रज्वलितत्वं एवं जाज्वल्यमानस्यापि 'यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः । यदि वा भाग्यशेषो मे शीतो भव हनूमतः' इत्यादिना सीतया सशपथं प्रार्थिततया 'सीतायाश्चानृशंस्येन तेजसा राघवस्य च । पितुश्च मम सख्येन न मां दहति पावकः'॥ इत्याद्युक्तरीत्या सीताराघवप्रभावोपबृंहिततया तत्पितुर्मारुतस्य सख्येन चानलस्य तद्विषये शिशिरीभूतत्वं च द्योत्यते ॥ पावकेन निमित्तमात्रेण भस्मीभूतामिति ॥ अथवा—पवनतनयस्नेहिना तादृक्परिणतिजुषा मैथिलीशोकवह्नेर्भासा पावकेन भस्मीभूतामित्यन्वयः ॥ तदा पवनतनये स्नेहवता तादृक्परिणतिजुषा यादृशपरिणामेन लङ्का भस्मीभविष्यति तादृक्परिणामभाजेत्यर्थः ॥ मैथिलीशोकः वह्निरिवेत्युपमितसमासः । तस्य भासा प्रभावेणैव । पावकेनेति व्यस्तरूपकं शोके वह्न्युपमानात्तत्प्रभावे पावकत्वरूपणाच्च नैकत्रोक्तालङ्कारद्वयसमावेशदोषः । अत्र पावकस्य स्वात्मना 'दहेयमपि पावकम्' इत्युक्तप्रभावविभावरीचरेन्द्रपरिपालितलङ्कासन्दीप-

नानुपयोगितया प्रकृतत्वेनाभिसंहितमैथिलीशोकानलप्रभावात्मना परिणत्यपेक्षणात्परिणामालङ्कारः ॥ तथाच सूत्रं—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति ॥ अनेन च 'उल्लङ्घ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ॥ आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम्' इत्युक्तार्थानुग्रहः कृतः ॥ अस्य च सीताशोकातिशयप्रभावप्रतिपादनतत्परतया न रामायणोक्तार्थविरोधः ॥ अत एव लङ्कायास्सीताशोकानलप्रभावभस्मीभूतत्वासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्तिरपि परिणामोत्तम्भितेति ध्येयम् ॥ प्राञ्चस्तु—'मैथिलीशोकवह्नेः पञ्चमी ; सीतायाश्शोकाग्नेः तादृक्परिणतिजुषा यथार्थाग्निपरिणामभाजा पवनतनयस्नेहादग्नेरप्युत्पत्तिस्सूच्यते ॥ पवनतनयस्नेहिना हनुमत्सखेन कर्त्रर्थे तृतीया भासा तेजसा करणे तृतीया भस्मीभूतां भस्मतया कृतां अन्तर्भावितण्यर्था निष्ठा भस्मीभूतामिति तेन कर्तृनिर्देशोपपत्तिः पावकेनेति' इति व्याचक्षते ॥ एतत्तु नातीव हृद्यमस्मदुक्तार्थापेक्षया क्लिष्टं च यदत्रान्ये इमामेव प्राचीनव्याख्यां 'मैथिलीशोकवह्नेः सीताशोकाग्नेः तादृक्परिणतिजुषा यथार्थाग्निपरिणामजुषा पवनतनयस्नेहिना हनुमत्सखेन पावकेनाग्निना भासा तेजसा भस्मीभूतां भस्मतया भूताम्' इति पठन्ति तत्ततोऽप्यतिक्लिष्टावगम्यार्थकमिति स्वयमेव कोविदा विदांकुर्वन्तु ॥ तां उक्तविधां लङ्कां विश्वकर्मा आदिर्येषां ते, आदिशब्देन मयादयोऽसुरशिल्पिनो गृह्यन्ते ॥ मयेनापि पूर्वं विश्वकर्मणेव कस्यचिल्लङ्काभागस्य

निर्मितत्वमुक्तं सुन्दरकाण्डे—"तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि । महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि" इति ॥ 'अन्यानि गृहाणि विश्वकर्मनिर्मितानि—इमानि तु मयं व्याजीकृत्य स्वयमप्युपायप्रदर्शनमुखेन निर्मितानीति पूर्वगृहेभ्यो विशेष उच्यते' इति गोविन्दराजाः ॥ यद्वा—पूर्वं विश्वकर्मणैकेनैव निर्मितत्वेऽपीदानीं ततोऽप्यतिशायिततया तां परिष्कर्तुं सहायान्तरमपेक्षत इति संभावनया विश्वकर्मादय इत्युक्तम् । अन्तः हृदये त्रासात् साध्वसात् 'दरत्रासौ भीतिर्भीस्साध्वसं भयम्' इत्यमरः । केवलं बहिस्त्रासाभिनये सावधानता न संभवतीत्यन्तस्त्रासादित्युक्तं अवहिता अवधानयुक्ता निष्प्रमादा धीः बुद्धिः येषां ते तथोक्तास्सन्तः मनागप्यसमीचीनायां शिल्परचनायां कीदृशं विदधीत वा दण्डमित्यन्तस्संजातसाध्वसतयाऽतिवेलमवहितचेतसस्सन्त इति भावः । यद्वा—पूर्वमपि । 'तानि प्रयत्नाभिसमाहितानि न तत्र किंचिन्न कृतं प्रयत्नतः' इत्याद्युक्तरीत्या सावधानमेव रचिताया अपि कयाचिद्दोषमात्रयेदानीमनिलात्मजवालानलप्रदत्तां दुरवस्थां वीक्ष्य यथा पुनरपि शास्त्रोदितशिल्परचनावैगुण्यादिभिरीदृशी न संभवेद्दशा तथा सभयमवहितचेतसस्सन्त इति भावः ॥ प्रत्यादिष्टा निरस्ता प्रथमरचना प्राथमिकशिल्पकल्पना यस्मिन्कर्मणि तद्यथा स्यात्तथा प्राथमिकरचनापेक्षयाऽतिशयितनिर्दोषाशिल्पसौष्ठवं यथा स्यात्तथेति भावः ॥ 'प्रत्यादिष्टो निरस्तस्स्यात्' इत्यमरः ॥

अवश्यं[1] नियमेन संविधास्यन्ति समीकरिष्यन्ति संविपूर्वकाद्दधातेर्लृट्. 'प्रत्यादिष्टप्रथमरचनाम्' इति द्वितीयान्तस्त्रीलिङ्गपाठो बहुषु मूलकोशेषु दृश्यते। तदा लङ्काया विशेषणं तां लङ्कां प्रत्यादिष्टप्रथमरचनां प्रत्याख्यातपूर्वशिल्पनैपुणां संविधास्यन्ति पूर्वापेक्षयोत्कर्षशालिवैचित्र्यां रचयिष्यन्तीति भावः॥ अथवा—प्रत्यादिष्टप्रथमरचनां तां लङ्कां संविधास्यन्तीति योजना तदा एवमर्थः॥ पावकेन भस्मीभूतां अत एव प्रत्यादिष्टप्रथमरचनां प्रमृष्टप्राथमिककल्पनां स्वात्मना भस्मीभूततया दुर्विज्ञानपूर्वसन्निवेशामित्यर्थः। तां लङ्कां संविधास्यन्ति यथापुरमेव सन्निवेशयिष्यन्तीत्यर्थः। पूर्वमेव 'सर्वैश्च दोषैः परिवर्जितानि। तानि प्रयत्नाभिसमाहितानि' इत्याद्युक्तरीत्याऽवद्य-

[1] अवश्यं नियमेन संविधास्यन्ति समीकरिष्यन्ति। संविपूर्वकाद्दधातेर्लृट् इति रसास्वादिनी॥ यत्तु—भस्मीभावापेक्षया संविधानस्य भविष्यत्त्वाल्लृट्। न तु शब्दप्रयोगाधिकरणरूपवर्तमानकालापेक्षया इति—तन्न. भगवद्रामभद्रवाक्येऽत्र वर्तमानकालापेक्षया भविष्यत्त्वविवक्षायामपि बाधकविरहात्॥ तथा हि—लङ्काप्लोषदिवस एव मध्याह्नात्पूर्वं भगवद्रामभद्रसन्निधिमागतो हनुमानिति व्यक्तं गोविन्दराजीये। तदनन्तरदिवसस्यैवोषसि हंसं प्रति रामभद्रस्य वचनमिदमिति च स्पष्टं पूर्वाश्वासीयद्वितीयपद्ये। न खलु विदग्धलङ्कायाः प्रथमरचनातिशयितं संविधानमेकेनैव वासरेण विश्वकर्मादिभिरपि निर्वर्तितमिति शक्यं वक्तुम्। "अन्तस्त्रासादवहितधियः" इत्येवं तेषामेव सावधानत्वं संविधानोद्यमस्यात्रैव वर्णितत्वात्। तस्मात् लङ्काप्लोषवासर एव विश्वकर्मादिभिर्लङ्कासंविधानस्यारब्धत्वेऽपि समित्युपसर्गद्योतितसमीचीनत्वविशिष्टं प्राथमिकरचनातिशायिविधानमनन्तरत्रिचतुरवासरसाध्यं भगवदुक्तिरूपैतच्छब्दप्रयोगाधिकरणरूपवर्तमानकालादपि भविष्यदेवेति भविष्यत्त्वं संभाव्यैव दाशरथिर्लृटं प्रायुङ्क्तेत्याचार्याणां मूलकृतामा-

गन्धसम्बन्धदवीयस्तया सावधानं निर्मितत्वादिदानीमपि तावतैव कृतार्थतालिप्सवो यथापूर्वसंनिवेशवतीमेवाप्रमादेन रचयिष्यन्तीति भावः ॥ अत्र मैथिलीशोकवह्नेरित्यादौ प्राथमिकार्थपक्षे मैथिलीशोके वह्नित्वारोपाद्रूपकम् ॥ पवनतनयबालानलस्य मैथिलीशोकवह्नियत्किञ्चिद्धर्मभूततेजस्तादात्म्यसंभावनात् द्रव्यस्वरूपोत्प्रेक्षाव्यञ्जकाप्रयोगाद्गम्या उक्तरूपकोत्तम्भितेति संकरः ॥ द्वैतीयीकार्थपक्षे तु केवलं रूपकमेव ॥ तार्तीयीकार्थपक्षे तूक्तरीत्या उपमोपस्कृतः परिणामतदुज्जीविता भस्मीभूतामित्यतिशयोक्तिः पवनतनयस्नेहिनेति पावकः विशेषणस्य 'शिशिरस्येव संपातो लाङ्गूलाग्रे प्रतिष्ठितः' इत्युक्तरीत्या हनूमद्विषये शिशिरत्वाद्यभिप्रायगर्भत्वात्परिकरः। अवहितधिय

---

शयः। तथा सति हि विश्वकर्मादिभिर्बहुभिः प्रथितैर्देवशिल्पिभिरपि सावधानैरेवानेकवासरेषु तत्संविधानकरणप्रतीतेस्तत्संविधानस्य प्राथमिकविश्वकर्ममात्ररचितलङ्कासन्निवेशादवाङ्मनसगोचरः कोऽप्युत्कर्षातिशयो व्यज्यत इत्यर्थस्वारस्यं परिपोष्यते। अगतिका च गतिर्धात्वर्थान्तरापेक्षया भविष्यत्त्वविवक्षया लृडुपपत्तिर्नात्राचार्यसूक्तावाश्रयितुं युक्ता। प्रत्युत सेयमुपपत्तिरसम्भवदुक्तिकैवेत्यनुपदं वक्ष्यते ॥ तदेतत्सर्वमभिसन्धायैव वर्तमानकालापेक्षभविष्यत्त्वस्य निष्प्रत्यूहत्वात् लृडनुपपत्त्या शङ्काया एवासम्भवात् "संविपूर्वकाद्धातेर्लृट्" इति सामान्येनैवाचार्यैरन्वग्राहि ॥ एतेन—विमोहने वल्लवगेहिनीनां न ब्रह्मचर्यं बिभिदे तदीयम्। संपत्स्यते बालकजीवनं तत्सत्येन येनैव सतां समक्षम् ॥ इति यादवाभ्युदयगतायामाचार्यसूक्तावपि लृटः कथन्ता समाहिता। तत्रातीताया अपि तथाविधबालकजीवनसंपत्तेरसम्भावितत्वविवक्षयैव लृडुपपत्तेः "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यनुशासनेनैव संपत्तेः। तत्रानवक्लृप्तिर्ह्यसम्भावना। असम्भावितत्वविवक्षायाश्च फलमत्यन्ताश्चर्यावहत्वव्यञ्जनमेव। इदं हि बालसञ्जीवनं

इत्यस्य विशेषणगत्या प्रत्यादिष्टप्रथमरचनत्वेन लङ्कासंविधानहेतुत्वात्काव्यलिङ्गं चेत्येते यथायोगं संसृज्यन्ते सङ्कीर्यन्ते चेति विभावनीयं बुद्धिमद्भिरिति दिक् ॥ ९ ॥

तत्रोन्नततरं दशाननगृहं पश्यतस्तव चित्तवृत्तिश्शोकहर्षसंभेदविसंस्थुला भविष्यतीत्याह—

**मध्ये तस्या निशिचरपतेस्सद्म रुद्धान्तरिक्षं**
**युग्मं नेयैर्दिवि सुमनसां सेव्यमानं विमानैः ।**
**कारागारं विबुधसुदृशां वीक्षमाणो विचित्रं**
**शोकप्रीतिव्यतिकरवतीं वक्ष्यसे चित्तवृत्तिम् ॥ १०**

विस्मयावहेषु भगवच्चरितेष्वेकं परिगण्यते "सञ्जीवयन्नपि मृतं सुतमुत्तरायास्सान्दीपनेश्चिरमृतं सुतमानयंश्च । धाम्नो निजाद्द्विजसुतान्पुनरानयन्वा स्वामेव तां तनुमहो कथमानयस्त्वम्" इत्यादि । न चासम्भावनावाचकपदोपसन्दान एवानवक्लृप्तौ लृडादिरिति भ्रमितव्यम् । संकल्पं नाकरिष्यच्च तत्रेयं शुद्धमानसा । सत्यामर्षमवाप्स्यस्त्वं राम सीतानिबन्धनम् ॥ इति भट्टिपद्ये तदुपसन्दानविरहेऽपि तद्दर्शनात् । स्पष्टं चेदं तत्रैव सर्वपथीनायाम् ॥

अत एव—"संपत्स्यत इति विमोहनकालमपेक्ष्य लृट्प्रयोगः" इति तत्पद्यव्याख्याने अप्पय्यदीक्षितोत्प्रेक्षितं अगतिकगत्याश्रयणेन समाधानमपि साधुतोपपपादकसरणिदिक्प्रदर्शकतयैव नेयमिति न तत्राभिनिवेष्टव्यम् । अतस्तन्निदर्शनमपि न प्रकृते स्वेप्सितसाधनायालमित्यवधेयम् ॥ यदपि—यतः कालिदासेन कुमारसंभवे—अतन्द्रिता सा स्वयमेव वृक्षकान् घटस्तनप्रस्रवणैरवर्धयत् । गुहोपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यतीति इत्युक्तम् । तत्र हि वृक्षसंवर्धनात्पराचीनत्वमात्रेण नापाकरिष्यतीति भविष्यत्प्रयोगः—इति

मध्य इति ॥ तस्याः लङ्कायाः मध्ये अन्तरे। रुद्धं आवृतं अन्तरिक्षं व्योम येन तत्तथोक्तं 'दिवं गतं वायुपथप्रतिष्ठितं वेश्मोत्तमानामपि चोच्चमानम्' इत्याद्युक्तरीत्या द्युसदां पन्थानमवरुन्धानमित्यर्थः ॥ दिवि स्वर्गे "सुरलोको द्योदिवौ द्वे" इत्यमरः ॥ सुमनसां देवानामिन्द्रादीनां युग्मं स्त्रीपुंसात्मकं द्वन्द्वमिति यावत्। नेतुं योग्याः नेयाः आरोपयितुमर्हा इति यावत्। तत्किकरैरिति शेषः। तैस्तथोक्तैः "णीञ् प्रापणे" इत्यस्माद्धातोः "अर्हे कृत्यतृचश्च" इत्यर्हार्थे "अचो यत्" इति यत्। विमानैः व्योमयानैः सेव्यमानं आश्रीयमाणम्। दिवि सुमनसां युग्मं नेयैरित्यनेन त्रिदिवेशमिथुनस्वैरस्वर्गविहारानुकूलत्वद्योतकेन तेषु

---

तदप्यसत्—नञ्समभिव्याहारे अभाव एव नञर्थे लडाद्यर्थकालान्वयस्य निबन्धेषु स्थापितत्वात् गुहकर्तृकवृक्षगतपुत्रवात्सल्यापाकरणाभावस्य कालिदासीयैतदुक्तिरूपशब्दप्रयोगाधिकरणरूपवर्तमानकालापेक्षयैव भविष्यत्त्वस्याबाधितत्वात् धात्वर्थान्तरापेक्षया भविष्यत्त्वविवक्षायास्तत्राप्यनाश्रयणीयत्वात्। वात्सल्यापाकरणविरहस्य भविष्यत्कालेऽप्यनुवृत्तिव्याप्तिकथनेन च वात्सल्ये निरवधिकता व्यज्यत इति स्वारस्यपौष्कल्यमभिसन्धायैव महाकवेः कालिदासस्य तथा लृट्प्रयोग इत्यवधेयम् ॥ यदपि—यतश्च योगानुशासनभाष्ये अस्ति प्रश्न एकान्तवचनीयः सर्वो जातो मरिष्यति। ओम् भोः इति भगवता व्यासेन भाषितम्। तत्र हि जननापेक्षया भविष्यत्त्वेव लृट्। न तु वर्तमानत्वापेक्षयेत्यवगन्तव्यम् ॥ इति ॥ एषैव दिक् पूर्वस्मिन्नाश्वासे वर्तिष्यन्ते वितमासि पदे इत्यत्रापीति बोध्यम्—इति—तदप्यसमञ्जसम्। तत्र तत्र वर्तमानापेक्षया धात्वर्थतावच्छेदकसामानाधिकरण्येन वक्त्रपेक्षे भविष्यत्त्वे वस्तुतस्सत्येव गुणप्रधानभावेन स्थितयोः क्रिययोः परस्परापेक्षयाऽतीतत्वभविष्यत्त्वविवक्षया "धातुसंबन्धे प्रत्ययाः" इत्यनेन गुण-

सुमनसामतिमात्रप्रीतिविषयतया अनन्योपयोज्यत्वेन सादरं रक्षितत्वं द्योतितम्। एवं महेन्द्रादित्रिदिवेशस्त्रीपुंसैकवाह्यैरपि 'असकृत्संयुगे भग्ना मया विमृदितध्वजाः। अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः' इत्याद्युक्तमहाप्रभावरावणभिया दैवैरेव यातुधानमिथुनवाहनाय तन्निर्गमनावसरप्रतीक्षया बहिस्सज्जीकृतैर्दैवयानैस्सेव्यमानमिति भावः। अत्र विमानानामेव प्रधानकर्मत्वविवक्षया नेयैरिति कृत्यप्रत्ययेन तदभिधानं युग्मस्यैव प्रधानकर्मत्वे अजा ग्रामं नेयेत्यत्राजाया इव तस्यैव कृत्यप्रत्ययेनाख्येयता स्यात्, न

प्रधानभूतक्रिययोः परस्परापेक्षया कालार्थकप्रत्ययाङ्गीकारात्। अन्यथा वक्त्रपेक्षया चैत्रीयैतद्दिनभोजनसामान्यस्यातीतत्वेऽपि चैत्रोऽद्य पक्त्वा भोक्ष्यति चैत्रोऽद्य पचन् भोक्ष्यतीत्यादिप्रयोगाणां साधुत्वापत्तेः॥ भवन्ति तु "पाचकाः पक्त्वा भोक्ष्यन्ति" इत्यादयः प्रयोगास्साधवः॥ गुणप्रधानभावोपि च क्रिययोः शतृशानच्ण्वुल्क्त्वादिषु प्रत्ययेषु सत्स्वेवेति स्पष्टं मञ्जूषादौ काव्यप्रदीपादौ च। उपदर्शितयादवाभ्युदयकुमारसंभवपद्ययोः प्रकृतपद्ये च धात्वर्थतावच्छेदकसामानाधिकरण्येन वक्तृवाक्यापेक्षभविष्यत्त्वविरहात् क्रिययोस्तथा गुणप्रधानभावेनान्वयविरहाच्च "धातुसम्बन्धे प्रत्ययाः" इत्यनेनानुशासनेन क्रियान्तरापेक्षया क्रियायां कालार्थकप्रत्ययस्य दुरुपपादत्वात्। न खलु तदनुशासनातिरिक्तमनुशासनमीदृशस्थलेषु कालार्थकप्रत्ययोपपादकमुपलभामहे। वस्तुतस्तु—तदप्यनुशासनं गुणभूतक्रियायामेव प्रधानभूतक्रियापेक्षया कालार्थप्रत्ययोपपादकम्। स्पष्टं चेदं तत्सूत्रकौमुदीमनोरमादौ "तिङ्वाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः वसन्ददर्श सोमयाज्यस्य पुत्रो भविता" इत्यादौ सन्दर्भे॥ तथा चेह अप्रधानक्रियापेक्षया प्रधानक्रियावाचिनस्संविदधातेरुत्तरं कालार्थकप्रत्ययोपपादनं शब्दशास्त्रसम्प्रदायप्रतीपमेवेति विवेचयन्तु विचक्षणाः॥५॥

त्विह तथा युग्मरूपकर्माख्यायते ॥ किं तु विमानरूपकर्मैव—तथा चोक्तं 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोश्शब्दकर्मणां च निजेच्छया ॥ प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः' इति ॥ इदं च "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति भाष्यश्लोकस्यैव विवरणम् । लादय इत्यत्रादिशब्देन कृत्यक्तखलर्थानां ग्रहणं अनेन तत्समृद्धेरौत्कल्यमतिभूमीति व्यज्यते ॥ यद्वा—युग्मं नेयैस्सुमनसां विमानैर्दिवि सेव्यमानमिति योजना । तदा युग्मं औचित्याद्देवमिथुनरूपं युग्मं न तु निशाचरमिथुनं नेयैः प्रापयितुमर्हैः, तदेकवाह्यैरिति यावत् । सुमनसां विमानैः न तु रक्षसां विमानैः दिवि सेव्यमानं भुवि द्वन्द्वीभूय सञ्चरणावसरे रावणस्य तत्परिजनस्य वा कण्ठरिथादिभूविमानसद्भावेन न तत्रास्मदपेक्षा दिवि सञ्चरणावसरेषु त्ववश्यमस्माभिरेव सज्जीभूयावस्थातव्यमन्यथा न भवेमैवेति रुद्धान्तरिक्षं तद्गृहं दिवि देवविमानानि सेवन्त इति भावः ॥ यद्वा—युग्मं नेयैरित्यादेरेवंभावः—मारुतात्मजलङ्काप्रवेशानन्तरं निश्चित्य यातुधानाधिनाथवधमल्पीयसैव समयेन भाविनं तद्वधसमनन्तरमेव लङ्कायां तदवरुद्धस्वावरोधवधूयूथैस्सह मिथुनीभूय दिवं प्रति प्रयातुमुत्सुकैर्देवैरवस्थापितानि विमानानि तद्गृहमभितस्सेवन्त इति ॥ अस्मिन्पक्षे एवं देवविमानसेव्यत्वे हेतुः कारागारं विबुधसुदृशामिति ॥ अथवा—युग्मं यथा स्यात्तथा सुमनसां सुमनोभिः "कृत्यानां कर्तरि वा" इति कर्तृ-

रि षष्ठी नेयैः नीयमानैः शर्वरीचरसार्वभौमोपायनकृतेऽवहिततया द्वन्द्वंद्वन्द्वं नीयमानैरित्यर्थः ॥ दृश्यते हि सार्वभौमाद्युपायनसमर्पणाचारो युग्मीभूतैरेव वस्तुभिः। अत्राचार्यैस्स्वप्नेऽनुगृहीतोऽयं श्लोकः—सम्राजामुपहारार्थं युग्मं नेया गजादयः। इयं हि राज्ञां मर्यादा न त्वेकैकं कदाचन " इति ॥ युग्यं नेयैरिति पाठे युग्यमिति भावप्रधानो निर्देशः "द्व्येकयोः" इत्यादिवत् ॥ युग्यत्वमिति यावत् निशिचरपतेर्वाहनत्वमित्यर्थः ॥ 'युग्यं च पत्रे' इति निपातनात् क्यप् कुत्वं च 'सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्' इत्यमरः ॥ नेयैः प्रापणीयैः सुमनसां विमानैरिति योजना ॥ न तु सुमनसां युग्यं नेयैरिति ॥ तथा सति सुमनोभिर्नेयैरिति स्यात् ॥ 'कृत्यानां कर्तरि वा' इति सूत्रे "कृत्यानाम्" इति योगं विभज्य "उभयप्राप्तौ" इति "न" इति चानुवर्तितत्वेन कृत्यप्रत्यययोगे कर्तरि कर्मणि च षष्ठीनिषेधात् ॥ तथाच प्रकृतसूत्रे भाष्यं "एवं तर्हि योगविभागः करिष्यते 'कृत्यानां' कृत्यानां प्रयोगे षष्ठी न भवति। किमुदाहरणं ग्राममाक्रष्टव्या शाखा ॥ ततः 'कर्तरि वा' इति। इहापि तर्हि निषेधः प्राप्नोति। 'गेयो माणवकस्साम्नाम्' इति उभयप्राप्ताविति वर्तते" इति ॥ अत्र कैयटः "'कृत्यानाम्' इत्येतावत्सूत्रं क्रियते तत्र चोभयप्राप्ताविति नेति च वर्तते। तेन कर्तृकर्मणोर्द्वयोरप्युभयप्राप्तौ कृत्ये षष्ठी प्रतिषिध्यते" इति ॥ शब्देन्दुशेखरे च—"निषेधोऽयं कर्तरि कर्मणि च कर्तरि वेति त्वनुभयप्राप्तिविषयम्" इति स्थितम्। विमानानामेव प्रधा-

नकर्मत्वात्कृत्यप्रत्ययेन तदभिधानं तु निर्बाधमेव ॥ यत्तु प्राञ्चः 'दिविस्थितैस्सुमनसां युग्मं नेयैः प्राप्तमिथुनैरिति यावत्' इति व्याचक्षते, तदभिप्रायं त एव प्रष्टव्याः। यदपि यद्वेति विकल्प्य "युग्मं दंपतिरूपं मिथुनं दिवि देवलोके नेयैः प्रापकैः 'कृत्यल्युटो बहुलम्' इति करणे कृत्यप्रत्ययः ॥ सुमनसां विमानैस्सेव्यमानम्" इति व्याचख्युः तदपि न सम्यक्। बहुलग्रहणेन करणे कृत्यप्रत्ययकल्पनक्लेशाभ्युपगमेऽपि दिवोऽधिकरणत्वेनैव विवक्षणे कर्मत्वाप्राप्तावपि युग्ममित्यस्य कर्मणो नेयैरिति कृद्योगात्तल्लक्षणषष्ठ्या दुर्वारतया द्वितीयाया असाधुतापत्तेः ॥ न च पूर्वोक्तदिशैव "कृत्यानां कर्तरि वा" इत्यत्रोभयप्राप्ताविति नेति चानुवर्तनेन कर्मणिषष्ठ्या अपि निषेधात् द्वितीयैव साध्वीति वाच्यं तदीययोजनायामुभयप्राप्त्यभावात् तस्मादस्मदुक्तरीत्यैव व्याख्या साधीयसीत्यलमतिविचारेण ॥ प्रकृतमनुसरामः—न केवलमेतावदेव तद्वैभवमित्याह कारागारमिति ॥ विबुधसुदृशां देववधूनां कारेत्यगारः कारागारः तं बन्धनालयमित्यर्थः ॥ विबुधशब्देन न हि तद्भर्तृभिरज्ञायमानतयाऽत्र बृन्दारकसुन्दर्यो बन्दीकृताः किं तु तज्ज्ञाततयैवेति व्यज्यते ॥ तेन रावणपराक्रमो वचसामभूमिरिति द्योत्यते ॥ अनेन विबुधसुदृशां कारागारमित्यनेन रावणगृहे न केवलं देवविमानानामेवेयं दुरवस्था किं तु तल्ललनानामपि तादृशी ततोऽप्यतिशयिता वा दुरवस्थेति द्योत्यते ॥ ईदृशसमृद्धिमतद्गृहं कीदृशं स्यादित्यत आह—विचित्रमिति ॥ अवाङ्मनसगोचरातिविस्मयनीयवैभवं 'यथा नगाग्रे

बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम्। ददर्श युक्तीकृतमेघचित्रं विमानरत्नं बहुरत्नचित्रम्' इत्युक्तप्रक्रियया नानारत्नचित्रितमिति वा। निशि चरन्तीति निशिचराः 'चरेष्टः' इति टप्रत्ययः "हलदन्तात्" इति 'तत्पुरुषे कृति' इति वा अलुक्। निशिचराणां पतिर्दशाननः तस्य सद्म वेश्म वीक्षमाणः विशेषेण पश्यन् सन् चित्तवृत्तिं मनोवृत्तिं शोकप्रीत्योः दुःखहर्षयोः व्यतिकरः परस्परसंवलनं सोऽस्या अस्तीति शोकप्रीतिव्यतिकरवती तां तथोक्तां सतीं वक्ष्यसे प्राप्स्यसि "वह प्रापणे" लृट् ढत्वकत्वषत्वानि। एवं रावणसद्मनो देवललनाकारागारत्वादिदर्शनेन शोकः, विस्मयनीयसमृद्धिमत्तादर्शनेन हर्षश्चेति भावः। अत्र रावणसद्मनोऽन्तरिक्षनिरोधाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः तस्मिन्कारागारत्वरूपणाद्रूपकम्, रुद्धान्तरिक्षत्वादीनां विशेषणगत्या हंसमनसश्शोकप्रीतिव्यतिकरहेतुत्वात्काव्यलिङ्गं च, समृद्धिमद्वस्तुवर्णनात्मकोदात्तेन संकीर्यत इति संक्षेपः ॥ ६ ॥

अथ रावणगृहे "आपानशाला विचितास्तथा पुष्पगृहाणि च। चित्रशालाश्च विविधा भूय क्रीडागृहाणि च" इत्याद्युक्तरीत्या प्रथमप्रविष्टस्य हनूमत इव माभूत्तव तत्र तत्र सीतामार्गणप्रयासस्तन्मुखेन तदवस्थानप्रदेशस्य मया विदितत्वादित्यभिप्रयन् रावणगृहादशोकवनिकामेव याहीत्याह भगवान्रघुनन्दनः—

**ईषत्कोपाञ्चकितपवनामिन्दुसंदिग्धसूर्यां**
**नित्योदारामृतुभिरखिलैर्निष्कुटे वृक्षवाटीम्।**

सीताशोकज्वलनसहजैस्तत्र दीप्तामशोकैः
आपद्येथाः प्रथमलुलितामाञ्जनेयप्रचारैः ॥७॥

* ईषदिति * तत्र रावणगृहे निष्कुटे गृहोद्याने 'गृहारामस्तु निष्कुटः' इत्यमरः॥ ईषत्कोपात्, अस्य रावणस्येत्यादिः 'अभ्यर्थनावधिः कोपः प्रायो वीरजनाश्रयः' इत्युक्तलक्षणात्कोपादेव न तु "वधच्छेदादिपर्यन्तः क्रोधः क्रूरजनाश्रयः" इत्युक्तलक्षणात्क्रोधात्, ईषच्छब्देन तस्मादप्यल्पादेव न तु महत इति सूच्यते॥ अनेन रावणस्याज्ञादर्पादिविभवो निरवधिक इति द्योतितम् कोपादित्यत्र 'भीत्रार्थानाम्' इत्यपादानसंज्ञायां पञ्चमी, चकितः भीतः, पवनो मारुतो यस्यां तां तथाभूतां "पचेळिमानामपि कुसुमानां पतनभयमाशङ्कमानाः पवमानाः" इत्याद्युक्तरीत्या तत्र निश्वसितुमपि श्वसनस्त्रस्यतीति भावः॥ इन्दुः चन्द्र इति संदिग्धः संदेहविषयः सूर्यः भानुर्यस्यां तां तथाभूतां, ईषत्कोपादित्येतदत्राप्यन्वेति। यदि मम मयूखैरशोकवनिकातरूणां तरुणाङ्कुरपल्लवादीनि मनागपि म्लानतामश्नुवीरन्, तदा मम कीदृशी स्याद्वाऽवस्थेत्यवहिततया उष्णांशुरप्यमृतांशुप्राय एव तत्र संपद्यत इति भावः॥ अत्र 'यस्य सूर्यो न तपति भीतो यस्य च मारुतः। न वाति स्मायतापाङ्गे' "यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः। तीव्रांशुरमृतांशुश्च भयात्संपद्यते रविः" इत्यादिकं स्मर्तव्यम्। अखिलैः समस्तैः ऋतुभिः वसन्तादिभिः नित्यमुदारा नित्योदारा, तां तथोक्तां

विस्पष्टपटुवत्समासः । सततसमृद्धामित्यर्थः ॥ अनवरतमपि फलकुसुमकिसलयमुखभोग्यवस्तुवितरणशीलतया नित्यवदान्यामिति वा, रावणभयाद्युगपदेव सर्वेऽपि ऋतवस्तां प्रफुल्लपल्लवकुसुमस्तबकादिसर्वसमृद्धिमतीं कुर्वन्तीति भावः । शोक एव ज्वलनोऽग्निः सीतायाः शोकज्वलनः तस्य सहजैः सोदर्यैः सीताशोकज्वलनसहकारिभिः तदुद्दीपकैरिति भावः ॥ यद्वा–तत्तुल्यैरिति यावत् । तत्तादात्म्येन संभाव्यमानैरिति वा, अत एवोपमोपक्रमोत्प्रेक्षा । एतच्च सविस्तरं निरूपितं 'अचिरान्मुक्तनिर्मोककल्पैः' इत्यादौ तत्रतत्राधस्तात् । अशोकैः वञ्जुलतरुभिः 'वञ्जुलोऽशोके' इत्यमरः ॥ दीप्तां प्रज्वलितां अत्र 'सर्वर्तुकुसुमैर्वृक्षैः फलवद्भिश्च पादपैः । पुष्पितानामशोकानां श्रिया सूर्योदयप्रभाम् ॥ प्रदीप्तामिव तत्रस्थो मारुतिस्समुदैक्षत' इत्येतत्प्रत्यभिज्ञाप्यते । अनेन तस्य निष्कुटस्य नामाशोकवनिकेत्यपि सूचितम् । अशोकैरित्येतदुपलक्षणमन्येषामपि सौवर्णादिवृक्षाणां तत्र सद्भावात् । तथा चोच्यते श्रीरामायणे अशोकवनिकावर्णनप्रस्तावे–'सौवर्णवृक्षानपरान्ददर्श शिखिसन्निभान् । अथाम्रवणसंछन्नां लताशतसमावृताम् ॥ ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् । स प्रविश्य विचित्रां तां विहगैरभिनादिताम् ॥ राजतैः काञ्चनैश्चैव पादपैस्सर्वतोवृताम् । उदितादित्यसंकाशां ददर्श हनुमान्कपिः' इति ॥ अञ्जनाया अपत्यं अञ्जनेयः 'स्त्रीभ्यो ढक्' इति ढक् ढस्य एयादेशः । आञ्जनेयशब्देन आञ्जनापरिष्वङ्गमानसिकसंभोगादिसंतुष्टमारुतदत्तवरतया तद्गर्भजत्वद्योतकेन तस्य

महावीर्यबलपराक्रमादिमता व्यज्यते, यथोच्यते किष्किन्धाकाण्डे—'आसीदप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला। अञ्जनेति परिख्याता पत्नी केसरिणो हरेः' इत्युपक्रम्य 'अञ्जनाया वचश्श्रुत्वा मारुतः प्रत्यभाषत। न त्वां हिंसामि सुश्रोणि माभूत्ते सुभगे भयम्॥ मनसाऽस्मि गतो यत्त्वां परिष्वज्य यशस्विनीम्। वीर्यवान्बुद्धिसंपन्नस्तव पुत्रो भविष्यति॥ महासत्त्वो महातेजा महाबलपराक्रमः। लङ्घने प्लवने चैव भविष्यति हि मत्समः॥ एवमुक्ता ततस्तुष्टा जननी ते महाकपे। गुहायां त्वां महाबाहो प्रजज्ञे प्लवगर्षभ' इति॥ अनेनास्याशोकवनविलोडनमीषत्करमिति द्योतितम्। आञ्जनेयस्य प्रचारैः प्रकृष्टैस्संचारैः 'ततो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः। ऊरुवेगेन महता द्रुमान्क्षेप्तुमथारभत्' इत्याद्युक्तप्रकारैरित्यर्थः॥ प्रथमं लुलिता प्रथमलुलिता तां तथोक्तां आदौ व्याकुलितां इदंप्रथमतया हनुमतैव क्षुभितां न त्वितः पूर्वं देवदानवादिभिरपीति भावः। वृक्षवाटीं द्रुमावृतिस्थलीं तरुपङ्क्तिं वा 'त्रिषु पात्री पुटी पेटी वाटी करकदाडिमौ' इति त्रिलिङ्गशेषानुशासनव्याख्यायाम्, वाटीशब्दः पङ्क्त्यर्थकोऽपीति टीकासर्वस्वकारादिभिरुक्तम्। आपद्येथाः प्राप्नुहि आङ्पूर्वकात् 'पद गतौ' इत्यस्माद्दैवादिकात्कर्तरि लिङ्॥ अत्र वृक्षवाटीशब्देनानुपदोदाहृतश्रीरामायणश्लोकस्थं "पुप्लुवे वृक्षवाटिकाम्" इत्येतत्प्रत्यभिज्ञाप्यते॥ यद्यपि 'अमात्यगणिकागेहोपवने वृक्षवाटिका' इति नामलिङ्गानुशासनाद्वृक्षवाटिकाशब्दोऽमात्यादिगृहोपवने रूढः। तथाऽपीह राक्षस-

राजगृहारामवाचिनिष्कुटशब्दस्य पृथगुक्तेरुक्तरीत्या यौगिकार्थ एव स्वीकार्यः ॥ अनेन स्वजनकादिभ्योऽप्यतिशयिनो मारुतेर्बलपराक्रमादिप्रभाव इति द्योत्यते ॥ यद्वा—ननु नभस्वद्वास्वदादीनामपि निरङ्कुशप्रचारानिरोधिनीं राक्षसराजवृक्षवाटीं कथं नामाहं प्रविशेयमित्यत आह--प्रथमलुलितामिति ॥ आञ्जनेयप्रचारैः उक्तोऽर्थः प्रथमलुलितां इतः पूर्वमेव व्यालोळितां 'तद्वनं मथितैर्वृक्षैर्भिन्नैश्च सलिलाशयैः। चूर्णितैः पर्वताग्रैश्च बभूवाप्रियदर्शनम् ॥ नानाशकुन्तविरुतैर्नागानामपि निस्वनैः॥ ताम्रैः किसलयैः क्लान्तैः क्लान्तद्रुमलतायुतम् । न बभौ तद्वनं तत्र दावानलहतं यथा' इत्याद्युक्तरीत्या प्रतिहतामिति भावः ॥ 'लुड विलोडने' कर्मणि क्तः, लडयोरभेदः । अतस्त्वं तां प्रवेष्टुं मास्म बिभेरिति भावः । अत्र तीक्ष्णांशोश्शैशिर्यादिधर्मसंबन्धेन चन्द्रत्वेन संदेहविषयत्वात्संदेहालङ्कारः । सीताशोकज्वलनसदृशैरित्यत्र रूपकानुप्राणिता उपमा उत्प्रेक्षा वेत्यनयोस्संदेहसङ्करः । सीताशोकेत्याद्यशोकविशेषणस्य वृक्षवाटीसंप्रदीप्ततां प्रति हेतुत्वात्काव्यलिङ्गमुक्तसङ्करानुप्राणितम् आञ्जनेयप्रचारैः प्रथमलुलितामिति विशेषणस्य वृक्षवाटीप्रवेशसौकर्याभिप्रायगर्भत्वात्परिकर इत्येतेषां संसृष्टिः । संप्रदीप्तामशोकैरित्यनेन तत्र प्रविशतस्तवापि 'तेषां द्रुमाणां प्रभया मेरोरिव दिवाकरः । अमन्यत तदा वीरः काञ्चनोऽस्मीति वानरः' इत्युक्तरीत्या हनूमत इव सुवर्णसवर्णता भवितेति द्योत्यते ॥ तेन च तद्गुणालङ्कारो व्यज्यते ॥७॥

अथ "काञ्चनीं शिंशुपामेकां ददर्श हनुमान्कपिः" इत्युक्त-

रीत्या हनूमानिव त्वमपि तत्र तद्दृष्टामेकां शिंशुपामवलोकिष्यस इत्याह—

**तस्यामन्यैर्वियति विहगैस्सार्धमानन्दनिघ्नैः**
**स्थानेस्थाने निहितनयनो वर्तयन्मण्डलानि ।**
**द्रक्ष्यस्येकां जनकदुहितुस्सौम्य दुर्जातबन्धुं**
**न्यस्ताकल्पां क्वचन विटपे शिंशुपां सान्द्र-**
**शाखाम् ॥ ८ ॥**

तस्यामिति ॥ हे सौम्य! तस्यां वृक्षवाटिकायां आनन्दस्य निघ्नैः अधीनैः त्वद्दर्शनानन्दपरवशैरित्यर्थः ॥ 'अधीनो निघ्न आयत्तः' इत्यमरः ॥ निपूर्वकाद्धन्तेः "घञर्थे कविधानम्" इति कः । "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपः "हो हन्तेः" इति कुत्वम् । निहन्यते प्रतिकूलमाचरन्पीड्यते प्रभुणेति निघ्न इति टीकासर्वस्वकारादयः । अन्यैः इतरैः विहायसि गच्छन्तीति विहगाः पक्षिणः तैस्सार्धं 'अन्यत्रापि दृश्यते इति वक्तव्यम्' इति गमेर्डप्रत्यये "डे च विहायसो विहादेशो वक्तव्यः" इति विहायश्शब्दस्य विहादेशः वियति नभसि "वियद्विष्णुपदम्" इत्यमरः ॥ मण्डलानि मण्डलाकारगतिविशेषान् वर्तयन् रचयन् सन्, स्थानेस्थाने प्रतिस्थानमित्यर्थः ॥ वीप्सायां द्विर्भावः । निहिते निक्षिप्ते नयने दृष्टी येन स तथोक्तश्च सन् जनकदुहितुः सीतायाः 'अनर्थानामभागिनी, अदुःखार्हामिमां देवीम्' इत्याद्युक्तरीत्या दुःखान-

र्हीया इति भावः । दुर्जाते व्यसने बन्धुं बन्धुवदाश्वासकारिणीं 'दुर्जातं व्यसनं प्रोक्तमसम्यग्जातवस्तुनि' इति विश्वः ॥ न हि तदन्या बान्धवी तस्यास्तत्रास्तीति भावः, यथोच्यते "सा भर्त्स्यमाना भीमाभी राक्षसीभिर्विरानना । सा बाष्पमपमार्जन्ती शिंशुपां तामुपागमत्" इति ॥ अत एव क्वचन कस्मिंश्चित्, विटपे शाखायां न्यस्ताः तया निहिताः आकल्पाः भूषणानि यस्यां तां तथाभूतां, प्रत्ययिततमेषु बान्धवेष्वेव हि दुर्दशोपप्लवेषु जनैराभरणादिकं रक्षणाय न्यासीक्रियत इति भावः, अत्र ॥ "वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् । तान्याभरणजालानि शाखाशोभीन्यलक्षयत्" इत्येतदनुसन्धेयम् । सान्द्राः किसलयपलाशादिनिरन्तराः शाखाः यस्यास्तां तथाभूतां च, अनेन 'सुपुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् । तामारुह्य महाबाहुश्शिंशुपां पर्णसंवृताम्' इत्युक्तप्रकारेण किसलयकुसुमादिसमग्रतया सान्द्रच्छायत्वद्योतकेन सीतानिवासार्हत्वं व्यज्यते । एकां काञ्चिदित्यर्थः ॥ केचित्तु—अद्वितीयामिति व्याचक्षते शिंशुपां अगरुतरुं 'पिच्छिलागरुशिंशुपाः' इत्यमरः । द्रक्ष्यसि अनेन 'काञ्चनीं शिंशुपामेकाम्' इत्येतत्प्रत्यभिज्ञापकेन काञ्चनमयत्वमप्यस्यास्सूच्यते ॥ अत्र शिंशुपायां बन्धुत्वारोपाद्रूपकं तच्च निरवयवम् पक्षिजातिगतमण्डलवर्तनादिस्वभाववर्णनात्स्वभावोक्तिश्चेत्येते संसृज्येते ॥ ८ ॥

अथैतावद्दूरपथगमनफलभूतं तत्रैव तव सीतादर्शनं भविष्यतीत्याह—

मूले तस्याः किमपि सवनक्षेत्रसंस्कारजातं
यत्र क्वापि स्थितमपि सखे त्रासहीनं महिम्ना ।
काले तस्मिन्कथमपि मया वीर्यशुल्केन लब्धं
द्रष्टव्यं तत्ते दिनकरकुलद्योतकं दिव्यरत्नम् ॥ ९

मूल इति ॥ हे सखे ! अनेन 'आत्मवत्सुहृदिष्यते' इत्युक्तरीत्या आत्मतुल्यस्य तव 'अच्छलं मित्रभावेन सतां दारावलोकनम्' इत्युक्तरीत्या मत्प्रियादर्शनं युक्तमेवेति व्यज्यते । तस्याः शिंशुपायाः मूले अधस्तादिति यावत् 'तस्याधस्ताच्च तां देवीम्' इत्यादिभिस्तदधःप्रदेशे तन्निवासोक्तेः, सवनक्षेत्रस्य यज्ञभूमेः संस्कारेण हलमुखकर्षणेन, जातं आविर्भूतं अनेन 'उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते' इत्यादिकं प्रत्यभिज्ञाप्यते । यद्यप्यत्र संस्कारशब्दो न भूषणार्थकः, नापि समवायार्थकः, येन 'संपरिभ्यां करोतौ भूषणे, समवाये च' इति सूत्राभ्यां समःपरिभूतस्य करोतेस्सुडागमस्स्यात्, किं तु समीकरणाद्यर्थकः तथाऽपि 'संस्कृतं भक्षाः' इति ज्ञापकात्क्वचिद्भूषणेऽसमवायेऽपि भवतीत्यदोषः, सवनक्षेत्रसंस्कारजातमित्यनेन मानुषीगर्भसंबन्धमात्रस्यापि वैधुर्येण विशुद्धक्षेत्रेऽवतीर्णतया स्वस्मादप्यतिशयितं तत्पवित्रतमत्वमिति द्योतितं, रत्नपक्षे, विशिष्टाकरविशोधनेनाविर्भूतमिति गम्यते । यत्र क्वापि यत्र क्वचिन्निशाचरादिरौद्रतमप्रदेशेऽपीति भावः । स्थितमपि, महिम्ना पातिव्रत्यादिस्वप्रभावेणैव न त्वन्यप्रभावावलम्बनेन, यथोच्यते तथैव

'असंदेशात्तु रामस्य तपसश्चानुपालनात् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा' इति । त्रासहीनं निर्भयं, अयं भावः—निज दोर्दण्डतेजसा सकललोकपालविद्रावणं रावणमपि तृणीकृत्य 'जनस्थाने हतस्थाने निहते रक्षसां बले । अशक्तेन त्वया रक्षः कृतमेतदसाधु वै ॥ आश्रमं तु तयोश्शून्यं प्रविश्य नरसिंहयोः । गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम ॥ न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया । शक्यं सन्दर्शने स्थातुं शुना शार्दूलयोरिव ॥ क्षिप्रं तव स नाथो मे रामस्सौमित्रिणा सह । तोयमल्पमिवादित्यः प्राणानादास्यते शरैः' इत्यादि वदन्त्यास्तस्या रक्षोभवननिवासेऽपि का हि नाम साध्वसवार्तेति ॥ रत्नपक्षे—यत्र क्वापि रत्नपरीक्षागन्धजनुषान्धजनबन्धुरे यस्मिन्कस्मिंश्चिदाभीरपल्लयादौ स्थितमपि महिम्ना निसर्गशुद्धतातिशयेन त्रासहीनं त्रासाख्यमणिदोषरहितमित्यर्थः । त्रासेत्युपलक्षणं वर्णाल्पत्वादिदोषाणाम् । यथोक्तं रत्नपरीक्षायाम्—वर्णाल्पता तथा रेखा त्रासः काकपदं च यत् । बिन्दुश्चैवेति पञ्चैते महादोषा उदाहृताः' इति 'मणिदोषाः' इति पाठान्तरं 'त्रासो भये मणेर्दोषे' इति मेदिनी ॥ न ह्यस्थानपतनमात्रेणात्युत्तमस्य रत्नस्य दोषः प्रसज्जेदिति भावः । तस्मिन्काले विश्वामित्रानुयात्रया जनकनगरप्रवेशावसरे । तस्मिन्काल इत्युक्तिस्तु 'ते हि नो दिवसा गताः' इत्यादिवन्निर्वेदातिशयेन मया मदन्यः क ईदृशभाग्यवानिति भावः । लब्धं प्राप्तं केवलं मयैव लब्धं न तु पित्रादिप्रयत्नवशेनेति भावः । यथोक्तं दश

रथं प्रति जनकेन वाचिकं 'पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा। राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः॥ सेयं मम सुता राजन्विश्वामित्रपुरस्सरैः। यदृच्छयाऽऽगतैर्वीरैर्निर्जिता तव पुत्रकैः॥ तच्च राजन्धनुर्दिव्यं मध्ये भग्नं महात्मना। रामेण हि महाराज महत्यां जनसंसदि॥ अस्मै देया मया सीता वीर्यशुल्का महात्मने। प्रतिज्ञां कर्तुमिच्छामि तदनुज्ञातुमर्हसि' इति। अत्र पुत्रकैरिति पूजायां बहुवचनं जामातृत्वाध्यवसायान्महाराजकुमारत्वाद्वेति भूषणे स्थितम्। निर्जितयैकस्मिन्नामे बहुवचनप्रयोगस्तु इतरनरपतिदुरारोपशंकरशरासनभङ्गाद्यतिमानुषतदीयपौरुषविशेषजनितबहुमानातिशयादिति महेश्वरतीर्थः। एवं रामायणपूर्वोत्तरग्रन्थविरोधाभावादत्र मयेत्युक्तिर्न रामायणेन विरुध्यत इति द्रष्टव्यम्। मयाऽपि किं याञ्चादिना लब्धं येन तद्रत्नमल्पार्घमन्यसाधारणं वा सम्भाव्येतेत्यत आह—वीर्यशुल्केनेति। वीर्यं बलं पराक्रमप्रभावो वा 'वीर्यं बले प्रभावे च' इत्यमरः। वीर्यतेऽनेनेति वीर्यम् 'वीर विक्रान्तौ' अस्मात् 'अचो यत्' इति यत् 'वीरे साधु वा' इत्यमरसुधायाम्। तदेव शुल्कं श्वशुराय देयं कन्यापणद्रव्यम् 'पथिकैर्मार्गरक्षिभ्यो जामात्रा श्वशुराय च। राज्ञे चाश्वादिविक्रेत्रा प्रदेयं शुल्कमस्त्रियाम्' इति रत्नमाला, 'शुल्कं घट्टादिदेये स्याज्जामातुर्बन्धकेऽपि च' इति विश्वश्च। तेन लब्धं न तु धनादिरूपशुल्केनेति भावः। अनेन वीर्यशुल्कपदेनानुपदोदाहृतश्रीरामायणश्लोकगतवीर्यशुल्कापदं प्रत्यभिज्ञाप्यते। तदपि किमल्पप्रया-

मेनैव लब्धमित्यत्राह कथमपीति । ‘इदं धनुर्वरं राजन् संस्पृशामीह पाणिना । यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा’ इत्युक्तरीत्या धनुरारोपणविषयकेण महता प्रयत्नेनेत्यर्थः ॥ ‘कथमादि तथाऽप्यन्तं यत्नगौरवबाढयोः’ इत्युत्पलमालायाम् । अयं भावः- ‘इदं धनुर्वरं राजन् जनकैरभिपूजितम् । राजभिश्च महावीर्यैरशक्तैः परिपूरितुम् ॥ नैतत्सुरगणास्सर्वे नासुरा न च राक्षसाः । गन्धर्वयक्षप्रवरास्सकिन्नरमहोरगाः । क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे ॥ आरोपणे समायोगे वेपने तोलनेऽपि वा’ इत्याद्युक्तमहाप्रभावस्य ‘इदं च धनुरुद्यम्य सज्यं यः कुरुते नरः । तस्य मे दुहिता भार्या भविष्यति न संशयः’ इत्युक्तरीत्या मिथिलाधिनाथेन प्रतिज्ञाय कन्याशुल्कतयाऽवस्थापितस्य ‘तच्च दृष्ट्वा धनुश्श्रेष्ठं गौरवाद्गिरिसन्निभम् । अभिवाद्य नृपा जग्मुरशक्तास्तस्य तोलने’ इत्युक्तप्रक्रियया तत्तोलनासमर्थतया म.न्यै राजन्यैर्दूरान्नमस्कृतस्य ‘दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान्’ इत्युपक्रम्य ‘तदेतद्देवदेवस्य धनूरत्नं महात्मनः । न्यासभूतं तदा न्यस्तमस्माकं पूर्वके विभो’ इत्यन्तं जनकेन प्रख्यापितापदानस्य खण्डपरशुदोर्दण्डकोदण्डस्यारोपणलक्षणपणनिर्वहणादप्यतिशयितः कतमो नाम महीयान्प्रयत्न इति । अनेनास्य रत्नस्यात्यादरणविषयत्वं व्यज्यते ॥ यथोच्यते ‘कृच्छ्रलब्धमधिकादरदं नु’ इति । दिनं करोतीति दिनकरस्सूर्यः । ‘कृञो हेतुताच्छील्यानुलोम्येषु’’ इत्यनेन हेत्वर्थे ताच्छील्यार्थे वा करोतेष्टप्रत्ययः । अथवा करोतीति करः दिनस्य कर इति

षष्ठीसमासः, तस्य यत्कुलं गोत्रं तस्य द्योतकं प्रकाशकं, न केवलं निशाकरकुलस्य, नापि दिनकरकुले ममैकस्यैव, अपि तु, सकलभुवनविद्योतनशीलस्य प्रद्योतनकुलस्याखिलस्याप्युद्द्योतकमिति भावः। अनेन तत्तेजोवैभवं वाङ्मनसागोचरमिति व्यज्यते। तत् जगद्विलक्षणजन्म, तल्लक्षणादिमत्त्वेन प्रसिद्धं, किमपि 'यतो वाचो निवर्तन्ते' इत्याद्युक्तरीत्याऽतिवाङ्मनसवैभवमित्यर्थः। दिव्यरत्नं लोकोत्तरं रत्नं रत्नत्वेनाध्यवसिना सीतेति हृदयम्। अनेन सीतायां 'अत्रासं मानदं मान्यं स्थिरं भोग्यं प्रकाशकम्। महार्घं मङ्गलं रत्नं सुरक्षं सुग्रहं नृणाम्' इत्युक्तलक्षणरत्नत्वाध्यवसानेमात्रोक्तान्यत्रासत्वादीनि विहाय मानदत्वमान्यत्वस्थिरत्वभोग्यत्वादीनि यथार्हं व्यज्यन्ते। ते त्वया 'कृत्यानां कर्तरि वा' इति षष्ठी। दृश्यं द्रष्टुमर्हं भविष्यतीत्यर्थः॥ दृशेरर्हार्थे 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप्। 'क्ङिति च' इति गुणनिषेधः। अत्र विषयस्य सीतायास्स्वशब्देनोल्लेखनं विना विषयिभूतरत्नशब्देनैव ग्रहणाद्विषयनिगिरणं तत्पूर्वकं विषयस्य विषयिरूपतयाऽध्यवसानात्प्रसिद्धरत्नापेक्षयोत्कर्षप्रतिपादनाच्चाधिकाभेदरूपकातिशयोक्तिः। अत्रातिशयोक्तौ रूपकविशेषणं रूपके प्रदर्शितानां विधानमत्रापि संभवोऽस्तीत्यतिदेशप्रदर्शनार्थमिति तत्रतत्रावोचामाधस्तात्। वीर्यशुल्केनेत्यत्र, आरोप्यमाणं शुल्कं वीर्यतापत्त्या रत्नत्वेनाध्यवसितसीतालाभरूपकार्योपयोगि, न स्वात्मना, मिथिलेश्वरस्य जामातृपराक्रमैकापेक्षितया शुल्कार्थित्वाभावादिति परिणामालङ्कारः। तथा च सूत्रं

'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति । अनेन परिणामेन त्रासशब्दवाच्यभयदोषरूपार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्या च पूर्वोक्तरूपकातिशयोक्तिरुत्तम्भ्यत इति संकरः ॥९॥

सीताङ्गप्रत्यङ्गसौन्दर्यादिकं स्मरंस्तामेतामनुवर्णयत्येकेन श्लोकेन—

**सा मे दृष्टि (दिष्टं)(दिष्टि)श्शफरनयना संनतभ्रूस्सुकेशी**
**तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा ।**
**बाला युष्मत्प्रतिमगमना वेदिमध्या वराङ्गी(ङ्गा)**
**शृङ्गाराख्यं निधिमधिगता श्रेयसी देवतेव ॥**

* सेति ॥ शफरौ मत्स्यविशेषौ 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः ॥ ताविव नयने यस्यास्सा तथाभूता, अनेन नयनयोस्थाळथळ्यचाञ्चल्यादिकं 'मत्स्याब्जहरिणाभाक्षी नारी सौभाग्यशालिनी' इति सामुद्रिकोक्तशुभलक्षणवत्त्वं च द्योत्यते । 'न क्रोडादिबह्वचः' इति निषेधान्न स्वाङ्गलक्षणो ङीष् । संनते सम्यग्धनुराकारतया नम्रे भ्रुवौ यस्यास्सा तथाभूता, भ्रूशब्दस्योवङ्स्थानतया 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञानिषेधात् 'नद्यृतश्च' इति न कप् । 'असंगतनतभ्रूर्या सा सौभाग्यवती भवेत्' इत्युक्तलक्षणवतीति भावः । 'पूर्णचन्द्राननां सुभ्रूम्' इत्येतदत्र स्मर्तव्यम् । शोभनाः केशाश्शिरोरुहाः यस्यास्सा सुकेशी, 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति वैकल्पिको ङीष् । 'नीला दीर्घाः कुञ्चिताग्राः केशाश्चेत्सा पतिव्रता'

इत्युक्तलक्षणलक्षितेति भावः । 'स तामसितकेशान्तां, तां नील-केशीं बिम्बोष्ठीं, केशास्सूक्ष्मास्समा नीला भ्रुवौ चासंगते मम, सुकेशी संहतस्तनी; सा सुकेशी सुनासोरू' इत्यादिकमिह भाव्यम्। तन्वी स्वभावतनुका 'तन्वी सौख्यप्रदायिनी' इत्युक्तलक्षणवतीति भावः॥ 'सा प्रकृत्यैव तन्वङ्गी, स्वभावतनुका नूनं, तन्वीमप्यनलंकृताम्' इत्यादिकमिह ध्येयम् । तुङ्गावुन्नतौ यौ स्तनौ कुचौ ताभ्यां नता 'स्तोकनम्रा स्तनाभ्याम्' इत्युक्तरीत्या ईषन्नम्रा न तु वपुर्दोषादिति भावः । अनेनास्यास्साम्राज्यार्हता द्योत्यते । 'पद्मकोशप्रतीकाशौ सुवर्णकलशोपमौ । स्तनावविरळौ यस्यास्सा राजमहिषी भवेत्' इति सामुद्रिकोक्तेः । 'स्तनौ चाविरळौ पीनौ ममेमौ मग्नचुचूकौ । एतावुपचितौ वृत्तौ संहतौ संप्रवल्गितौ ॥ पीनोन्नतमुखौ कान्तौ स्निग्धौ ताळफलोपमौ । मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ' इत्यादिकमिह भाव्यम् । तप्तं पुटपाकशोधितं यत् जाम्बूनदं जम्बूनद्यां भवं सुवर्णं, जम्बूर्नाम काचन जम्बूफलरसमयी नदी तत्तीरमृत्स्ना सुवर्णं भवति देवादिधारणार्हम् । यथोच्यते वैष्णवे—'जम्बूद्वीपस्य सा जम्बूर्नामहेतुर्महामुने । महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै ॥ पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वशः । रसेन तेषां प्रख्याता तत्र जम्बूनदीति वै ॥ सरित्प्रवर्तते सा च पीयते तन्निवासिभिः । न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः ॥ तत्पानस्वस्थमनसां जनानां तत्र जायते । तीरमृत्तद्रसं प्राप्य सुखवायुविशोषिता ॥ जाम्बूनदा-

ण्यं भवति सुवर्णं सिद्धभूषणम्' इति ॥ तस्यामेवाभा यस्यास्मा तथोक्ता । जाम्बूनदशब्देन कार्तस्वराद्यपेक्षयाऽस्य सुवर्णस्योत्कर्षस्सूचितः । जाम्बूनदमेव देवगन्धर्वसिद्धादिभूषणार्हतया लोकोत्तरद्युतिशालि, तत्रापि चेत्तदपि स्यात्तप्तं किमु वक्तव्यं तद्द्युतिवैभवम् । ईदृशसुवर्णोपमायाः सीतायाः द्युतिवैभवमतिमानुषमिति व्यज्यते । या हि प्रशस्यते 'कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः' इत्यादिना । किंचानयैवोपमया स्वेददौर्गन्ध्यादिगन्धवैधुर्येण स्थिरपरिमळवत्तयाऽस्याः पद्मिनीजातित्वं 'तप्तस्वर्णसवर्णाङ्गी ह्याधिराज्येऽभिषिच्यते' इत्युक्तसाम्राज्यार्हशुभलक्षणवत्त्वं च द्योतितम् । पद्मिनीजातिलक्षणं त्वग्रे वक्ष्यते । अत्र 'सा तप्तनवहेमाभा, तप्तकाञ्चनवर्णाभा' इत्यादिकमनुसन्धेयम् । यूयं हंसा एव प्रतिमा उपमास्सदृशाः यस्य तत्तथोक्तं 'प्रतिमा प्रतियातना प्रतिच्छाया' इत्यमरः ॥ युष्मत्प्रतिमं गमनं यस्यास्सा तथोक्ता । युष्मदिति बहुवचनेन भूयसामेव हंसानां मिळितानां तद्गमनौपम्यं कथंचित्सम्भाव्यं, न त्वेकैकस्य हंसस्येति गतिरामणीयकातिशयो द्योतितः । राजहंसगमनतुल्यसुन्दरमन्दगमनेत्यर्थः । अनेन 'हंसस्येव गतिर्यस्यास्साऽधिराज्ञी भविष्यति' इत्युक्तलक्षणभाक्त्वं सूचितम् । वेदिः यज्ञवेदिः तस्याः मध्यमिव मध्यं यस्यास्सा तथोक्ता । 'तनुमध्या भवेन्नारी वस्त्रभूषणशालिनी' इत्युक्तलक्षणेति भावः । अत्र 'करान्तमितमध्याऽसि, सुमध्यां सुप्रतिष्ठिताम्' इत्यादिकं स्मर्तव्यम् किं बहुना—सर्वाण्यपि सुलक्षणानि तस्यां सन्तीत्यभिप्रयन्नाह—वराङ्गीति । वराण्यङ्गानि

यस्यास्सा तथोक्ता 'अङ्गगात्रकण्ठेभ्यो वक्तव्यः' इति ङीष्। वस्तुतस्तु—वराङ्गेति पाठ एव स्वच्छः उदाहृतवार्तिकस्य भाष्याद्यनुक्तत्वेनाप्रामाणिकत्वादङ्गशब्दस्य संयोगोपधत्वेन 'असंयोगोपधात्' इति पर्युदासात्स्वाङ्गलक्षणङीषोऽप्राप्तेः शृङ्गाराख्यमित्यनन्तरपदगतगकारानुप्राससौन्दर्यातिशयलाभाच्च। 'सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः। वृत्ते चारोमशे जङ्घे दन्ताश्चाविरळा मम॥ शङ्खे नेत्रे करौ पादौ गुल्फावूरू च मे चितौ। अनुवृत्तनखास्स्निग्धास्समाश्चाङ्गुळयो मम॥ मग्ना चोत्सङ्गिनी नाभिः पार्श्वोरस्काश्च मे चिताः। प्रतिष्ठितां द्वादशभिर्मामूचुश्शुभलक्षणाम्॥ समग्रयवमच्छिद्रं पाणिपादं च वर्णवत्' इत्याद्युक्तप्रक्रियया ऽऽधिराज्यार्हां तमस-

---

अष्टमदशमश्लोकयोरनुसन्धेयेयं टिप्पणी.

निहिते निक्षिप्ते नयने दृष्टी येन स तथोक्तश्च सन् इति रसास्वादिनी॥ यत्तु इदं च स्थानानां दर्शनीयत्वातिशयेन वा शिंशुपोपलक्षणहेतुना वेति बोध्यम्—इति तन्न. शिंशुपोपलक्षणहेतुताया इह विवक्षितत्वे "वृक्षे वृक्षे निहितनयनः" इत्येव वचनव्यक्त्यवतारावश्यंभावात्। तस्मात् स्थानस्थाननयननिधानं मण्डलवर्तनवत् पक्षिजातिस्वभाववर्णनार्थमेवोपात्तमित्यवधेयम्॥ एतेन—'निहितनयनत्वस्य शिंशुपादर्शनं प्रति हेतुत्वात्काव्यलिङ्गम्' इत्युक्तिरपि परास्ता॥ अत एवाचार्यैः "पक्षिजातिगतमण्डलवर्तनादिस्वभाववर्णनात् स्वभावोक्तिः" इत्यत्र निहितनयनत्वमप्यादिपदेन सङ्गृह्य स्वभाववर्णनौपयिकत्वमेव तत्र स्पष्टीकृतमिति दिक्॥ ८॥

यूयं हंसा एव प्रतिमा उपमास्सदृशा यस्य तदिति रसास्वादिनी। यत्तु--यूयं हंसा एव प्रतिमा उपमानं यस्य तथोक्तं गमनं यस्यास्सा॥

कललक्षणमनोहारिसर्वावयवेति भावः। शृङ्गारो नाम 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। नीता सदस्यरस्यत्वं रतिश्शृङ्गार उच्यते' इत्युक्तलक्षणो रससार्वभौमः। शृङ्गं प्राधान्यमियर्तीति शृङ्गारः। तत्प्राधान्यं च ध्वनिकारेणोक्तं 'शृङ्गार एव मधुरः परप्रह्लादनो रसः' इति। शृङ्गार इत्याख्या अभिधा यस्य तं तथोक्तं निधिं शेवधिं अधिगता प्राप्ता अतिशयेन प्रशस्या श्रेयसी प्रशस्यशब्दादीयसुनि 'प्रशस्यस्य श्रः' इति श्रादेशः। देवतेव तदधिष्ठात्री देवतेव स्थितेत्यर्थः। सा पूर्वोक्ता बाला सीतेत्यर्थः। मे मम, दृष्टिः चक्षुरेव लोचनवत्सर्वोपकारविधायिनीति भावः। दिष्टमिति पाठे भाग्यमेवेत्यर्थः। 'दैवं दिष्टं भागधेयं भाग्यम्' इत्यमरः॥ अस्मत्कृततपःफलमेवेति भावः। दिष्टिरिति पाठेऽपि स एवार्थः। यद्वा—दिष्टिस्सुखमानन्दो वा सुखहेतुरानन्दहेतुर्वेति यावत्। 'दिष्टिर्ध्यानसुखानन्दपरिणामाः' इति रत्नमाला। अत्र शफरनयनेत्यत्र धर्मवाचकलुप्ता, तप्तजाम्बूनदाभेत्यत्रोपमानवाचकलुप्ता, युष्मत्प्रतिमगमनेत्यत्र धर्मोपमानलुप्ता, वेदिमध्येत्यत्रापि धर्मोपमानलुप्तेति चतस्र उपमाः सीतायाश्शृङ्गारदेवतातादात्म्येन सम्भावनादुक्तविषया स्वरूपोत्प्रेक्षा। सा मे दृष्टिरिति तस्या दृष्टित्वेन दि-

---

युष्मत्पदं युष्मद्गमनपरामर्शि तत्तु—तन्मञ्जीरप्रतिमनिनदे इत्यत्रैव पूर्वाश्वासे निराकृतप्रायं वेदितव्यम्॥ किञ्च—युष्मत्पदस्यात्र युष्मद्गमनलाक्षणिकत्वे सर्वनामत्वविरहेण यूयादेशासंभवेन यूयामत्यादिवग्रहप्रदर्शनमसमञ्जसम्। स्फुटतरं च लाक्षणिकानामसर्वनामत्वं "सर्वावत्" इति प्रतीकशेखरादौ॥ १०॥

ष्टमिति पाठे भाग्यत्वेन वा रूपणाद्रूपकम्, स्वभावोक्तिश्चेत्येतानि सं सृज्यन्ते। दिष्टिरिति पाठे दिष्टिशब्दस्य सुखानन्दान्यतरार्थकत्वे 'हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते' इत्युक्तलक्षणो हेत्वलङ्कारः। भाग्यरूपार्थकत्वे तु रूपकमेव। अत्र तुङ्गस्तनभरनतेत्यादिभिः कैश्चिद्विशेषणैः 'स्तनौ पीनौ तनुर्मध्यः पादे पाणौ च रक्तिमा। ऊरू करिकराकारावङ्गं व्यक्ताङ्गसन्धिकम्' इत्याद्युक्तद्वितीययौवनावस्था सूच्यते। तप्तजाम्बूनदाभेत्यनेन लावण्यं द्योत्यते। यथाच तल्लक्ष्यते—'भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम्। चक्षुरानन्दजनकं लावण्यमिति कथ्यते' इति। विशेषणान्तरै रूपसौन्दर्याभिरूप्याणि द्योत्यन्ते। तथाच तल्लक्षणानि—'आरोप्यावेध्यविक्षेप्यपारिहार्यैरभूषितम्। यद्भूषितमिवाभाति तद्रूपमिति कथ्यते॥ अङ्गप्रत्यङ्गकानां यत्सन्निवेशो यथोचितम्। सुस्निग्धसन्धिबन्धं यत्तत्सौन्दर्यमितीर्यते॥ यदात्मीयगुणोत्कर्षैर्वस्त्वन्यनिकटस्थितम्। सामीप्यं नयति प्राज्ञैराभिरूप्यं तदुच्यते' इति। वराङ्गीत्यनेन 'या स्पर्शासहताऽङ्गेषु कोमलस्यापि वस्तुनः। तत्सौकुमार्यं त्रेधा स्यान्मुख्यमध्याधमक्रमात्' इत्युपक्रम्य 'अङ्गं पुष्पादिसंस्पर्शासहं येन तदुत्तमम्' इत्युक्तलक्षणोत्तमसौकुमार्यवदङ्गत्वं व्यञ्जितम्। एतावता 'यौवनं रूपलावण्ये सौन्दर्यमभिरूपता। मार्दवं सौकुमार्यं चेत्यालम्बनगता गुणाः' इत्युक्तालम्बनगुणसमृद्धिरभिव्यञ्जिता भवति। ईदृशशृङ्गारालम्बनदिव्यमङ्गलविग्रहस्मृतेर्गम्यमानतया स्मृतिर्नाम सञ्चारी सीतया आलम्बनेन शरदागमविजनस्थानावस्थानादिभिर्गम्यमानैस्तटस्थोद्दीपनैश्च विभावितः गम्यमानैर्भ्रूविक्षेपादिभि-

रनुभावितः स्मृत्या सञ्चारितः रामगतस्सीताविषयकरतिभावः परिपोषमापद्यत इति शृङ्गाररसो विप्रलम्भाख्योऽभिव्यज्यते ॥ १० ॥

कैश्चिद्चिह्नैर्ज्ञेया मया सा देवीत्यत्र तत्परिज्ञानचिह्नानि तदवस्था एवेत्यभिप्रयन्मद्विश्लेषप्रयुक्तासु भूयसीष्ववस्थासु यां कांचिदवस्थामनुभवन्ती सा जनकनन्दिनी तव नयनपथमधिरोक्ष्यतीति तावद्युग्मेनाह भगवान्—

**सा ते यावन्नयनपदवीं याति मोहालसा वा**
**संदेशं वा मदुपगतये श्रावयन्ती शकुन्तान् ।**
**अत्यासन्नप्रियवचनतां सूचयद्भिर्निमित्तैः**
**एतामश्रुस्थगितनयनं वीक्षमाणा दिशं वा ॥ ११**

सा सीता मोहेन 'आपद्भीतिवियोगाद्यैर्मोहश्चित्तस्य मूढता । विक्रियास्तत्र विज्ञेया इन्द्रियाणां च शून्यता ॥ निश्चेष्टताऽङ्गभ्रमणपतनाघूर्णनादयः' इत्युक्तलक्षणेन वैचित्त्येन, अलसा 'स्वभावश्रमसौहित्यगर्भनिर्भरतादिभिः । कृच्छ्रात्क्रियोन्मुखत्वं यत्तदालस्यमिमाः क्रियाः ॥ अङ्गभङ्गः क्रियाद्वेषो जृम्भणाक्षिविमर्दने । शय्यासनैकक्रियता तन्द्रानिद्रादयोऽपि च' इत्युक्तलक्षणालस्यमन्थरेति भावः । 'मूर्छा तु कश्मलं मोहः, मन्दस्तु तुन्दपरिमृज आलस्यश्शीतकोऽलसोऽनुष्णः' इति चामरः । मदुपगतये मत्समीपागमनाय शकुन्तान् पक्षिणः सन्देशं स्ववार्तां 'सन्देशस्तु प्रोषितस्य स्ववार्ताप्रेषणं हि यत्' इति लक्षणं, श्रावयन्ती सती

वा अहमिव त्वां माऽपि त्वादृशान्विहगान्कदाचित्सन्देशं श्रावयेदिति भावः। अत्र 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति शब्दकर्मकात् शृणोतेरण्यन्तावस्थायां कर्तॄणां शकुन्तानां ण्यन्तावस्थायां कर्मत्वम्। अत्यासन्नं सद्योभावि प्रियवचनं हर्षावहवचश्श्रवणं यस्य तत् अत्यासन्नप्रियवचनं, तस्य भावः अत्यासन्नप्रियवचनता, तां 'शरदः कृतार्थता' इत्यादाविव सामान्ये नपुंसकम्, न त्वत्यासन्नप्रियवचनायाभाव इति विगृह्य 'त्वतलोर्गुणवचनस्य' इति पुंवद्भाव इति वक्तुमुचितम्। तत्र हि—'संज्ञाकृदन्ततद्धितान्तसमस्तसर्वनामसङ्ख्याशब्दातिरिक्तश्शब्दो गुणवचनशब्देनोच्यते आकडारसूत्रभाष्यतस्तथैव लाभात्' इति स्पष्टं प्रकृतसूत्रशेखरे। अत्र चात्यासन्नप्रियवचनशब्दस्य समस्ततया गुणवचनत्वायोगादुक्तरीत्यैवोपपत्तिः, एतेन 'संज्ञाजातिक्रियाशब्दान् हित्वाऽन्ये गुणवाचिनः' इति प्राचीनोक्तमनादरणीयमिति ध्येयम्। एतेनैव 'अत्यासन्नप्रियवचनायाः भावः, तत्रा 'त्वतलोर्गुणवचनस्य' इत्यत्र 'गुणशब्दस्य परतन्त्रमात्रपरत्वेन व्याख्यानात्पुंवद्भावः' इति केषांचिद्व्याख्यानं चोदासितव्यमेव। सूचयद्भिः ज्ञापयद्भिः अतिक्षिप्रमेव तव प्रियसन्दर्शनानन्दावहप्रीतिविषयालापश्रवणमवश्यंभावीति व्यञ्जयद्भिरिति भावः। निमित्तैः चिह्नैः 'निमित्तं हेतुचिह्नयोः' इति रत्नमाला। 'दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम्। ईषच्च हृषितो वाऽस्या दक्षिणाया ह्यदक्षिणः॥ अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते। करेणुहस्तप्रतिमस्सव्यश्चोरुरनुत्तमः॥ वेपमानस्सूच-

यति राघवं पुरतस्स्थितम् । पक्षी च शाखानिलयं प्रविष्टः पुनःपुनश्चोत्तमसान्त्ववादी । सुस्वागतां वाचमुदीरयानः पुनःपुनश्चोदयतीव हृष्टः ॥ तथ गतां तां व्यथितामनिन्दितां व्यपेतहर्षां परिदीनमानसाम् । शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपजीविनः ' इत्याद्युक्तप्रकारैश्शुभशकुनैरिति भावः । अश्रुभिः बाष्पैः ' अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् ' इति लक्षणम् । स्थगिते आच्छादिते ' स्थग आच्छादने, चौरादिकः ' इति ' स्थगयन्त्यमूश्शमितचातकार्तस्वराः ' इत्यत्र सर्वंकषायां मल्लिनाथः । वस्तुतस्तु—स्थगधातोश्चुरादिष्वदर्शनात् ' बहुळमेतन्निदर्शनम् ' इत्यनेनैवायं संभावनीयः ' अदन्तधातुनिदर्शनमित्यर्थः ' ' बाहुलकादन्येऽपि बोध्याः ' इति मूलकृत् । अस्माण्णिजन्तात्कर्मणि क्तः, अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । स्थगिते नयने यस्मिन्कर्मणि तद्यथा स्यात्तथा । अपि वा—निमित्तैरेतैश्शिवंकरैर्दुर्भगाया मम घटेत तादृशप्रियवार्ताश्रवणसौभाग्यमिति शोकहर्षसंवलितहृदयतया बाष्पायमाणविलोचनं यथा स्यात्तथेति भावः । एतां दिशं अस्मदधिष्ठितामुत्तरां ककुभं वीक्षमाणा सती वा । अनेन वक्ष्यमाणश्लोकेन च प्रोषितभर्तृकाया अनुभावाः प्रदर्शिताः । ते च भूपालेनोक्ताः—' दूरदेशं गते कान्ते खिन्ना प्रोषितभर्तृका । अस्यास्तु जागरः कार्श्यं निमित्तादिविलोकनम् ॥ मालिन्यमनवस्थानं प्रायश्शय्यानिषेवणम् । जाड्यचिन्ताप्रभृतयो विक्रियाः कथिता बुधैः ' इति । ते तव नयनपदवीं लोचनगोचरतामिति यावत् । यावद्याति यास्यतीत्यर्थः ।

यावच्छब्दोऽत्र भविष्यदर्थद्योतकः 'भविष्यदर्थं सातत्यं यावदप्रतियुग्वदेत्' इति शेषः। तावच्छब्दासहचरितः केवलो यावच्छब्दो भविष्यदर्थं सातत्यं चाभिदधातीति तदर्थः। एतच्च—'यावत्तावच्च साकल्ये' इत्येतद्व्याख्यावसरे टीकासर्वस्वादौ स्थितं, न ह्यत्र तावच्छब्दसहचरितो यावच्छब्दः, अत एव 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट्। अत एव च 'शङ्के संप्रति यावदभ्युदयते तत्त्वष्टृटङ्कोन्मृजारज्यद्बिम्बरजश्छटावलयितो देवस्त्रिधामीश्वरः' इत्यादिमुरारिमिश्रादिप्रयोगाश्च सङ्गच्छन्ते। यदत्र केचिद्व्याचक्षते—'सा सीता ते यावन्नयनपदवीं याति तावत्कालं मोहालसा वा' इत्युपक्रम्य 'एतां दिशं वीक्षमाणा वा तिष्ठतीति प्रकृतक्रियाध्याहारः' इति तदयुक्तं 'क्रियापदेन रहितमशरीरं तदुच्यते' इत्युक्ताशरीराख्यकाव्यदोषापत्तेः। ननु—तिष्ठतीत्यध्याहारेण दोषाभावस्समर्थित एवेति चेन्न तत्साधीयः भवन्तिपरस्यास्तेरेवाध्याहारस्य भाष्यसम्मतत्वेन काव्यविदभिमतत्वेन च क्रियान्तराध्याहारस्यायुक्तत्वात्, 'यश्च निम्बं परशुना' इत्यादौ वृश्चत्यादेरिव योग्यतावशादस्तिव्यतिरिक्तानामप्यध्याहारो न दोषायेति चेत् एवं यथाकथञ्चित्तद्दोषनिस्तारेऽपि पूर्ववाक्यनिर्दिष्टस्योद्देश्यसमर्पकस्य यच्छब्दप्रकृतिकयावच्छब्दस्योत्तरवाक्ये तच्छब्दप्रप्रकृतिकतावच्छब्देन विधेयसमर्पकेण प्रतिनिर्देशाभावादविमृष्टविधेयांशदोषो दुर्वार एव॥ तदुक्तं काव्यप्रकाशे—'अविमृष्टविधेयांशं अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र' इति। स च दोषो विधेयस्य गु-

णीभावे निर्देशवैपरीत्ये विधेयविशिष्टतया निर्दिष्टे विधेयस्यानन्वये-विधेयाप्रतीतौ चेति पञ्चधा भवति । अत्र च प्रथमे पददोषत्वमितरेषु वाक्यदोषत्वं, यथावद्विधेयनिर्देशाभावस्सर्वत्र समान इत्येकोपाधिना सर्वेष्वविमृष्टविधेयत्वमिति ध्येयम् । ननु—यत्तदोर्नित्यसंबन्धाद्यच्छब्दोपादाने तच्छब्दोऽप्यवश्यमुपादेयः, प्रकृते च स नोपात्त इति ह्यविमृष्टविधेयांशोद्भावनं 'कातर्यं केवला नीतिश्शौर्यं श्वापदचेष्टितम् । अतस्सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः' इत्यादौ यत्तदोः परस्परव्यभिचारेण नित्यसम्बन्धस्यैवासिद्धिरिति चेत्सत्यम्, यत्र तच्छब्दस्य प्रक्रान्तविषयत्वं प्रसिद्धविषयत्वमनुभूतार्थविषयत्वं वा तत्र यत्पदानपेक्षत्वेऽप्यन्यत्र तदपेक्षा नियतैव । यच्छब्दस्यापि यत्रोत्तरवाक्यगतत्वं, तत्र तच्छब्दं विनाऽप्यर्थावबोधनसामर्थ्येऽपि प्रकृते यच्छब्दप्रकृतिकयावच्छब्दस्य पूर्ववाक्यगतत्वेन तच्छब्दसापेक्षत्वात्तदनुपादाने भवत्येवाविमृष्टविधेयतेति ध्येयम् । तदुक्तं काव्यप्रकाशेऽस्मिन्नेव प्रकरणे—'प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना सापेक्ष इति, यथा—'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके'। इति पद्यस्यैव 'मीलितं यदधुना सुधाकरे भाति साधु सरसीरुहैः कृतम्' इति पाठे। तस्माद्यच्छब्दस्य पूर्वमुपादाने तच्छब्दोपादान एव निराकाङ्क्षता, यथाऽत्रैव, 'मीलितं यदधुना सरोरुहैर्भाति चन्द्रमसि साधु तत्कृतम्' इति । तस्मादत्र परोक्तव्याख्यानाभ्युपगमे तावत्पदानुपादानेन विधेयाप्रतीतेरविमृष्टविधेयांशदोषो दुर्वार एव । ननु—तावत्पदाध्याहारेणास्माभिर्दोषाभावो निर्व्यूढ

एवेति चेन्न—तथा सति 'मीलितं यदधुना सुधाकरे भाति साधु सरसीरुहैः कृतम्' इत्यादावपि तच्छब्दाध्याहारेणैवादोषतानिर्वाहे दोषत्वेन तदुदाहरणासङ्गत्यापत्तेः। उक्तरीत्या पाठान्तरकल्पनेन तददोषतानिर्वहणस्यानावश्यकतापत्तेः, अस्मदुक्तरीत्याऽनध्याहारेणैव स्वारसिकार्थसंभवे तावत्तिष्ठतीति पदद्वयाध्याहारपूर्वकास्वरसार्थकल्पनक्लेशानुसरणस्यानुचितत्वाच्च। ननु—यावच्छब्दोऽयं न यच्छब्दप्रकृतिकः येन निर्दिष्टप्रतिनिर्देशकतावच्छब्दविरहेण दोष उद्भाव्येत किं तु केवलाव्ययरूप एवेति चेन्न—'यावत्तावच्च साकल्ये' इत्यत्र यावत्तावच्छब्दयोर्यत्तत्परिमाणमिति विग्रहं प्रदर्श्य 'तद्धिताः इति बहुवचनेनान्येऽनुक्ता अपि तद्धिता ज्ञाताः तेन दावतुः' इति सुधायां व्याख्यातत्वेन यच्छब्दप्रकृतिकताया एव स्फुटत्वात्। अव्ययत्वं च 'तद्धितश्चासर्वविभक्तिः' इत्यनेन। तस्मादस्मदुक्तैव व्याख्या साधीयसी, शिष्टमुत्तरश्लोके ॥ ११ ॥

**आकल्पान्वा सविधनिहितानालपन्ती विमोहात्**
**अङ्गस्पर्शो रघुकुलपतेः स्मर्यते वा न वेति।**
**ध्यायन्ती वा चिरविरहितानेकशय्याविहारान्**
**तस्या नूनं नियतिजनिता तादृशी कालयात्रा॥१२**

आकल्पानिति ॥ विमोहात् विशेषतो वैचित्त्यात् आलापार्हानर्हपरिज्ञानवैधुर्यलक्षणोन्मादविशेषादिति यावत्। सविधनिहितान् भर्तृसन्निधाने भूषणधारणमनुचितमिति हस्तादिभ्योऽवमुच्याभ्यर्णविन्य-

स्तान् आकल्पान् भूषणानि 'आकल्पवेषौ नैपथ्यम्' इत्यमरः। रघुकुलपतेः श्रीरामचन्द्रस्य अङ्गस्पर्शः गाढपरिष्वङ्गावसरेषु सविशेषलब्धोऽवयवावमर्शः। स्मर्यते स्मरणपदवीमारोप्यते वा, न वा उत विस्मृत्य तूष्णीकां स्तब्धतयैवावस्थीयते वा, इति, आलपन्ती गमनागमनावसरेष्वाभाषमाणा वा 'स्यादाभाषणमालापः' इत्यमरः। 'गमनागमनावसरेषूच्यमानं वचनमालापः' इति तद्व्याख्यातारः। अनेनोन्मादस्सञ्चारी द्योत्यते। 'उन्मादश्चित्तविभ्रान्तिर्वियोगादिष्टनाशतः। वियोगजे तु चेष्टास्स्युर्धावनं परिदेवनम्॥ असंबद्धप्रलपनं शयनं सहसोत्थितिः। अचेतनैस्सहालापो निर्निमित्तस्मितादयः' इति तल्लक्षणम्। चिरं विरहिताः चिरविरहिताः, तांस्तथोक्तान्, बहुकालविश्लिष्टान् एकशय्यायां सहशयने, एकशय्याया वा विहारान् 'प्रौढालिङ्गनचुम्बनामितसुखप्रच्छन्नवेद्यान्तराः प्रायःक्लृप्तपरस्पराधरसुधापानप्रशान्तश्रमाः। प्रान्ताकूणितलोचनाः प्रतिमुहुः क्षामोक्तिसीत्कारिणोस्सीताराघवयोस्समग्रविभवाश्शृङ्गारलीला बभुः' इत्याद्युक्तप्रकारान् 'बाह्यमाभ्यन्तरं चैव द्विविधं रतमुच्यते। तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम्॥ द्वितीयं तु रतं साक्षान्नानाकरणकं मतम्' इत्युक्तविधाद्वितयभिदुरान् संभोगशृङ्गारविभवानिति भावः। विहारानिति बहुवचनेन सर्वोपचारसंपूर्णताव्यञ्जकेन संभोगस्य संपन्नत्वं गम्यते। तदुक्तं रसार्णवसुधाकरे—'संक्षिप्तस्संकीर्णस्संपन्नतरस्समृद्धिमानिति ते। पूर्वानुरागमानप्रवासकरुणानुसंभवाः क्रमतः' इत्युपक्रम्य 'भयव्यळीकस्मरणाद्यभावात्प्राप्तवैभ-

वः । प्रोषितागतयोर्यूनोर्भोगस्संपन्न ईरितः ' इति अयमेत्र। विस्तृत इति च व्यवह्रियते। न चैवं यूनोः प्रवासानन्तरभाव्येव संभोगस्संपन्न इत्युच्यते न तु केवलसंयुक्तयोरपीति वाच्यं, साहित्यरत्नाकरे केवलसंयुक्तयोरेव सीतारामयोस्संपन्नसंभोगमभिधाय 'अयं सर्वोपचारसंपन्नत्वाद्विस्तृतस्संभोगः अयमेव प्रवासानन्तरं वर्ण्यमानः प्रवासानन्तरजोऽपि भवतीति तस्यापीदमेवोदाहरणम् ' इति प्रतिपादितत्वेन केवलसंयुक्तयोरपि संपन्नसंभोगस्य निष्प्रत्यूहत्वात् । ध्यायन्ती वा विजातीयप्रत्ययाव्यवधानेन चिन्तयन्ती वा, अनेनानुस्मृतिर्नामावस्था द्योत्यते । ' अर्थानामनुभूतानां देशकालातिवर्तनात् । सातत्येन परामर्शो मानसस्स्यादनुस्मृतिः ॥ तत्रानुभावा निश्वासो ध्यानं कृत्यविहस्तता । शय्यासनादिविद्वेष इत्याद्याः स्मरकल्पिताः ' इति तल्लक्षणम् । ते नयनपदवीं यावद्यातीति पूर्वेणान्वयः । ननु–' इयं सा धर्मशीलस्य मैथिलस्य महात्मनः । सुता जनकराजस्य सीता भर्तृदृढव्रता ॥ विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः । स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनः ॥ धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः । इयं सा दयिता भार्या ' इत्याद्युक्तरीत्या मिथिलेश्वरपुत्र्यास्सार्वभौमशिरोमणेर्दशरथस्य स्नुषायास्सकललोकविदितविक्रम–विख्यातिस्तव प्रेयस्या अप्यचिन्तनीया कस्मादवस्थेदृशीति शङ्कां ' यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते । सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ॥ यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत् । जानासि दैवं च तथा प्रभावं........विधिर्नूनमसंहार्यः

प्राणिनां प्लवगेश्वर ' इत्याद्युक्तरीत्या समाधत्ते—तस्या इति। तस्याः 'सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम्' इत्याद्युक्तरीत्या ईदृशदुरवस्थानुभवानर्हायाः अस्मत्प्रेयस्यास्सीतायाः तादृशी पूर्वोक्तदुर्वचदुरवस्थाशतशबलितेत्यर्थः । 'त्यदादिषु दृशः' इति कञि 'टिड्ढ' इत्यादिना ङीप्, 'आ सर्वनाम्नः' इत्यात्वम् । कालयात्रा समययापनं 'यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी। नियतिजनिता नियतिर्दैवं 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । तया जनिता निष्पादिता भवतीत्यध्याहारः। नूनमिति वितर्के निश्चये वा, विधिकृतमेवास्या एवंविधसमयक्षपणं भवेदिति वितर्कये निश्चिनोमि वेत्यर्थः । दैवविपाकजन्यैव तादृशी कालयात्रा नान्यथेति भावः । अत्र 'मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया । यदि सीताऽपि दुःखार्ता कालो हि दुरतिक्रमः' इत्यादिकमप्यनुसन्धेयम् । अत्र 'नूनमित्युत्प्रेक्षा' इति केषांचिद्व्याख्यानं तु केवलवितर्काभिप्रायं न तूत्प्रेक्षालङ्काराभिप्रायं प्रकृतायाः कालयात्राया अन्यतया संभावनाभावेनोत्प्रेक्षालङ्कारानवकाशात्, 'यत्रान्यधर्मसंबन्धादन्यत्वेनोपतर्कितम् । प्रकृतं हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते' इति हि तल्लक्षणमुक्तं चित्रमीमांसायाम् । अन्यथा 'विरक्तसन्ध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते । शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतस्ससैन्यः' इत्यत्राप्युत्प्रेक्षावाचकशङ्केशब्दश्रवणादुत्प्रेक्षालङ्कार एव स्यात् । तत्र हि यथा रजोभरोद्गमनेन निमित्तेन भरतः प्रत्युद्गतत्वेन वस्तुसद्रूपेणैव त-

र्कितो न त्वन्यत्वेन। यथा च—'आगमिष्यति सा नूनमिमां शिवजलां नदीम्' इत्यादौ सामीप्यादिनिमित्तेन सीतागमनादिकं वस्तुसदेव संभाव्यते न त्वन्यरूपतया। एवमत्रापि प्रकृतदुरवस्थानुभवेन निमित्तेन सीतायास्तादृशी कालयात्रा विधिकृतत्वेन वस्तुसद्रूपेणैव वितर्क्यते न त्वन्यरूपेणेति न नूनंशब्ददर्शनमात्रेणोत्प्रेक्षेति भ्रमितव्यं बुद्धिमद्भिः। अत्र श्लोकद्वये प्रोषितभर्तृकायास्सीतायाश्चेष्टास्वभाववर्णनात्स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति लक्षणात्। 'यथावदन्यूनातिरेकेण वस्तुनो गुणक्रियासंस्थानरूपस्य वस्तुस्वभावस्य कविप्रतिभैकगोचरस्य वर्णनमसौ स्वभावोक्तिः' इति रत्नापणकृत्। मोहालसत्वादेर्वाक्यार्थस्य तस्या नूनमित्यादिवाक्यार्थेन समर्थनात्काव्यलिङ्गं चेत्येते एकवाचकानुप्रविष्टतया सङ्कीर्यन्ते। विप्रलम्भशृङ्गारो व्यज्यत इति संक्षेपः। इदं श्लोकद्वयमेकवाक्यतया युग्ममिति व्यवह्रियते। तदुक्तं—'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्। कालापकं चतुर्भिस्तु तदूर्ध्वं कुळकं स्मृतम्' इति। चिरविरहितानित्यत्र चिरेत्येतदनव्ययसुबन्तं अव्ययत्वे तस्य मान्ततया 'अहंयुश्शुभंयुः, कञ्चम्' इत्यादाविव मलोपाभावापत्तेः न च चिरशब्दोऽनव्ययसुबन्तो नास्तीति भ्रमितव्यं 'प्रथमोऽचिरोपसंपत्तौ, तन्त्रादचिरापहृते, अथ सायचिरयोः किं निपात्यते, चिरपरुत्परारिभ्यः त्नो वक्तव्यः' इति सूत्रभाष्यवार्तिकप्रयोगसद्भावात् 'तन्त्रादचिरापहृते' इति सूत्रे तत्त्वबोधिन्यां 'अचिरः कालोऽपहृतस्य' इति विगृहीतं, अत एव 'अ-

नतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य' इत्यादयः परस्सहस्राः प्रामाणिकप्रयोगा निर्व्यूढा इति लक्ष्मीसहस्त्ररत्नप्रकाशिकायामाद्यस्तबके 'आन्दोळयित्री चिरम्' इत्येतद्व्याख्यानावसरे विस्तरेण निरूपितमस्माभिः ॥ १२ ॥

रावणगृहे निरुद्धायास्सीताया अवस्थां सम्भावयन् दशभिः श्लोकैः कुळकेन तां विशिनष्टि दाशरथिः—

**शुद्धामिन्दोश्श्वपचभवने कौमुदीं विष्फुरन्तीं**
**आनीतां वा विषतरुवने पारिजातस्य शाखाम्।**
**सूक्तिं रम्यां खलपरिसरे सत्कवेः कीर्त्यमानां**
**मन्ये दीनां निशिचरगृहे मैथिलस्यात्मजाताम्॥ १३ ॥**

शुद्धामिति ॥ निशि चरतीति निशिचरः तस्य रावणस्य गृहे दीनां 'दुःखापदुर्गतत्वाद्यैरनौद्धत्यं हि दीनता। तत्रानुभावा मालिन्यगात्रस्तम्भादयो मताः' इत्युक्तलक्षणं अस्थानावस्थानप्रयुक्तं दैन्यं प्राप्तामित्यर्थः। मैथिलस्य जनकस्य आत्मजातां तनयां श्वपचस्य चण्डालस्य भवने गृहे विष्फुरन्तीं प्रकाशमानां 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति षत्वम्। शुद्धां अवदातां अनेन श्वपचभवनावस्थानेऽपि ज्योत्स्नाया इव रावणगृहावरुद्धाया अपि सीताया नैसर्गिकी शुद्धिर्नापचीयत इति द्योत्यते। [1] वेति पदं पादत्रयेऽप्यन्वेति। कौ-

[1] वेतिपदं पादत्रयेऽप्यन्वेति . . . अत्र निशिचरगृहदीनायास्सीतायाश्श्वपचभवनविलसच्चन्द्रिकादीनां च प्रत्येकमैक्यारोपसद्भावात् "अरण्यरु-

मुदीं ज्योत्स्नां वा, विषतरुवने किंपाकादिविषवृक्षविपिने आनीतां स्थापितां पारिजातस्य देवतरुविशेषस्य शाखां वा, खलस्य सत्काव्यरसास्वादप्रस्थानवैदेशिकस्य प्रत्युत तत्र मत्सरिणो दुर्जनस्य परिसरे पर्यन्तभुवि 'पर्यन्तभूः परिसरः' इत्यमरः । कीर्त्यमानां उच्यमानां रम्यां रसभावगभीरमधुरोदारां सत्कवेस्सर्वज्ञस्य काव्यकर्तुः न तु यस्यकस्यचित्केवलकविशब्दभाज इति भावः । शोभना च सा उक्तिश्च सूक्तिः तां अदोषसगुणसालंकारां काव्यरूपां कल्याणीं गिरं वा मन्ये जाने। रम्यामित्येतत्पारिजातशाखाया अपि विशेषणं भवितुमर्हति । तेन विषतरुवनखलपरिसरनिपतनमात्रेण पारिजातशाखासत्कविसूक्त्योरिव राक्षसनिवासवासमात्रेण स्वाभाविकं सीताया रामणीयकं न किंचिदप्यपहीयते किं तु दैन्यमात्रमेव प्रतिभातीति द्योत्यते । अत्र रावणस्य श्वपचविषतरुखलनिदर्शनेन निहीनाचारत्वनिखिलप्राणिविहिंसनैकतानत्वोत्पथप्रवृत्तत्वादिकं द्योत्यते । सीतायाः कौमुदीपारिजातशाखासत्कविसूक्तिनिदर्शनेन

---

दितं कृतम्" इत्यादिश्लोक इव निदर्शनालङ्कारो मालारूपः ॥ यद्वा . . . वाशब्दस्योपमावाचकत्वाभिसन्धौ मालारूप उपमालङ्कार इति रसास्वादिनी ॥ यत्तु—निदर्शनापक्षाभिप्रायेण "वाशब्दो विकल्पे वा इत्यमर इति" तन्न. "अरण्यरुदितं कृतम्" इत्यादाविवारोपसमुच्चयस्यैवात्र संभवेन एकपक्षे तदितरपक्षप्रतिक्षेपविरहेण विकल्पासङ्गतेः। तस्मादिह समुच्चय एव वाकारः। तथा च नैघण्टुकाः "वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये। वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे। समुच्चये च विस्रम्भे नानार्थातीतयोरपि" इति विश्वमेदिनीकारादयः ॥ १३ ॥

सकलतापहारित्वसर्वेप्सितदायित्वसर्वमनोहारित्वादिकं व्यज्यते ॥ अत्र निशिचरगृहनिरोधदीनायास्सीतायाश्श्वपचभवनविलसच्चन्द्रिकादीनां च प्रत्येकमैक्यारोपसद्भवात् 'अरण्यरुदितं कृतम्' इत्यादि 'धृतोऽन्धमुखदर्पणो यदबुधो जनस्सेवितः' इत्यन्तश्लोक इव वाक्यार्थवृत्तिनिदर्शनालङ्कारो मालारूपः 'वाक्यार्थयोस्सदृशयोरैक्यारोपो निदर्शना' इति लक्षणात्। यद्यपि 'यद्दातुरसौम्यता सेयम्' इत्यत्र 'अरण्यरुदितम्' इत्यत्र च वाक्यभेदेन यत्तद्भ्यामैक्यारोपो दृश्यते, न तु प्रकृतश्लोके। तथाऽपि 'त्वयि सति शिव दातर्यस्मदभ्यर्थितानामितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम्। चरमचरणघातैर्दुर्दुहं दोग्धुकामाः करभमनुसरामः कामधेनौ स्थितायाम्' इत्यादाविव वाक्यभेदाभावेऽपि वाक्यार्थवृत्तिनिदर्शनाया न क्षतिः, विशिष्टयोरैक्यारोपसद्भावादित्यन्यत्र विस्तरः। यद्वा—'वद्वा यथा तथेवैवं साम्ये' इत्यनुशासनादत्र वाशब्दस्योपमावाचकताभिसन्धौ तस्यैव प्रतिवाक्यमन्वयेनोपमालङ्कारो मालारूप इत्यनयोस्सन्देहसङ्करः। अत एवोपमावाचकेषु 'इववद्वायथाशब्दाः' इति दण्डिनोक्तं च सङ्गच्छते। प्रयुक्तश्चायं—'बालां मन्ये शिशिरमथितां पद्मिनीं वाऽन्यरूपाम्, पुष्पेक्षणैर्लम्भितलोचकैर्वा' इति कालिदासमाघादिभिः। अनेन च सङ्कीर्णालङ्कारेणाननुरूपवस्तुघटनवर्णनात्मकविषमालङ्कारो व्यज्यत इति सङ्क्षेपः ॥ १३ ॥

**वर्षाकीर्णामिव कमलिनीं व्याहतार्थामिवोक्तिं**
**पङ्काश्लिष्टामिव बिसलतां पत्यपेतामिवेभीम्।**

**मेघच्छन्नामिव शशिकलां विघ्नरुद्धामिवाशां**
**व्याघ्रोपेता (व्याघ्रत्रस्ता) मिव मृगवधूं भूतले**
**ज्यामिवास्ताम् ॥ १४ ॥**

वर्षेति ॥ वर्षेण मेघोदकवर्षेण हिमवर्षेण वा आकीर्णां विक्षिप्तां कदर्थितामिति यावत् । कमलिनीं पद्मिनीमिव । अनेन शोभाशैथिल्यं द्योत्यते 'हिमहतनळिनीव नष्टशोभा, भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे, पद्मिनीमिव विध्वस्ताम्' इत्यादिकमत्र स्मर्तव्यम् । 'विध्वस्तां हिमादिहताम्' इति गोबिन्दराजाः । व्याहतः अर्थो यस्यास्तां संस्कारशब्दाभिलपनीयशब्दव्युत्पत्तिवैधुर्येण विवक्षितादर्थादर्थान्तरं गतां विपरीतार्थामित्यर्थः । संस्कारविरहेण प्रतिपिपादयिषितमर्थमभिधातुमशक्नुवानामविवक्षितमर्थं बोधयन्तीमिति भावः । उक्तिं वाचमिव । अनेन भाग्यवैषम्यादुचितस्वदायिताविश्लिष्टत्वमनुचितरावणवशंवदत्वं दुःखेन ज्ञायमानस्वरूपत्वं च द्योत्यते । अत्र 'दुःखेन बुबुधे सीतां हनूमाननलंकृताम् । संस्कारेण यथा हीनां वाचमर्थान्तरं गताम्' इत्येतत् स्मर्तव्यम् । पङ्केन कर्दमेन आ समन्तात् श्लिष्टां आलिङ्गितां अतिवेलपङ्कलिप्तामिति यावत् । बिसलतां मृणालीमिव, अनेन निसर्गसिद्धाया अपि तच्छोभायाः 'परया मृजया हीनां कृष्णपक्षनिशामिव' इत्याद्युक्तरीत्या स्नानादिराहित्येन धूसरितत्वं द्योत्यते । तेन शोभाशोभयोस्सांकर्यं व्यज्यते । अत्र 'सा मलेन च दिग्धाङ्गी वपुषा चाप्यलंकृता । मृणाली पङ्कदिग्धेव विभाति न विभाति च' इत्येतदनु-

संधेयम्। पत्या गजराजेन अपेतां विरहितां 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः। पत्युरपेतामिति पञ्चमीसमासो वा 'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' इत्यनुशासनात्। इभीं करेणुं जातिलक्षणो ङीष्। अनेन 'तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्। राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा॥ अहमौपयिकी भार्या तस्यैव वसुधापतेः। व्रतस्नातस्य विप्रस्य विद्येव विदितात्मनः॥ साधु रावण रामेण मां समानय दुःखिताम्। वने वाशि(सि)तया सार्धं करेण्वेव गजाधिपम्' इत्याद्युक्तरीत्या अतिमात्रमात्मानुरूपेण दयितेन विश्लिष्टत्वं वदता 'यथा हस्तश्च मातङ्गश्शशश्च सहितौ वने। तथा द्विरदवद्रामस्त्वं नीच शशवत् स्मृतः' इत्युक्तरीत्या शशेनेव गजराजवध्वा रावणेनास्या वशीकरणं दुश्शकमिति द्योतितम्। अत्र 'गृहीतामालनस्तम्भे यूथपेन विना कृताम्। निश्श्वसन्तीं सुदुःखार्तां गजराजवधूमिव' इत्येतच्च विभावनीयम्। मेघैः छन्नां आच्छादितां शशिकलां चन्द्रलेखामिव। अनेन रक्षोगृहनिरोधेऽपि नैसर्गिकस्य तत्तेजसो न कश्चिदप्यपचय इति व्यज्यते। 'उत्पातमेघमालाभिश्चन्द्रलेखामिवावृताम्। चन्द्रलेखां पयोदान्ते शारदाभ्रैरिवावृताम्' इत्यादिकमिह ध्यातव्यम्। विघ्नैः अन्तरायैः विपूर्वाद्धन्तेः 'घञर्थे कविधानम्' इति कः। रुद्धां प्रतिबद्धां आशां दीर्घतृष्णामिव 'आशा तृष्णाऽपि चायता' इत्यमरः। अनेन निर्वेदशतशबलितत्वं द्योत्यते 'आशां प्रतिहतामिव' इत्येतदत्र स्मर्तव्यम्। व्याघ्रत्रस्तां शार्दूलभीतां मृगवधूं

कुरङ्गीमिव व्याघ्रोपेतामिव पाठे, व्याघ्रसंनिहितामित्यर्थः। अनेनातिमात्रानवस्थितान्तरङ्गत्वं द्योत्यते। 'सा तु शोकपरीताङ्गी मैथिली जनकात्मजा। राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा॥ राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम्। मांसशोणितभक्ष्याभिर्व्याघ्रीभिर्हरिणीमिव॥ मृगकन्यामिव त्रस्तां वीक्षमाणां ततस्ततः' इत्येतदिह भाव्यम्। भूतले समरभूप्रदेशे अस्तां छित्वा निरस्तां 'असु क्षेपणे' कर्मणि क्तः 'नुत्तनुन्नास्तनिष्ठ्यूतविद्धक्षिप्तेरितास्समाः' इत्यमरः। ज्यां मौर्वीमिव च स्थितां मन्ये इति पूर्वेणान्वयः। एवमुत्तरश्लोकेष्वपि। 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। अनेनास्यास्स्वसंश्लेषार्हवस्तुसान्निध्यवैधुर्येणाकिञ्चित्करप्रभावत्वं द्योत्यते। 'भूमौ बाणैर्विनिष्कृत्तां पतितां ज्यामिवायुधात्' इत्येतत्प्रत्यभिज्ञाप्यते च। यद्यपीदं श्रीरामविश्लिष्टायोध्योपमानतयोपात्तमयोध्याकाण्डे। न तु 'हिमहतनलिनीव' इत्यादि 'मृगकन्यामिव त्रस्तां' इत्यन्तपूर्वोदाहृतप्रमाणवत्सीतोपमानतया। तथाऽपि श्रीरामविश्लिष्टत्वतौल्यात्सीताया अप्युपमानं भवितुमर्हत्येवेति तदुपन्यासः, एवं चात्र श्लोके सर्वा अप्युपमाश्श्रीरामायणोक्ता एवेति वैचित्र्यविशेषः। सर्वाभिरप्याभिरुपमाभिस्सीतायाश्शोचनीयतातिशयो व्यज्यते। अत्र 'भूतले ज्यामिवास्तां' इत्यत्र 'वीतलज्जामिवेष्टाम्' इति पाठस्तु लेखकबुद्धिस्खलनकृतः। ये त्वमुमेव-पाठमभ्युपयन्तः 'वीतलज्जां गतलज्जां इष्टां भार्यामिव' इति व्याचक्षते, तेऽप्युपेक्ष्या एव, वीतलज्जताया दीनतां प्रत्यहेतुत्वेन वि-

वक्षितहानेश्चमत्कृतिविशेषवैधुर्यादीदृशोपमायाश्श्रीरामायणे अदर्शनात्सर्वासामप्येतत्पद्यगतानामुपमानां रामायणोदितत्वेनास्या अपि तथात्वस्यैव युक्तत्वाच्चमत्कारविशेषकारित्वाच्चेत्यलम् । अत्र सीताया अनेकवस्तुभिस्साम्यवर्णनान्मालोपमा, तथा च काव्यालङ्कारे रुद्रटः— 'मालोपमेति सेयं यत्रैकं वस्त्वनेकसामान्यम् । उपमीयेतानेकैरुपमानैरेकसामान्यैः' इति । उदाजहार च—'श्यामा लतेव तन्वी चन्द्रकलेवातिनिर्मला सा मे । हंसीव कलालापा चैतन्यं हरति निद्रेव' इति । अत्र सामान्यधर्माः कण्ठोक्ताः प्रकृतश्लोके तु गम्या इति विशेषः ॥ १४ ॥

**स्मृत्वा पूर्वं स्मरशरभये मत्परिष्वङ्गरक्षां**
**आश्लिष्यन्तीमलसवलितैरङ्गकैर्मातरं स्वाम् ।**
**आकल्पेऽपि श्रममधिगतैरङ्गरागेऽपि खिन्नैः**
**अक्षाम्यद्भिः स्मृतिमपि मुहुस्सौकुमार्यातिरेकात् ॥ १५ ॥**

स्मृत्वेति ॥ पूर्वं विश्लेषात्पूर्वकाले 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । स्मरशरेभ्यः कन्दर्पसायकेभ्यः यद्भयं भीतिः तस्मिन् सतीत्यर्थः । 'भीत्रार्थानाम्' इत्यपादानसंज्ञायां 'पञ्चमी भयेन' इति समासः । मम परिष्वङ्गः परिरम्भ एव रक्षा रक्षणं प्राणधारणोपाय इति यावत् । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्' इति षत्वम् । तां स्मृत्वा चि-

न्तयित्वेव। अत्र कर्मणश्शेषत्वेनाविवक्षिततया 'अधीगर्थदयेशां कर्मणि' इति षष्ठ्यप्राप्तेः 'कर्मणि द्वितीया' इति द्वितीयैव। नापि कृद्योगलक्षणषष्ठी 'नलोकाव्यय' इत्यादिनाऽव्यययोगे तन्निषेधात्। सुकुमारस्य भावस्सौकुमार्यं तस्यातिरेकः अतिशयः तस्मात् विश्लेषदशायामतिशयिततमान्नैसर्गिकादुत्तमसौकुमार्यादिति भावः। उक्तं च सौकुमार्यस्य त्रैविध्यं रसार्णवसुधाकरे—'या स्पर्शासहताऽङ्गेषु कोमलस्यापि वस्तुनः। तत्सौकुमार्यं त्रेधा स्यान्मुख्यमध्याधमक्रमात्॥ अङ्गं पुष्पादिसंस्पर्शासहं येन तदुत्तमम्। न सहेत करस्पर्शं येनाङ्गं मध्यमं हि तत्॥ येनाङ्गमातपादीनामसहं तदिहाधमम्' इति। आकल्पेऽपि वस्त्रमाल्याभरणप्रसाधनप्रसङ्गेऽपीति यावत्। 'आकल्पवेषौ नैपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः। श्रमं 'श्रमो मानसखेदस्स्यादध्वनृत्तरतादिभिः। अङ्गमर्दननिश्श्वासपादसंवहनानि च॥ जृम्भणं मन्दयानं च मुखनेत्रविकूणनम्। सीत्कृतिश्चेति विज्ञेया अनुभावाश्श्रमोद्भवाः' इत्युक्तलक्षणं खेदं अधिगतैः प्राप्तैः कर्तरि क्तः। अपिना किमु प्रसाधने सतीति द्योत्यते। वस्त्रमाल्याभरणादीनां गुरुतया तद्वहनप्रसक्तौ खेदसंभवेऽप्यङ्गरागस्य परिलघुतया तत्प्रस्तावो वा किं न खेदावह इत्यत्राह—अङ्गरागेऽपीति॥ रज्यतेऽनेनेति रागः अङ्गस्य रागोऽङ्गरागः अनुलेपनं तस्मिन्नपि अङ्गरागालेपप्रस्तावेऽपीति यावत्। खिन्नैः श्रान्तैः खिदेः कर्तरि निष्ठा नत्वं च। अपिना किमुताङ्गरागलेपने इति द्योत्यते। उक्तखेदस्य कैमुतिकतामभिप्रयन्नाह—अक्षाम्यद्भिरिति॥

मुहुः पुनःपुनः स्मृतिमपि आकल्पाङ्गरागादिस्मरणमपि किमुत तदवमर्शादिकामिति भावः। [1]अक्षाम्यद्भिः असहमानैः 'क्षमू सहने' दैवादिकः परस्मैपदी अस्माल्लटश्शत्रादेशे श्यनि 'शमामष्टानां दीर्घश्श्यनि' इति दीर्घः। अत एव अलसानि मन्थराणि वलितानि वलनानि स्पन्दनानि येषां तैस्तथोक्तैः वलितशब्दो भावे क्तान्तः। अङ्ककैः निर्दयनिष्ठुरमनसां रक्षसामप्यनुकम्पनीयैरङ्गैरित्यर्थः। 'अनुकम्पायाम्' इत्यनुकम्पार्थे कन्। स्वां स्वकीयां मातरं जननीं अवनीमित्यर्थः। स्वामिति वात्सल्यातिशयप्रदर्शनाय, न ह्येवंविधपरीतापविक्लबानामपत्यानां स्वजनन्यपेक्षया विद्यते परित्राणान्तरमिति भावः। यथोच्यते श्रीमन्महाभारते—'माता देहारणिः पुंसां सर्वस्यार्थस्य निर्वृतिः। मातृलाभे सनाथत्वमनाथत्वं विपर्यये॥

---

[1] अक्षाम्यद्भिः असहमानैः इति रसास्वादिनी॥ यत्तु अत्र शत्रा 'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या' इत्यादाविव आरब्धस्यापारिसमाप्तिरूपं वर्तमानत्वं विवक्षितमिति तन्न - प्रथमाश्वासीयत्रयोविंशश्लोकव्याख्यानगतया उपहरतीत्यत्र 'पातुं न प्रथमं व्यवस्यति जलमित्यादिवत्कालसामान्ये लट्।' इति स्वोक्त्यैव विरोधात्। सर्वत्रैव वर्तमानत्वस्य लडर्थस्य प्रारब्धापरिसमाप्तत्वरूपत्वाच्च। तथा च वर्तमाने लडित्यत्र भाष्यम् 'न्याय्या त्वेषा वर्तमानता आरम्भानपवर्गात्। अवश्य भुञ्जानो हसति जल्पति पिबति निमिषति च' इत्यादि। निरूपितं चेदं विस्तरेण मञ्जूषायामिति दिक्। क्षमू सहने दैवादिक इति रसास्वादिनी॥ यत्तु—क्षमूष् सहने दैवादिक इति तन्न—षितोऽस्य धातोरदैवादिकत्वात्। स्पष्टं चेदं कौमुद्यामेव—'अयमषित्। भ्वादिस्तु षित्' इति दिवादौ॥ १५॥

समर्थं वाऽसमर्थं वा कृशं वाऽप्यथवाऽकृशम् । रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः ॥ नास्ति मातृसमा छाया नास्ति मातृसमा गतिः । नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया' इति आश्लिष्यन्तीं आलिङ्गन्तीं, पूर्वं स्मरशरप्रयुक्तभयावसरे मत्परिरम्भ एव रक्षणमासीदिति स्मृत्वेवेदानीमपि तादृशभये मत्सांनिध्यविरहेण स्वमातृपरिरम्भमेव रक्षां मत्वा तथा विदधानामित्यर्थः । 'भूमिशय्या विवर्णाङ्गी' इत्यादिकमिहानुसन्धेयम् । अत्राश्लेषत्वेनाध्यवसितस्य भूमौ शयनस्य श्रीरामचन्द्रपरिष्वङ्गरूपरक्षास्मरणहेतुकत्वेन संभावनादसिद्धविषया हेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । यद्वा—आश्लिष्यन्तीमिवेत्यर्थः, तदा पूर्वं स्मरशरभयावसरे रामपरिरम्भरक्षां स्मृत्वेदानीमपि तथाविधसङ्कटे स्वमातृभूतां धरणीमुपगूहमानामिव स्थितामिति सीताकर्तृकालिङ्गनतादात्म्योत्प्रेक्षाऽनुक्तविषया विषयभूतस्य शयनस्यानुपादानात्, इयमपि व्यञ्जकाप्रयोगाद्गम्यैव । एवमुभयथाऽपि सम्भवादनयोस्सजातीययोस्सन्देहसङ्करः। आकल्पाङ्गरागप्रसाधनरूपहेतुप्रसङ्गमात्रेण श्रमरूपकार्योत्पत्तिवर्णनात् । 'आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितम्' इत्यादाविव चपलातिशयोक्तिर्नामालङ्कारः । 'चपलातिशयोक्तिस्स्यात्कार्ये हेतुप्रसक्तिजे' इति लक्षणात् । इयं च पूर्वोक्तोत्प्रेक्षासङ्करेण संसृज्यते । आकल्पेऽपि श्रममधिगतैरित्यादिविशेषणैः 'क्वेयं शिरीषमृद्वङ्गी क्व तादृङ्मदनज्वरः' इत्याद्युक्तरीत्या क्वामी मन्मथशरा विरहिणीप्राणापहरणदक्षिणाः क्व चेमानि शिरीषादप्यतिसुकुमाराण्य-

ङ्गानीत्यननुरूपवस्तुघटनाप्रतीतेर्विषमालङ्कारो व्यज्यते । अत्र मूर्छा नामावस्था मान्मथी विवक्षिता 'मूर्छा त्वाभ्यन्तरेऽवृत्तिर्बाह्येन्द्रियनिमीलनात्' इति तल्लक्षणम् । 'बाह्येन्द्रियाणां चक्षुरादीनां निमीलनं स्वस्वविषयग्रहणाभावः, तत एवाभ्यन्तरे अवृत्तिश्शून्यान्तःकरणत्वमिति तदर्थः । यद्वा—सीताया ईदृशभूसंश्लेषवर्णनेन 'अभिलाषचिन्तनानुस्मृतिगुणसङ्कीर्तनोद्वेगाः । सविलापावुन्मादव्याधीजडताऽत्ययाः क्रमतः' इत्युक्तास्ववस्थासु व्याधिर्नामावस्था व्यज्यते । तथा च लक्षणं—'अभीष्टसङ्गमाभावाद्व्याधिस्सन्तापलक्षणः । तत्र संतापनिश्श्वासौ शीतवस्तुनिषेवणम् ॥ जीवितोपेक्षणं मोहो मुमूर्षा धृतिवर्जनम् । यत्र क्वचिच्च पतनं स्रस्ताक्षत्वादयोऽपिच' इति ॥ १९ ॥

**भूयोभूयः करसरसिजे न्यस्य रोमाञ्चिताङ्गीं(ङ्गं)**
**मौळौ चूडामणिविरहिते निर्विशन्तीं निधाय ।**
**अन्तस्तापादधिगतरुजोरादरादर्पयन्तीं**
**पर्यायेण स्तनकलशयोरङ्गुळीयं मदीयम् ॥ १६**

भूयोभूय इति ॥ ममेदं मदीयं 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति छप्रत्ययः, छस्य ईयादेशः । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्यास्मच्छब्दस्य मादेशः । अङ्गुळौ भवमङ्गुळीयं 'जिह्वामूलाङ्गुळेश्छः' इति भवार्थे शैषिके छप्रत्यये छस्येयादेशः । 'अङ्गुळीयकमूर्मिका' इत्यमरः । हनूमन्मुखेन मया प्रेषितामङ्गुळिमुद्रिकामित्यर्थः । 'ददौ तस्य ततः प्रीतस्स्वनामाङ्को-

पशोभितम् ॥ अङ्गुळीयमभिज्ञानं राजपुत्र्याः परन्तपः। रामनामाङ्कितं चेदं पश्य देव्यङ्गुळीयकम् ॥ प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना' इत्यादिकमिह स्मर्तव्यम्। भूयोभूयः वारंवारं करसरसिजे पाणिपद्मे न्यस्य निधाय रोमाञ्चितानि पुलकितानि अङ्गानि यस्यास्तां तथोक्तां 'अङ्गगात्र' इति ङीष्। वस्तुतस्तु—रोमाञ्चिताङ्गमिति पाठस्स्वच्छः। एतच्च सविस्तरं निरूपितमधस्तात्। 'गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम्। भर्तारमिव संप्राप्ता जानकी मुदिताऽभवत्' इत्युक्तरीत्या मामिव मदङ्गुळीयं गृहीत्वा करे निरतिशयानन्दभरपारवश्याधिगतरोमोद्गमामिति भावः। अनेन रोमाञ्चाख्यस्सात्विकभाव उक्तः। तदुक्तं भूपालेन—'रोमाञ्चो विस्मयोत्साहहर्षाद्यैस्तत्र विक्रियाः। रोमोद्गमोल्लसत्कम्पगात्रसंस्पर्शनादयः' इति। चूडामणिना शिरोरत्नेन 'चूडामणिश्शिरोरत्नम्' इत्यमरः। विरहिते विश्लिष्टे 'ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम्। प्रदेयो राघवायेति सीता हनुमते ददौ' इत्युक्तरीत्या मत्प्रत्यभिज्ञानाय हनूमते दत्तत्वादिति भावः। मौळौ चूडायां संयतकेशापरपर्यायायां कबर्यां वा 'चूडा किरीटं केशाश्च संयता मौळयस्त्रयः' इत्यमरः। त्रय इति निर्देशो मौळिशब्दस्य पुल्लिङ्गतां ज्ञापयितुम्। अत्र चूडामणिविरहित इति विशेषणान्मौळिशब्दस्य पुल्लिङ्गतेति बोध्यम्। 'किरीटे मौळिरस्त्री चूडासंयतकेशयोः' इति रभसश्च। निधाय निक्षिप्य, निर्विशन्तीं सुख्यन्तीमित्यर्थः। मदीयकरपरिमार्जनेनेव मदीयाङ्गुळीयकशिरो-

न्यसनेन विगलितवेद्यान्तरमानन्दमनुभवन्तीमिति भावः। अनेन 'एष निर्यातितश्श्रीमान्मया ते वारिसंभवः। एनं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ' इत्युक्तरीत्या मत्तुल्यतया प्रमोदावहस्य चूडामणेर्विश्लेषोऽपि तस्या मदङ्गुळीयशिरोनिधानाद्किंचित्करो भविष्यतीति द्योत्यते। अन्तस्तापात् हृदयान्तर्विजृम्भिताद्विरहतापात् अधिगता प्राप्ता रुक् रोगः याभ्यां तयोस्तथोक्तयोः 'स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः' इत्यमरः। ज्वरोपतप्तयोरिव स्थितयोरिति भावः। स्तनौ कलशौ शातकुम्भकुम्भाविव स्तनकलशौ तयोः 'सप्तम्यधिकरणे च' इति सप्तमी। पर्यायेण अनुक्रमेण 'आनुपूर्वी स्त्रियां वाऽऽवृत्परिपाटिरनुक्रमः। पर्यायश्च' इत्यमरः। एतेन 'पर्यायेण विपर्यासेन' इति व्याख्यानमपास्तं, पर्यायशब्दस्यातदर्थकत्वात्। कथंचिदभ्युपगमेऽप्यवश्यं विवक्षितानुक्रमरूपार्थहानिप्रसङ्गाच्च। आदरात् प्रीत्यतिशयात् अर्पयन्तीं निदधानां, विस्रम्भविहारावसरेषु बहुवारमनुभूतोपमर्देनानेन मत्करविभूषणेन मत्करोपमर्देनेव तापापगमप्रहर्षाववश्यंभाविनावभिसन्धाय कुचकुम्भयोस्तन्निदधतीमिति भावः। अत्र करसरसिजमौळ्योरङ्गुळीयन्यसनस्य रोमाञ्चनिर्वेशौ प्रति हेतुत्वात्काव्यलिङ्गद्वयं संसृष्टं, अङ्गुळीयकस्यैकस्यैव क्रमेण करकमलमौळिकुचकलशद्वन्द्वरूपानेकाधारसंश्रयवर्णनात्पर्यायो नामालङ्कारः। 'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः' इति लक्षणात्। प्रकृतार्थपरेण पर्यायेणेतिशब्देन सूचनीयपर्यायालङ्कारनाम्नस्सूचनान्मुद्रालङ्कारश्चेत्येतानि सङ्की-

र्यन्ते। ननु—सीतावर्णनपरेऽत्र श्लोके नालङ्कारनाम्नस्सूचनीयत्वमस्ति, येन तस्य सूचनीयत्वमभिसन्धाय मुद्रालङ्कारो वर्ण्यतेति चेन्मैवं, अत्रालङ्कारस्यासूचनीयत्वेऽप्यस्यैव पद्यस्य लक्ष्यलक्षणयुक्तालङ्कारशास्त्रमध्य लक्ष्यतयोदाहरणे सूचनीयत्वमस्त्येवेति नोक्तालङ्कारक्षतिः। अत एव 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः। नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा॥ अत्र नायिकावर्णनपरेण युग्मविपुलापदेनास्यानुष्टुभो युग्मविपुलानामत्वरूपसूच्यार्थसूचनं मुद्रा। यद्यप्यत्र ग्रन्थे वृत्तनाम्नो नास्ति सूचनीयत्वं, तथाऽप्यस्योत्तरार्धस्य लक्ष्यलक्षणयुक्तच्छन्दश्शास्त्रमध्यपातित्वे तस्य सूचनीयत्वमस्तीति तदभिप्रायेण लक्षणं योज्यम्' इति कुवलयानन्दग्रन्थश्च सङ्गच्छते। अत्र 'छन्दश्शास्त्रमध्यपातित्वेन' इति तृतीयान्ततया मुद्रितकोशेषु दृश्यमानः पाठो न स्वच्छः। भूयस्सु प्राचीनकोशेषु सप्तम्यन्तपाठस्य दर्शनात्, तथैव रसिकरञ्जन्यां व्याख्यातत्वाच्च। तथाच तद्ग्रन्थः—

"नन्वत्र तरुणीवृत्तान्तवर्णनप्रस्तावे वृत्तस्यालक्षणीयतया तन्नाम्नस्सूचनीयत्वाभावान्नेह मुद्रालङ्कार इत्याक्षिपति—यद्यपीति। सत्यं नात्र वृत्तनाम सूचनीयं, तथाऽपि 'यस्यां लस्सप्तमो युग्मे सा युग्मविपुला मता' इति विपुलालक्षणोत्तरार्धे यदि 'नितम्बगुर्वी तरुणी' इत्युत्तरार्धमुदाहरणं भवेत्तदा तत्र वृत्तस्य सूचनीयत्वमस्तीत्यभिप्रेत्यात्र मुद्रालङ्कारोदाहरणमिति परिहरति—तथाऽपीति" इति॥ एतेन छन्दश्शास्त्रमध्यपातित्वेनेति तृतीयान्तपाठमेव बहुमन्यमानाः 'नितम्बगुर्वि' इत्युत्तरार्धस्य लक्ष्यलक्षणयुक्तच्छन्दश्शास्त्रमध्यपातिन एवा-

त्र लक्ष्यतयोदाहृतत्वात्तादृशस्यैव मुद्रालङ्कारत्वं न तु केवलकाव्यान्तर्गतस्य सूच्यार्थसूचनस्यापीत्याग्रृह्णानाः परास्ताः। 'येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः। प्रायस्त एव तेषामितरेषामभिनवा विरच्यन्ते' इति जयदेवकृतचन्द्रालोकादृश्यमानानामलङ्काराणां कुवलयानन्दकृद्भिरेव लक्ष्यलक्षणयुक्तश्लोकप्रणयनस्य प्रतिज्ञाततयाऽत्र ग्रन्थान्तरगतपद्यघटनोक्तेरयुक्तत्वात्तादृशलक्ष्यलक्षणयुक्तच्छन्दश्शास्त्राप्रसिद्धेश्च। न चायं मुद्रालङ्कारलक्ष्यलक्षणश्लोको दीक्षितैर्न प्रणीत इति युक्तं वक्तुं, प्राचीनचन्द्रालोके तस्यालक्षितत्वादेतत्प्रणीतताया एव स्फुटत्वात्। वस्तुतस्तु—ईदृशस्थलेषु वृत्तालङ्कारादिनाम्नस्सूचनीयत्वानवश्यम्भावेऽपि कवेश्चेदस्ति सूचने संरम्भस्तदा को नु नाम निरोद्धुमीष्टे तस्यालङ्कारताम्। न हि तादृशसंरम्भाभावे कश्चिदपि प्रयुञ्जीत तादृशमेव पदं येन स्वविवक्षितमेव प्रत्याय्येत। श्रूयते हि—'यद्धि मनसा ध्यायति तद्वाचा वदति' इति। अत एव—'कृत्वा हाटकताटकेयहरिणे शार्दूलविक्रीडितम्' इति रामवृत्तान्तवर्णनपरेऽपि पद्ये शार्दूलविक्रीडितमिति प्रकृतवृत्तनाम सूचितं तत्सूचनाभिसन्धिमता श्रीमता महाकविमूर्धन्येन भोजराजेन। नच तत्र तस्य तादृशोऽभिसन्धिरेव नेत्याग्रहीतव्यं, तथा सति कस्मादकस्मान्महता प्रयत्नेन शार्दूलविक्रीडितमिति पदमेव प्रयुञ्जीत। अतस्तत्रेवात्रापि सूच्यार्थसूचनरूपाविच्छित्तिविशेषसद्भावान्मुद्रालङ्कारत्वमनिवार्यमेव। ननु च तत्र 'शार्दूलविक्रीडितमित्यत्रास्यापि वृत्तस्य शार्दूलविक्रीडितत्वात्कवेश्चा-

तुर्यमनुसन्धेयम्' इति केन चिद्व्याख्यातत्वान्नैवोक्तालङ्कारः। किं तु विच्छित्तिविशेष एवेति चेदिदं वचनं 'आढ्योऽयं न धनवान्' इति वचनवदपहास्यम्। विच्छित्तिविशेषसद्भावे अलङ्कारताया अनिवार्यत्वात्। यद्यप्यलङ्कारप्रतिपादनालसेन तेन तत्र कवेश्चातुर्यमनुसन्धेयमित्युक्तं, तथाऽपि तावतैव न तस्य तत्रोक्तालङ्काराभावेऽभिसन्धिरिति युक्तं कल्पयितुं, चातुर्यशब्देन चमत्कारापरपर्यायेण तादृशालङ्काररूपचातुर्यस्यैव विवक्षितत्वेनापि तदुपपत्तेः। यद्वा—मतान्तराभिप्रायेण न तत्रोक्तालङ्कारवर्णनं, कैश्चित्प्राक्तनैरस्यालङ्कारस्यालक्षितत्वात्, न तावता मुद्रालङ्कारो न भवत्येवेति युक्तं प्रतिज्ञातुं, विच्छित्तिविशेषशालितयाऽलङ्कारस्यानिवार्यतां मन्यमानैर्दीक्षितादिभिरस्य लक्षितत्वात् 'प्रकृतार्थपरैश्शब्दैः कविनाऽप्रकृतं यदि। सूच्यं सूच्येत जगदुस्तदा मुद्रामलङ्कृतिम्' इत्यप्रकृतस्य सूच्यस्य सूचने मुद्रालङ्कारं लक्षयतामलङ्कारकौस्तुभकृतां मते तु अप्रकृतपर्यायालङ्कारसूचनस्यापि मुद्रालङ्कारत्वे न काऽप्यनुपपत्तिः। न च तल्लक्षणे कविनाप्रकृतमित्यत्र प्रकृतमिति छेदेन प्रकृतस्यैव सूचनं मुद्रेति तदभिप्राय इति वाच्यम्। तथा सत्युदाहृततल्लक्षणस्य 'नीलश्रीरलकेषु शङ्खगरिमा कण्ठे कुचे माकरी रेखा कुन्दपरद्युतिः स्मितसुधा कान्तेषु दन्तेषु च। पादौ कच्छपभूषितौ करयुगं यस्यास्सपद्मं महापद्माऽऽनन्दमयी मुकुन्दरमणी सद्यः प्रसद्यान्मम' इति तदीयलक्ष्यस्य च परस्परवार्तानभिज्ञताप्रसङ्गः। तत्र हि—'अत्र नीलादिपदैर्निधिनवकसूचनम्' इति

तै रेव विवृतं न हि तत्र नीलादिनिधिनवकं प्रस्तुतं येन प्रकृतस्यैव सूचनं मुद्रेति तल्लक्षणार्थो वर्ण्येत। नन्विदं नीलश्रीरिति पद्यमनुदाहरणमेव मुद्रालङ्कारस्य, अस्य रत्नावल्यलङ्कारोदाहरणार्हत्वात्। न चोदाहृतश्लोके निधिनवकस्य 'महापद्मश्च' इत्युक्तक्रमविरहेण निबद्धत्वात् 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावळीं विदुः' इति लक्षणात्प्रसिद्धक्रमेणैव रत्नादिनामनिबन्धे रत्नावळ्यवतारान्नात्र सेति वाच्यम्। 'प्रसिद्धसहपाठानां प्रसिद्धक्रमाननुसरणेऽप्ययमेवालङ्कारः' इति कुवलयानन्दोक्तेरत्र क्रमविरहेण निधिनवकनामग्रथनेऽपि रत्नावळीत्वाक्षतेरिति चेत्—न हीदृशतदाशयानभिज्ञचोद्यमात्रेण सङ्ख्यावदग्रेसरैस्तैस्स्वकीयलक्ष्यलक्षणग्रन्थे लक्षणानुरोधेन प्रदर्शितमिदमनुदाहरणं मन्यामहे वयम्। कस्तेषामाशय इति चेत्—अयं हि तेषामाशयः प्रसिद्धक्रमनिबद्धाप्रकृतार्थबोधन एव रत्नावळी। क्रमविरहेण यथेष्टमप्रकृतार्थस्य सूच्यतयाऽभिसंहितस्य यस्य कस्यचित्सूचने तु मुद्रालङ्कार एवेति। अन्यथा तदीयग्रन्थस्यासाङ्गत्यापत्तेः तथा च तदीयं रत्नावळीलक्षणं—'प्रसिद्धक्रमसंयुक्ताप्रकृतार्थावबोधनम्। प्रकृतार्थपरैश्शब्दै रत्नावळिरलङ्कृतिः' इति। तदीयमेवोदाहरणं च—'प्रतिज्ञातः पद्भ्यां किसलयजयो हेतुरळिनीश्रियां वेणी वाणी कलयति सुधोदाहरणताम्। सरोजश्रीः पद्भ्यामपि समुपनीता निगमिता ततो रस्या ह्यस्यास्स्वयमवयवश्रीर्विजयते' इति। अत्र प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवा न्यायशास्त्रप्रसिद्धाः क्रमेणैव न्यस्ताः, न च तैस्तत्रप्रसिद्धसहपाठानां प्रसिद्धक्रमाननुसरणेऽप्ययमेवा-

लङ्कार इत्यपि वर्णितं, येन 'नीलश्रीः' इत्यस्यापि रत्नावळीत्वमेव स्यादित्यापाद्येत, अतो नीलश्रीरिति श्लोके अप्रकृतस्य सूचनीयस्य निधिनवकस्य प्रकृतलक्ष्मीवर्णनपरैः पदैस्सूचनान्मुद्रालङ्कार एवेति तद्ग्रन्थपौर्वापर्यपरिशीलने स्फुटीभविष्यत्येव। एवं चैतन्मते मुद्रा-रत्नावळ्यलङ्कारौ प्रकृतार्थपरैः पदैरप्रकृतार्थज्ञापनरूपावेवेति द्रष्ट-व्यम्। नन्वेवं प्रसिद्धसहपाठानां प्रसिद्धक्रमातिलङ्घनेन निवेशेऽपि सूच्यार्थसूचनलक्षणमुद्रालङ्कारत्वाभ्युपगमे प्रसिद्धक्रमानुसरणेऽपि मुद्रा-लङ्कार एव स्यात्किमनेन रत्नावळ्याख्यालङ्कारान्तरकल्पनेन, तत्रापि सूच्यार्थसूचनस्यैव सद्भावेनानयोरनतिवैलक्षण्यादिति चेत्सत्यं, अस्त्येव तत्रापि यद्यपि सूच्यार्थसूचनं असूच्यत्वाभिसन्धौ तादृशशब्द-प्रयोगप्रयत्नो विफल एव स्यात्, तथाऽपि क्रमविशेषनियमेन सूचने विच्छित्तिविशेषस्य सहृदयहृदयैकसाक्षितयाऽलङ्कारान्तरत्वमभ्यु-पगतं, दृश्यते हि मीलितसामान्यार्थावृत्तिदीपकप्रतिवस्तूपमादिषु यत्किञ्चिद्विच्छित्तिविशेषेणैवालङ्कारान्तरत्वमित्यन्यत्र विस्तरः। आह च जयदेवः—"अलङ्कारप्रकारेषु दधानेष्वपि साम्यताम्। वैलक्ष-ण्यं प्रतिव्यक्ति प्रतिभाति मुखेष्विव॥ साम्यतां तुल्यतां, स्वार्थे ष्यञ्। अलङ्कारेषु तथ्येषु यद्यनास्था मनीषिणाम्॥ तदाऽ-र्वाचीनभेदेषु नाम्नाऽऽम्नायोऽपि दूष्यताम्' इति। तथ्येषु कुण्ड-लादिषु अर्वाचीना उपमादयः" इति शरदागमे। एवं चात्र श्लोके पर्यायेणेतिपदेन प्रकृतार्थकेनाप्रकृतस्याप्यलङ्कारनाम्नस्सूचनान्मुद्रा-लङ्कारो निर्विरोध एव। एतेनैव 'ललितामीलितलोचनं सुमधुरं

मत्तेभविक्रीडितं, हितानामहितानां च यस्मिन्दातरि भूपतौ। महानिष्टार्थलाभोऽभूच्चित्रैषा तुल्ययोगिता' इत्यादिष्वस्मत्प्रणीतप्रबन्धगतेषु श्लोकेषु वृत्तालङ्कारसूचने मुद्रालङ्कारत्वं नास्त्येवेति केषांचिदुक्तिराग्रहनिबन्धनैवेत्यनादर्तव्या। अत्र श्लोके स्मृतिहर्षौ सञ्चारिणौ। तदुक्तं—'स्वास्थ्यचिन्तादृढाभ्याससदृशालोकनादिभिः। स्मृतिः पूर्वानुभूतार्थप्रतीतिस्तत्र विक्रियाः॥ कम्पनोद्वहने मूर्ध्नो भ्रूविक्षेपादयोऽपि च। मनोरथस्य लाभेन सिद्ध्ययोग्यस्य वस्तुनः। मित्रसङ्गमदेवादिप्रसादादेश्च कल्पितः॥ मनःप्रसादो हर्षस्स्यादत्र नेत्रास्यफुल्लता। प्रियाभाषणमालापः पुलकानां प्ररोहणम्॥ स्वेदोद्गमश्च हस्तेन हस्तसंताडनादयः' इति॥ १६॥

अवस्थान्तरमाह—

**अम्बातुल्या सुचरितफलं दिव्यमालेपनं प्राक्**
**अङ्गेष्वस्याः स्थिरमनुगुणं यद्वितेनेऽनसूया।**
**धाराकारैः स्तनकलशयोरापतद्भिस्समन्तात्**
**सन्तापोष्णैस्तदपि बहुळैरश्रुभिः क्षाळयन्तीम्॥ १७॥**

प्राक् पूर्वं चित्रकूटाद्दण्डकारण्यगमनावस्थायामत्रेराश्रमप्रवेशावसर इति भावः। तुलया सम्मिता तुल्या 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु' इति तुलाशब्दात्सम्मितार्थे यत्। अम्बायास्तुल्या अम्बातुल्या 'अम्बा

माता' इत्यमरः । 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इति षष्ठ्यां 'षष्ठी' इति समासः । मन्मात्रा कौसल्यया तन्मात्रा वा सदृशीत्यर्थः । यथोच्यते रामं प्रत्यत्रिणाऽनसूयां प्रस्तुत्य—'देवकार्यनिमित्तं च यया संत्वरमाणया । दशरात्रं कृता रात्रिस्सेयं मातेव तेऽनघ' इति । सीतया चोक्तमनसूयां प्रति—'आगच्छन्त्याश्च विजनं वनमेवं भयावहम् । समाहितं मे श्वश्र्वा च हृदये तद्धृतं महत् ॥ पाणिप्रदानकाले च यत्पुरा त्वग्निसन्निधौ । अनुशिष्टा जनन्याऽस्मि वाक्यं तदपि मे धृतम् ॥ नवीकृतं तु तत्सर्वं वाक्यैस्ते धर्मचारिणि' इति । अत्रानसूयाऽनुशासनस्य श्वश्रूमात्रनुशासनतौल्यप्रतीतिस्तस्यास्ताभ्यां साम्यं प्रतीयते—अविद्यमाना असूया गुणेष्वपि दोषारोपणं यस्यास्सा अनसूया । 'असूया तु दोषारोपो गुणेष्वपि' इत्यमरः । अन्वर्थसंज्ञा चेयं, यथोच्यते—'अनसूयेति या लोके कर्मभिः ख्यातिमागता' इति । अत्रिपत्नीत्यर्थः । अस्यास्सीतायाः अङ्गेष्ववयवेषु वक्षःप्रभृतिषु सुचरितफलं सर्वसुकृतपरिपाकभूतं, न ह्यकृतसुकृतानामेतादृशमहाप्रभावतपस्विनीकरादीदृशं मनुजदुर्लभं प्रीतिदानं सुलभमिति भावः । यथोच्यते—'न्यवेदयत तत्सर्वं सीता रामाय मैथिली । प्रीतिदानं तपस्विन्या वसनाभरणस्रजम् ॥ प्रहृष्टस्त्वब्रवीद्रामो लक्ष्मणश्च महारथः । मैथिल्यास्सत्क्रियां दृष्ट्वा मानुषेषु सुदुर्लभाम्' इति । दिव्यं दिवि भवं तद्वदाश्चर्यावहं वा स्थिरं असंक्लिष्टतया चिरकालावस्थायि, अनुगुणं तत्सौकुमार्यसौन्दर्याद्यनुरूपं, यत् आले-

पनं अनुलेपनं, विनेने अर्पितवती। अत्र दिव्यं स्थिरमनुगुणमालेपनमिति पदैः 'इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च। अङ्गरागं च वैदेहि महार्हं चानुलेपनम्॥ मया दत्तमिदं सीते तव गात्राणि शोभयेत्। अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति' इत्येतत्प्रत्यभिज्ञाप्यते। एतेन 'अनुगुणं अनुकूलम्' इति व्याख्यानं त्वसुन्दरमिति वेदितव्यम्। तदपि तदनुलेपनमपि दिव्यं नित्यमसंक्लिष्टमपीति भावः। 'तदपि बहुलैः' इत्येव पाठस्स्वच्छः, न तु 'तदनु बहुलैः' इति। तथा सति पूर्ववाक्यनिर्दिष्टयच्छब्दप्रतिनिर्देशकस्योत्तरवाक्ये तच्छब्दस्याभावप्रसङ्गेनाविमृष्टविधेयांशदोषप्रसङ्गादिति 'सा ते यावन्नयनपदवीम्' इत्यत्र विस्तरेण निरूपितम्। न च तदन्विति पाठमेवाङ्गीकृत्य अनन्तरं तदिति कैश्चिद्व्याख्यातत्वान्नोक्तदोषप्रसङ्ग इति वाच्यम्। तदा तदिति प्रतिनिर्देशकलाभेनोक्तदोषनिस्तारेऽपि अन्वित्यस्यानन्तर्यार्थकत्वेऽप्यत्रोक्तानामवस्थानां क्रमनैयत्याभावेनानन्तर्यवर्णनस्यानुपयुक्ततयाऽस्वरसत्वात्। अत्र हि सीतावस्थानां सम्भावनमेव विवक्षितम्, न तु क्रमिकत्वम्। धाराकारैः अविच्छेदेन निपतद्भिरित्यर्थः। धारा आकारो येषां त इति विग्रहः 'धारा पूः काऽपि सेनाग्रं पतदम्ब्वादिसंततिः' इति रत्नमाला। स्तनकलशयोः कुचकुम्भयोः समन्तात् सर्वतः, आपतद्भिः अहमहमिकया पतद्भिरित्यर्थः, समन्तादापतद्भिरित्यनेन वक्ष्यमाणक्षाळनस्य स्तनयुग्मगतानुलेपननिश्शेषीकरणक्षमत्वं द्योत्यते। संतापः विरहजनितस्संज्वरः 'संतापस्सं-

ज्वरस्समौ ' इत्यमरः । अनेन 'तापाधिक्यं ज्वरो मतः' इति लक्षणलक्षिता ज्वरावस्था सूचिता, तेन उष्णैः ऊष्मलैः बहुलैः बहुभिः अश्रुभिः लोचनाम्बुभिः । अनेन—'विषादरोषसंतापधूमाद्यैरश्रुविक्रियाः । बाष्पबिन्दुपरिक्षेपनेत्रसंमार्जनादयः' इत्युक्तलक्षणस्सात्त्विकभावभेदस्सूचितः । क्षाळयन्तीं मार्जयन्तीमित्यर्थः । 'क्षल शौचकर्मणि' अस्माच्चौरादिकात्कर्तरि लटश्शत्रादेशे उगिल्लक्षणो ङीप् । संतापोष्णैरित्यश्रुविशेषणेन तत्क्षाळ्यमानयोः कुचकलशयोस्तदूष्मपरिप्लोषेण वैवर्ण्यमपि द्योत्यते । अत्र—'सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः । स्नापयन्ती कुचावुष्णैरश्रुभिर्नयनच्युतैः' इत्यादिकं स्मारितम् । अत्राम्बातुल्येत्यत्र धर्मलुप्तोपमा, तुल्यशब्दप्रयोगादार्थी । साक्षात्सादृश्यप्रतिपादकयथेवादिशब्दानां प्रयोगे श्रौती । धर्मिव्यवधानेन सादृश्यप्रतिपादकानां सदृशसंकाशनीकाशप्रतीकाशादिशब्दानां प्रयोगे आर्थीति विवेकः । तत्राप्येषा समासगेति वैलक्षण्यं बोध्यम् । अम्बातुल्येति विशेषणस्य दिव्यानुलेपनसादरदानाभिप्रायगर्भत्वात्परिकरः, स्तनकलशयोरित्यत्र धर्मवाचकलुप्तोपमा । अङ्गरागे सुचरितफलत्वारोपाद्रूपकम् । सीताऽवयवाङ्गरागयोरनुरूपयोर्वर्णनात्समालंकारः । [1] स्थिरतराङ्गरागक्षाळनासंब-

[1] स्थिरतराङ्गरागक्षाळनासम्बन्धेऽपि तत्सम्बन्धोक्त्यतिशयोक्तिश्चेत्यादि रसास्वादिनी ॥ यत्तु—सन्तापोष्णैर्बहुलैरिति विशेषणयोस्स्थिरालेपनक्षालनं प्रति हेतुत्वात्काव्यलिङ्गमिति—तन्न. सन्तापोष्णत्वबहुलत्वविशेषणद्वयविशिष्टानामश्रूणां स्थिरतरानुलेपनक्षालनहेतुताया इह तृतीयावाच्यतया तादृशविशेषणयोर्हेतुतावच्छेदकतयैव विवक्षितत्वलाभेन हेतुत्वविलक्षणमूलककाव्यलिङ्गावतारकथनासङ्गतेः ॥१७॥

न्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिभेदश्चेत्येते संसृज्यन्ते । अश्रूणां संतापोष्णत्ववर्णनाद्व्याधिर्नाम संचारी व्यज्यते 'मनस्तापाद्यभिभवाज्ज्वरादिर्व्याधिरिष्यते' इति तल्लक्षणम् ॥ १७ ॥

**अग्राह्यत्वाद्विषमयमितं केशहस्तं मया प्राक्**
**आबिभ्राणां तनुपरिमळश्रद्धयेवावकीर्णम् ॥**
**अर्चाहेतोर्भुवि रतिपतेरप्सरोभिर्विमुक्तां**
**अन्वग्यातामिव सुरतरोर्मञ्जरीं चञ्चरीकैः ॥१८**

अग्राह्यत्वादिति ॥ मया प्राक् विश्लेषात्पूर्वं संश्लेषावसर इति यावत् । अग्राह्यत्वात् हस्ताभ्यामुपादातुमशक्यत्वात् 'ग्रह उपादाने' अस्मात् 'ऋहलोर्ण्यत्' इति ण्यत्, स च 'शकि लिङ्च' इति शक्यार्थे बोध्यः, अनेन द्राघीयसां तच्छिरोरुहाणामविरळप्ररूढतयाऽतिमात्रसंहतत्वं द्योतयताऽस्यास्सौन्दर्यातिशयो लोकोत्तर इति व्यज्यते । विषमं असाधु यथा तथा अयथासंनिवेशमतिक्षिप्रविश्लथं च यथा स्यात्तथेति भावः । यमितं वेष्टितं संदानितामिति यावत् 'यम च परिवेषणे' अस्माच्चौरादिकात्कर्मणि क्तः चान्मित् । 'मितां ह्रस्वः' इति ह्रस्वः 'आर्धधातुकस्य' इतीट् 'निष्ठायां सेटि' इति णिलोपः । परिवेषणशब्दस्य वेष्टनार्थकत्वं च 'परिवेषणमिह वेष्टनं, न तु भोजना—नापि वेष्टना' इति तत्रैव व्याख्यातत्वात् । वेष्टनेति युजन्ततया निर्देशस्तु सौत्रस्य परिविषेर्णिजन्तत्वज्ञापनाय । 'ण्यासश्रन्थो युच्' इति ण्यन्तादेव

हि युजनुशास्यते ॥ अत्रेदं बोध्यम्—घटादौ 'यमोऽपरिवेषणे' इति पठितं 'न कम्यमिचमाम्' इत्यतो नेत्यनुवर्तते, तत्र परिवेषणमिति हेतुमण्ण्यन्तस्य रूपं, हेतुमण्ण्यन्तस्य हि भोजना वेष्टना चार्थः, तथा चापरिवेषण इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्त्वनिषेधेऽपि तयोरर्थयोरमन्तत्वादेव मित्त्वं सिद्ध्यति। यद्यपि घटादौ 'यच्छतिर्भोजनातोऽन्यत्र मिन्न' इति व्याख्यातम्—तथाऽप्युदाहृतचुरादिग्रन्थानुगुण्येन 'न कम्यामिचमाम्' इति निषेधप्रकरणस्थे 'यमोऽपरिवेषणे' इति परिवेषणभिन्नेऽर्थे मित्त्वनिषेधके घटाद्यन्तर्गणसूत्रे भोजनावद्वेष्टनाऽपि गृह्यते विनिगमनाविरहादित्याहुः। एवं च घटादौ 'यमोऽपरिवेषणे' इत्यत्र परिपूर्वकस्य विषेर्हेतुमाण्णिजन्तस्य ल्युटि रूपम्। 'यम च परिवेषणे' इत्यत्र तु केवलस्यैव विषेर्ल्युटि रूपम्। तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्त्वं सिद्ध्यति। वेष्टने तु 'अपरिवेषणे' इत्यनेनामन्तत्वप्रयुक्तमित्त्वनिषेधेऽपि 'यम च परिवेषणे' इत्यनेन मित्त्वं सिद्ध्यतीति दिक्। अवकीर्णं विषमयमितत्वादेव विश्लथतया विरळीभूय व्याकीर्णं, तत्र हेतुमुत्प्रेक्षमाण आह—तनुपरिमळश्रद्धयेवेति। तनोः गात्रस्य परिमळे सौरभविशेषे श्रद्धया स्पृहयेव शरीरसौरभास्वादनेच्छयेवेति भावः। 'श्रद्धा संप्रत्ययः स्पृहा' इत्यमरः। अवकीर्णं, अनेन सीतायः पद्मिनीजातित्वं सूचितम्। तथा च तल्लक्षणम्—'कमलमुकुळमृद्वी फुल्लराजीवगन्धिस्सुरतपयसि यस्यास्सौरभं दिव्यमङ्गे। चकितमृगदृगाभे प्रान्तरक्ते

च नेत्रे स्तनयुगळमनर्घं श्रीफलश्रीविडम्बि ॥ तिलकुसुमसमानां बिभ्रती नासिकां या द्विजगुरुसुरपूजाश्रद्दधाना सदैव । कुवलयदळकान्तिः काऽपि चाम्पेयगौरी विकचकमलकोशाकारकामातपत्रा ॥ व्रजति मृदु सलीलं राजहंसीव तन्वी त्रिवळिललितमध्या हंसवाणी सुवेषा । मृदु शुचि लघु भुङ्क्ते मानिनी गाढलज्जा धवळकुसुमवासोवल्लभा पद्मिनी स्यात्' इति । केशहस्तं कचकलापं, केशानां कलापः केशहस्त इत्यस्वपदविग्रहः, अत एवायं नित्यसमासः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यनुशासनात् । कचात्परे कचपर्यायात्परतः प्रयुज्यमानाः पाशादयस्त्रयः कलापार्थास्समूहवाचका भवन्तीति तदर्थः । एवं च कचात्पर इत्यनेन पाशादिशब्दानां व्यस्ततया निर्देशे समूहवाचित्वासंभवान्नित्यसमस्ता एवैते उक्तार्थबोधका इति सांप्रदायिकाः, अत एव 'कचवाचकात्परे सन्तः कलापोऽर्थो येषाम्' इत्यमरसुधायामुक्तम् । 'पाशस्तु मृगपश्वादिबन्धने । कर्णान्तशोभनार्थस्स्यात्कचान्ते निकरार्थकः ॥ पाशः केशादिपूर्वस्स्यात्तत्सङ्घे कर्णपूर्वकः । सुकर्णे च स्वसामर्थ्यान्मृगपक्ष्यादिबन्धने ॥ पक्षो मासार्धके गेहपार्श्वसाध्यविशेषयोः । केशादेः परतो बृन्दे खले सखिसहाययोः ॥ हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परे व्राते' इति विश्वमेदिन्यादिकोशास्संगच्छन्ते । आबिभ्राणां दधानां, अत एव रतिपतेः कन्दर्पस्य रतिरेव लोकोत्तरतया प्रसिद्धरूपौदार्या, तस्याः पतिरित्यनेन तस्या अपि कामनीयं तत्कामनीयकमिति द्योत्यते ॥

तेन च वक्ष्यमाणरूपलावण्यादिसौभाग्यशेवधिभूताप्सरोजनपूजार्हत्तमत्वमस्य व्यज्यते, अर्चाहेतोः आराधनान्निमित्तात् 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति पञ्चमी, अप्सरोभिः ऊर्वशीप्रमुखाभिस्स्वर्गणिकाभिः, भुवि भूमौ, विमुक्तां विक्षिप्तां समर्पितामिति यावत्। भुवि रतिपतेरर्चाहेतोरिति वा योजना। चञ्चरीकैः भ्रमरैः, अन्वक् अनुगतं यथा स्यात्तथा 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः। सुरतरोः कल्पवृक्षात् यातां भुवं प्राप्तामित्यर्थः। यद्वा—चञ्चरीकैः अन्वग्यातां अनुसृतामित्यर्थः। अथवा चञ्चरीकैरिति सहार्थे तृतीया विनाऽपि सहशब्दयोगं तृतीया भवत्येव 'वृद्धो यूना' इति निर्देशात्, चञ्चरीकैस्सह अन्वग्यातां अधस्तादागतामित्यर्थः। सुरतरोः मञ्जरीं वल्लरीमिव स्थितां 'वल्लरीं कलिकामिव' इति व्याख्यानं त्वयुक्तं कलिकायाश्चञ्चरीकानुयातत्वोक्तेरननुरूपत्वान्मञ्जरीशब्दस्य कलिकार्थकत्वाभावाच्च। अत एव 'कलिका कोरकः पुमान्। वल्लरी मञ्जरी स्त्रियौ' इति पृथगेवानुशासनं दृश्यते। 'अन्वग्यातां अनुसृत्य याताम्' इति केचिद्व्याचक्षते। नन्वत्र केशपाशस्य विकीर्णत्वोक्तिरयुक्ता 'नीलनागाभया वेण्या जघनं गतयैकया' इति केशपाशस्य वेणीत्ववर्णनविरोधात्, वेणीशब्दो हि त्रिधा विभज्य ग्रथितकेशसन्निवेश एव प्रसिद्ध इति चेन्न—त्रिधाविभागपूर्वकग्रथनरहितस्यापि केशपाशस्य एकवेणीरूपतायाः 'एकवेणीधरा दीना त्वयि चिन्तापरायणा' इति रामायण एवोक्तत्वात्—एकवेणीनाम

त्रिधाविभागवैधुर्येण संहृतः केशपाशः। अत एव तत्र 'त्रिधा विभागं विना बद्धः केशपाश एकवेणीत्युच्यते' इति गोविन्दराजीयव्याख्यानं च संगच्छते ॥ [1]अत्र केशपाशावकिरणं प्रति तनुपरिमळश्रद्धाया गगनकुसुमायमानाया अहेतोरपि हेतुत्वेन संभावनादसिद्धविषया हेतूत्प्रेक्षा। अवकीर्णकेशपाशायास्सीतायाश्चञ्चरीकानुगतकल्पतरुमञ्जरीतादात्म्येन संभावनात्स्वरूपोत्प्रेक्षा। विषयस्योक्तत्वादुक्तविषयेत्यनयोस्संसृष्टिः। अनयोत्प्रेक्षया सीताया लोकोत्तर-

---

[1] अत्र केशपाशावकिरणं प्रति तनुपरिमलश्रद्धायाः . . . हेतुत्वेन संभावनाद्धेतूत्प्रेक्षा। अवकीर्णकेशपाशायास्सीतायाश्चञ्चरीकानुगतकल्पतरुमञ्जरीतादात्म्येन संभावनात्स्वरूपोत्प्रेक्षेत्यनयोस्संसृष्टिः इत्यादि रसास्वादिनी ॥ यत्तु —सुरतरुमञ्जरीगतमुत्कर्षं प्रत्यहेत्वोर्मन्मथपूजार्थत्वाप्सरोविमुक्तत्वयोर्हेतुत्वकल्पनात्प्रौढोक्तिरलङ्कार इत्यलङ्कारान्तरकथनम्— तन्न. तयोर्विशेषणयोर्भूतलप्राप्तिहेतुत्वाभिप्रायेणैवोपात्ततया उत्कर्षहेतुत्वविरहात् ॥ नन्वत्र केशपाशस्य विकीर्णत्वोक्तिरयुक्ता। नीलनागाभयेति केशस्य वेणीत्ववर्णनविरोधात्। वेणीशब्दो हि त्रिधा विभज्य ग्रथितकेशसन्निवेश एव प्रसिद्ध इति चेन्न त्रिधाविभागपूर्वकग्रथनरहितस्यापि केशस्य एकवेणीरूपताया एकवेणीधरेत्यादिरामायण एव व्यक्तत्वात्—इत्यादि रसास्वादिनी ॥ यत्तु—"यद्यपि एकवेणीधरा दीना त्वयि चिन्तापरायणा। इत्याद्युक्त्या त्रिधा विभागं विना बद्धः केशपाशः एकवेणीत्युच्यत इति व्याख्यानेन च अवकीर्णमित्यादिकथनं न संगच्छत इव" इतीमामेव रसास्वादिनीस्थां शङ्कामनूद्य "तथाऽपि रामभद्रस्य उन्मादावस्थया हनूमत्प्रत्यागमनानन्तरं तथासंभवाभिप्रायेण वा न दोषः" इति समाधानान्तराभिधानं तदेवेदमेवं समाधातॄणामुन्मादावस्थामवधारयति। केशपाशस्य विषमःगितत्वादेव कालातिपातातिरेकेण;लरुवलनैश्च अवकीर्णत्वस्य स्वस्तत्वरूपस्यो-

सौकुमार्यादिकं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। अवकीर्णकेशपाशत्ववर्णनेन 'नैव दंशान्न मशकान्न कीटान्न सरीसृपान्। राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना' इत्याद्युक्तप्रक्रियया स्वभर्त्रनुगुणावस्थावस्थितत्वद्योतनाद्वस्तुना वस्तुध्वनिः, तेन च 'आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा' इत्याद्युक्तपातिव्रत्यलक्षणस्य पराकाष्ठा व्यज्यत इत्यन्योऽपि वस्तुध्वनिः, अनेनैव विकीर्णकेशपाशत्ववर्णनेन सीतायास्तत्समीकरणे औदासीन्यद्योतनादरतिर्नामावस्था व्यज्यते 'अन्यत्राप्रीतिररतिः' इति तल्लक्षणम् ॥ १८॥

---

पपत्तेः उन्मादादिकल्पनाया अनावश्यकत्वात्। एतदभिप्रायेणैव हि "नीलनागाभया वेण्या जघनं गतयैकया।" इति वर्ण्यते श्रीमति रामायणे। न चैवं सति "त्रिधा विभागं विना बद्धः केशपाशः एकवेणीत्युच्यते" इति गोविन्दराजीये वेण्याबद्धत्वोक्तिर्न युज्यत इति वाच्यं संहतत्वमात्राभिप्रायेण बद्धत्वोक्त्युपपत्तेः। स्निग्धाः किल केशाः विगलितबन्धतादशायामपि निरन्तरसंहतास्सन्त एव जघनपर्यन्तलम्बिनो दृश्यन्ते। अन्यथा तत्र बद्धत्वस्य वेण्यात्मना ग्रथितत्वरूपत्वे त्रेधा विभागवैधुर्येण ग्रथितत्वं जघनगतत्वं च केशेषु युगपद्वर्ण्यमानं श्रीमति रामायणे व्याहतमेव स्यात्॥ यदि तु—अग्रभागमात्रे ग्रन्थिबद्धाः मध्यभागमात्रे कथञ्चिन्निबद्धा वा केशा इह एकवेणीत्वेन विवक्षिता इत्युच्यते तथाऽपि तथा ग्रथनमपि केशानां द्राघीयस्त्वभूयस्त्वाभ्यां विषमयमनरूपमेव दाशरथिकृतम्। तथा ग्रथितो हि केशपाशः प्रथमं शिरःप्रभृति जघनपर्यन्तं समरेखया लम्बमान आसीत्। कालातिपातेन तु अलसवलनादिभिर्विष्वक्प्रसर्पितारूपावकीर्णता तत्र संभाविता निबध्यतेऽत्राचार्यैरिति न कश्चिद्विरोधगन्धः। वेणीरूपग्रथनरहितानां केशानां एकवेणीरूपत्वं "एकवेणीं दृढं बध्वा" इत्ययोध्याकाण्डेऽपि व्यक्तम् ॥ १८ ॥

**आनीतं यत्त्वरितमचलादुत्तरीयं प्लवङ्गैः**
**अस्याकारैस्सदृशमभितस्त्वत्प्रियारूपचिह्नम् ।**
**बालादित्यद्युतिसहचरं चारु वासो वसानां**
**सन्ध्यारागव्यतिकरवतीं चन्द्रलेखामिवा-**
**न्याम् ॥ ११ ॥**

आनीतमिति ॥ प्लवनं प्लवः प्लवेन गच्छन्तीति प्लवङ्गाः 'गमश्च' इति खचि 'खच्च डिद्वा वक्तव्यः' इति डित्त्वे 'टेः' इति टिलोपः 'खित्यनव्ययस्य' इति मुमागमः । तैः कपिभिः अचलात् ऋश्यमूकगुहाप्रदेशादिति यावत् । 'अचलात् मतङ्गपर्वतात्' इति केषां चिद्व्याख्यानं तु श्रीरामायणविरोधादुपेक्ष्यं । यत् उत्तरीयं उत्तरस्मिन्देहे भवं उत्तरीयं भवार्थे 'गहादिभ्यश्च' इति छः । 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा । संव्यानमुत्तरीयं स्यात्' इत्यमरः ॥ ऊर्ध्वाङ्गधार्यं वास इत्यर्थः । त्वरितं शीघ्रं यथा स्यात्तथा आनीतं समीपं प्रापितं अत्र 'एवमुक्तस्तु सुग्रीवश्शैलस्य गहानां गुहाम् । प्रविवेश ततश्शीघ्रं राघवप्रियकाम्यया ॥ उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च । इदं पश्येति रामाय दर्शयामास वानरः' इत्येतत् स्मारितम् । यद्यपि किष्किन्धाकाण्डे सुग्रीवेणैकेनैवोत्तरीयाभरणानयनमुक्तं न तु बहुभिर्हरिभिः तथाऽपि सुन्दरकाण्डे 'ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया । यान्याभरणजालानि पातितानि महीतले ॥ तानि सर्वाणि रामाय आ-

नीय हरियूथपाः । संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव ' इति हनूमदुक्तेरत्र प्लवङ्गैरिति बहुवचनोपादानम् । सुग्रीवेणैकेनानीतत्वोक्तिस्तु प्राधान्याभिप्रायेण । ' तानि गमाय दत्तानि मयैवोपहृतानि च । स्वनवन्त्यवकीर्णानि तस्मिन्विहतचेतसि ' इति तदुत्तरत्र हनूमदानीतत्वोक्तिरप्येवमेव समाधेया । अस्य उत्तरीयस्येत्यर्थः । आकारैः विन्यासविशेषैः सदृशं तुल्यं एतदुत्तरीयसमरूपमित्यर्थः । अत्र ' पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा । इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् ॥ तथाऽपि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् । तदेकवाससंवीताम् ' इत्येतदनुसन्धेयम् । अभितः परितः त्वत्प्रियायाः राजहंस्याः रूपं आकारसदृश आकारः चिह्नं लक्षणं यस्य तत्तथोक्तं सौवर्णतन्तुचमत्कृतराजहंस्याकृतिचिह्नितमित्यर्थः । अनेन राजहंसस्य सीतासंदर्शनयोग्यतायां प्रत्यासत्त्यतिशयो द्योतितः । बालस्य प्रत्यग्रोदितस्य आदित्यस्य सवितुः द्युतेः सहचरं तत्तुल्यमिति यावत् । अनेन वाससस्सौवर्णत्वं द्योत्यते । अत एव, चारु सुन्दरं वासः पीताम्बरमित्यार्थः । वसानां आच्छादयन्तीं ' वस आच्छादने ' अस्मादादादिकात्कर्तरि शानच् । अत एव, सन्ध्यारागस्य सान्ध्यारुणिम्नः व्यतिकरस्संपर्कः सोऽस्या अस्तीति सन्ध्यारागव्यतिकरवती तां तथोक्तां अन्यां प्रसिद्धेन्दुलेखातो विलक्षणां चन्द्रलेखां इन्दुकलामिव स्थितां चन्द्रलेखौपम्येन सीतायां निष्कलङ्कत्वं महत्यपि कृशिमनि रमणीयकातिशयः लावण्यातिशयो विरहजनितपाण्डिमातिशयश्चेत्यादिकं द्योत्यते । अनेन ' ददर्श

शुक्लपक्षादौ चन्द्रलेखामिवामलाम्' इत्येतत् स्मार्यते, शुक्लपक्षचन्द्ररेखायास्सान्ध्यरागसम्बन्धो ह्यवश्यंभावी। अत्र त्वत्प्रियारूपचिह्नमित्यत्र राजहंसीरूपस्य वसनचिह्नत्वासंभवात्तत्सदृशं रूपमित्यौपम्याक्षेपादसंभवद्वस्तुसंबन्धनिबन्धना निदर्शना, बालादित्यद्युतिसहचरमित्यत्रानुक्तधर्मा समासगा आर्थी उपमा, अन्यत्सर्वं पूर्वस्मिन्नाश्वासे 'राकाचन्द्रद्युतिसहचरम्' इत्यत्र निरूपितम्। सौवर्णपरिधानवत्यास्सीतायास्सान्ध्यरागसंभिन्नान्यचन्द्ररेखातादात्म्येन संभावनात्स्वरूपोत्प्रेक्षा उक्तविषया। न चेयमुपमैवेति भ्रमितव्यं तथा सत्यन्यामित्यस्य वैयर्थ्यापत्तेः। अस्याश्श्रोक्तोपमासापेक्षत्वात्सङ्करः, निदर्शनया सह संसृष्टिः। चरं चारु वासो वसेति व्यञ्जनद्वयद्वयस्याव्यवधानेनावृत्तेश्छेकानुप्रासश्शब्दालङ्कारः 'भवेदव्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः। आवृत्तिर्यत्र स बुधैश्छेकानुप्रास इष्यते' इति लक्षणात्। नचात्र व्यञ्जनद्वयस्यावृत्तावपि स्वरपौनरुक्त्याभावेन न छेकानुप्रासः, 'महीमहीनविभवो धत्ते क्षेमङ्करे करे' इत्यादौ छेकानुप्रासोदाहरणे सस्वरव्यञ्जनद्वयस्यैवाव्यवधानेनावृत्तेर्दर्शनादिति वाच्यम्, अनुप्रासयोर्व्यञ्जनावृत्तिविशेषनियतयोस्स्वरपौनरुक्त्यस्याभ्युच्चयमात्रत्वात्। न हि तत्र स्वरावृत्तिरप्यवश्यंभाविनी, तदुक्तं विद्यानाथेन—'छेकानुप्रासे वृत्त्यनुप्रासे च स्वरपौनरुक्त्यमानुषङ्गिकं यमके तु सस्वरयोर्व्यञ्जनयुग्मयोरावृत्तिः' इति। अन्यथा अनुप्रासोऽपि यमकमेव स्यात् 'यमकं पौनरुक्त्ये तु स्वरव्यञ्जनयुग्मयोः' इति हि यमकलक्षणं तेनैवोक्तम्। नन्वेवं 'महीमहीन' इत्या-

दिकं छेकानुप्रासस्य नोदाहरणं भवितुमर्हति, सस्वरव्यञ्जनद्वयावृत्तिसद्भावात् किं तु यमकस्यैवेति चेन्न, विद्यानाथोक्तलक्षणे स्वरव्यञ्जनयुग्मयोरिति कथनमुपलक्षणं, सस्वरव्यञ्जनानां बहूनामावृत्तावपि यमकव्यवहारदर्शनात् अत एव 'आवर्त्यतेऽर्थभेदेन सस्वरव्यञ्जनावळिः। यदा तदा स्याद्यमकं बहुधाऽऽद्यन्तमध्यगम्' इति साहित्यरत्नाकरोक्तिस्सङ्गच्छते। अन्यथा—'प्रतापः काकतीन्द्रस्य महामहिमतेजसः। श्रियं दधाति पद्मेष्टमहामहिमतेजसः' इति तदीयमेव यमकोदाहरणं न सङ्गच्छेत। तस्मादनेकसस्वरव्यञ्जनावृत्तौ यमकं व्यञ्जनानामेकद्विप्रभृतीनां, द्वयोर्वा तयोरावृत्तावनुप्रास इत्येवालङ्कारिकपद्धतिः। एवं च—'महिमहीन' इत्यादौ स्वरसाहित्येन व्यञ्जनद्वयस्यावृत्तावपि न छेकानुप्रासक्षतिः। परं त्वधिकं त्विति न्यायेनाभ्युच्चय एवेति दिक् ॥ १९ ॥

**वक्तुं मार्गं किल वसुमतीं जग्मुषस्तत्पदाब्जात्**
**मञ्जीरस्य त्वदुपमरुतेर्दक्षिणस्यास्य तुल्यम्।**
**अङ्कारूढे चरणकमले मत्करेणोपधेयं**
**वामं शाखाशिखरनिहितं वीक्ष्य गाढं**
**विषण्णाम् ॥२०॥**

वक्तुमिति ॥ मार्गं रावणापहृतायास्तस्याः प्रस्थानपथं, वक्तुं किल मह्यमावेदयितुमिव, तस्याः सीतायाः पदाब्जात् चरणकमलात्, वसुमतीं वसुधां जग्मुषः गतवतः, गमधातोर्लिटः 'क्वसुश्च'

इति क्वसुः 'गमहन' इत्यादिना उपधालोपः । 'वसोस्संप्रसारणम्' इति संप्रसारणे 'संप्रसारणाच्च' इति पूर्वरूपे 'इण्कोः' इति षत्वं 'विभाषा गमहनविदविशाम्' इति विहित इडागमस्संप्रसारणविषये अकृतव्यूहपरिभाषया न प्रवर्तते 'विभाषा पूर्वाह्ण' इति सूत्रे भाष्ये 'पपुष इदं पपिवद्रूपम्' इति प्रयोगाल्लोकेऽपि क्वचित्क्वसोस्साधुताऽस्तीति पूर्वस्मिन्नाश्वासे विंशतितमश्लोके 'तल्पमातस्थुषीणाम्' इत्यत्र विस्तरेणावोचाम। त्वं उपमा यस्याः त्वदुपमा, त्वदुपमा रुतिः रुतं ध्वनिः, यस्य, तस्य तथोक्तस्य, रौतेर्भावे क्तिन् 'प्रतिकृतिरुपमोपमानं स्यात्' इत्यमरः । [1]त्वन्निनादतुल्यनिनादस्येत्यर्थः । दक्षिणस्य, अपसव्यचरणनिधेयस्येति यावत् 'अपसव्यं तु दक्षिणः' इत्यमरः । अस्य मत्समीपवर्तिन इत्यर्थः। मञ्जीरस्य नूपुरस्य, तुल्यं सदृशं, 'तुल्यार्थैः' इत्यादिना षष्ठी। अनेन च सन्दर्भेण 'चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम्। विद्युन्मण्डलसङ्काशं पपात मधुरस्वरम्' इत्येतत्प्रत्यभिज्ञाप्यते। यद्यपि नूपुरभ्रंशो जटायुसम्मर्दात्प्रागेव वर्णितश्श्रीरामायणे, न तु ऋश्यमूकगतकपिमध्ये, तत्र हि 'ह्रियमाणा तु वैदेही कं चिन्नाथम-

---

[1] त्वन्निनादतुल्यनिनादस्येत्यर्थ इति रसास्वादिनी ॥ इदं च पर्यवसितार्थकथनम् । त्वन्मञ्जीरप्रतिमनिनद इत्यत्रत्यरसास्वादिनीतस्तथाऽवगमात् ॥ यत्तु— त्वं उपमा यस्या इति विगृह्य अत्र त्वत्पदं त्वद्रुतिपरं बोध्यमित्युक्तम्—तन्न. युष्मदो रुतिपरतायां गौणत्वप्रसक्त्या त्वादेशानुपपत्तेः । विस्तरस्तु 'त्वन्मञ्जीरप्रतिमनिनदे' इत्यत्र प्रथमाश्वासे इति दिक् ॥ २० ॥

पश्यती। ददर्श गिरिशृङ्गस्थान्पञ्च वानरपुङ्गवान् ॥ तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम्। उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ मुमोच यदि रामाय शंसेयुरिति मैथिली। वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम्' इति सामान्यत एतावदेवोक्तं, न तु कण्ठतो नूपुरभ्रंशनं, तथाऽप्यत्र श्लोके अस्येत्युक्तिः पूर्वं स्त्रस्तस्य तस्यैव मञ्जीरस्य सीतातिवर्तनानन्तरं कदाचित्पर्यटद्भिर्वानरैर्लब्धत्वसंभावनया वा, वानरेषु नूपुरानन्तरं पातितमिति संभावनया वेति समाधेयं, अत एव वानरोपहृतेष्वाभरणेषु भगवता श्रीरामचन्द्रेण प्रदर्शितेषु 'नाहं जानामि केयूरे नाहं जानामि कुण्डले। नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्' इति लक्ष्मणस्य नूपुराभिज्ञानोक्तिस्सङ्गच्छते। ननु तत्रापि केयूरकुण्डलापरिज्ञानद्रढिम्ने परं नूपराभिज्ञानवर्णनं, न तु तत्र नूपुरसद्भावादिति चेत्—तदा स्वतस्सिद्धातिशयकविप्रौढोक्तिनिबन्धनैवेयमुक्तिरिति सन्तोष्टव्यमायुष्मता। अस्मिन्पक्षे असंबन्धे संबन्धकथनरूपातिशयोक्तिरित्यवधातव्यम्। अङ्के मदुत्सङ्गे, आरूढं अधिरूढं न्यस्तमिति यावत्। तस्मिंस्तथोक्ते 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः। चरणमेव कमलं, चरणं कमलमिवेति वा, तस्मिन् तस्याः पादपद्म इत्यर्थः, अनेन सीताचरणस्यारुण्यसौकुमार्यभोग्यत्वरमणीयत्वादीनि व्यज्यन्ते। मत्करेण मम पाणिना, उपधेयं निधातुमर्हं योजनीयमित्यर्थः,। अनेन 'वासोऽङ्गरागाभरणमालाशय्यासनादिषु। यत्र यत्र स्पृहा तत्तद्देशकालानुरूपतः॥ अ-

त्यादरेण सत्कार उपचार इतीर्यते ' इत्युक्तोपचाररचनाचातुर्यं रामचन्द्रस्य द्योतितम्। शाखायाः शिखरे निहितं भर्तुरसान्निध्ये भूषणधारणमनुचितमिति स्वचरणादवमुच्य निक्षिप्तमित्यर्थः। अनेनास्थाविरहेणाभरणानां वृक्षशाखानिक्षेपादरतिर्नामावस्था द्योतिता, लक्षणं तूक्तं, अत्र—' वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत्। तान्याभरणजालानि शाखाशोभीन्यलक्षयत् ' इत्येतत् स्मर्तव्यम्। अत एवात्र वामं मञ्जीरमिति कथनमाभरणान्तरोपलक्षणमिति ध्येयम्। वामं सव्यपादनिधेयं मञ्जीरमित्यर्थः, दक्षिणस्य मञ्जीरस्य तुल्यमित्युक्तत्वात् ' वामं शरीरे सव्यं स्यात् ' इत्यमरः। वीक्ष्य विशेषेण दृष्ट्वा, उपसर्गेण दर्शनस्य पौनःपुन्यद्योतकेन चक्रवर्तिनन्दनोत्सङ्गाधिरूढे मच्चरणे तेनैव योजनीयस्य तवापीदृशी दुर्दशा प्राप्तेत्यनुस्मरणपूर्वकदैन्यातिशयो द्योत्यते। अत एव स्मृतिर्दैन्यं च सञ्चारिणौ व्यज्येते लक्षणं तूक्तम्। गाढं नितान्तं 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ' इत्यमरः। विषण्णां विषादं प्राप्तां, विषादो नामेष्टानवाप्तिविपदादिजनितानुतापः, तदुक्तं रसार्णवसुधाकरे—'प्रारब्धकार्यानिर्वाहादिष्टानाप्तेर्विपत्तितः। अपराधपरिज्ञानादनुतापस्तु यो भवेत्॥ विषादस्स त्रिधा ज्येष्ठमध्यमाधमसंश्रयात्। सहायान्वेषणोपाय चिन्ताद्या उत्तमे स्मृताः॥ अनुत्साहश्च वैचित्त्यमित्याद्या मध्यमे मताः। अधमस्यानुभावास्स्युर्वैचित्त्यमवलोकनम्॥ रोदनं श्वसितं ध्यानं मुखशोषादयोऽपि च ' इति। अत्र पूर्वार्धे सीतामञ्जीराधःपतनं प्रत्यफलस्यापि तन्मार्गकथनस्य तत्फलत्वेन सम्भावनात्फलोत्प्रेक्षा, असिद्धविष-

या । त्वदुपमरुतेरिति मञ्जीरविशेषणस्य मार्गकथनौचित्याभिप्रायगर्भत्वात्परिकर उक्तोत्प्रेक्षोत्तेजक इति सङ्करः । पदाब्जादित्युपमयाऽयं सङ्करस्संसृज्यते । उत्तरार्धे विषयिणः कमलस्य स्वात्मना रामकर्तृकमञ्जीरयोजनलक्षणकार्यानुपयोगितया विषयभूतसीताचरणात्मना परिणत्यपेक्षणात्परिणामालङ्कारः । उपमितसमासाश्रयणेनोपमा वेति सन्देहादनयोस्सन्देहसङ्करः। अन्यतरसाधकबाधकप्रमाणविरहेण सन्देह एव पर्यवसानात् साधकबाधकप्रमाणसद्भावे हि सन्देहनिवृत्तिः । उक्तप्रकारवाममञ्जीरदर्शनस्य गाढविषण्णतां प्रति हेतुत्वात्काव्यलिङ्गं चेत्येतेषां संसृष्टिः ॥ २० ॥

**अङ्गैर्म्लायत्किसलयसमैरुज्झिताकल्पपुष्पैः**
**गाढाश्लिष्टां वपुषि विमले बिम्बिताभिर्लताभिः।**
**सन्तापोष्णश्वसनपरुषच्छायया किंच दूनां**
**(दीनां) (किंचिदूनां)**
**बन्दीभूतां निशिचरगृहे नन्दनस्येव लक्ष्मीम्॥२१**

अङ्गैरिति ॥ किंचेति पूर्वोक्तार्थसमुच्चये । न केवलमेतावदेव अपि तु दुरवस्थान्तरमपि भवेदिति भावः । म्लायन्ति ग्लानिमुपगच्छन्ति यानि किसलयानि तैः समैः सदृशैः 'तुल्यार्थे' इति तृतीयायां 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति तृतीयासमासः । 'म्लै हर्षक्षये' अस्माल्लटश्शता । विरहतापातिरेकेणातिमात्रं म्लानैरिति भावः । 'परिम्लानां तपस्विनीम्' इत्येतदत्र स्मर्तव्यम् । आ-

कल्पाः भूषणानि, पुष्पाणीव आकल्पपुष्पाणि उज्झितानि त्यक्तानि आकल्पपुष्पाणि यैस्तथोक्तैः अङ्गैः अवयवैः उपलक्षितां 'इत्थंभूतलक्षणे' इति तृतीया। 'भूषणैरुत्तमैर्हीनाम्' इत्येतदत्र स्मर्तव्यम्। भर्त्रसन्निधानाद्विसृष्टाभरणामिति भावः। विमले निसर्गतो लावण्यसुभगे इति भावः। इदं च वक्ष्यमाणलताप्रतिबिम्बग्रहणसाभिप्रायम्। वपुषि गात्रे बिम्बिताभिः प्रतिबिम्बिताभिः 'वी गतौ' बवयोरभेदः 'उल्बादयश्च' इत्यौणादिके बन्प्रत्यये नुमागमह्रस्वयोर्बिम्बमिति रूपम्। 'बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले' इति हेमः। बिम्बान्यासां सन्तीति बिम्बवत्यः बिम्बवत्यः कृताः बिम्बिताः। बिम्बवच्छब्दात्तत्करोतीति णिजन्तात्कर्मणि क्तः, णाविष्ठवद्भावे 'विन्मतोर्लुक्' इति मतुपो लुक्। बिम्बान्यासां सञ्जातानि बिम्बिता इति वा तारकादित्वादितच्। लताभिः वल्लीभिः गाढं दृढं आश्लिष्टां परिष्वक्तां सखीभिरिवेति भावः। विमलतरदिव्यविग्रहप्रतिफलितलतावितानामित्यभिप्रायः। [1]सन्तापेन अन्तस्सञ्ज्वरेण

[1] सन्तापेन अन्तस्सञ्ज्वरेणेत्यादि रसास्वादिनी॥ यत्तु—अन्यत्र सन्तापोष्ण आतपतापोष्णः यश्श्वसनो वायुस्तेन परुषया अशीतया छायया अनातपेन—इति श्लेषवर्णनं—तन्न. प्रक्रमभङ्गापत्तेः। प्रथमपादे हि उत्प्रेक्षौपयिकसाधर्म्याभिधानं तावत्स्पष्टम्॥ अङ्गानामपि किसलयसाम्यनिबन्धनेन बिम्बप्रतिबिम्बभावस्थल इव सादृश्यसंपादितकिसलयाभेदकत्वेन उपमानोपमेयोभयगामित्वोपपत्तेः। यदि पुनः तृतीयपादे श्लेषो विवक्ष्यते तदा तत्रापि उत्प्रेक्षौपयिकसाधर्म्याभिधानं प्राप्तमिति प्रथमपादप्रक्रान्तस्य साधर्म्याभिधानप्रकरणस्य तृतीयपादेऽनुवर्तमानस्य अन्तरा द्वितीयपादे विच्छेदप्रसङ्गः। अत एव

उष्णं ऊष्मलं यत् श्वसनं निश्वासः तेन परुषा विकला या छाया कान्तिः तया ज्ञापकभूतया दूनां परितप्तावयवां उक्तविधच्छायाज्ञाप्यावयवपरितापामिति यावत् । 'तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम्' इत्युक्तावस्थाप्राप्तया शोचनीयामिति भावः । 'उष्णार्दितां सानुसृतास्तकण्ठीम्' इत्येतदप्यत्रानुसन्धेयम् । 'दूङ् परितापे' अस्माद्दैवादिकान्निष्ठायां 'ओदितश्च' इति नत्वं, दूङस्स्वादित्वात् 'स्वादितश्च' इति स्वादीनामोदित्त्वविधानात् । न तु 'दु गतौ' इत्यस्मान्निष्ठायां 'दुग्वोश्च' इत्यनेन नत्वदीर्घे, तथासति प्रकृताविवक्षितपरितापरूपार्थसमर्पकतापत्तिः । न च टु दु परितापे

पूर्वतन्त्रे अभिक्रमणस्य प्रयाजाङ्गविधिमध्यपाठितस्य प्रक्रान्तप्रयाजप्रकरणानुवृत्त्यनुरोधेन प्रयाजाङ्गत्वमवधारितं 'भवेदेवं प्रयाजानां नास्ति प्रकरणं यदि । तेषां वचनसंयुक्ता ये गुणा विहिताः पुरा ॥ पश्चाच्च ये विधास्यन्ते तैस्सन्दष्टमिदं श्रुतम् । अभिक्रामं जुहोतीति न ततोन्यत्र गच्छति' इति न खल्विह तृतीयपादेऽपि साधर्म्याभिधानं संभवति । भवद्भिरप्यनुपन्यासात् । कथंचिदपि तदभिधानाशक्तेश्च । तस्माद्द्वितीयपादे विच्छिन्नस्य सादृश्याभिधानप्रकरणस्य तृतीयपादे अनुवृत्त्यसम्भवात् श्लेषाविवक्षणमेव युक्तम् । अत एव उपवीतविधेस्सामिधेनीगुणविध्यन्तराम्नानेऽपि उपवीतपूर्वाम्नातैर्निविद्भिरसम्भवत्सामिधेन्यङ्गभावैस्सामिधेनीप्रकरणविच्छेदात् विच्छिन्नस्य च प्रकरणस्य उपवीतविधावनुवृत्तेरसम्भवादुपवीतस्य न सामिधेन्यङ्गत्वमिति स्थितं पूर्वतन्त्रे—'अनुवृत्तौ तदङ्गत्वं विच्छिन्ने दर्शशेषता । किं प्राप्तमुभयत्रापि कीर्तनादनुवर्तते । पुरस्तादुपवीतस्य परस्ताच्चापि कीर्तनम् । विद्यते सामिधेनीनामतः प्रकरणास्तिता" इति पूर्वपक्षं प्रापय्य 'एवं प्राप्ते वदामोत्र निविद्भिर्व्यवधानतः । विच्छिन्ना सामिधेनीनां प्रक्रिया नानुवर्तते ॥' इति ॥ २१ ॥

इत्यस्मान्निष्ठायां ‘ दुग्वोश्च ’ इत्यनेन नत्वदीर्घयोर्विवक्षितार्थभ्रंशाभाव इति भ्रमितव्यम् । तस्य सानुबन्धकत्वेन ‘ दुग्वोश्च ’ इत्यत्राग्रहणात् ‘ निरनुबन्धकग्रहणे न सानुबन्धकस्य ’ इति परिभाषणाद्दूनामिति रूपासिद्धेः परितापार्थकदुधातोर्दुत इत्येव रूपम् । अत एव ‘ मृदुतया दुतया ’ इति माघप्रयोगश्च संगच्छते । अत्र ‘ व्रीडितां दुःखसंतप्तां, सुखार्हां दुःखसंतप्तां, निश्वासबहुलां भीरुं निश्वसन्तीं पुनःपुनः, निश्वसन्तीं सुदुःखार्तां, दहन्तीमिव निश्वासैर्वृक्षान्पल्लवधारिणः ’ इत्यादिकमनुसन्धातव्यम् । अनेन ‘ अपि चास्या विशालाक्ष्या न किंचिदुपलक्षये । विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् ॥ छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् । अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ’ इत्येतत्प्रत्यभिज्ञाप्यते । ‘ छायया किंच दीनाम् ’ इति क्वचित्पाठो दृश्यते—तदाऽपि, किंचेत्येतदुक्तार्थसमुच्चय एव । उपलक्षितामिति शेषः । दीनामित्यस्य तु क्षीणामित्यर्थः । ‘ दीङ् क्षये ’ इत्यस्माद्दैवादिकात्स्वादित्वेनौदित्त्वात् ‘ ओदितश्च ’ इत्येव निष्ठानत्वे । अत्र ‘ शोकसंतापदीनाङ्गीम् ’ इत्येतदनुस्मर्तव्यम् । नन्वेवं ‘ मन्ये दीनां निशिचरगृहे ’ इति पूर्वमेतत्कुळकादिमश्लोक एव दीनामित्युक्तत्वादत्रापि दीनामिति पाठे पौनरुक्त्यापत्तिरिति चेन्मैवं—‘ ततो मलिनसंवीताम् ’ इत्यादिश्रीरामायणस्थकुळके ‘ उपवासकृशां दीनां, अश्रुपूर्णमुखीं दीनां कृशामनशनेन च, शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ’ इति दीनाशब्दपौनरुक्त्यस्येवात्रत्यदीनाशब्दपौनरुक्त्यस्यापि दै-

न्यातिशयख्यापनार्थत्वेनादोषात् प्रत्युत 'तत्साधवो न न विदन्ति विदन्ति किन्तु' इत्यादाविव गुणत्वाच्च, अत एव तत्र 'कृशां दीनामिति पुनः पुनरुक्तिः कार्श्यदैन्ययोरतिशयप्रदर्शनाय' इति व्याचख्ये गोविन्दराजैः। वस्तुतस्तु पूर्वं मन्ये दीनामित्यत्रानौद्धत्यलक्षणदैन्यं प्राप्तामिति अत्रत्यस्य दीनामित्यस्य क्षीणामिति च व्याख्यातत्वान्नैव पौनरुक्त्यशङ्काया अवकाशः। यद्वा—अत्र त्रस्तामित्यर्थ इत्यपौनरुक्त्यं, तथा च विश्वः—'दीना मूषकयोषायां दुर्गते कातरेऽन्यवत्' इति। अस्मिन्नर्थेऽपि छाययेति तृतीया पूर्ववदेवोपलक्षणार्था। अत्र 'मृगकन्यामिव त्रस्तां, वित्रस्तां परमोद्विग्नाम्' इत्युक्तोऽर्थः स्मर्तव्यः। 'सन्तापोष्णश्वसनपरुषच्छायया किञ्चिदूनाम्' इति पाठे उष्णोष्णनिश्वासविषमितच्छायतया पूर्वापेक्षया यत्किञ्चिन्न्यूनरूपामित्यर्थः। 'उपवासकृशां दीनां निश्वसन्तीं पुनःपुनः। मन्दप्रख्यायमानेन रूपेण रुचिरप्रभाम्॥ पिनद्धां धूमजालेन शिखामिव विभावसोः' इत्युक्तरीत्या इदं तदिति शनैः प्रत्यभिज्ञेयरूपामिति भावः। निशिचरस्य रावणस्य गृहे, बन्दीभूतां प्रग्रहीभूतां 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः। अबन्दी बन्दी सम्पद्यमाना भूता बन्दीभूतेति विग्रहः। बन्दीशब्दो नित्यस्त्रीलिङ्गो बलाद्गृहीतप्रतिबद्धप्राणिवाचकः। नन्दनस्य इन्द्रोद्यानस्य, लक्ष्मीं श्रियमिव, तदधिष्ठात्रीं देवतां मूर्तिभूतामिव स्थितां, अत्र सीताया बन्दीकृतनन्दनवनलक्ष्मीतादात्म्यसम्भावनारूपस्वरूपोत्प्रेक्षा। म्लायत्किसलयसमैः उज्झिताकल्पपुष्पैरित्युपमाभ्यां वपुषि लताप्रतिफलनासम्ब-

न्धेऽपि तत्सम्बन्धोक्तिरूपातिशयोक्तिसङ्कीर्णेनेन, विमले इति साभिप्रायविशेषणरूपपरिकरेण चोपजीवितेति सङ्करः ॥ २१ ॥

**चेतोवृत्तिं शमयति बहिस्सार्वभौमे निरोधे**
**मय्येकस्मिन्प्रणिहितधियं मान्मथेनागमेन ।**
**अभ्यस्यन्तीमनितरजुषो भावनायाः प्रकर्षात्**
**स्वान्तेनान्तर्विलयमृदुना निर्विकल्पं समाधिम् ॥**

चेत इति ॥ अत्रेयं योगविदां प्रक्रियाऽनुसन्धेया—योगो नाम चित्तस्य रजस्तमोवृत्तिनिरोधः। तदाह भगवान्पतञ्जलिः—'योगश्चित्तवृत्तिनिरोधः' इति। चित्तस्य रजस्तमोवृत्तीनां निरोधो योग इति तदर्थः। अतस्सम्प्रज्ञाते सात्त्विकवृत्तिसत्त्वेऽपि नाव्याप्तिः। तस्य चाङ्गानि यमादीन्यष्टौ यान्यसूत्रयत्पतञ्जलिः—'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि' इति। इह कानिचित्समाधेस्साक्षादुपकारकत्वेनान्तराण्यङ्गानि यथा धारणादीनि। कानिचित्प्रतिपक्षभूतहिंसादिवितर्कोन्मूलनद्वारेण समाधेरुपकुर्वन्ति यथा यमनियमादीनि। तत्रासनादीनामुत्तरोत्तरमुपकारकत्वं यथा सत्यासनजये प्राणायामस्थैर्यं, एवमुत्तरत्रापि नेयम्। क्रमेणैषां स्वरूपं वदन्नादौ यमस्वरूपमसूत्रयत्—'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति। तत्र प्राणवियोगप्रयोजको व्यापारो हिंसा, सा च सर्वानर्थहेतुः। तदभावोऽहिंसा। हिंसायास्सर्वकालमेव परिहार्यत्वात्प्रथमं तदभावायाहिंसानिर्देशः। सत्यं परहितार्थं यथार्थकथनं वाङ्म-

नसयोर्यथार्थत्वं वा। बलाद्रहसि वा परादत्तहरणं स्तेयः, तदभावोऽस्तेयः। ब्रह्मचर्यमुपस्थसंयमः। अपरिग्रहो नाम देहयात्रातिरिक्तभोगसाधनास्वीकारः। एते पञ्च यमा योगस्य विरोधिहिंसाऽसत्यस्तेयस्त्रीसङ्गपरिग्रहनिरासकत्वेनाङ्गत्वं भजन्ते। नियमानाह—'शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः' इति। शौचं द्विविधं बाह्यमाभ्यन्तरं च। बाह्यं मृज्जलादिभिः कायादिप्रक्षाळनं, आभ्यन्तरं मैत्र्यादिभावनया चित्तस्यासूयादिमलराहित्यम्। सन्तोषः प्राणधारणमात्रहेतुना तुष्टिः। तपः द्वन्द्वसहनं, यथायोगं कृच्छ्रचान्द्रायणादिकं च। स्वाध्यायः प्रणवाभ्यासः। ईश्वरे सर्वकर्मणामर्पणमीश्वरप्रणिधानमिति तदर्थः। आसनस्वरूपमाह—'स्थिरसुखमासनम्' इति। आस्यतेऽनेनेत्यासनं पद्मासनादि। तद्यदा स्थिरं निष्कम्पं सुखमनुद्वेजनीयं च भवति तदा योगाङ्गतां भजत इत्यर्थः। आसनसाध्यं प्राणायाममाह—'तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' इति। आसनस्थैर्ये सति बाह्यकौक्ष्यवाय्वोरन्तर्बहिरपि गतिविच्छेदः प्राणायाम इत्यर्थः। प्रत्याहारलक्षणमाह—'स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' इति। शुद्धस्य चित्तस्य शब्दादिभिर्विषयैरसंप्रयोगे सति वैराग्याद्विषयेभ्यो वियुज्य तत्त्वाभिमुख्ये सतीति यावत्, इन्द्रियाणां चक्षुरादीनां यश्चित्तस्य स्वरूपानुकारः स्वविषयासंप्रयोगेन तत्त्वाभिमुख्यरूपस्स प्रत्याहारः, इन्द्रियाणि विषयेभ्यः प्रातिलोम्येनाह्रियन्तेऽस्मिन्निति व्युत्पत्तेः, इन्द्रियाणां विषयशूराणां चित्तवत्तत्त्वाभिमुख्यं नास्तीति

द्योतनार्थ इवशब्दः, यथा मक्षिका मधुकरराजं चलन्तमनुचलन्ति स्थितमनुस्थिता भवन्ति तथा चित्तानुसारीणीन्द्रियाणि तन्निरोधेनैव निरुध्यन्ते, न यत्नान्तरेणेति तात्पर्यं, अतश्चित्तनिरोधे तानि प्रत्याहृतानि भवन्ति तेषां तत्स्वरूपानुकारः प्रत्याहार इत्यर्थः। एतानि यमादीनि प्रत्याहारान्तानि पञ्च योगस्य बहिरङ्गसाधनानि। धारणा ध्यानं समाधिरित्येतत्त्रयमन्तरङ्गसाधनम्। तथा च सूत्रम्—'त्रयमन्तरङ्गं पूर्वेभ्यः' इति। 'तदेतद्धारणाध्यानसमाधित्रयमन्तरङ्गं सम्प्रज्ञातसमाधेः पूर्वेभ्यो यमादिभ्यः पञ्चभ्यस्साधनेभ्यः' इति तद्भाष्यम्, तच्च संयमशब्देनोच्यते तथाच सूत्रम्—'त्रयमेकत्र संयमः' इति। अत्र भाष्यम्—'तदेतद्धारणाध्यानसमाधित्रयमेकत्र संयमः, एकविषयाणि त्रीणि साधनानि संयम इत्युच्यन्ते, तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति' इति। तत्र हृत्पुण्डरीकादौ चित्तस्य चिरकालस्थापनं धारणा, तदुक्तम्—'देशबन्धश्चित्तस्य धारणा' इति। अत्र भाष्यम्—'नाभिचक्रे हृदयपुण्डरीके मूर्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्ध इति बन्धो धारणा' इति। चित्तस्य बन्धो नाम विषयान्तरपरिहारेण स्थिरीकरणं वैष्णवे पुराणे चोक्तम्—'प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्। वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रये॥ मूर्तं भगवतो रूपं सर्वोपाश्रयनिस्स्पृहम्। एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते॥ तच्च मूर्तं हरे रूपं यद्विचिन्त्यं नराधिप।

तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥ प्रसन्नवदनं चारु पद्मपत्रनिभेक्षणम् । सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥ समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् । कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम्' इत्यादिना 'चिन्तयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम्' इत्यन्तेन । एवमेकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाह उत्तरोत्तरान्याकारप्रत्ययाव्यवहितो ध्यानम् । तथाच सूत्रम्—'तत्रप्रत्ययैकतानता ध्यानम्' इति । यत्र धारणा विजातीयवृत्तिपरिहारे यत्नापेक्षा भवति तत्रैव या प्रत्ययानां वृत्तीनामेकतानता यत्नमनपेक्ष्यैकविषयता तद्ध्यानमिति सूत्रार्थः । पुराणं च—'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्स्पृहा । तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते नृप' इति । सर्वथा विजातीयप्रत्ययानन्तरितस्सजातीयप्रत्ययप्रवाहस्समाधिः, तथा चोक्तम्—'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति । अतिस्वच्छचित्तवृत्तिप्रवाहरूपं ध्यानमेवार्थस्वरूपेण निर्भासमानं समाधिः । स्वरूपशून्यमिवेति मात्रशब्दार्थविवरणं ध्यानस्वरूपज्ञानशून्यम् । इवशब्देन ध्यानस्य सत्ता द्योत्यते । यथा स्वच्छस्फटिकमणिः कुसुमरूपेणैव निर्भासते न स्वरूपेण, तद्वदित्यर्थः । विजातीयवृत्तिविच्छिन्ना धारणा, सजातीयवृत्त्यविच्छिन्नं ध्यानं, ध्येयध्यानध्यातृमध्ये ध्येयमात्रस्फूर्तिमान् समाधिरिति तेषां वैलक्षण्यम्, उक्तं च विष्णुपुराणे—'तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते' इति । ध्येयाद्ध्यानस्य भेदः कल्पना त-

द्धीनमित्यर्थः । अयं च समाधिश्चित्तभूमिभेदेन द्विविधः सम्प्रज्ञातोऽसम्प्रज्ञातश्चेति । चित्तस्य पञ्च भूमयो भवन्ति क्षिप्तं, मूढं, विक्षिप्तं, एकाग्रं, निरुद्धं इति । तत्र क्षिप्तं, सदैव रजसा तेषुतेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरम् । मूढं तु तमस्समुद्रेकान्निद्रादिमत्, क्षिप्ताद्विशिष्टं विक्षिप्तं, विशेषश्चास्थेमबहुळस्य कादाचित्कः स्थेमा, तत्र क्षिप्तमूढयोस्सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निश्श्रेयसहेतुत्वाभावात्तदुपघातुकत्वाच्च समाधिशङ्कैव नास्ति, विक्षिप्ते तु चेतसि कादाचित्कस्समाधिर्विक्षेपप्राधान्यान्न योगपक्षे वर्तते किंतु तीव्रपवनविक्षिप्तप्रदीपवत्स्वयमेव नश्यति एकाग्रं त्वेकविषयकधारावाहिकवृत्तिसमर्थं सत्त्वोद्रेकेण तमोगुणकृततन्द्रादिविलयादात्माकारा वृत्तिः । सा च रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावादेकविषयैवेति शुद्धे सत्त्वे भवति चित्तमेकाग्रम्, अस्यां भूमौ सम्प्रज्ञातः अत्र ध्येयाकारा वृत्तिरपि भासते । तस्या अपि निरोधे निरुद्धं चित्तमसम्प्रज्ञातसमाधिभूमिः । तथाच सूत्रम्—'तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजस्समाधिः' इति । अस्य सूत्रस्यार्थो मणिप्रभावृत्तावेवं विवृतः, तथा हि—'पुरुषख्यात्यनन्तरं परवैराग्यप्रत्ययेन तस्य समाधिप्रज्ञासंस्कारस्य अपिशब्दात्प्रज्ञायाश्च निरोधे सति सर्वस्य प्रज्ञातज्जसंस्कारप्रवाहस्य निरोधात् अवसिताधिकारत्वेन चित्तस्य कृत्याभावान्निमित्तापाये नैमित्तिकापाय इति न्यायेन निर्बीजस्समाधिर्भवति । तदुक्तम्—'आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते

योगमुत्तमम्' इति। श्रवणमननेन पुरुषमात्रध्यानाभ्यासो धर्ममेघाख्यः तद्रसेन परवैराग्यप्रसादात्मना पुरुषं साक्षात्कुर्वन्निर्बीजयोगं लभत इति तदर्थः। कालक्रमेण निर्बीजनिरोधसंस्कारप्रचये सति स्वप्रकृतौ चित्तं लीयते हेत्वभावात् कृत्यशेषलक्षणाधिकारो हि चित्तस्य स्थितिहेतुः न हि 'कृतभोगविवेकख्यातेश्चित्तस्य कृत्यशेषोऽस्ति तस्माच्चित्तप्रळये पुरुषस्स्वरूपमात्रप्रतिष्ठः केवलो मुक्त इति सिद्धम्' इति। अयमेव सर्वतो विरक्तस्य समाधिफलमपि सुखमनपेक्षमाणस्य योगिनो दृढभूमिर्भवति। तदुक्तम्—'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' इति। अत्र भाष्यम्—'दीर्घकालासेवितः निरन्तरासेवितः तपसा ब्रह्मचर्येण विद्यया श्रद्धया च सम्पादितसत्कारवान् दृढभूमिर्भवति व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः' इति। स एव धर्ममेघ इत्युच्यते तथा च सूत्रम्—'प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघस्समाधिः' इति। षड्विंशतितत्त्वान्यालोचयतस्सत्त्वपुरुषान्यताख्यातिर्या जायते सर्वभावाधिष्ठातृत्वाद्यवान्तरफला तत्प्रसङ्ख्यानं तत्राप्यकुसीदस्य कुत्सितेषु विषयेषु सीदतीति कुसीदो रागः तद्रहितस्य विरक्तस्य सर्वात्मना विवेकख्यातेरेव संततिरूपो धर्ममेघसंज्ञस्समाधिर्भवति। स खल्वशुक्लकृष्णं धर्मं कैवल्यफलं मेहति सिञ्चतीति धर्ममेघ इत्युच्यते। प्रसङ्ख्याने वैराग्याद्धर्ममेघे सति परवैराग्योदयात्प्रसङ्ख्यानस्य निरोधो भवतीति सूत्राभिप्रायः। तस्माच्चाविद्यादिक्लेशनिवृत्तिर्भवति। तत्सूत्रितं—'ततः क्लेशनिवृत्तिः'

इति । अत्र भाष्यं—‘ तल्लाभादविद्यादयः क्लेशास्समूलकाषङ्कषिता भवन्ति, कुशलाकुशलाश्च कर्माशयास्समूलघातं हता भवन्ति क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान्विमुक्तो भवति ’ इति । तामेतां प्रक्रियामनुक्रामन् तत्र संयमरूपमन्तरङ्गसाधनं पुरस्कृत्य ‘ नैषा पश्यति राक्षस्यो नेमान्पुष्पफलद्रुमान् । एकस्थहृदया नूनं राममेवानुपश्यति ’ इत्याद्युक्तप्रकारां जनकनन्दिन्यास्स्वविषयकभावनां समाधिस्थितित्वेन संभावयन्नाह भगवान्दाशरथिः—चेत इति ॥ [1]सार्वभौमे, सर्वासु भूमिषु विदितस्सार्वभौमः तस्मिंस्तथोक्ते, क्षिप्तमूढविक्षिप्तादिसर्वावस्थासु

[1]सार्वभौमे सर्वासु भूमिषु विदितः सार्वभौमस्तस्मिंस्तथोक्ते क्षिप्तमूढविक्षिप्तादिसर्वावस्थासु प्रसिद्ध इत्यर्थ इति रसास्वादिनी ॥ अत्र यदि तद्गुणसंविज्ञानबहुव्रीहिराश्रीयते तदा क्षिप्तादिपञ्चावस्था अपि सर्वभूमिपदार्थ इति लभ्यते भोजराजाद्यभिमतम् । यदा तु—अतद्गुणसंविज्ञानबहुव्रीहिराश्रीयते तदा सावान्तरभेदा एकाग्रावस्था निरुद्धावस्था च सर्वभूमिपदार्थः । तथाच मधुमतीमधुप्रतीकाविशोकासंस्कारशेषतारूपासु अवस्थास्वित्यर्थ इत्यवगम्यते । तदिदं वाचस्पतेरनुमतं मतम् । तेन सार्वभौमपदगतसर्वभूमिपदस्य एकाग्रावस्थानिरुद्धावस्थारूपचतुर्थपश्चिमभूमिमात्रपरतायास्स्थापितत्वात् । तदेवं योगतन्त्रप्रसिद्धनिबन्धकारयोर्भोजराजवाचस्पतिमिश्रयोर्द्वयोरपि मतयोस्सङ्ग्रहं सूचयितुं ‘ क्षिप्तमूढविक्षिप्तादिसर्वावस्थासु ’ इति विवृतमाचार्यैरित्यवधेयम् ॥ यत्तु—स च सार्वभौम इति भाष्यं मनसि निधाय तस्यार्थमाह भोजराजः । स च निरोधस्सर्वासां चित्तवृत्तीनां सर्वप्राणिनां च धर्मः कदाचित्कस्याञ्चिद्बुद्धिभूमावाविर्भवतीति ॥ अयं भावः—यदा चित्तस्य या बुद्धिवृत्तिरुदेति तदा तस्यामन्यस्या वृत्तेर्निरोधो दृश्यते । यथा क्षिप्तावस्थायां मूढावस्थानिरोध इति । तस्मादयं निरोधस्सर्वास्वपि चित्तभूमिषूक्तप्रकारेण विदित इति ॥ वाचस्पतिमिश्रस्तु—

प्रसिद्ध इत्यर्थः। 'तत्र विदितः' इत्यधिकारे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यणि अनुशतिकादित्वादुभयपदवृद्धिः। अनेन 'योगस्समाधिः स च सार्वभौमः' इत्युदाहरिष्यमाणयोगभाष्यस्थसार्वभौमपदं प्रत्यभिज्ञाप्यते। निरोधे अभ्यासवैराग्याभ्यां जनिते निरोधे। यथा च सूत्रितं—'अभ्यासवैराग्याभ्यां तन्निरोधः' इति। अभ्यासवैराग्ये च 'तत्रस्थितौ यत्नोऽभ्यासः, दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' इति सूत्राभ्यामुक्तलक्षणे। ताभ्यां तासां प्रकाशप्रवृत्तिनियमरूपाणां चित्तवृत्तीनां यत्प्रतिह-

---

एकाग्रस्य चित्तस्य तिस्रो भूमयः मधुमती मधुप्रतीका विशोकेति। निरुद्धस्य संस्कारशेषत्वैकैवेति सर्वासु तासु चतसृषु भूमिषु अन्यासां प्रमाणादिवृत्तीनां निरोधो विदित इति भाष्यार्थमाह। माधवाचार्येणाप्ययमेवार्थोऽनुसृतः। तत्र भोजराजोक्त एवार्थ आचार्यैरनुसृत इति बोध्यमिति—तन्न. भाष्यगतसार्वभौमपदस्येव मूलस्थसार्वभौमपदस्यापि मतद्वयपरतयाऽप्युपपत्तेर्मूलस्यैकतरमतमात्रपरतया नियन्तुमशक्यत्वात्। प्रत्युत वाचस्पतिपक्षस्यैवाचार्याभिमतताया नियन्तुं शक्यत्वाच्च। तथा हि—भोजराजोक्तस्येह मूलकृदाचार्याभिमतत्वे पद्येऽत्र सार्वभौमपदस्यैव वैयर्थ्यापत्तिः व्यावर्त्याभावात्। सार्वभौमे निरोधे इत्यनेन क्षिप्तादिसर्वभूमिसाधारणे निरोधे विवक्षिते तत्र बाह्यचेतोवृत्तिसामान्यशमयितृत्वायोगेन 'चेतोवृत्तिं शमयति बहिः' इति विशेषणासङ्गतेश्च। तस्माद्वाचस्पत्युपदर्शितार्थ एवेहाचार्यैर्मूले विवक्षितः। तथा च सति क्षिप्तमूढविक्षिप्तरूपावस्थात्रयगतनिरोधव्यावृत्तये सार्वभौमपदं सार्थकम्। मधुमत्यादिसकलभूमिविदिते च निरोधे बाह्यचेतोवृत्तिशमयितृत्वमुपपन्नं चेति। रसास्वादिन्यां तु—योगशास्त्रनिबन्धकारपरस्परवैमत्योद्घाटनस्य अनवसरग्रस्ततया मूलस्यैकतरमतमात्रपरतामनिर्धार्य सामान्यत एव विवृतमित्यवधेयम्॥

नन्नं स निरोधः, स च तासां निवृत्तबाह्याभिनिवेशानामन्तर्मुखतया स्वकारण एव चित्तशक्तिरूपतयाऽवस्थानं तत्र विषयदोषदर्शनजेन वैराग्येण तद्वैमुख्यमुत्पाद्यते, अभ्यासेन च सुखजनकशान्तप्रवाहप्रदर्शनद्वारेण दृढं स्थैर्यमुत्पाद्यत इत्याभ्यां भवति चित्तवृत्तिनिरोध इति तदर्थः। बहिः बाह्यप्रदेशे, चेतसः चित्तस्य, वृत्तिं, जात्यभिप्रायकमेकवचनं वृत्तीनां बहुत्वात्। तथा च सूत्रितम्—'वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः' इति॥ अस्यार्थः—'अग्रिमसूत्रोक्ताः प्रमाणविपर्ययविकल्पनिद्राप्रभृतयः पञ्च विशेषा वृत्तिसामान्यस्यावयवाः पञ्च अवयवा यासां पञ्चतय्यः तासां हानोपादानसिद्धये भेदमाह 'क्लिष्टाक्लिष्टाः' इति, रागद्वेषादिक्लेशहेतवः क्लिष्टाः बन्धफलाः, सर्वो हि जन्तुः प्रमाणादिवृत्तिभिर्ज्ञातार्थेषु रागादिना कर्म कृत्वा सुखादिना बध्यते। अक्लिष्टाः क्लेशनाशिन्यो मुक्तिफलास्सत्त्वपुरुषान्यताख्यातिगोचराः। ताः खल्वभ्यासवैराग्याभ्यां क्लिष्टवृत्तिप्रवाहमध्ये जायमानास्स्वजन्याक्लिष्टसंस्कारैः पुनरभ्यासेन प्रवृद्धैः क्लिष्टसंस्कारनिरोधेन क्लिष्टवृत्तिप्रवाहं निरुद्ध्य परवैराग्येण स्वयं निरुद्ध्यन्ते ततस्संस्कारशेषस्य चित्तस्य प्रळये मुक्तिर्भवतीति भावः' इति मणिप्रभायां विवृतः। शमयति सति अनेन क्षिप्तमूढविक्षिप्तभूमिनिरोधस्सूचितः, प्रत्याहाराक्षेपकेणानेन तत्पूर्वभावीनि यमादीन्यङ्गान्यप्याक्षिप्यन्ते। मान्मथेन मन्मथसंबन्धिना आगमेन शास्त्रेण न तु 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आ

त्मनि ' इत्यागमोक्तेनेति भावः। मय्येकस्मिन् श्रीरामचन्द्रे मय्येवेत्यर्थः। सर्वकारणभूते सर्वेश्वरेश्वरे परस्मिन्ब्रह्मणीति हार्दोऽभिप्रायः। प्रणिहिता प्रणिधानाख्यभक्तिविशेषेणार्पिता धीः यया तां तथोक्ताम्। अनेनास्यास्समाधिसिद्धिरङ्गान्तरानपेक्षैवावश्यं भाविनीति सूचितम्। तदुक्तं 'समाधिसिद्धिरीश्वरप्रणिधानात्' इति। ईश्वरार्पितसर्वभावस्य भक्त्यैव योगसिद्धिर्भवतीति तदर्थः। न चैवं सति यमादिसप्ताङ्गीवैयर्थ्यमिति वाच्यं, अङ्गैर्भक्त्या वा योगसिद्धिरिति विकल्पाभ्युपगमात्, तथाच सूत्रं 'ईश्वरप्रणिधानाद्वा' इति। प्रणिधानाद्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण। तदभिध्यानमात्रादपि योगिन आसन्नतमस्समाधिलाभः फलं च भवति' इति तद्भाष्यम्। एतावता धारणाध्यानसंप्रज्ञातसमाधिरूपस्संयमस्सूचितो भवति, तथाच 'अथ योगानुशासनम्' इत्यत्र भाष्यं 'योगस्समाधिः स च सार्वभौमश्चित्तस्य धर्मः क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतस्समाधिर्न योगपक्षे वर्तते। यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान्कर्मबन्धनानि श्लथयति निरोधमभिमुखं करोति स संप्रज्ञातो योग इत्याख्यायते' इति। स च वितर्काद्यनुगतः। यथा च सूत्रितं 'वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञातः' इति। अत्राभाष्यत—वितर्कः चित्तस्यालम्बने स्थूल आभोगः, सूक्ष्मो विचारः, आनन्दो ह्लादः, एकात्मिका संविदस्मिता तत्र प्रथमश्चतुष्टयानुगतस्समाधिस्सवितर्कः, द्वितीयो वितर्कविकलस्स-

विचारः, तृतीयो विचारविकलस्सानन्दः, चतुर्थस्तद्विकलः अस्मितामात्र इति। सर्वे एते सालम्बनास्समाधयः' इति अनेन चित्तस्यैकाग्रभूमिस्थितिरुक्ता, अस्यां भूमौ ध्येयाकारा वृत्तिरपि भासत इति भवति संप्रज्ञात इत्यवोचाम। अथासंप्रज्ञातसमाधिस्थितिमाह—अभ्यस्यन्तीमिति। [1]इतरज्जुषतीतीतरजुट् सा न भवतीत्यनितरजुट्, तस्यास्तथोक्तायाः, जुषतेः क्विप्। अनन्यवृत्तेरित्यर्थः। व्युत्थानसंस्कारमलराहित्येन निरोधमात्रविषयाया इति भावः। भावनायाः वासनायाः संस्कारस्येत्यर्थः, प्रकर्षात् प्रचयाद्धेतोः, अनेन चित्तस्य प्रशान्तवाहिता सूच्यते, तथा च सूत्रं—'तस्य प्रशान्तवाहिता संस्कारात्' अत्र मणिप्रभावृत्तिः 'सर्वात्मना व्युत्थानसंस्काराभावे सति निरोधस्थैर्यमाह—तस्येति। निरोधसंस्कारप्रचयान्निरस्तसमस्तव्युत्थानसंस्कारमलस्य चित्तस्य निरोधसंस्कारपरंपरामात्र-

---

[1] अनितरजुषः . . . . . . व्युत्थानसंस्कारमलराहित्येन निरोधमात्रविषयाया इति भाव इति रसास्वादिनी॥ यत्तु—अनितरजुषः मन्मात्रगोचरायाः इत्यर्थवर्णनम्—तन्न. मय्येकस्मिन्नित्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेः॥ तस्मात् 'तज्जस्संस्कारोऽन्यसंस्कारप्रतिबन्धी' इति योगसूत्रस्य 'समाधिप्रज्ञाप्रभवस्संस्कारो व्युत्थानसंस्काराशयं बाधते। व्युत्थानसंस्काराभिभवात् तत्प्रभवाः प्रत्यया न भवन्ति। प्रत्ययनिरोधे समाधिरुपतिष्ठते। ततस्समाधिप्रज्ञा। ततः प्रज्ञाकृतास्संस्कारा इति नवोनवस्संस्काराशयो जायते। ततः प्रज्ञा ततस्संस्कारा' इति तद्भाष्यस्य च प्रत्यभिज्ञापकतया निरोधसमाधिशब्दितासम्प्रज्ञातसमाधिहेतुभूतव्युत्थानसंस्कारपरिपन्थिसंस्कारप्रकर्षपरत्वमेव रसास्वादिन्युपदर्शितं युक्तं 'अनितरजुषो वासनायाः प्रकर्षात्' इत्यस्येति बोध्यम्॥

वाहिता भवति' इति। यः [1] अन्तः, स्वप्रकृतावेव विलयः प्रलयः तेन मृदुना वृत्तिरूपकार्याकरणादभावप्राप्तेनेव स्थितेनेति भावः। स्वान्तेन चित्तेन कालक्रमेण निर्बीजनिरोधसंस्कारप्रचये सति स्वप्रकृतौ चित्तं लीयत, इत्यवोचाम तन्न विस्मर्तव्यम्। विविधः कल्पो विकल्पः निर्गतो विकल्पान्निर्विकल्पः, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। समाधिं सर्ववृत्तिप्रत्यस्तमये सं-

[1] अन्तः स्वप्रकृतावेव विलयः प्रलयस्तेन मृदुना वृत्तिरूपकार्याकरणादभावप्राप्तेनैव स्थितेनेति भावः। स्वान्तेन चित्तेन। कालक्रमेण निर्बीजनिरोधसंस्कारप्रचये सति स्वप्रकृतौ चित्तं लीयत इत्यवोचाम। तन्न विस्मर्तव्यमिति रसास्वादिनी। यत्तु—अन्तः भाव्ये वस्तुनीत्यर्थः। मयीति यावत्। विलयेन विलीनत्वेन। तन्मयत्वापत्त्येति यावत्। मृदु मन्दं अन्यत्किमपि ग्रहीतुमशक्तेन स्वान्तेन—इति—तन्न. अन्तश्शब्दस्य भाव्यवस्तुपरतायाः कोशादितोऽसिद्धेः। भाव्यवस्तुमयत्वस्य तदेकवस्तुविषयकत्वरूपस्य 'मय्येकस्मिन्' इत्यनेनैव लब्धतया पौनरुक्त्यापत्तेश्च। तस्मात् कार्यापेक्षया कारणस्य सूक्ष्मतया 'अन्योऽन्तर आत्मा' इत्यादिवदन्तरत्वेन रूपेण चित्तप्रकृतेरेव अन्तःपदेन विवक्षितमुचितम्। विलयशब्दस्य च स्वकारणे प्रलयपरत्वमेव युक्तम्। 'तस्यापि निरोधे सर्वनिरोधान्निर्बीजस्समाधिः' इति सूत्रस्थस्य 'व्युत्थाननिरोधसमाधिप्रभवैस्सह कैवल्यभागीयैस्संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते' इति भाष्यस्य प्रत्यभिज्ञानात्। तथा च तादृशसूत्रभाष्यसन्दर्भानुगुण्याद्यनुरोधेन रसास्वादिन्यां प्रदर्शितं निरोधसंस्कारप्रकर्षाधीनचित्तप्रलयपरतयाऽस्य व्याख्यानमेव युक्तमिति ध्येयम्॥

पूर्वार्धस्य संप्रज्ञातसमाधिपरतां व्याख्याय 'अथासंप्रज्ञातस्थितिमाह अभ्यस्यन्तीमिति' इत्यादिना उत्तरार्धस्यासंप्रज्ञातसमाधिपरतां प्रकाश्य श्लोकस्यास्य

स्कारशेषं चित्तनिरोधरूपमसंप्रज्ञातसमाधिमित्यर्थः । 'सम्यगाधीयते एकाग्रीक्रियते विक्षेपान्परिहृत्य यत्र मनस्स समाधिः' इति राजमार्तण्डवृत्तौ भोजदेवः। ध्येयमात्रनिर्भासं ध्यानमिति भावः। अभ्यस्यन्तीं परिचिन्वतीमिव स्थितां मन्य इति प्राक्तनदशमश्लोक-

योगशास्त्रीयकृत्स्नार्थसङ्ग्रहेदंपरत्वं स्थापितं रसास्वादिन्याम् । यत्तु—स्वरसतममिममर्थं परित्यज्य योगशास्त्रार्थैकदेशभूतसंप्रज्ञातसमाधिमात्रपरतां श्लोकस्यास्याभिसन्धाय 'एतच्छ्लोकोक्तस्समाधिस्तु संप्रज्ञातभेदेषु निर्वितर्कस्संप्रज्ञातसमाधिर्बोध्यः' इति—तदिदं योगौपनिषदतन्त्रद्वयीयसम्प्रदायानभिज्ञताविलसितम्। भगवद्विषयकतयाऽत्रोक्तस्य संप्रज्ञातस्य निर्वितर्कशब्दितत्वासम्भवात् । सवितर्कनिर्वितर्कसविचारनिर्विचाररूपाणां हि सम्प्रज्ञातभेदानां स्थूलसूक्ष्मभेदभिन्नाचेतनगोचरत्वात्। ग्रहीतृसमापत्तिरूपस्यैव सम्प्रज्ञातभेदस्य चेतनविषयकत्वसम्भवात्। स्पष्टं चेदं रसास्वादिन्यामनूदितेष्वेव 'वितर्कविचारः' इति सूत्रभाष्यादिषु । भवदनूदितेऽपि—'तत्र यदा महाभूतादीनि स्थूलानि विषयत्वेनादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखसम्भेदनभावना क्रियते तदा सवितर्कसमाधिः । अस्मिन्नेवालम्बने पूर्वापरानुसन्धानशब्दार्थोल्लेखशून्यत्वेन यदा भावना प्रवर्तते तदा निर्वितर्कः' इति भोजराजीयसन्दर्भे । तस्मात् उत्तरार्धेऽत्र 'तज्जस्संस्कारोऽन्यसंस्कारप्रतिबन्धी । तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजस्समाधिः' इति सूत्रतद्भाष्ययोः प्रत्यभिज्ञानादसम्प्रज्ञातपरत्वमेवात्र युक्तमाचार्योपदर्शितमाश्रयितुम्। न च असम्प्रज्ञातसमाधिस्सिद्धान्तिनामननुमत इति शङ्क्यम् । तदनुमतत्वेऽपि योगशास्त्रप्रक्रियामालम्ब्य तदर्थोत्प्रेक्षानिबन्धे बाधकाभावात्। वस्तुतस्तु — असम्प्रज्ञातसमाधिरपि सम्प्रज्ञातसमाधिवत्सिद्धान्तिनामनुमत एव । अत एव—'सम्प्रज्ञातस्थितिमतिगते निर्विकल्पे समाधौ शान्तावद्यस्तिमितबहुलानन्दसन्दोहमन्तः । यत्तद्ब्रह्म स्फुरति यमिनां पूर्णषाड्गुण्यरूपं सा मे सत्या हृदि हयमुखी देवता

स्थितेनान्वयः। अनेन निरुद्धभूमिस्थितिरुक्ता। अभ्यस्यन्तीमित्यादिना एतावत्पर्यन्तेन ग्रन्थेन संप्रज्ञातसमाधिसमनन्तरभाव्यसंप्रज्ञातसमाधिरुक्तः। तल्लक्षणं च सूत्रितम्—'विरामप्रत्ययाभ्यासपूर्वस्संस्कारशेषोऽन्यः' इति वृत्तीनामभावो विरामः तस्य प्रत्ययः

---

सन्निधत्ताम्' इत्याचार्यैर्मूलकारैरेव निर्विकल्पसमाधेः सम्प्रज्ञातस्थितिमतिक्रम्याविर्भूतत्वमभिहितम्। सम्प्रज्ञातस्थितिमतिक्रम्याविर्भूतो हि निर्विकल्पसमाधिरसम्प्रज्ञात एव। अत एव तत्र 'पूर्णषाड्गुण्यरूपं' इत्यस्याप्युपपत्तिः। निर्बीजसमाध्यपराभिधानस्यासम्प्रज्ञातसमाधेरेव सर्वोत्तरसमाधिरूपतया तत्रैव पूर्णषाड्गुण्यरूपस्य परस्य ब्रह्मणः स्फुरणौचित्यात्। न तु ततोऽर्वाचीने संप्रज्ञाते सबीजसमाधिनामनि। अत एव शरणागतिदीपिकायामाचार्यैः—योग्यं यमैश्च नियमैश्च विधाय चित्तं सन्तो जितासनतया स्ववशासुवर्गाः। प्रत्याहृतेन्द्रियगणास्स्थिरधारणास्त्वां ध्यात्वा समाधियुगलेन विलोकयन्ति ॥ पद्माभिरामवदनेक्षणपाणिपादं दिव्यायुधाभरणमाल्यविलेपनं त्वाम्। योगेन नाथ शुभमाश्रयमात्मवन्तस्सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम् ॥ मानातिलङ्घिसुखबोधमहाम्बुराशौ मग्नास्त्रिसीमरहिते भवतस्स्वरूपे। तापत्रयेण विहतिं न भजन्ति भूयस्संसारघर्मजनितेन समाधिमन्तः॥ इत्यनेनात्र एकेन पद्येन यमनियमासनप्राणायामप्रत्याहारधारणाध्यानानि समाधियुगलं च निर्दिश्य द्वितीयेन पद्येन प्रथमसमाधेः संप्रज्ञातापरपर्यायस्य सालम्बनयोगस्य शुभाश्रयविशिष्टभगवद्विषयकतामभिधाय तृतीयेन पद्येन परिच्छेदत्रयातीतषाड्गुण्यपरिपूर्णस्वरूपस्य निरालम्बनसमाधिगोचरत्वमन्वग्राहि। निरालम्बनसमाधिरेव निर्बीजः असंप्रज्ञात इति चाख्यायते। संप्रज्ञातसूत्रे 'सर्व एते सालम्बनाः' इत्यनेन संप्रज्ञातमात्रस्य सालम्बनत्वभाषणात्। अनूदितं चेदमपि भाष्यं रसास्वादिन्यामेव। तस्मादिहापि निर्विकल्पसमाधिरसंप्रज्ञात एवाचार्यैर्मूलकारैर्विवक्षित इत्यवधेयम्॥

कारणं परवैराग्यं तदभ्यासपूर्व उपायो यस्य स तथा। अनेन पदेनोपाय उक्तः। अन्योऽसंप्रज्ञातस्संस्कारशेषः परं हि वैराग्यं संप्रज्ञातसंस्कारानभिभूय स्वसंस्कारं शेषयति स निर्बीजस्समाधिः निरालम्बनत्वात्कर्मबीजाभाव इत्यर्थः। अस्यैव सूत्रस्यार्थो राजमार्तण्डवृत्तावेवं वर्णितो महाराजभोजदेवेन 'असंप्रज्ञातमाह—विरामेति। विरम्यतेऽनेनेति विरामः, वितर्कादिचिन्तात्यागः विरामश्चासौ प्रत्ययश्चेति विरामप्रत्ययः तस्याभ्यासः पौनःपुन्येन चेतसि निवेशनं तत्र याकाचिद्वृत्तिरुल्लसति तस्यां नेतिनेतीति नैरन्तर्येण पर्युदसनं तत्पूर्वकोऽसंप्रज्ञातस्समाधिः संस्कारशेषः अन्यः तद्विलक्षणः असंप्रज्ञात इत्यर्थः, न तत्र किञ्चिद्वेद्यं संप्रज्ञायत इत्यसंप्रज्ञातो निर्बीजस्समाधिः। इह चतुर्विधश्चित्तस्य परिणामः व्युत्थानं, समाधिप्रारम्भः, एकाग्रता, निरोधश्चेति। तत्र क्षिप्तमूढे चित्तभूमी व्युत्थानं, विक्षिप्तभूमिस्सत्त्वोद्रेकात्समाधिप्रारम्भः, एकाग्रता-निरुद्धे तु पर्यन्तभूमी, प्रतिलोमपरिणामश्च संस्काराः,। तत्र व्युत्थानजनितास्संस्कारास्समाधिप्रारम्भजैस्संस्कारैर्हन्यन्ते तज्जाश्चैकाग्रताजैः, निरोधजनितैरेकाग्रताजास्संस्कारास्स्वरूपं च हन्यते यथा सुवर्णसंवलितं ध्मायमानं सीसकमात्मानं सुवर्णमलं च निर्दहति एवमेकाग्रजनितान्संस्कारान्निरोधजास्स्वात्मानं च निर्दहन्ति' इति।

[1] अत्र समाधिमभ्यस्यन्तीमित्युत्प्रेक्षा सा च सीताकर्तृकप्रणिधानस्य

[1] अत्र समाधिमभ्यस्यन्तीमित्युत्प्रेक्षा इति रसास्वादिनी॥ यत्तु—अत्र—कनन्तीं कान्तायाः कचरुचिमसाधारणतया कवीनां लोको यत्कथयति तदेतन्न

मान्मथागमसिद्धत्ववर्णनेन योगशास्त्रादिप्रसिद्धप्रणिधानवैलक्षण्यप्रतीतेर्व्यतिरेकगर्भेति द्रष्टव्यम् । मान्मथेनागमेन प्रणिहितधियमित्यनेन—

हि मृषा । सपक्षात्सर्वस्मादपि मधुकराणां समुदयाद्विपक्षाद्वयात्त्ति व्रजति शिखिपिञ्छादपि यतः ॥ इत्यादाविव लौकिके वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपरूपा समासोक्तिः—इति । तन्न. यत्र हि विशेषणानां श्लेषेण वा स्वतस्सिद्धसाधारण्येन वा प्रकृताप्रकृतयोरर्थयोस्साधारण्य तत्रैव हि समासोक्तिः प्रसरति । प्रकृते च निर्विकल्पपदस्य तत्समानाधिकरणसमाधिपदस्य च शास्त्रीयार्थरूपाप्रकृतार्थमात्रगामितया प्रकृतार्थसाधारण्याभावात्कथं समासोक्तिः प्रवर्तताम् । चिन्तनमात्रे समाधिशब्दप्रयोगानुशासनयोरदर्शनेन सीतागतरामभद्रगोचरचिन्तनमात्रस्य निर्विकल्पसमाधिपदव्यपदेश्यत्वायोगात् । अत एव हि 'आत्मारामा विहितमतयो निर्विकल्पे समाधौ ज्ञानोत्सेकाद्विघटिततमोग्रन्थयस्सत्त्वनिष्ठाः । यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्तम्मोहान्धः कथमयममुं वेत्ति देवं पुराणम्' ॥ इति पद्ये निर्विकल्पसमाध्यादिपदानां शास्त्रमात्रप्रसिद्धार्थकत्वमभिहितं काव्यप्रकाशादावप्रतीतदोषनिरूपणप्रकरणे । स्पष्टं चैदमपि रसास्वादिन्याम् । तस्माद्भगवद्दाशरथिविषयकनिरन्तरचिन्तनावस्थारूपस्य विषयस्यानुपादानात् 'निर्विकल्पं समाधिमभ्यस्यन्ती' इत्यनुक्तविषयोत्प्रेक्षेत्येव युक्तम् । 'कनन्तीं कान्तायाः' इति पद्यं तु विषमो दृष्टान्तः । तत्रासाधारणसपक्षविपक्षशब्दानां शास्त्रेऽर्थविशेषेषु परिभाषितानामपि अनन्यसामान्यसदृशपक्षविगतरूपेष्वर्थेषु लौकिकेष्वपि प्रयोगप्राचुर्यात् प्रकृताप्रकृतार्थसाधारण्याविघातात् समासोक्त्यवतारे बाधकानुपलम्भात् । किञ्च—कनन्तीमित्यादिपद्यार्थवर्णनावसरे 'विपक्षात् प्रतिस्पर्धिनः वेः पक्षिणः पक्षाच्च' इत्यर्थवर्णनमपि न सत् । तथासति शिखिपिञ्छस्य पक्षिपक्षरूपत्वायोगेनानन्वयापत्तेः । तस्मात् विगतः पक्षादिति विगृह्य पक्षाद्विगतत्वार्थकत्वमेव पक्षे तस्य स्वीकार्यमिति विभावनीयम् ॥

यदपि—एतत्पद्यव्याख्याने—पीतपातञ्जलरसैस्साहितासारवेदिभिः । सानुग्रहैरियं व्याख्या परामृश्या विचक्षणैः ॥ इति पद्यं पठितम्—तदेव पद्य-

तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा। स्नेहात्कामेन वा युञ्ज्या-त्कथंचिन्नेक्षते पृथक् ॥ कामाद्द्वेषाद्भयात्स्नेहाद्यथाभक्त्येश्वरे मनः। आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ गोप्यः कामाद्भया-त्कंसो द्वेषाच्चैद्यादयो नृपाः। सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं नृप ॥ इत्युक्तप्रक्रियया येन केनाप्युपायेन भगवदेकान्तभावना क्रमेण तत्प्राप्तिरूपपरमपुरुषार्थाय कल्पत इति वस्तु व्यज्यते। अत्र सीतायास्सर्वदा स्ववल्लभे श्रीमति रामचन्द्रे चित्तविश्रान्तेर्वर्ण-नात् मनस्सङ्गो नामावस्थाविशेषः 'मनस्सङ्गस्तु मनसस्तदेकाय-त्तता भवेत्। मनस्सङ्गः प्रियतमे नित्यं चित्तस्य विश्रमः' इति च लक्षणात्, श्रीरामभावनासुखैकाग्रायास्तस्यास्सर्वेषामिन्द्रि-याणां स्वस्वव्यापारेभ्य उपारतत्वेन निश्चेष्टतयाऽवस्थानवर्णनात्प्र-ळयाख्यस्सात्त्विकभावो द्योत्यते। 'प्रळयस्सुखदुःखाद्यैः गाढमिन्द्रि-यमूर्छनम्' इति तल्लक्षणम्। जडता नामावस्थान्तरं च व्यज्यते, तथाच तल्लक्षणं रसार्णवसुधाकरे—'इदमिष्टमनिष्टं तदिति वेत्ति न किं चन। नोत्तरं भाषते प्रश्ने नेक्षते न शृणोति च ॥ यत्र ध्यायति निस्संज्ञं जडता सा प्रकीर्तिता। अत्र स्पर्शानभिज्ञ-त्ववैवर्ण्यशिथिलाङ्गताः ॥ अकाण्डहुंकृतिस्तम्भनिश्वासकृशतादयः' इति ॥ जाड्यं नाम सञ्चारी च, तल्लक्षणं—'जाड्यमप्रतिपत्तिस्स्यादि-

---

मधुना मनाग्विकृतं पश्यताम् यथा—पीतपातञ्जलरसैः साहितीसारवेदिभिः। सानुग्रहैरियं व्याख्या परामृष्टा विचक्षणैः ॥ इति। 'सानुश्शृङ्गे बुधे मार्गे वा-त्यायां पल्लवे वने'। इति विश्वकोशात् सानूनां शृङ्गाणां ग्रहैः ग्रहणैः शृङ्गग्र-

ष्टानिष्टार्थयोरश्रुतेः । दृष्टेर्वा विरहादेश्च क्रियास्तत्रानिमेषता ॥ अश्रुतिः पारवश्यं च तूष्णींभावादयोऽपि च ' इति ॥ ननु जडताजाड्ययोरवस्थासञ्चारिणोः को भेद इति चेत् स्थायिभावसहकारित्वेनोपाधिना सञ्चारित्वम् । रसास्वादनिमित्तत्वेनोपाधिनाऽवस्थात्वं चेति भेद इत्यवधेहि, निरूपितं चैतदधस्तात् । स्वान्तेनान्तर्विलयमृदुनेति मनोनिमीलनवर्णनान्निद्रा नाम सञ्चारी च । तल्लक्षणं तु ' मदस्वभावव्यायामनिश्चिन्तत्वसमाधिभिः । मनोनिमीलनं निद्रा चेष्टास्तत्रास्य गौरवम् ॥ आघूर्णमाननेत्रत्वमङ्गानां परिवर्तनम् । निश्वासोच्छ्वसिते गात्रस्वेदो नेत्रनिमीलनम् ॥ शरीरस्य तु सङ्कोचो जाड्यं चेत्येवमादयः ' इति । शुद्धामिन्दोरित्याद्येतावत्पर्यन्तदशश्लोक्यां कुळकरूपायां यथोचितं तत्रतत्रोपपादितैस्सञ्चार्यादिभिस्सीतागतायाश्श्रीरामचन्द्रविषयकरतेः स्थायिनः परिपोषणाद्विप्रलम्भशृङ्गारो व्यज्यत इति ध्येयम् । नन्वस्मिन् श्लोके वृत्तिसार्वभौमनिरोधप्रणिहितभावनानिर्विकल्पसमाधिशब्दानां योगशास्त्रमात्रप्रसिद्धतया ' शास्त्रमात्रप्रसिद्धं यदप्रतीतिकमुच्यते ' इत्युक्तकाव्यदोष इति चेन्नैवम्—लोकेऽपि प्रसिद्धतयैषां शास्त्रमात्रप्रसिद्धत्वस्य दुर्वचत्वात् । वस्तुतस्तु, यथा—' आत्मारामा विहितमतयो निर्विकल्पे समाधौ ज्ञानोत्सेकाद्विघटिततमोग्रन्थयस्सत्त्वनिष्ठाः । यं वीक्षन्ते क-

---

हणपुरस्सरं ' परामृश्या ' इति यथाप्रार्थनमेव पीतपातञ्जलरसैः योगतन्त्रशब्दतन्त्रविन्मूर्धन्यैरियं व्याख्या प्रकाशनामिका कृत्स्नाऽपि शृङ्गग्राहिकया परामृष्टा निर्मृष्टा इति तदर्थः ॥ २२ ॥

मपि तमसां ज्योतिषां वा परस्तात्तन्मोहान्धः कथमयममुं वेत्ति देवं पुराणम्' इत्यत्र दुर्योधनस्य योगिज्ञेयश्रीकृष्णस्वरूपानभिज्ञतां वक्तुर्भीमस्य बोद्धव्यस्य सहदेवस्य च प्राज्ञत्वान्निर्विकल्पतमस्सत्त्वादिशब्दानां शास्त्रैकप्रसिद्धत्वेनाप्रतीतत्वेऽपि तस्य गुणत्वं, एवमिहापि श्लोके वक्तृबोद्धव्ययोश्श्रीरामहंसयोरुभयोरप्यभिज्ञत्वाच्चेतोवृत्तिसार्वभौमनिरोधादीनां शब्दानां योगशास्त्रमात्रप्रसिद्धत्वेनाप्रतीतत्वेऽपि गुणत्वमेव, न तु दोषत्वं, न वा दोषाभावमात्रत्वं, तदुक्तं काव्यदर्पणे—'वक्त्राद्यौचित्यवशतो दोषोऽपि च भवेद्गुणः' इति। काव्यप्रकाशे चोक्तं—'वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः' इति। अत एव—'मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः। ख्यातिं च सत्त्वपुरुषान्यतयाऽधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्' इत्यादिकं सङ्गच्छते। तत्र हि श्रीकृष्णदारुकौ वक्तृबोद्धव्यावुभावप्यभिज्ञौ। न च राजहंसस्य तिर्यक्त्वेनानभिज्ञत्वमिति वाच्यं, ब्रह्मवाहनत्वेनास्य तिर्यगन्तरविलक्षणत्वात्। न च न वस्तुतोऽस्य ब्रह्मवाहनत्वं येनाभिज्ञता संभाव्येतेति वाच्यं, वस्तुतोऽतथात्वेऽपि श्रीरामचन्द्रेण तत्र तत्त्वारोपात् ज्ञातृत्वारोपस्यापि निष्प्रत्यूहत्वात्। यद्वा—रामस्य सर्वज्ञस्य स्वयं सीतासमाधिपरामर्शोऽयं स्यात्। एवं सति प्रतीतिविलम्बाभावादप्रतीतत्वं गुण एव। यथा—'षडधिकदशनाडीचक्रमध्यस्थितात्मा' इत्यादौ कुण्डलिकाया योगशास्त्राभिज्ञत्वात्तद्विमर्शे नाडीचक्रादिपदानां योगशास्त्रमात्र-

प्रसिद्धत्वेनाप्रतीतत्वेऽपि तस्य गुणत्वमिति काव्यप्रकाशिकादर्पणादौ विस्तरः, यदत्र केचिदमुं श्लोकमेवं व्याचक्षते—" सार्वभौमे सर्वभूमिप्रसिद्धे, निरोधे इन्द्रियाणां प्रतिरोधकर्तरि, बहिश्चेतोवृत्तिं बाह्यविषयमनोव्यापारं, शमयति शान्तिं कुर्वति सति, मय्येकस्मिन्प्रणिहितधियं मय्येव विन्यस्तमनसं, अनितरजुषः मामेव भजन्त्याः, भावनायाः प्रकर्षात् ध्यानानुवृत्त्या औत्कृष्ट्यात्, अन्तर्विलयः अन्तरात्मनि लयः, तेन मृदुना मृदुत्वं प्राप्तेन, स्वान्तेन मनसा, निर्विकल्पं निष्कण्टकं, समाधिं योगं, मान्मथेनागमेन मन्मथशास्त्रेण, अभ्यस्यन्ती परिचयं कुर्वती, एवं मन्य इति पूर्वेणान्वयः " इति, तदेतद्योगशास्त्रसंप्रदायप्रदर्शनालस्यनिबन्धनमित्युदासितव्यम् ॥ २२ ॥

विश्लेषकातर्यातिभूम्ना पुनरपि सीतायास्सन्तापमेव संभावयन्नाह भगवान्—

**शून्या दृष्टिश्श्वसितमधिकं मीलितं वक्त्रपद्मं**
**धाराकारं नयनसलिलं सानुबन्धो विलापः ।**
**इत्थं दैन्यं किमपि विधिना दुर्निवारेण नीता**
**सा मे सक्ता(सीता)तनुतरतनुस्तप्यते**
**नूनमन्तः ॥ २३ ॥**

दृष्टिः दृक्, शून्या स्तब्धेति यावत्, सत्यपि विषयसंबन्धे तद्ग्रहणाक्षमेति भावः । केचित्तु—' दृष्टिश्शून्या नयनं त्वञ्जनरहि-

तम्' इति व्याचक्षते, तन्नातीव सरसं, वक्ष्यमाणश्वसिताद्यनुभावानानुरूप्यात्। श्वसितं निश्वासः, भावे क्तः। अधिकं अतिमात्रप्रवृद्धं, वक्त्रपद्मं वदनारविन्दं, मीलितं सङ्कुचितं, रजन्यामिव पद्ममिति भावः। नयनयोः सलिलं अश्रु धाराकारं अविच्छिन्नतया च्योतदित्यर्थः। धारा आकारस्स्वरूपं यस्य तदिति विग्रहः। श्वसितमित्यादि नयनसलिलमित्यन्तेन सन्दर्भेण 'बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा। वदनेनाप्रसन्नेन निश्श्वसन्तीं पुनःपुनः' इत्येतत्प्रत्यभिज्ञाप्यते। विलापः परिदेवनं 'विलापः परिदेवनम्' इत्यमरः। अयं च वागनुभावविशेषः 'आलापश्च विलापश्च' इत्युपक्रम्य 'विलापो दुःखजं वचः' इति भूपालेन लक्षितत्वात्, सानुबन्धः अनुबन्धो नाम प्रकृतश्रीरामविश्लेषप्रयुक्तस्वदैन्यख्यापनप्रियतमगुणानुवर्णनानुवर्तनं 'दोषोत्पादेऽनुबन्धस्स्यात्प्रकृत्यादिषु नश्वरे। मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने' इत्यमरः। तेन सह वर्तत इति सानुबन्धः। यथोच्यते—'सा निश्श्वसन्ती दुःखार्ता शोकोपहतचेतना। आर्ता व्यसृजदश्रूणि मैथिली विललाप ह॥ हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च। हा श्वश्रु मम कौसल्ये हा सुमित्रेति भामिनी' इत्युपक्रम्य—'जीवितं त्यक्तुमिच्छामि शोकेन महताऽऽवृता। राक्षसीभिस्तु रक्ष्यन्त्या रामो नासाद्यते मया॥ धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम्। न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम्' इत्यन्तं, प्रसक्ताश्रुमुखी त्वेवं ब्रुवन्ती जनकात्मजा। अधोमुखमुखी बाला

विलप्तुमुमचक्रमे ॥ उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती । उपावृत्ता किशोरीव विवेष्टन्ती महीतले ॥ राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा । रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणम् । चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ' इत्यादि । ' सा राक्षसीमध्यगता च भीरुर्वाग्भिर्भृशं रावणतर्जिता च । कान्तारमध्ये विजने विसृष्टा बालेव कन्या विललाप सीता ॥ सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः । यत्राहमेवं परिभर्त्स्यमाना जीवामि किञ्चित्क्षणमप्यपुण्या ' इत्युपक्रम्य—' हा राम सत्यव्रत दीर्घबाहो हा पूर्णचन्द्रप्रतिमानवक्त्र । हा जीवलोकस्य हितः प्रियश्च वध्यां न मां वेत्सि हि राक्षसानाम् ॥ सा जीवितं क्षिप्रमहं त्यजामि विषेण शस्त्रेण शितेन वाऽपि । विषस्य दाता न हि मेऽस्ति कश्चिच्छस्त्रस्य वा वेश्मनि राक्षसस्य ॥ इतीव देवी बहुधा विलप्य सर्वात्मना राममनुस्मरन्ती । प्रवेपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ' इत्यन्तं च ॥ इत्थं उक्तेन प्रकारेण अनुक्तैतादृशप्रकारान्तरेण चेति भावः । दुर्निवारेण निवारयितुमशक्येन ' ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ' विधिना दैवेन ' विधिर्विधाने दैवेऽपि ' इत्यमरः । विधिर्नूनमसंहार्यः प्राणिनां प्लवगेश्वर । सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ' इत्येतदत्र स्मर्तव्यम् । किमपि दुर्वचमिति भावः । दैन्यं ' दृत्तापदुर्गतत्वाद्यैरनौद्धत्यं हि दीनता ' इत्युक्तलक्षणमनौद्धत्यं नीता प्रापिता, अत

एव तनुतरा अतिशयेन कृशा तनुः यस्यास्सा तथोक्ता त्र सती। अत्र 'सा प्रकृत्यैव तन्वङ्गी त्वद्वियोगाच्च कर्शिता। प्रतिपत्पाठशीलस्य विद्येव तनुतां गता' इत्यादिकं स्मर्तव्यम्। तत्र हेतुमाह—मे सक्तेति॥ मे मयीत्यर्थः। अधिकरणस्य शेषत्वविवक्षया षष्ठी। सक्ता अभिषङ्गवती षञ्जेः कर्तरि क्तः। न च 'न लोकाव्ययनिष्ठा' इति निषेधोऽत्र शङ्क्यः। तस्य कारकषष्ठीविषयत्वात्। तथाचोक्तं मूले—'न लोकेति सूत्रे सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः शेषषष्ठी तु स्यादेव' इति। मय्यासक्तत्वादित्यर्थः। सा सीता सा मे सीतेति पाठे तु। सा पूर्वोक्ता मे सीता मत्संबन्धिनी सीता 'ऊनषोडशवर्षो मे रामो राजीवलोचनः' इत्यत्र मे राम इतिवदादरातिभूम्ना मे सीतेत्युक्तिः। अनारतमदङ्गपरिरम्भसौभाग्यार्हेति भावः। अयमेव पाठस्स्वादीयानिति प्रतिभाति। अनेन—'अनन्या राघवेणाहं भास्करेण प्रभा यथा' इत्याद्युक्तरीत्या सा मदनपायिनी 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इत्युक्तप्रकारेण ममाप्यतिशयाधायिनीति हार्दोऽभिप्रायो व्यञ्जितः। अन्तः अन्तरङ्गे मनसीत्यर्थः। 'कर्तुं वा कश्चिदन्तर्वसति वसुमतीदक्षिणस्सप्ततन्तुः' इत्यादाविवान्तश्शब्दोऽन्तरङ्गवाची। तप्यते नूनं ताप्यते दह्यत इति संभावये निश्चिनोमि वेत्यर्थः। 'नूनं तर्केऽर्थनिश्चये' इत्यमरः। विधिनेत्येतदत्रापि कर्तृ 'जगत्सशैलं परिवर्तयाम्यहम्' इत्याद्युक्तप्रभावस्य मम वल्लभां दैवाद्दतेऽन्यस्य का हि नाम शक्तिस्सन्तापयितुमिति

भावः । [1]तप्यत इत्यत्र 'तप दाहे' इत्यस्माच्चौरादिकात्कर्मणि यकि तङ् तस्याधृषीयत्वेन 'आधृषाद्वा' इति पक्षे णिजभावान्नोपधावृद्धिः । ननु दैवादिकात्तपतेश्श्यनि कर्तर्यपीदं रूपं सिध्यत्येव किमनेन प्रयासेनेति चेत्सत्यं,—सिध्यत्येव नेह तदुपयोगः । तत्र 'तप ऐश्वर्ये वा' इति तपतेरैश्वर्यार्थकत्व एव तङ्श्यनोरनुशासनात् न ह्यत्रैश्वर्यार्थकत्वं तपतेः । एतेन 'सा मैथिली दुर्निवारेण दैवेन

[1] तप्यत इत्यत्र तप दाहे इत्यस्माच्चौरादिकात्कर्मणि यकि तङ् । तस्याधृषीयत्वेन पक्षे णिजभावान्नोपधावृद्धिरित्यादि रसास्वादिनी ॥ यत्तु यद्वा कर्मकर्तरीदं रूपम् । 'तप सन्तापे' इत्यस्माद्भौवादिकान्निष्पन्नं विरहदैन्यं सीतामन्तस्तपति दुःखयतीत्यर्थः । तत्रैव कर्मणस्सीतायाः कर्तृत्वविवक्षायां सीता स्वयमेवान्तस्तप्यत इति भवति । क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति । सुकरैस्स्वैर्गुणैः कर्तुः कर्म कर्तरि तद्विदुरित्युक्तेः । अस्मिन्पक्षे नीता अत एव तनुतरतनुस्सती अन्तस्तप्यते नूनमिति योजना इति—तन्न. तथा सति सीता स्वयमेव दुःख्यतीत्यर्थापत्तेः । प्रकृतिसुभगायां सीतायां दुःखित्वस्य कादाचित्कदुर्वारविधिविलसितकृततया नैमित्तिकताया एव वर्णयितुमुचिततया स्वयमेवेत्यनैमित्तिकवर्णनस्यायुक्तत्वात् ॥ किञ्च—धात्वर्थे हेत्वन्तराविवक्षायां हि कर्मकर्तृप्रयोगः ओदनः पच्यते स्वयमेव, भिद्यते केदारस्स्वयमेवेत्यादौ सौकर्यातिशयविवक्षायाः क्रियाया निष्पत्तौ हेत्वन्तरनैरपेक्ष्याविवक्षारूपत्वात् । न हि भवति चैत्रेणौदनः पच्यते स्वयमेव, कर्षकेण केदारो भिद्यते स्वयमेवेत्यादिः प्रयोगस्साधुः । प्रकृते च—सीताकर्मकतापकर्तृत्वेन दैन्यं स्वयमेवानूद्य तादृशदैन्यप्राप्तेरेव अन्तस्तापहेतुताया अत एवेत्यादिना विवरणात् कथं कर्मकर्तृप्रयोगसाधुता सङ्घटताम् । तस्मात् नीता इत्यत्र कर्मणि प्रयोगे नयनकर्तृत्वेनोपात्तस्य विधिनेत्यस्य अनुकर्षेण तप्यत इत्यत्रापि कर्तृत्वेनान्वयात्कर्मणि-

इत्थं दैन्यं नीता एवं दीनभावं प्रापिता मे अन्तस्तप्यते मम मनो दूयते तप सन्तापे दैवादिकात्कर्तरि लट् दिवादित्वाच्छ्यन्' इति केषांचिद्व्याख्यानं त्वविचारितरमणीयमित्युदासितव्यम्। उक्तरीत्या तपतेर्दैवादिकस्येहानुपयोगादन्यस्य कर्तर्येवंरूपासिद्धेरस्मदुक्तरीत्या संभवत्येकवाक्यत्वे स्वारसिकेऽस्वरसवाक्यभेदाश्रयणस्यानुचितत्वादन्तश्शब्दस्याधिकरणशक्तिप्रधानतया प्रसिद्धस्य कर्तृशक्तिप्र-

---

प्रयोग एवायमित्येव युक्तं रसास्वादिनीदर्शितम्॥ एतेन—दैन्यं नीतत्वस्य स्वयमेव तापनं प्रति हेतुत्वात्काव्यलिङ्गमित्युक्तिरपि न सतीति व्यक्तम्। स्वयमेवेत्यस्य अन्यहेतुकत्वस्य चैकत्र व्याघातात्। वस्तुतस्तु—कर्मस्थक्रियाणामेव धातूनां कर्मकर्तरि प्रयोगः। कर्मस्था च क्रिया निर्वर्त्ये विकार्ये च कर्मणि, न तु प्राप्ये कर्मणि—'क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते' इति लक्षिते॥ यथोक्तं कौमुद्यामेव—'कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया नेतरत्र। न हि पक्वापक्वतन्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते' इति॥ भूषणे च—निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते। न तु प्राप्ये कर्मणीति सिद्धान्तोत्र व्यवस्थितः॥ इतीदं स्पष्टम्॥ तदिह सीतातपतेर्न निर्वर्त्यं कर्म, नापि विकार्यम्। यदसज्जायते पूर्वं जन्मना वा प्रकाश्यते। तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम्॥ प्रकृत्युच्छेदसंभूत किञ्चित्काष्ठादिभस्मवत्। किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥ इत्युक्ततत्तल्लक्षणविरहात्। प्रकृत्यदर्शनाच्च विकार्यस्य हि भस्मकुण्डलादिरूपस्य कर्मणः काष्ठं भस्म करोति सुवर्णं कुण्डलं करोतीत्यादौ प्रकृतकर्मसमभिव्याहारो दृष्टः। ततश्च परिशेषात्प्राप्यं कर्मैव सीतेति कथमत्र कर्तुः कर्मवद्भावः प्रजज्यतामिति सुधियो विदांकुर्वन्तु॥ २३॥

तिपादनाक्षमत्वाच्च। अत्र रामसक्तेर्दैन्यप्राप्तिं प्रति तस्याश्च शरीरतानवं प्रति हेतुत्वात्काव्यलिङ्गद्वयम्। अत्र 'चक्षुःप्रीतिर्मनस्सङ्गस्सङ्कल्पोऽथ प्रलापिता। जागरः कार्श्यमरतिर्लज्जात्यागोऽथ सज्वरः॥ उन्मादो मूर्छनं चैव मरणं चरमं विदुः। अवस्था द्वादश मताः कामशास्त्रानुसारतः' इत्युक्तासु द्वादशसु मान्मथीष्ववस्थास्वाद्यन्त्यावस्थाभ्यां विना सीतायाः दशाप्यवस्था यथोचितं सूचिताः। तथा हि—सानुबन्धो विलाप इत्यनेन प्रियतमे चित्तविश्रान्तेः तद्विषयकमनोरथस्य तद्गुणालापस्य चावश्यंभावितया मनस्सङ्गसङ्कल्पप्रलापावस्थास्सूच्यन्ते, तथा च क्रमेण तेषां लक्षणानि—'मनस्सङ्गः प्रियतमे नित्यं चित्तस्य विश्रमः। सङ्कल्पो नाथविषये मनोरथ उदाहृतः॥ प्रलापः प्रियसंश्लिष्टगुणालाप उदाहृतः' इति। शून्या दृष्टिरित्यनेन जागरः जागरखिन्नैव हि दृष्टिर्विषयग्रहणाक्षमा भवति। 'जागरस्तु विनिद्रत्वम्' इति लक्षणम्। तनुतरतनुरित्यनेन कार्श्यं 'कार्श्यमङ्गस्य तानवम्' इति लक्षणम्। शून्या दृष्टिरित्यनेनैवारतिः। वस्त्वन्तरनिर्वर्णनानास्थायामेव हि शून्यदृष्टित्वं 'अन्यत्राप्रीतिररतिः' इति लक्षणम्। धाराकारं नयनसलिलमित्यनेन, सानुबन्धो विलाप इत्यनेन च लज्जात्यागः 'लज्जात्यागोऽथ निर्लज्जा' इति लक्षणम्। न हि सत्यां लज्जायामश्रुधारासान्तत्यसानुबन्धविलापौ संभवतः। तप्यते नूनमन्तरित्यनेन सज्वरः 'तापाधिक्यं ज्वरो मतः' इति लक्षणम्। शून्या दृष्टिरित्यनेनैवोन्मादोऽपि 'उन्मादस्तुल्यवृत्तित्वं चेतनाचेतनेष्वपि' इति

लक्षणम् । मीलितं वक्त्रपद्ममित्यनेन मूर्छा गम्यते । 'मूर्छा त्वाभ्यन्तरेऽवृत्तिर्बाह्येन्द्रियनिमीलनात्' इति लक्षणम् । अत्र प्राथमिकावस्थायाश्चक्षुःप्रीतेरसूचनं सीतारामयोः पूर्वमेव सङ्गतत्वात्तत्रापूर्ववच्चक्षुःप्रीतेरनुदयात् । मनस्सङ्गस्य तु सिद्धस्यैवाविच्छेदोऽत्र सूचितः । अन्यास्त्वपूर्ववदेव सूचिताः । अतो वैयर्थ्यात्प्राथमिकीमवस्थां वैरस्यात्तदात्वे श्रीरामायणेऽनुक्तत्वाच्चान्तिमां च विहाय दशैवावस्थास्सूचिताः । श्लोके क्रमेण तत्तदवस्थानामसूचनं च तासां यथायथमुदितत्वसंभावनया । पूर्वश्लोकेषु तत्रतत्र सूचितानामप्यवस्थानामत्र पुनस्सूचनं त्वेकस्मिन्नेव पद्ये यौगपद्येन सर्वावस्थासूचने चमत्कारातिशयाभिव्यञ्जनार्थं, तत्तदवस्थानामतिशयप्रदर्शनार्थं चेति ध्येयम् । अत्र शून्यदृष्टित्वकार्श्यसन्तापनिश्वासादयोऽनुभावाः, मोहश्चिन्ता च सञ्चारिणौ व्यज्येते । तथाच तल्लक्षणे—'आपद्भीतिवियोगाद्यैर्मोहश्चित्तस्य मूढता । विक्रियास्तत्र विज्ञेया इन्द्रियाणां च शून्यता ॥ निश्चेष्टताऽङ्गभ्रमणपतनाघूर्णनादयः' इति, 'इष्टवस्त्वपरिप्राप्तेरैश्वर्यभ्रंशनादिभिः । चिन्ता ध्यानात्मिका तस्यामनुभावा मता इमे ॥ कार्श्याधोमुख्यसन्तापनिश्वासोच्छ्वसनादयः' इति च । एतैस्सीतागतरामविषयकरतेः परिपोषणाद्विप्रलम्भशृङ्गारः । एवं गम्यमानैश्चिन्तादिभिरनुभावैः रामगतसीताविषयकरतेः स्थायिभावस्य परिपोषितत्वेन च विप्रलम्भशृङ्गारः, अस्य च पूर्वोक्तविप्रलम्भशृङ्गारोऽङ्गतामश्नुत इति भवति रसवन्नामापराङ्गव्यङ्ग्यम् । 'रसे रसाङ्गे भावाङ्गेऽप्येषु स्याद्रसवद्द्विधा' इति लक्षणात् । एवमन्यत्रापि यथासंभवमूह्यम् ॥ २३ ॥

अथ "इमामसितकेशान्तां शतपत्रनिभेक्षणाम्। सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः" इत्युक्तरीत्या सीतादुरवस्थादर्शनेन हनूमत इव तवापि दुस्सहश्शोकवेग आपतिष्यतीत्याह—

**दृष्ट्वा तस्यास्त्वमपि करुणां तादृशीं तामवस्थां**
**शक्ष्यस्यन्तस्स्वयमुपनतं शोकवेगं न सोढुम्।**
**क्रव्यादानां दशवदनवत्क्वापि जातावजाताः**
**नालम्बन्ते कथमिव दयां निर्मलत्वोपपन्नाः॥२४**

तस्याः सीतायाः सेव पश्यतीति तादृशी तां तथोक्तां 'त्यदादिषु' इति दृशेः कञि 'टिड्ढ' इत्यादिना ङीप्। 'उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा। अरोगस्तरुणो वाग्मी, उवाच वदतां श्रेष्ठः' इत्याद्युक्तरीत्या वाग्मिनां सार्वभौमस्यापि श्रीरामस्य तादृशीमिति शब्दप्रयोगेणेदमित्थमिति परिच्छिद्य वक्तुमशक्यामिति द्योतितम्। करुणो रसोऽस्यामस्तीति करुणा तां तथोक्ताम्। अर्शआदित्वान्मत्वर्थीयोऽच्। करुणरसोत्तेजिनीमिति यावत्। करुणो नाम शोकस्थायिको रसः। तदुक्तं—'विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः। शोकस्सदस्यरस्यत्वं नीतः करुण उच्यते॥ अष्टाष्टौ सात्विका जाड्यनिर्वेदग्लानिदीनताः। आलस्यापस्मृतिव्याधिमोहाद्या व्यभिचारिणः' इति। तां पूर्वश्लोकोपपादितां 'अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना तथावृत्तं पापैर्व्यथयति यथा क्षालितमपि। जनस्थाने शून्ये विकलकरणैरार्यचरितैरपि ग्रावा रोदित्यपि दलति

वज्रस्य हृदयम्' इत्याद्युक्तप्रक्रिययाऽतिमात्रशोचनीयां अवस्थां निर्वेदग्लान्यादिसञ्चारिसहचरितां मनस्सङ्गसङ्कल्पजागरकार्श्यादिमूर्छान्तां दारुणां दशां दृष्ट्वा वीक्ष्य अन्तः मनसि स्वयमुपनतं दर्शनातिरिक्तसहकार्यन्तरनैरपेक्ष्येणोन्मिषितम्। शोकस्य 'बन्धुव्यापत्तिदौर्गत्यधननाशादिभिः कृतः। चित्तक्लेशकरश्शोकस्तत्र चेष्टा विवर्णता॥ बाष्पोद्गमो मुखे शोषः स्तम्भनिश्वसितादयः' इत्युक्तलक्षणायाश्शुचः वेगं औत्कट्यं, उचितविभावानुभावादिसामग्रीसमवधानसमधिगतपरिपोषत्वेन करुणरसतया परिणममानस्य तत्स्थायिनश्शोकस्योद्वेलतामिति भावः। त्वमपि तिर्यग्जातीयोऽपि, हनूमानिवेति भावः। सोढुं मर्षितुं न शक्ष्यसि नेशिष्यसे। अनेन 'तां चाहं तादृशी दृष्ट्वा सीताया दारुणां दशाम्। चिन्तया समभिक्रान्तो न च मे निर्वृतं मनः' इत्येतदपि प्रत्यभिज्ञाप्यते। ननु—तिर्यङ्मात्रस्य परगतसुखदुःखभावनागन्धशून्यस्य का हि नाम मम तादृशी करुणा, यया तदवस्थानिर्वर्णनेन शोचेयमित्यत आह—क्रव्यादानामिति। दशवदनेन रावणेन तुल्यं दशवदनवत् 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वं, तत्र 'तसिवतीनानाञौ' इति वतेरपि परिगणनात्। क्वापि अतितुच्छायामित्यर्थः। क्रव्यादाः राक्षसाः। पक्वमांसमदन्तीति विग्रहे पक्वमांसशब्दे उपपदे 'कर्मण्यण्' इत्यण् 'उपपदस्य क्रव्यादेशः पृषोदरादित्वात्' इति मूले स्थितम्। काशिकायां तु—'कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तं पक्वं च भुक्तं इति

क्रव्यादः कृत्तविकृत्तपक्कशब्दस्य पृषोदरादित्वात्क्रव्यादेशः' इत्युक्तम्। शब्दार्णवेऽपि कृदध्याये—'क्रव्यात् आममांसभुक्, क्रव्यादः कृत्तविकृत्तपक्कमांसभुगुच्यते' इति स्थितम्। क्रव्यशब्दस्याममांसार्थकत्वे तु 'क्रव्ये च' इत्यनेनविड्प्रत्यय एव स्यात् न त्वण् 'अदोऽनन्ने' इत्येव सिद्धे वचनस्याण्बाधनार्थत्वात्। तेनाममांसभक्षके क्रव्याद इति न भवत्येव। नन्वेवं योगार्थस्य व्यवस्थितत्वे 'राक्षसः कोणपः क्रव्यात्क्रव्यादोऽस्नप आशरः' इति क्रव्यात्क्रव्यादशब्दयोः पर्यायत्ववर्णनमनुचितमेव स्यादिति चेत् गौण्या उभयोस्सामान्यप्रयोग इति गृहाण। इदं च सुधायां स्पष्टम्। वस्तुतस्तु—अदन्तीत्यदाः पचादित्वादच् कर्मणश्शेषत्वविवक्षायां क्रव्यशब्दात्षष्ठी, ततः क्रव्यस्यादाः क्रव्यादा इति गङ्गाधरभूधरादिवत्समासोऽपि शक्यः कर्तुम्। एवं च—क्रव्यशब्दस्याममांसार्थकत्वेऽपि न काचिदनुपपत्तिरिति ध्येयम्। तेषां रक्षसां, आममांसाशिनां गृध्रादिपक्षिणां च 'यातयामं गतरसं पूति पर्युषितं च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्' इत्याद्युक्ताहारवत्तया तामसानामिति भावः। अनेन—'व्याघ्रवत्पिशिताशानां दया का नाम विद्यते' इत्युक्तरीत्याऽतिमात्रनिर्घृणत्वं द्योतितम्। जातौ अजाताः अनुत्पन्नाः विशुद्धाभिजनोत्पन्ना इति भावः। ननु—विशुद्धाभिजनजातानामपि क्वचिदीर्ष्यादिचित्तमालिन्यदर्शनेन दयाव्यभिचारो दृश्यत इत्यत आह—निर्मलत्वोपपन्ना इति। निर्मलत्वेन नैर्मल्येन ईर्ष्यापकारासूयाद्वेषरूपचित्तमलराहित्येनेत्यर्थः। उपपन्नाः युक्ताः दयां 'दयाऽन्येषां

दुःखाप्रसहनम्' इत्याद्युक्तलक्षणां कृपां कथं नालम्बन्ते नाश्रयन्ते चित्तनैर्मल्यस्य दयां प्रति हेतुत्वादालम्बन्त एवेति भावः। यद्वा—चित्तनैर्मल्यस्य दयाहेतुकस्य दर्शनादालम्बन्त एवेति निर्णीयत इति भावः। दया हि चित्तमलविनाशिनी। यथा हि सूत्रितं भगवता पतञ्जलिना—'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' इति। मैत्री सुखिषु प्राणिषु मित्रता। दुःखितेषु करुणा दया। पुण्यवत्सु मुदिता हर्षः। अपुण्यशब्दार्थः पापं तद्वर्तिषूपेक्षा मध्यस्थवृत्तिश्च भावनीया। यथोक्तभावनया चित्तस्य प्रसादनं भवतीति सूत्रार्थः। क्रव्यादजातिजाता एव नालम्बेरन्कृपां, ये हि—'कृपा का नाम रक्षसाम्, दया सत्यं च शौचं च राक्षसानां न विद्यते' इत्यादिभिर्निर्दयमूर्धन्यत्वेन जोघुष्यन्ते। उपमीयन्ते च 'राक्षसा इव निर्घृणाः' इति। 'स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजः' इत्युक्तप्रक्रियया रस्यस्निग्धस्थिरहृद्यसात्विकतमस्वर्नदीकमलिनीमृणालाग्रभुजो विगतचित्तमला भवादृशास्त्ववलम्बेरन्नेव, अतो न तिर्यङ्मात्रत्वेन परगतसुखदुःखभावनाभावात्तत्र दया नास्तीति युक्तं वक्तुं, न वा तिर्यक्सामान्यस्य परसुखदुःखभावनायामविचक्षणत्वम्। तथा सति—'वित्रस्तका दीनमुखा रुरुदुर्मृगपक्षिणः' इति सीतादुरवस्थाजनितमृगपक्षिरोदनाद्यसाङ्गत्यापत्तेः। तस्मान्न तिर्यक्त्वं नैर्घृण्यनिमित्तं किं तु तामसप्रकृतिकत्वमेवेति भावः। निर्मलत्वोपपन्ना इत्यत्र, हंसपक्षे धावल्योपपन्ना इत्यप्यर्थोऽनुसन्धेयः। अत्र हंसशोकवेगासहनस्य

सीतादुरवस्थादर्शनहेतुकत्वात्काव्यलिङ्गभेदः, सामान्येन विशेषसमर्थनादर्थान्तरन्यासश्च । 'उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयोः' इति लक्षणात् । स च क्रव्यादानां निर्मलत्वोपपन्ना इत्यत्रोक्तरीत्या क्रव्यादनिर्मलत्वशब्दार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्यनुप्राणित इति सङ्करः ॥ २४ ॥

अथ 'निशाचरीणां प्रत्यक्षमनर्हं चापि भाषणम् । अन्तरं त्वहमासाद्य राक्षसीनामिहास्थितः । शनैराश्वासयिष्यामि सन्तापबहुळामिमाम्' इत्युक्तरीत्या हनुमानिव त्वमपि समक्षं निशाचरीणां मत्संदेशनिवेदनस्यानुचिततया तन्निद्रावसरमाकाङ्क्षन् शिंशुपासन्नतरायां वापिकायामपनयन्नध्वश्रमं क्षपयेथास्तां निशामित्यनुशास्ति—

**नेदीयस्यामधिगतरसो दीर्घिकायां निकामं**
**संवेशेन श्रममपनयन् शर्वरीं यापयेथाः ।**
**इत्थं निद्रासमयमुचितं वीक्ष्य नक्तंचरीणां**
**प्रत्यूषे त्वं प्रणयमधुरां श्रावयिष्यन्मदुक्तिम् ॥ २५**

त्वं, नक्तमिति मान्तमव्ययमधिकरणशक्तिप्रधानम् । 'अथ दोषा च नक्तं च रजनौ' इत्यमरः । नक्तं चरन्तीति नक्तञ्चर्यः 'चरेष्टः' इति टप्रत्यये टित्त्वलक्षणो ङीप् । तासां उचितं योग्यं निद्रासमयं स्वापावसरं नक्तञ्चरीत्वात्तासां रात्रिनिर्निद्रतया निद्रावसरः प्रत्यूष एव भविष्यतीति भावः । वीक्ष्य विलोक्य वीत्युपसर्गेण तासां गाढनिद्रापारवश्यं सम्यक्परीक्ष्यैव सन्देशश्राव-

यितव्यो न तु सहसेति व्यज्यते। प्रत्यूषे उषसि 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि' इत्यमरः। प्रणयेन प्रेम्णा मधुरां प्रियां प्रणयेनैव हि सर्वं भवति मधुरं यथोच्यते 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इति। 'सन्देशेन प्रणयमहता मैथिलीं जीवयिष्यन्' इति पूर्वोक्तमत्र स्मारितम्। 'प्रणया अमी। विस्रम्भयाच्ञाप्रेमाणः, स्वादुप्रियौ तु मधुरौ' इत्युभयत्राप्यमरः। 'वाचः प्रेम्णैव मधुरा नीरसास्स्युस्ततोऽन्यथा। तत्प्रेममाधुर्यवतीं गिरं ब्रूयात्प्रिये जने' इत्याद्युक्तरीत्या प्रेमगर्भितत्वेनामृतवदास्वादनीयामिति भावः। मदुक्तिं मत्सन्देशं इत्थं वक्ष्यमाणप्रकारेण श्रावयिष्यन् अर्जयन्वसतीत्यादाविव 'लक्षणहेत्वोः क्रियायाः' इति शता। हेतुः फलं कारणं च श्रावणार्थमित्यर्थः। अनेन— "इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः। शुभानि धर्मयुक्तानि वचनानि समर्पयन्॥ श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन्गिरम्' इत्येतत्प्रत्यभिज्ञाप्यते। नेदीयस्यां अतिशयेनान्तिकस्थायां अन्तिकशब्दादीयसुनि नेदादेशे उगित्लक्षणो ङीप्। दीर्घिकायां वापिकायां 'कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा। मणिप्रवरसोपानां मुक्तासिकतशोभिताम्' इत्युक्तां अशोकवनिकागतशिंशुपासन्नतरामिति भावः। निकामं पर्याप्तं यथा स्यात्तथा, अधिगतः प्राप्तः रसः प्रीतिः येन तथोक्तस्सन्, आस्वादितपानीयरसन्निति वा। संवेशेन स्वापेन 'स्यान्निद्रा शयनं स्वापस्स्वप्नस्संवेश इत्यपि' इत्यमरः। 'संवेशेन अत्यन्तावस्थानात्' इति व्या-

ख्यानं तु शब्दशक्त्यपर्यालोचनानिबन्धनं अस्वरसं च । संपूर्वस्य विशतेः 'संविशेच्च यथाकालं चरमं चैव संविशेत् । आसीनस्संविशं-स्तिष्ठन्' इत्यादिमानवभागवतादिप्रयोगानुग्राहकेणोदाहृतकोशेन स्वाप एव प्रसिद्धेः रात्र्यधिकरणकश्रमापनयनस्य स्वापैकसाध्यत्वाच्च 'संविशेत् स्वप्यात् संविशन् शयानः' इति तत्र कुल्लूकश्रीधराभ्यां विवृतम् । श्रमं दूराध्वगमनप्रयुक्तं खेदं अपनयन् अपगमयन् सन् । श्रमसद्भावे संदेशश्रावणमकृत्स्नं वा कृत्स्नत्वेऽपि रसपरिपोषविकलं वा संपद्येतेति भावः । शर्वरीं रात्रिं यापयेथाः नयेथाः 'या प्रापणे' इत्यस्माण्णिजन्ताल्लिङ् 'अर्तिह्री' इत्यादिना पुगागमः । अत्र नक्तंचरीणामिति विशेष्यस्य रात्रिनिद्रावैधुर्यप्रयुक्तप्रत्यूषनिद्रालुतावश्यंभावाभिप्रायगर्भत्वात्परिकराङ्कुरः । दीर्घिकाशब्दस्त्रीलिङ्गस्वारस्यात् अधिगतरसः संवेशेनेत्यादिशब्दस्वारस्याच्च प्रस्तुते-

---

[1] दीर्घिकाशब्दस्त्रीलिङ्गस्वारस्यात् अधिगतरसस्संवेशेनेत्यादिशब्दस्वारस्याच्च प्रस्तुते राजहंसवृत्तान्ते जायापतिसंभोगवृत्तान्तः प्रतीयत इति समासोक्तिरिति रसास्वादिनी ॥ यत्तु—दीर्घिकाशब्दस्त्रीलिङ्गेन रसशब्दस्वारस्येन चाप्रस्तुतनायिकावृत्तान्तः प्रतीयत इति समासोक्तिरिति—तन्न. संभवतस्संवेशशब्दश्लेषस्य परित्यागानौचित्यात् दीर्घिकापानीयलाभस्वापतन्मूलकश्रमापनयनरूपप्रकृतहंसव्यवहारे नायिकाविशेषविषयकप्रीत्यधिगमतत्संभोगतन्मूलकश्रमापनयनरूपस्य दूराध्वप्रत्यायातनायकविशेषव्यवहारस्य तादात्म्येन प्रतीतौ स्वारस्यातिशयाच्च । तस्मात् 'सवेशनं निधुवनम्' इति हलायुधकोशसिद्धश्लेषविवक्षणमाचार्यदर्शितमावश्यकमेव । यदपि—अधिगतरसः प्राप्तसुरतसुखास्वादश्च सन् । शृङ्गारमुख्यमधुरादिसुवर्णरेतोनिर्यासरागगरलद्रवपारदेषु । आस्वादनध्वनिसुधाम्बुरसाख्यधातुष्विष्टो

राजहंसवृत्तान्ते अप्रस्तुतजायापतिसंभोगवृत्तान्तः प्रतीयत इति समासोक्तिश्लेत्येतौ संसृज्येते। संवेशशब्दस्संभोगवाचकोऽपि भवति। 'संवेशनं निधुवनं संप्रयोगो रहोरतिः' इति हलायुधानुशासनात् ॥ २९ ॥

पूर्वस्मिन् श्लोके संवेशेन श्रममपनयन्नित्युक्तं अथात्र संवेशप्रकारमेव कथयन् समये प्रतिबुध्यस्वेत्यनुशास्ति—

**शीतैरध्वश्रमविनयनैस्सेवितो गन्धवाहैः**
**सुप्तस्स्वैरं पुळिनशयने स्वन्तरे चन्द्रपादैः।**
**क्रीडागीतैः कमलमुकुळे लीयतां षट्पदानां**
**कार्याकाङ्क्षी कलयतु भवान्राजहंस प्रबोधम् ॥**

शीतैः शिशिरैः, अत एव, अध्वश्रमविनयनैः विनीयते एभिरिति विनयनाः 'करणाधिकरणयोश्च' इति ल्युट्। अध्वश्रमस्य विनयनाः, तैस्तथोक्तैः दूरपथव्यायामखेदापनयनैरित्यर्थः। गन्धं वहन्तीति गन्धवाहाः, तैः मन्दानिलैरिति यावत्। 'कर्मण्यण्' इत्यण्। सेवितः शुश्रूषितः चन्द्रस्य पादैः मयूखैः 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः। शोभनमन्तरं यस्य तत् स्वन्तरं तस्मिंस्तथोक्ते रम-

---

रस इति रत्नमाला इति तदपि न. रसपदस्योदाहृतकोशबलादास्वादनमात्रार्थकतालाभेऽपि सुरतसुखास्वादरूपविशेषस्य विना लक्षणामलाभात्। संवेशशब्दस्य तु रसास्वादिन्यामाचार्योदाहृतकोशेन संभोगत्वावच्छिन्नवाचकतायास्स्पष्टतया संवेशपदश्लेषबलात्संभोगप्रतीतिवर्णनस्यैव युक्तत्वात् ॥ २९ ॥

णीयमध्यभाग इत्यर्थः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये च । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इत्यमरः । अनेन पुलिनस्य शैशिर्यातिशयादिकं द्योत्यते । पुलिनं तोयोत्थितद्वीपमेव । शयनं पर्यङ्कः तस्मिन् स्वैरं स्वच्छन्दं यथा स्यात्तथा यावता मार्गश्रमो दूरीभवेत्तावदिति भावः । सुप्तश्शयितस्सन् भवान् लीयताम् 'पत्रगुह्यान्तरे लीनो हनूमान्संवृतोऽभवत्' इत्युक्तरीत्या हनूमानिव शिंशुपापर्णेष्वपृथग्भूततया संश्लेषमुपगम्यावातिष्ठतामित्यर्थः, अनेन पुलिनवत्तवापि विशदतमत्वात्तद्भेदो नावभासेतेति द्योत्यते । तेन मीलितालंकारो व्यज्यते 'मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते' इति तल्लक्षणम् । अनेनैव पुलिनादन्यत्र पृथग्दृश्यतयाऽवस्थाने तव स्वापावसरे 'नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः' इत्याद्युक्तप्रकारेण रौद्रस्वभावेभ्यः क्रव्यादेभ्यश्शङ्के किमप्यभद्रं क्वचित्संभवेदिति रामस्य प्रेमातिभारात् 'अतिस्नेहः पापशङ्की' इत्युक्त प्रकारेणास्थानभयसंभ्रान्तत्वं द्योत्यते 'लीङ् श्लेषणे' दैवादिकादस्मात्तङि श्यनि लोट्प्रथमपुरुषैकवचनम् । भवच्छब्दस्य युष्मदस्मदन्यत्वेन शेषतया 'शेषे प्रथमः' इति प्रथमपुरुषः । तत्रैव सुखातिशयेन मा भवान्निद्रावशमेषीदित्याह—क्रीडेति । हे राजहंस ! अनेन वक्ष्यमाणगीतपूर्वकप्रबोधरूपराजोचितोपचारार्हत्वं द्योत्यते । कार्याकाङ्क्षी विवक्षितकृत्यसाधनैकाभिलाषी न तु यत्रक्वचिन्निद्रालुः पात्रेसमितः न हि कार्याकाङ्क्षी बुद्धिमान् क्वचिदपि प्रमाद्यतीति भावः, यथोच्यते—'कार्यार्थिनो हि कुशला न प्रमाद्यन्ति कर्मसु' इति ।

भवान् कमलानां अरविन्दानां मुकुळे ईषद्विकस्वरकोरके जात्य-भिप्रायकमेकवचनं, मुकुळशब्दस्तदात्वविकसत्कोरकवाची न त्वविकासि-तकलिकावाची, अत एव—'कलिका कोरकः पुमान्' इति कलि-कानामानुशिष्य 'कुड्मलो मुकुळोऽस्त्रियाम्' इति कुड्मलनाम पृथगे-वानुशिष्यते 'कलिकात्वं मुञ्चतीति मुकुळः 'मुचिॡ मोक्षणे' बाहुलकाड्डुॡ' इति सुधायां स्थितम्। अनेन प्रत्यग्रविकसितत्वाभिधा-यिना मधुव्रतव्रातसंश्रयणौपयिकाम न्दमरन्दतुन्दिलत्वं द्योत्यते। स्थि-तानां चरतामितिवाऽध्याहारः। षट्पदानां भ्रमराणां क्रीडायाःगीतानि, तैः विहारसंजातगुञ्जितैरित्यर्थः। प्रबोधं निर्निद्रतांकलयतु प्राप्नोतु 'कल गतिसंख्यानयोः' 'अस्माच्चौरादिकाददन्ताल्लोट्। अल्लोपस्य स्थानिव द्भावान्न णिच्प्रयुक्तवृद्धिः 'विहाय तन्द्रां निद्रां च वर्तितव्य क्रियापरैः' इत्युक्तरीत्या कार्यसाधनैकायनगतेन त्वया देशे काले च भवितव्यमप्र-मत्तेन। अन्यथा-'भूताश्चार्था विपद्यन्ते देशकालविरोधिताः। विक्लबं दूतमासाद्य तमस्सूर्योदये यथा' इत्याद्युक्तरीत्या सुनिष्पन्नमपि कार्यं विपन्नमेव भवेत्किमुत करिष्यमाणमिति भावः। यद्वा—लीयतामिति षष्ठ्यन्तं पदं षट्पदानामित्यस्य विशेषणं तदा कण्ड्वादेराकृतिगणत्वा-ल्लीधातोर्यकि लटश्शता। पुलिनशयने सुप्तस्सन् कमलमुकुळे लीयतां लगतां षट्पदानां क्रीडागीतैरिति योजना। अन्यत्तुल्य। पूर्वस्मिन्पक्षे व्यवहितान्वयोऽध्याहारश्चेति स्वारस्यसहचरितं क्लेशद्वयं, अस्मिन्प-क्षे कण्ड्वादिषु लीयतेः पाठकल्पनमित्येकः क्लेशः इति विशेषः। यस्तु चौरादिको 'ली द्रवीकरणे' इति परस्मैपदी, तस्मादाधृषीय-

त्वेन णिजभावपक्षे शपि शतरि लयतामिति स्यात्। यश्च 'ली-श्लेषणे' इति क्रैयादिकः, अस्माच्छतरि श्नाप्रत्यये प्वादित्वात् 'प्वादीनां ह्रस्वः' इति ह्रस्वे, लिनतामिति स्यात्। योऽपि दैवादिकः 'लीङ् श्लेषणे' इति तस्य ङित्त्वेन तङि शानचैव भाव्यं, न तु शत्रा। यदत्र केचित् लीनतामिति पठित्वा गणकार्यस्य नित्यत्वेन संज्ञापूर्वकविधेरनित्यत्वेन वा 'प्वादीनाम्' इति ह्रस्वो न प्रवर्तत इति। यद्वा—लीनेति क्तान्तादाचारक्विपि शतर्युक्तरूपसिद्धिरिति। यदप्यन्ये—पीयतामिति पठित्वा 'पीये रूषन्' इत्युणादिषु पाठात् पीय प्रीतौ, इति सौत्रधातुमङ्गीकृत्य तस्मात्परस्मैपदिनश्शतरि शपि पीयतामिति रूपं पीयतां प्रीतिं कुर्वतां तत्रानुरक्तानामित्यर्थ इति वदन्ति। तदेतत्सर्वं पाठान्तरकल्पनानैरपेक्ष्येणैव यथाऽवस्थितपाठे संभवन्त्यामुक्तरीत्या स्वारसिकोपपत्तावयुक्तत्वात्तत्कल्पनस्य। तत्रापि संज्ञापूर्वकविध्यनित्यत्वाद्यगतिकगतिकल्पनस्यातिजघन्यत्वाच्च नार्हत्यादरगोचरतां क्लेशलेशादपि त्रस्यतां विपश्चितां, तस्मादस्मत्प्रदर्शितैवोपपत्तिस्स्वारसिकीत्यास्तां तावत्। अत्र शीतैरिति गन्धवाहविशेषणस्याध्वश्रमविनयनसाभिप्रायत्वात्परिकरः, पुलिने शयनत्वरूपणाद्रूपकम्, षट्पदझङ्कारे क्रीडागीतत्वाध्यवसानाद्रूपकातिशयोक्तिरित्येतेषां संसृष्टिः। [1]प्रस्तुते राजहंसप्रबोधवृत्तान्ते अप्रस्तुतमहाराजप्रबोधवृत्ता

---

[1] प्रस्तुते राजहंसप्रबोधवृत्तान्ते अप्रस्तुतमहाराजप्रबोधवृत्तान्तप्रतीतेस्समासोक्तिरिति रसास्वादिनी॥ यत्तु—इमामेव समासोक्तिमुपवर्ण्य 'राजहंसेति विशेष्यस्य राजोपचाराईत्वाभिप्रायकत्वात्परिकराङ्कुरो वा' इत्यनेन तस्याः परि-

त्तान्तप्रतीतेस्समासोक्तिरुक्तरूपकातिशयोक्तिभ्यामुपस्कृतेति सङ्करः। लीयतामित्यस्यापशब्दवदाभासमानत्वादपशब्दवदाभासो नाम चित्रं 'यत्रापशब्दधीस्साधुभावज्ञानान्निवर्तते। तत्रापशब्दाभासस्स्याद्यथेदं पुरुषो महान्' इति लक्षणात् ॥ २६ ॥

---

कराङ्कुरेण सह वैकल्पिकत्वाभिधानम्—तन्न. तयोस्समासोक्तिपरिकराङ्कुरयोः समुच्चये बाधकविरहेण एकपक्षे इतरप्रतिक्षेपासंभवाद्विकल्पासङ्गतेः। न च परिकरपक्षे राज्ञोपचारार्हत्वाभिप्रायस्य हंसे राजत्वविवक्षयैवेह उपपादनीयत्वात्तद्विवक्षायां च अप्रस्तुतस्यापि राज्ञः वाच्यवृत्त्यैव प्रतीतेः अप्रस्तुतव्यञ्जनामूलकसमासोक्तेरनवतार एवेति वाच्यम्, हंसे लोकप्रसिद्धतया अवेष्टयधिकरणसिद्धस्य राजत्वस्य बाधितत्वेन विवक्षणासंभवात्। बाधितस्यापि हि विवक्षणं रूपकरूपकातिशयोक्तिश्लेषाणां त्रयाणामन्यतमेन वाच्यं, प्रकृते च न राजरूपकसंभवः तथा सति विषयिप्राधान्यावश्यंभावात् हंसराजत्वापत्तेः हंसस्य विषयस्योपादानाच्च न रूपकातिशयोक्तिसंभवः। राजहंसपदस्य चात्र योगरूढतया न राजपदश्लेषविवक्षणावसरः। राजहंसपदं हि हंसानां राजेति व्युत्पत्त्या निष्पन्नं योगेन हंसश्रेष्ठतां रूढ्या च चञ्चुचरणलौहित्यतदितरावयवसितत्वव्यङ्ग्यं जातिविशेषं च निमित्तीकृत्य प्रवर्तते। ततश्च हंसश्रेष्ठस्य तव नरपतिश्रेष्ठस्येव तादृशोपचारा उचिता इत्यर्थोऽत्र केवलं राजहंसपदेन व्यज्यते। तावतैव तत्र परिकराङ्कुरोपपत्तिः। लोकसिद्धस्तु राजा नात्र वाच्यवृत्त्या प्रतीयते किन्तु विशेषणत्वाद्वृत्तान्तो व्यञ्जनयैव प्रतीयत इति समासोक्तिरपि निराबाधेति तयोस्समुच्चय एव युक्तः। यदि तु—राजहंसपदे राजश्रेष्ठरूपार्थमाश्रित्य श्लेषस्संभवतीत्युच्यते तदा विशेष्यस्य श्लिष्टत्वेन समासोक्तिरेव नावतरेत्। उक्तश्लेषविवक्षाविरहपक्षे समासोक्त्युपपादने तु तत्पक्षेऽपि परिकराङ्कुरसंभवस्योपपादिततया समुच्चय एव युक्त इति दिक् ॥ २६ ॥

अथ तत्र 'सुपुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम्। तामारुह्य महाबाहुर्शिंशुपां पर्णसंवृताम्' इत्युक्तप्रकारेण हनूमानिव त्वमपि शिंशुपामारुह्य 'सुपुष्पिते पर्णघने विलीनः' इत्युक्तप्रक्रियया तत्र निलीय 'इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयताऽनघ। सा मया नरशार्दूल विश्वासमुपपादिता' इत्युक्तरीत्या रघुजनकान्वयकीर्त्यनुकीर्तनपूर्वकं 'अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम्। अदृष्टदुःखां दुःखार्तां दुःखस्यान्तमगच्छतीम्' इत्युक्तरीत्या समाश्वासयेथा इत्याह—

**तामारूढश्चलकिसलयां शिंशुपां स्वैकलक्ष्यः**
**मन्दीकुर्वन्मनसिजधनुर्घोषतीव्रं प्रणादम्।**
**मोहादीषन्मुषितमनसं बोधय प्रेयसीं मे**
**रम्यामादौ रघुजनकयोर्वर्णयन् वंशकीर्तिम्॥२७**

चलानि लोलानि किसलयानि पल्लवानि यस्यास्तां तथाभूतां अनेन हंससंवरणार्हत्वं सूचितम्। तां 'द्रक्ष्यस्येकां जनकदुहितुस्सौम्य दुर्जातबन्धुं न्यस्ताकल्पां क्व च न विटपे शिंशुपां सान्द्रशाखाम्' इति पूर्वं प्रस्तुतामित्यर्थः। अत एव न यच्छब्दापेक्षा तथोक्तं काव्यप्रकाशे—'प्रक्रान्तप्रसिद्धार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते' इति। आपत्सहायत्वेन प्रसिद्धामिति केषां चिद्व्याख्यानं तु नातीव हृद्यम्। प्रस्तुतत्वेनैव तच्छब्दार्थनिर्वाहे प्रसिद्धिपर्यन्तानुधावनस्य मन्दप्रयोजनत्वात्। शिंशुपां अगरुतरुं 'पि-

च्छिलाऽगरुशिंशुपा ' इत्यमरः । आरूढः आङ्पूर्वाद्रुहेः कर्तरि क्तः। ढत्वधत्वष्टुत्वढलोपदीर्घाः । स्वेनैकेन लक्ष्यः स्वैकलक्ष्य इति शिव-भागवतवत्समास इति केचित् । वस्तुतस्तु—स्वेनैव लक्ष्यः स्वैक-लक्ष्यः चिदेव चिन्मात्रमित्यादाविवास्वपदविग्रहः मयूरव्यंसकादित्वा-त्साधुः। अत एव श्रीभरद्वाजपरिशिष्टे—'विष्णोर्दास्यैकफलता' इत्यत्र 'दास्यमेव फलं येषां तेषां भावो दास्यैकफलता एकशब्दोऽव-धारणार्थः' इति व्याख्यानं, रहस्यरक्षायां मितगद्याधिकारे 'अ-शेषशेषतैकरति' इत्यस्य व्याख्यानावसरे 'अशेषशेषतायामेव रति-रशेषशेषतैकरतिः' इत्याचार्यैर्विगृहीतं च योयुज्यते । 'वैधव्यैक-फलां श्रियम्' इत्यत्र 'वैधव्यमात्रफलाम्' इति सञ्जीविन्यां मल्लि-नाथोक्तिरप्यत्रैवानुकूलेति लक्ष्मीसहस्रव्याख्यायां प्रारम्भस्तबके 'च-रणद्वन्द्वैकसंसर्गतः' इत्यत्र विस्तरेण निरूपितमस्माभिः। स्वमात्रदृश्यः 'पत्रगुह्यान्तरे लीनो हनुमान् संवृतोऽभवत्' इत्युक्तरीत्या तत्राति-मात्रं निलीन इति भावः । केचित्तु—स्वया स्वीयया सीतया ए-कयैव दृश्य इति भाव इति व्याचख्युः, तत्तेषामेव हृद्यम् । मनसि जात इति मनसिजः मन्मथः 'सप्तम्यां जनेर्डः' 'हलदन्तात्' इति 'तत्पुरुषे कृति' इति वा अलुक् । तस्य यद्धनुः चापं तस्य घोष इव तीव्रं विरहिजनहृदयनिर्भेदनमिति भावः । अनेन प्रथममेव म-दनवेदनादुर्बलायास्तस्या एवंतीव्रत्वन्निनादश्रवणे जीवितेऽपि स्या त्संशय इति व्यज्यते। प्रणादं प्रकृष्टनिनदं तारतया सुदूरश्रा-व्यमिति भावः। 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्। अ-

मन्दं मन्दं संपद्यमानं कुर्वन् मन्दीकुर्वन् अभूततद्भावे च्विः। 'शनैः कीर्तयताऽनघ' इत्युक्तरीत्या नीचीकुर्वन्निति भावः। अनेनैतन्निनादस्य तारत्वं सांसिद्धिकमिति व्यज्यते। मन्दतया कुर्वन्निति व्याख्यानं तु तात्पर्यवर्णनपरतया नेयम्। अयं भावः—यथावस्थितोच्चैर्निनादप्रकाशने 'सेयमालोक्य मे रूपं जानकी भाषितं तथा। रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति॥ ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी। जानमाना विशालाक्षी रावणं कामरूपिणम्॥ सीतया च कृते शब्दे सहसा राक्षसीगणः। नानाप्रहरणो घोरस्समेयादन्तकोपमः॥ ततो मां संपरिक्षिप्य सर्वतो विकृताननाः। वधे च ग्रहणे चैव कुर्युर्यत्नं यथाबलम्' इत्युपक्रम्य, 'मां वा गृह्णीयुराप्लुत्य बह्वश्शीघ्रकारिणः। स्यादियं चागृहीतार्था मम च ग्रहणं भवेत्॥ हिंसाऽभिरुचयो हिंस्युरिमां वा जनकात्मजाम्। विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम्' इत्युक्तरीत्या सीताभयोन्मीलनादिना वा राक्षसीप्रबोधमात्रेण वा उत्तरोत्तरानर्थसंभवस्यापि संभावनीयत्वाद्विवक्षितकार्यवैयाकुलीस्यादित्यतो निसर्गतारं निनादं मन्दीकुर्वन्निति। आदौ, मत्संदेशनिवेदनात्पूर्वं, अन्यथा मत्सन्देशश्रवणाभिमुख्यौपयिकः प्रत्ययो नोदियात्तस्या इति भावः। रम्यां सीतायाः मनोहारिणीं रघुजनकयोः एतन्नाम्नोर्महाराजयोः वंशस्यान्वयस्य कीर्तिं शौर्यौदार्यधैर्यादिगुणवत्ताप्रथाम्। देवदत्तस्य गुरुकुलमित्यादाविव समास इत्यसकृदवोचाम। वर्णयन् कीर्तयंश्च सन् 'लक्षणहेत्वोः' इति शता। उभयपक्षेऽप्याप्ततमत्वज्ञापनाय वंशद्वयकी-

र्तिकीर्तनम् । मोहात् 'आपद्भीतिवियोगाद्यैर्मोहश्चित्तस्य मूढता' इत्युक्तलक्षणाच्चित्तकश्मलात् ईषन्मुषितं किंचिद्वृत्तिविधुरीकृतं मनो यस्यास्तां तथोक्तां 'सा तं समीक्ष्यैव भृशं विसंज्ञा गतासुकल्पेव बभूव सीता' इत्युक्तरीत्या इक्ष्वाकुवंशविख्यातिं कीर्तयन्तं हनूमन्तमिव त्वामपि तादृशं वीक्ष्य स्तोकं मोहमापद्येतेति भावः । मे मम प्रेयसीं प्रियतमाम्, मदर्थमेवंपरितप्ततया निरवधिकप्रीतिविषयामिति भावः । सीतां बोधय, वक्ष्यमाणरीत्या मत्संदेशहरत्वेनात्मानं निवेदयन्विमोहां विधेहीत्यर्थः । यद्वा—आदौ त्वद्दर्शनात्पूर्वम्, मोहादीषन्मुषितमनसं कश्मलापहृतचेतसं, प्रेयसीं रम्याम्, रघुजनकयोः, वंशकीर्तिं वर्णयन्, बोधय, उक्त एवार्थः इति योजनाभेदेन व्याख्येयम् । अत्र चलकिसलयामित्यस्य शिंशुपाविशेषणस्य हंसस्यैकलक्ष्यतार्हत्वाभिप्रायगर्भत्वात्परिकरः, मनसिजधनुर्घोषतीव्रमित्यत्र वाचकलुप्तोपमा, रघुजनकवंशकीर्तिवर्णनस्य सीताबोधनहेतुत्वात्काव्यलिङ्गमनुप्रासश्चेत्येतानि संसृज्यन्ते ॥ २७ ॥

पूर्वस्मिन् श्लोके बोधयेत्युक्तम्, तत्प्रकारमेवाह—

**पत्युर्देवि प्रणयसचिवं विद्धि दीर्घायुषो मां**
**जीवातुं ते दधतमनघं तस्य सन्देशमन्तः ।**
**शूराणां यश्शरदुपगमे वीरपत्नीवराणां**
**संमानार्हं समयमुचितं सूचयेत्कूजितैस्स्वैः ॥ २८**

हे देवि ! 'पचादिषु देवट्' इति पाठाट्टित्त्वलक्षणो ङीप् । भर्त्रा सह राज्याभिषेकस्तव प्रत्यासन्न इति द्योतनाय देवीति संबोधनम् । यथाऽनुशिष्यते—'देवी कृताभिषेकायाम्' इति । मां पत्युः त्वद्वल्लभस्येत्यर्थः । पातीति पतिः 'पातेर्डतिः' इति डतिप्रत्यये टिलोपः । अनेन रक्षकत्ववाचिना 'यथा च स महाबाहुर्मां तारयति राघवः । अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि' इत्यभ्यर्थयमानां त्वामस्माच्छङ्कानिरोधव्यथाभराद्रक्षितुरिति द्योत्यते । प्रणयस्य सचिवः प्रणयसचिवः तं तथोक्तं प्रणययोग्यस्सचिव इति मध्यमपदलोपी वा विस्रम्भसल्लापसहायं प्रत्येतव्यमन्त्रिणं विश्वसनीयभृत्यं वा प्रेमास्पदं मन्त्रिणं सहायं भृत्यं वा 'प्रणयः प्रश्रये प्रेम्णि याच्ञाविस्रम्भयोरपि । सचिवो मन्त्रिचेटयोः । सहाये' इत्युभयत्रापि मेदिनी । 'प्रणयसचिवं स्नेहेन सखायम्' इति व्याख्यानं तु पौनरुक्त्यादिदूषितत्वेनोदासितव्यम् । अनेन त्वयाऽप्यवश्यमहं विश्वसनीय इति द्योतितम् । विद्धि जानीहि 'विद ज्ञाने' लोण्मध्यमपुरुषैकवचनम् । ननु—सति हि पतिजीवने तदेकजीवितायाः मम तत्प्रणयसचिवस्यापि तवावलोकनं भवेदानन्दायेत्यतः पतिं विशिनष्टि दीर्घायुष इति । दीर्घं आयतं आयुः जीवितकालो यस्य सः तस्य तथोक्तस्य 'आयुर्जीवितकालो ना' इत्यमरः । पत्युरित्यन्वयः । अनेन महदिदं कृतं कर्म तव वल्लभेन यद्विनाऽपि भवतीमीदृशीमशक्येऽपि मुहूर्तमपि जीवितुं विन्दते दीर्घमायुरिति हंसस्य विस्मयातिशयो भावीत्यपि द्योत्यते । यथोच्यते सीताऽवलोकनावसरे वारंवारं हनुमता—'दुष्करं कृतवा-

न् रामो हीनो यदनया प्रभुः। धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ दुष्करं कुरुते रामो य इमां मत्तकाशिनीम्। सीतां विना महाबाहुर्मुहूर्तमपि जीवति' इति। अनेनैव 'नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः। देवलोकमितो यातस्त्यक्त्वा देहं महीतले' इत्याद्युक्तरीत्याऽतिशङ्काऽपि त्वया न कार्येति च द्योत्यते। भवतु नाम स दीर्घायुरेव, भवांश्च तस्य प्रणयसचिव एव, तथाऽपि 'धिङ्माम नार्यामसतीं याऽहं तेन विनाकृता। मुहूर्तमपि रक्षामि जीवितं पापजीविता ॥ का च मे जीविते श्रद्धा सुखे वा तं प्रियं विना। भर्तारं सागरान्ताया वसुधायाः प्रियंवदम्' ॥ इत्याद्युक्तरीत्या प्रियतमविश्लेषदीनतया जीवितेऽप्यश्रद्दधानाया मम किं त्वयेत्यत आत्मानं विशिनष्टि—जीवातुमित्यादिना। ते तव एवं जीवितेऽप्यश्रद्दधानाया इति भावः। जीवातुं जीवनौषधं 'जीवातुर्जीवनौषधम्' इत्यमरः। 'किमाह सीता हनुमंस्तत्त्वतः कथयाद्य मे। एतेन खलु जीविष्ये भेषजेनातुरो यथा' इत्युक्तरीत्या रामस्येव त्वत्संदेशस्तवापि तत्संदेशो जीवनौषधं भविष्यतीति भावः। तथात्वे हेतुमभिप्रयन्विशिनष्टि—अनघमिति। सर्वव्यथाविधूननधुरंधरमित्यर्थः। 'अंहोदुःखव्यसनेष्वघम्' इत्यमरः। कैतवादिदोषगन्धविधुरमिति वाऽर्थः। तस्य तव भर्तुः त्वत्समागमाकाङ्क्षयैव दीर्घायुष इति भावः। संदेशं वाचिकं 'संदेशवाग्वाचिकं स्यात्' इत्यमरः। अन्तः मनसि दधतं धारयन्तं, दधातेश्शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः। त्वदेकनिवेदनीयतया त्वत्प्रि-

यसंदेशमन्तरङ्गे दधानमित्यर्थः। अनेन हंसे मन्त्रसंवरणनैपुणातिशयस्सीताभिमुख्यावश्यंभावश्च द्योत्यते। न केवलमहं त्वद्भर्तुस्सन्देशहर एव, अपि तु विपक्षपक्षविक्षपणाय तमुद्योजयिताऽपीत्यभिप्रायेण विशिनष्टि—शूराणामिति। यः शरदुपगमे शरत्कालागमे वीरपत्नीनां वराः श्रेष्ठाः तासां अत्युत्तमवीरपत्नीनामित्यर्थः। उत्तमवीरपत्नीत्वात्स्वभर्तृविजययात्रोत्साहिनीनामिति भावः। न ह्यवीरपत्नीनां स्वभर्तृवैक्लब्यदर्शिनीनां संभवति क्वचिदपि तद्विजययात्रायामुत्साहः। 'वीरपत्नी वीरभार्या, दैवाहृते वरश्श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये' इति चामरः। सम्मानार्हं पूजनीयं श्लाघनीयमित्यर्थः। उचितं 'उद्योगकालोऽद्य नराधिपानां, अन्योन्यावद्धवैराणां जिगीषूणां नृपात्मज। अयमुद्योगसमयः पार्थिवानामुपस्थितः' इत्युक्तप्रकारेण युद्धयात्रोद्योगार्हमित्यर्थः। समयं अवसरं शूराणां विक्रान्तानां क्षत्रियाणां जैत्रयात्रोत्साहिनामिति भावः। स्वैः स्वकीयैः, कूजितैः निनादैः सूचयेत् ज्ञापयेत् युद्धाय संनद्धैर्भवितव्यमिति द्योतयेदिति भावः। अनेन वीरपत्न्यास्तव संमाननीयममुं शरदागमं ज्ञापयन्नहं विक्रान्तमूर्धन्यं त्वद्वल्लभमप्यवश्यं प्रोत्साहयिष्ये नात्र सन्देग्धव्यमिति व्यज्यते। यद्वा—वीरयन्तीति वीराः 'वीर विक्रान्तौ' इत्यस्माच्चौरादिकात्पचाद्यच्। 'वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम्। त्वद्विधं तु न संक्रुद्धो लोकनाथस्स राघवः॥ रामस्य धनुषश्शब्दं श्रोष्यसि त्वं महास्वनम्। शतक्रतुविसृष्टस्य निर्घोषमशनेरिव॥ इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः। इषवो निपतिष्यन्ति रामलक्ष्मण-

लक्षणाः ॥ रक्षांसि परिनिघ्नन्तः पुर्यामस्यां समन्ततः । असंपातं करिष्यन्ति पतन्तः कङ्कवाससः ॥ अपनेष्यति मां भर्ता त्वत्तश्शीघ्रमरिन्दमः । असुरेभ्यश्श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः' इत्याद्युक्तप्रकारेण साक्षाद्रावणमेव तृणाय मत्वा वदन्त्या भवत्या तुल्या इति भावः । वीराश्च ताः पत्न्यः स्वकीयास्सहधर्मचारिण्यः 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावः । तासां वराः वरणीयाः व्रियन्त इति वराः 'ग्रहिवृ' इत्यप्, 'दैवाद्वृते वरश्श्रेष्ठ' इत्यत्र भानुः । तेषां तथोक्तानां शूराणां शूरत्वाभावे तेषां वीरपत्नीवरणीयता न सिध्येदिति भावः । संमानार्हं उचितं समयं स्वैः कूजितैः सूचयेदिति योजना । विजयप्रस्थानशंसिकाहळीनिनादेनेव मदीयतारतरनिनदेन सर्वे विजिगीषवश्शूरास्संनह्यन्ति जैत्रयात्रार्थमिति भावः । य एवमुचितं समयं सूचयेत्, तं मां पत्युः प्रणयसचिवं विद्धीत्यन्वयः । अन्ते इतिकरणं द्रष्टव्यम् । इति बोधयेति पूर्वश्लोकेनान्वयः । अत्र पतिविशेषणस्य दीर्घायुष इत्यस्य पत्युः प्रणयसचिवमित्यादिहंसविशेषणानां च सीतासमाश्वासनौपयिकताभिप्रायगर्भत्वात्परिकरालङ्कारः । अनर्घमिति सन्देशविशेषणस्य मैथिलीजीवातुतां प्रति विशेषणगत्या हेतुत्वात्काव्यलिङ्गं च । उत्तरार्धे तु य एवं श्रीरामभद्राय युद्धोद्योगावसरं सूचयेदिति वक्तव्ये प्रस्तुते तत्प्रत्यायनाय सामान्यमभिहितमिति सामान्यनिबन्धनाऽप्रस्तुतप्रशंसालङ्कारः 'अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया' इति लक्षणात् । सा च पञ्चविधा । यदाहुः—'कार्ये

निमित्ते सामान्ये विशेषे प्रस्तुते सति। तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा' इति। त्रयाणामेषां संसृष्टिः ॥ २८ ॥

अथैवं कल्याणवादिनं त्वां सीता परमानन्दोत्तरङ्गैरपाङ्गैस्सभाजयिष्यतीत्याह—

**मत्प्रस्तावप्रवणमथ सा मैथिली मानयेत्त्वां**
**म्लानं शोकाद्वदनकमलं किञ्चिदुन्नम्य भीरुः।**
**अन्तस्तोषादमृतलहरीलब्धसब्रह्मचर्यैः**
**अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः॥२९**

अथ त्वद्वृत्तान्तनिवेदनानन्तरं सा दीनां दशामापन्नेति भावः। मैथिली सीता अनेन 'अगाधमेधेषु च मैथिलेषु, बहुमेधा हि मैथिलाः' इत्याद्युक्तरीत्याऽतिमेधाविनीत्वद्योतकेन तस्याः प्रियहितकारिजनसम्माननोचितज्ञतादिकं द्योत्यते। भीरुः त्रस्ता सती अपि श्रुतिपथगोचरमिदमस्य वचनमासां राक्षसीनामिति कातरेति भावः। शोकात् म्लानं क्षीणहर्षं 'म्लै हर्षक्षये' अस्मात्कर्तरि क्तः 'आदेच उपदेशेऽशिति' इत्यात्वे 'संयोगादेरातो धातोर्यण्वतः' इति नत्वम्। वदनकमलं मुखारविन्दं किञ्चित् उन्नम्य उन्नमय्य उत्पूर्वकान्नमतेरन्तर्भावितण्यर्थात् क्त्वो ल्यप्, ण्यन्तात्तु 'ल्यपि लघुपूर्वात्' इति णेरयादेश उन्नमय्येत्येव स्यात्। अनेनेतःपूर्वं चिन्तानम्रत्वं द्योत्यते। किञ्चानेन सन्दर्भेण 'ततस्सा वक्रकेशान्ता सुकेशी केशसंवृतम्। उन्नम्य वदनं भीरुश्शिंशुपावृक्षमैक्षत' इत्येतत्प्रत्य-

भिज्ञाप्यते। मत्प्रस्तावे मद्वृत्तान्तानुवर्णने प्रवणं आसक्तं 'प्रवणो ना चतुष्पथे। त्रिषु तु क्रमनिम्नोर्व्यां प्रह्वे तत्परदक्षयोः' इति रत्नमाला। त्वां अन्तः मनसि तोषात् 'निशम्य सीता वचनं कपेश्च दिशश्च सर्वाः प्रदिशश्च वीक्ष्य। स्वयं प्रहर्षं परमं जगाम सर्वात्मना राममनुस्मरन्ती' इत्युक्तप्रकारेणोदञ्चितादानन्दादित्यर्थः। ब्रह्म वेदः 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः। तदध्ययनमिति यावत् [1]समानं ब्रह्म यस्मिंस्तदिति बहुव्रीहिः 'समानस्य छन्दसि' इति सूत्रे समानस्येति योगविभागात्सपक्षसाधर्म्यादिव-

[1]समानं ब्रह्म यस्मिंस्तदिति बहुव्रीहौ 'समानस्य छन्दसि' इति सूत्रे योगविभागबलात् समानस्य सभावः। सदृशपर्यायेण सहशब्देन वा सदृशं ब्रह्म यस्मिन्नित्यस्वपदविग्रहे बहुव्रीहौ 'वोपसर्जनस्य' इति सभावस्सहशब्दस्य। ततः सब्रह्म च तच्चर्यं चेति कर्मधारय इति सब्रह्मचर्यशब्दनिष्पत्तौ पक्षद्वयमुपन्यस्तं रसास्वादिन्याम्॥ यत्तु अत्रत्यं द्वितीयपक्षमेव प्रथममुपन्यस्य अनन्तरं 'यद्वा ब्रह्मणे वेदग्रहणाय चर्यं व्रतं ब्रह्मचर्यम्। समानं ब्रह्मचर्यमिति विग्रहे 'समानस्य छन्दसि' इति सूत्रे समानस्येति योगविभागात्समानस्य सभावे सब्रह्मचर्यमिति भवति साधर्म्यमिति पर्यवसितोऽर्थ इति योगविभागपरपक्षान्तराभिधानं—तत्तु तादृशपक्षद्वयगतस्वारस्यास्वारस्यानवधारणमूलकम्। तथा योगविभागस्य भाष्यानारूढत्वकृतं ह्यस्वारस्यं योगविभागपक्षे। अत एवायं पक्षः प्रथममुपन्यस्तो रसास्वादिन्यामाचार्यैः। ब्रह्मणे चर्यं ब्रह्मचर्यमिति समासकथनमप्ययुक्तम्। तथा चतुर्थीसमासे अनुशासनविरहादिति॥

अमृतलहरीलब्धसब्रह्मचर्यैरित्यत्र धर्मलुप्तोपमा आर्थीति रसास्वादिन्याम्। यत्तु—अमृतलहरीत्यत्राभूतोपमेति तन्न. सुधोदध्यादिग्राहकप्रमाणगणैरमृतलहर्या अपि प्रामाणिकत्वादभूतोपमाया अयोगात् ॥ २९ ॥

त्समानशब्दस्य सभावः। सब्रह्म च तत् चर्यं चेति कर्मधारयः। अथवा—समानं च तत् ब्रह्मचर्यं चेति कर्मधारय एवास्तु, योगविभागपक्षे उत्तरपदमात्रनिमित्तकस्य सभावस्य तत्रापि निरर्गळत्वात्। यद्वा—सहशब्दस्सदृशवचनोऽप्यस्ति, स च वृत्तिविषय एव। तेन सह ब्रह्मशब्दस्यास्वपदविग्रहो बहुव्रीहिः 'वोपसर्जनस्य' इति सहशब्दस्य सभावः। समानं ब्रह्म यस्मिंस्तत् सब्रह्म सब्रह्म च तत् चर्यं चेति कर्मधारयः। चर्यं चरणं 'गदमदचरयमश्चानुपसर्गे' इति चरतेर्भावार्थे यत्। तुल्यवेदाध्ययनकं व्रतमिति फलितोऽर्थः। न चात्र समानं ब्रह्मचर्यमिति कर्मधारये 'चरणे ब्रह्मचारिणि' इत्यनेन समानशब्दस्य सभाव इति भ्रमितव्यम्। न ह्यत्र ब्रह्मचारीत्युत्तरपदं दृश्यते येन सभावस्स्यात्, किंतु ब्रह्मचर्यमिति, न चैकदेशविकृतन्यायाश्रयणमपीह युक्तं, ब्रह्मचर्यमित्यस्य ब्रह्मचारीत्यतश्शब्दान्तरत्वेनैकदेशविकृततच्छब्दत्वायोगात्। ननु तर्हि सहशब्दस्यैवास्वपदविग्रहः कर्मधारयोऽस्त्विति चेन्न। बहुव्रीह्यव्ययीभावयोः 'वोपसर्जनस्य अव्ययीभावे चाकाले' इतिवत्कर्मधारये सहशब्दस्य सभावविधायकवचनादर्शनात्। अतो यथोक्तैवोपपत्तिश्श्रेयसी। सब्रह्मचर्यं साधर्म्यमिति यावत्, अमृतलहर्या सुधाझर्या सह लब्धं प्राप्तं सब्रह्मचर्यं यैः तैस्तथोक्तैः उषसि प्रत्यूषे मिषतां विकसतां अम्भोजानां अरविन्दानां अन्तरङ्गैः आप्ततमैः तत्तुल्यैरिति यावत्। अपाङ्गैः कटाक्षैरिति यावत्। मानयेत् पूजयेत् सबहुमानं निध्यायेदित्यर्थः। 'मान पूजायां' संभावनायां लिङ्,

अनेन हनूमदपेक्षया त्वय्येव प्रीत्यतिशयं कुर्यादिति द्योत्यते। हनूमतो हि दर्शनमात्रमेव न तु सबहुमानदर्शनं यथोच्यते—
'सा तिर्यगूर्ध्वं च तथाऽप्यधस्तान्निरीक्षमाणा तमचिन्त्यबुद्धिम्।
ददर्श पिङ्गाधिपतेरमात्यं वातात्मजं सूर्यमिवोदयस्थम्' इति। अत्र श्रीरामप्रस्तावप्रवणत्वस्य विशेषणगत्या सीताकटाक्षसंमाननीयताहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं, वदनकमलमिति धर्मवाचकलुप्तोपमया अमृतलहरीलब्धसब्रह्मचर्यैः अम्भोजानामन्तरङ्गैरित्याभ्यामार्थीभ्यां धर्मलुप्तोपमाभ्यां च संसृज्यते, ता अप्यन्योन्यं संसृज्यन्ते। तार्तीयीकोपमा त्वनुप्रासेनैकवाचकानुप्रविष्टेन सङ्कीर्यते। पूर्वार्धे शोकान्म्लानं वदनकमलमुन्नम्येत्यनेन इतःपूर्वं वदनकमलनमनद्योतकेन व्यज्यमानस्य 'इष्टवस्त्वपरिप्राप्तेरैश्वर्यभ्रंशनादिभिः। चिन्ताध्यानात्मिका तस्यामनुभावा मता इमे॥ कार्श्याधोमुख्यसन्तापनिश्वासोच्छ्वसनादयः' इत्युक्तलक्षणचिन्ताख्यसञ्चारिभावस्य शान्त्यभिव्यक्तेर्भावशान्तिः 'भावशान्तिस्त्वभिव्यक्तेः प्रशमे व्यभिचारिणाम्' इति, 'अत्यारूढस्य भावस्य विलयश्शान्तिरुच्यते' इति च लक्षणात्। उत्तरार्धे शिशिरापाङ्गकरणकसंमाननालक्षणानुभावेन 'मनोरथस्य लाभेन सिद्ध्यचयोग्यस्य वस्तुनः। मित्रसङ्गमदेवादिप्रसादादेश्च कल्पितः॥ मनःप्रसादो हर्षस्स्यादत्र नेत्रास्यफुल्लता। प्रियाभाषणमाश्लेषः पुलकानां प्ररोहणम्॥ स्वेदोद्गमश्च हस्तेन हस्तसन्ताडनादयः' इत्युक्तलक्षणहर्षाख्यभावस्य, एवं भीरुस्सती किञ्चिद्वदनकमलमुन्नम्येत्यनेन 'शङ्काचौर्यापराधाद्यैस्स्वानिष्टोत्प्रेक्षणं मतम्। तत्र चेष्टा

मुहुःपार्श्वदर्शनं मुखशोषणम् । अवगुण्ठनवैवर्ण्यगण्डसादादयोऽपि च ' इत्युक्तलक्षणशङ्काख्यसञ्चारिभावेन सहोदयाभिव्यक्तेर्भावोदयः 'भावोदयस्स्याद्भुत्पत्तौ व्यङ्ग्यायां व्यभिचारिणाम्' इति लक्षणात् ॥२९

अथ त्वद्दर्शनाश्वासिता सीता त्वन्मुखान्मत्सन्देशश्रवणौन्मुख्यं भजिष्यत इत्याह—

**पश्यन्ती सा रघुपतिवधूस्त्वामशेषावदातं**
**प्रत्याश्वासादधिगतरुचिः प्राक्तनीवेन्दुलेखा ।**
**मत्संदेशे तदनु सुमुखी सावधाना भवित्री**
**किं न स्त्रीणां जनयति मुदं कान्तवार्ताऽऽग-**
**मोपि ॥३०॥**

रघुपतेः दशरथस्य ' दीर्घदर्शी महातेजाः पौरजानपदप्रियः ' इत्याद्युक्तरीत्या दीर्घदर्शिन इति भावः । वधूः स्नुषा ' वधूर्जाया स्नुषा स्त्री च ' इत्यमरः । अनेनास्या अपि दीर्घदर्शिनीत्वं द्योतयता न त्वामन्यथा ज्ञास्यतीति द्योतितम् । सा सीता त्वां ' पत्युर्देवि प्रणयसचिवं ' इत्युक्तरीत्या कल्याणवादिनमिति भावः । अशेषं कृत्स्नं यथा स्यात्तथा अवदातं शुद्धं बहिरन्तश्च शुद्धमित्यर्थः । बहिश्शुद्धिर्धावल्यं अन्तश्शुद्धिस्तु मत्सखत्वेनाच्छलत्वं, पश्यन्ती जानानेत्यर्थः । बहिरिवान्तरपि शुद्धं निश्चिन्वानेति भावः । 'पश्यार्थैश्चानालोचने' इति ज्ञापनाद्दृशेर्ज्ञानार्थकत्वम् । बहिश्शुद्धेश्चाक्षुषज्ञानविषयत्वेऽप्यन्तश्शुद्धेस्तदविषयत्वेनोभयसाधारण्याज्ज्ञानानेति व्या-

ख्यानमेव स्वारसिकम् । एतेन 'अन्तश्शुद्धं बहिर्विलक्षं त्वां कटाक्षयन्ती' इति व्याख्यानं नातीव हृद्यमिति वेदितव्यम् । अत एव प्रत्याश्वासात् अयं विश्वसनीय इति विस्रम्भात् । पक्षे दिवाकरकरव्यतिकरोच्छ्वसितत्वादित्यर्थः । प्राक्तनी पूर्वस्मिन् दर्शे भवा प्रागित्यव्ययाद्भवार्थे 'सायं चिरं' इत्यादिना ट्युल्प्रत्ययस्तुडागमश्च, ततष्टित्त्वलक्षणो ङीप् । प्राग्भवा प्राक्तनीति विग्रहः । इन्दुलेखा चन्द्रकलेव अधिगता प्राप्ता रुचिः दीप्तिः यया सा तथोक्ता सती यथा प्राचीनैवातितनीयसी चन्द्रकला विभाकरप्रभानुप्रवेशसमधिगतसौभाग्या शुक्लप्रतिपदि प्ररोहद्दीप्तिर्भवेत्तथाऽर्वाक्त्वदवलोकनात् 'अव्यक्तरेखामिव चन्द्ररेखाम्' इत्याद्युक्तप्रक्रिययाऽवस्थिता सैव सीता त्वन्निर्वर्णनानन्तरं त्वयि विस्रम्भात्प्राप्तहर्षतया 'हर्षरश्मिभिरुद्द्योतं तस्यान्तः पुरमाबभौ' इत्युक्तप्रकारेण किञ्चिदुदञ्चच्छरीरसुषमेति भावः । यद्वा—सीतापक्षे अधिगता रुचिः प्रियवार्ताश्रवणस्पृहा यया सा तथोक्तेत्यर्थः । 'अभिषङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः । अथवा प्राक्तनी इन्दुलेखेव प्रत्याश्वासादधिगतरुचिरिति योजना । अर्थस्तु तुल्य एव । अत एव सुमुखी 'अतुलं च गता हर्षं प्रहर्षेण च जानकी । नेत्राभ्यां वक्रपक्ष्मभ्यां मुमोचानन्दजं पयः ॥ चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट्' इत्युक्तप्रकारेण प्रसन्नवदना च सती, शोभनं मुखं यस्यास्सेति विग्रहे—'स्वाङ्गाच्चोपसर्जनात्' इत्यादिना ङीष् । तदनु एवं सौमुख्यलाभानन्तरं मत्सन्देशे मद्वाचि-

कश्रवणे इति यावत् । 'मद्विषयकवाचिके' इति केषांचिद्व्याख्यानं तु न युक्तं, रामं प्रति सीतायास्सन्देशस्यात्राप्रकृतत्वात् । सावधाना अवहितचित्ता भवित्री भाविनी । ननु—'क्षुन्निवृत्तिर्भोजनेन विना तत्कथया कथम्' इत्युक्तरीत्या प्रियसन्दर्शनेन विना तद्वृत्तान्तश्रवणमात्रेणैव कथमेतावानानन्द संभविष्यतीत्यत आह—किमिति । [1]कान्तस्य 'कथाभिरभिरामाभिः कामैर्भोगैश्च सर्वदा । उपचारैश्च रमयेद्यस्स कान्त इतीरितः' इत्युक्तलक्षणस्य वल्लभस्य न तु पतिशब्दमात्रभाज इति भावः । वार्तायाः वृत्तान्तस्य आगमः लाभोऽपि स्त्रीणां प्रियविश्लिष्टानामिति भावः । मुदं प्रीतिं न जनयति किं जनयत्येवेति भावः । न हि साक्षात्प्रियसमागम एव कल्पते मनसस्तोषाय वियोगिनीनां किंतु तद्वार्तागमोऽपीति भावः । अत्र रघुपतिवधूरित्यस्य हंसविशुद्धताज्ञानं प्रति तस्य च प्रत्याश्वासपूर्वकरुचिप्राप्तिं प्रति तस्याश्च सौमुख्यं प्रति तस्य च सन्देशश्रवणसावधानतां प्रति हेतुत्वात्काव्यलिङ्गमाला सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासेन सङ्कीर्यते । अनया च काव्यलिङ्गमालया उत्तरोत्तरकारणभूतपूर्वपूर्ववस्तुगुम्भनात्मकः कारणमालालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः 'गुम्भः कारणमाला स्याद्यथा प्राक्प्रान्तकारणैः' इति तल्लक्षणन् । अत्र सीतायाः हंसशुद्धता-

[1] कान्तस्य......वल्लभस्य न तु पतिशब्दमात्रभाज इति रसास्वादिनी ॥ यत्तु—कान्तस्य वल्लभस्य न तु केवलपत्युः—इति ॥ तन्न. पतिस्समास एवेति घिसंज्ञाया आवश्यकतया केवलपतेरित्यस्यैव साधुत्वात् ॥ १० ॥

निर्णयेन मतिः 'विमृश्य युक्तिभिश्शश्वदर्थनिर्धारणं मतिः' इति लक्षणात् । प्रत्याश्वासादधिगतरुचिरित्यादिना हर्षः, मत्सन्देशे साव-धानेत्यनेनौत्सुक्यं चेत्येते सञ्चारिणः पूर्वपूर्वानुपमर्देन संभूय व्यज्यन्त इति भावसन्धिः 'भावसंधिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि' इति तल्लक्षणम् ॥ ३० ॥

अथादौ मत्कुशलं निवेदयंस्तस्याः कुशलमनुयुङ्क्ष्वेत्याह—

**पश्चादेवं कथय भवतीभागधेयेन जीवन्**
**कल्याणीं त्वां कुशलमनघः कोसलेन्द्रोऽ-**
**नुयुङ्क्ते ।**
**येषु श्रेयो भवति नियतं तानि सर्वाणि सन्तः**
**लक्ष्म्या देव्यास्तव च भुवने लक्षणान्या-**
**मनन्ति ॥ ३१ ॥**

पश्चात् त्वद्विषये सीतायास्सौमुख्यादिना विस्रम्भनिश्चयानन्तरं 'प्रतीच्यां चरमे पश्चात्' इत्यमरः । न तु ततः प्रागेव, तथा सति तां नालमाश्वासयितुं मत्कुशलवर्णनादिकमपि, प्रत्युत 'यथा-यथा समीपं स हनुमानुसर्पति । तथा तथा रावणं सा तं सीता परिशङ्कते' इत्युक्तरीत्या सा शङ्केतापीति भावः । न हि परस्परविस्रम्भविरहे निसर्गतः प्रियाण्यपि रोचेरन्नन्योन्यमनसे वचनानि । यथा ह्युच्यते—'परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः' इति । एवं वक्ष्यमाणप्रकारेण कथय ब्रूहि । तदेवाह—भवतीति

भवत्याः तव, पूज्याया इति वा भागधेयेन सौभाग्येन 'भागरूप' इत्यादिना स्वार्थे धेयप्रत्ययः। 'दैवं दिष्टं भागधेयं भाग्यं' इत्यमरः । जीवन् प्राणान् धारयन् सन् विधेयस्यास्योद्देश्यानन्तर्यौचित्येऽपि प्रथमत एव निर्देशो 'दृष्टा सीता' इति न्यायादिति ध्येयम्। भवतीभाग्यमेवास्य जीवनहेतुः अन्यथा 'तवादर्शनजेनार्ये राघवः परितप्यते। महता ज्वलता नित्यमग्निनेवाग्निपर्वतः॥ त्वत्कृते मदनश्चैव शोकश्चिन्ता च राघवम् । तापयन्ति महात्मानमग्न्यगारमिवाग्नयः ॥ तवादर्शनशोकेन राघवः प्रविचाल्यते। महता भूमिकम्पेन महानिव शिलोच्चयः' इत्याद्युक्तामशक्यजीवनां दशामापन्नः कथमिव जीवेदिति भावः। न केवलमस्य भवतीभाग्येन जीवनमात्रमेव अपि तु कुशलमपीत्याह— [1]अनघ इति। अविद्यमानं अघं दुःखमकुशलरूपं यस्य स तथोक्तश्च सन्। अत्र 'वैदेहि कुशली रामस्त्वां च कौशलमब्रवीत्' इत्येतत् स्मर्तव्यम्। न केवलं तज्जीवनादेरेव हेतुर्भवतीभाग्यमित्यभिप्रयन्विशेष्यं निर्दिशति— कोसलेन्द्र इति । कोसलानां निवासो जनपदः कोसलाः 'तस्य

[1] अनघ इति॥ अविद्यमानं अघं दुःखमकुशलरूपं यस्य तथोक्तस्सन् इति रसास्वादिनी॥ यत्तु—अविद्यमानं अघं दुरितं यस्येति विवरणं तन्न. तथा सति 'मत्कुशलं निवेद्य तस्याः कुशलप्रश्नं मया कृतं कथयेत्याह' इति स्वकृतैतत्पद्यावतारिकाया एवासङ्गतिप्रसङ्गात् । अनघशब्दादन्यस्येह पद्ये रामसंबन्धिकुशलबोधकस्याभावेन अनघपदस्यापि दुरितरहितपरत्वे 'मत्कुशल निवेद्य' इत्यंशासङ्गतेस्स्पष्टत्वात् । तस्मादनघशब्दस्याकुशलरहितपरतयाऽऽचार्यकृतविवरणमेव युक्तम् । अत एव भागधेयहेतुकजीवनं प्रत्यनघत्वस्य हेतु-

निवासः' इत्यणो 'जनपदे लुप्' इति लुप् युक्तवद्भावश्च। तेषामिन्द्रः अधीश्वरः अस्य कोसलैश्वर्यलाभोऽपि त्वद्भाग्याधीन एवेति भावः। अनेन प्रत्यासन्नस्तस्याधिराज्याभिषेको नेतःपरस्तादपि कान्तारचङ्क्रमक्लेशावशेषसंभावनया शोचनीयमित्यपि व्यज्यते। ननु

---

त्वात्काव्यलिङ्गमित्यलङ्कारवर्णनमपि न सत्। भागधेयहेतुकजीवने भागधेयस्यैव हेतुत्वेन निबद्धतया तत्र हेत्वन्तरानपेक्षणात्। तत्र हेत्वन्तरविवक्षायास्सीता-भागधेयमहिमापकर्षकत्वाच्च॥

यत्तु—रसास्वादिन्यां क्रमेणाभिहितयोः सर्वनाम्नो वृत्तिमात्र इतीष्टयानित्यत्वसर्वनामेतरभवच्छब्दस्वीकारपक्षयोः पौर्वापर्यव्यत्ययेनाभिधानम्—तत्तु रसास्वादिनीवैलक्षण्यसूचनाशयैव केवलमित्यवधेयम्॥ यदपि—भातेर्डवतुबिति सूत्रव्युत्पादितो भवच्छब्दः पूज्यवाचको न सर्वनाम। नातः पुंवद्भावप्रसङ्गः। अत एव अव्युत्पन्नं वा प्रातिपदिकं भवत्वित्युकारान्तवदिति मतुप्सूत्रे न्यास इत्युज्ज्वलदत्तः॥ इति—तन्न. उज्ज्वलदत्तेन सर्वनाम्न एव भवच्छब्दस्य भातेर्डवतुपा निष्पादितत्वेन उज्ज्वलदत्तग्रन्थोदाहरणस्य स्वविवक्षितप्रतिकूलत्वात्। 'भातेर्डवतुप्। भा दीप्तौ। अतो डवतुप्। भवान्। सर्वनाम। भवतष्ठक्छसौ भावत्को भवदीयः। अव्युत्पन्नं वा प्रातिपदिकं भवत्वित्युकारान्तवदिति मतुप्सूत्रे न्यासः' इति हि उज्ज्वलदत्तग्रन्थः। न्यासकृताऽपि—उणादीनां व्युत्पन्नत्वपक्षे सर्वनाम्नो भवच्छब्दस्य भातेर्डवतुपा निष्पत्तिमभिधाय उणादीनामप्युत्पत्तिपक्षे सर्वनाम्न एव भवच्छब्दस्य अव्युत्पन्नप्रातिपदिकत्वमभिहितमतो न्यासोक्तिरपि सर्वनामातिरिक्तभवच्छब्दसाधनाय नालमिति बोध्यम्॥ न खलु भातेर्डवतुप्प्रत्ययेन भवच्छब्दनिष्पत्तिमभ्युगच्छता कस्याचिदप्यव्युत्पन्नप्रातिपदिकस्याभ्युपगमश्शक्यः कर्तुं, भातेर्डवतुबिति शाकटायनसूत्रमभ्युपगच्छतः शाकटायनानुसारिणः सर्वप्रातिपदिकव्युत्पत्तिपक्षस्यैवाभिमतत्वात्। पाणिनेर्हि भगवत

किं नु नाम मम वा तादृशं भाग्यं, याऽहं 'कीदृशं तु मया पापं पुरा जन्मान्तरे कृतम् । येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ॥ एषाऽल्पपुण्या कृपणा विनशिष्याम्यनाथवत् । समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ अहं तु राम त्वयि जा-

उणाद्यव्युत्पत्तिपक्ष एवाभिमतः । न चेमौ व्युत्पत्त्यव्युत्पत्तिपक्षौ लक्ष्यभेदाद्व्यवस्थितौ । पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति सिद्धान्तात् । स्पष्टं चेदं शब्देन्दुशेखरे । तस्मात् उणादिव्युत्पत्तिपक्ष एव भवच्छब्दः व्युत्पन्न एव द्विविधः भातेर्डवतुपा व्युत्पन्न एकः असर्वनाम । हे भवन्नित्यादिसंबुद्ध्याद्यनुसारात् । अन्यश्च प्रकारान्तरेण व्युत्पादितस्सर्वनाम इत्यङ्गीकार्यम् । तथाच असर्वनामभवच्छब्दमादाय पुंवद्भावघटितप्रयोगोपपत्तिः । सर्वनामभवच्छब्दमादाय पुंवद्भावाघटितप्रयोगोपपत्तिरित्येव वक्तव्यं व्युत्पत्तिपक्षमाश्रितवद्भिः । अयमेव च पक्षः अन्ये त्वित्यादिना रसास्वादिन्यामाचार्यैः प्रदर्शितः । तदभिप्रायमजानतां तु विविधाः प्रमादा एवं तत्सङ्ग्रहधुरीणानामिति विभावनीयम् ॥ यदपि—यद्वा—सर्वनाम्नो वृत्तिमात्र इतीष्टेरनित्यत्वमाश्रित्य पुंवद्भावानादरः जामाता दयितस्तवेति भवतीसंबन्धदृष्ट्येति भट्टपराशरसूक्त्यनुरोधेन इति—तदपि न—इष्ट्यनित्यत्वाश्रयणे वा पुंवद्भावानादरे वा भट्टपराशरसूक्त्यनुरोधस्याहेतुत्वात् । मुनित्रयवचनस्य हि तत्र हेतुत्वं नाधुनिकप्रयोगस्येति । सूक्तिरपि चेयं भट्टपराशराणां प्रथमपक्षोपपादितडवत्वन्तभवच्छब्देनापि सिद्धा नैतत्पक्षस्यैकान्तिकं साधकमिति विभावनीयम् ॥ यदपि अत एव—' अन्यासंभोगचिह्नैस्तु कुपिता खण्डिता मता । ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता ॥ इत्यादिकं सङ्गच्छते' इत्युपष्टम्भकान्तरप्रदर्शनम्—तन्न. अत्र ' अन्यस्यामासमन्ताद्भोगः अन्यस्यामासमन्तात्सङ्गः इत्याङ्प्रश्लेषेणाप्युपपत्तेरुपष्टम्भासङ्गतेः । रसास्वादिन्युदाहृतास्तु प्रयोगा नैवमन्यथासिद्धा इति विभावनीयम् ॥ ३१ ॥

तकामा चिरं विनाशाय निबद्धभावा। मोघं चरित्वाऽथ तपो व्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्या' इति मन्दभाग्यतया शोचाम्यनुपदमपीत्यत्राह—कल्याणीमिति—कल्याणीं शुभां अस्पृष्टाभद्रगन्धतया अनुपाधिककल्याणशीलायास्तव तादृशभाग्यवत्तायां न कश्चिदपि सन्देग्धीति भावः। अत एव 'अथ वा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा। न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते' इत्यादावभद्रगन्धसंबन्धवैधुर्यमभिसन्धायास्याः कल्याणीति निर्देशः कृतः। कल्याणशब्दस्य बह्वादिषु पाठात् ङीष्। त्वां कुशलं क्षेमं अनुयुङ्क्ते पृच्छति 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यत्र 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' इति वार्तिकादनुपूर्वकाद्युजेर्नित्यमात्मनेपदं दुह्यादिषु पृच्छतेः परिगणनात् द्विकर्मकत्वं न चात्र पृच्छतेरदर्शनात्कथं द्विकर्मकतेति शङ्क्यं 'अहमपीदं चोद्यं चोद्य' इति तद्राजसूत्रभाष्ये पृच्छतिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनेनार्थनिबन्धनत्वात्संज्ञायाः कथं ममेदृशं कल्याणत्वं निश्चीयत इत्यत्राह। येष्विति—भुवने जगति येषु लक्षणेषु सत्सु श्रेयः श्वश्रेयसं कल्याणमित्यर्थः भवति। तानि लक्षणानि—'भृङ्गार्वासनवाजिकुञ्जररथश्रीवत्सचापेषुभिर्मालाकुण्डलचामराङ्कुशयवैश्शैलैर्ध्वजैस्तोमरैः। मत्स्यस्वस्तिकवेदिकाव्यजनकैश्शङ्खातपत्राम्बुजैः पादे पाणितले नरा नृपतितां यान्ति स्त्रियो राज्ञिताम्' इति नारदीयाद्युक्तानि रेखादिशुभव्यञ्जनानि, तान्यपि न कतिपयान्येवेत्यभिप्रायेण विशिनष्टि। सर्वाणीति—सामुद्रिकादिशा-

स्त्रोक्तानि कृत्स्नान्यपीत्यर्थः । सर्वाणि लक्षणानीत्यन्वयः । लक्ष्म्याः देव्याः तव च । यद्वा--लक्ष्म्याः देव्याः साम्राज्याभिषेकार्हायाः तव च आमनन्ति युवयोरेव सन्तीति पौनःपुन्येन वदन्तीत्यर्थः । न हि युवाभ्यामन्यस्या एवंजातीयकलक्षणवत्ता सुलभेति भावः । आङ्-पूर्वकात् 'म्रा अभ्यासे' इत्यस्माद्भौवादिकाद्धातोर्लटि शपि 'पाघ्रा-ध्मास्थाम्ना' इत्यादिना मनादेशः । तान्यपि किं पामरा आमनन्ति येनाज्ञाततत्त्वतया वस्तुसत्तायां सन्दिह्योरन्नित्यत आह—सन्त इति । लक्षणादिसर्वशास्त्राभिज्ञा विपश्चित इत्यर्थः । यथोच्यते सी-तया देव्यैव नागास्त्रबन्धावसरे—'इमानि खलु पद्मानि पादयोर्यैः किल स्त्रियः । आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिस्सह ॥ वै-धव्यं यान्ति यैर्नार्यो लक्षणैर्भाग्यदुर्लभाः । नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ केशास्सूक्ष्मास्समा नीला भ्रुवौ चासङ्गते मम । वृत्ते चारोमशे जङ्घे दन्ताश्चाविरळा मम ॥ शङ्खे नेत्रे करौ पादौ गुल्फावूरू च मे चितौ । अनुवृत्तनखास्स्निग्धास्स-माश्चाङ्गुळयो मम ॥ स्तनौ चाविरळौ पीनौ ममेमौ मग्नचूचुकौ । मग्ना चोत्सङ्गिनी नाभिः पार्श्वोरस्काश्च मे चिताः ॥ मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च । प्रतिष्ठितां द्वादशभिर्मामूचुश्शुभल-क्षणाम् ॥ समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् । मन्दस्मिते-त्येव च मां कन्यालक्षणिनो विदुः ॥ आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह । कृतान्तकुशलैरुक्तः' इति । अतो भवत्याः कल्याणत्वं निष्प्रत्यूहमिति भावः । सद्भिराम्नातत्वान्नेदमसत्यं भवि-

तुमर्हतीति भावः। यथोच्यते 'न सन्तोऽनृतवादिनः' इति। अत्र कल्याणीमिति विशेषणस्य महाभाग्यवत्ताभिप्रायगर्भत्वात्परिकरः, तादृशकल्याणत्वस्य येषु श्रेयो भवतीत्यादिसदाम्नानरूपप्रमाणोपन्यासलक्षणशब्दप्रमाणालङ्कारगर्भितपश्चार्धवाक्यार्थेन समर्थनात्काव्यलिङ्गं, लक्ष्म्या देव्यास्तव च तानि लक्षणान्यामनन्तीति सीताया गुणोत्कृष्टया लक्ष्म्या समीकृत्य वर्णनात्तुल्ययोगिताभेदः 'गुणोत्कृष्टैस्समीकृत्य वचोऽन्या तुल्ययोगिता' इति लक्षणात्। इयं काव्यादर्शदर्शिता तुल्ययोगिता, इमां तुल्ययोगितां सिद्धिरिति केचिद्व्यवाहार्षुः। यदाह जयदेवः—'सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये। युवामेव हि विख्यातौ त्वं बलैर्जलधिर्जलैः' इति। मतान्तरे त्वत्र वर्ण्यावर्ण्ययोस्सीतालक्ष्म्योर्लक्षणवत्तारूपधर्मैक्यवर्णनाद्दीपकमेव। 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः' इति लक्षणात्, उक्तया तुल्ययोगितया तृतीयसदृशव्यवच्छेदफलकोपमेयोपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। 'पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता' इति तल्लक्षणम्। अत्र लक्ष्मीसीतयोरवतारभेदात्साम्योपपत्तिः 'विष्णुना सदृशो वीर्ये' इत्यादिवत्। नन्वत्र भवतीभागधेयेनेत्यत्र भवतीशब्दस्य सर्वनामतया समासवृत्तौ 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्ट्या पुंवत्त्वेन भवितव्यमिति चेन्न, तस्या अनित्यत्वात्, तथाहि—सा हि 'दक्षिणोत्तराभ्यामतसुच्' इति सूत्रे भाष्ये, अतसुचः स्थाने तसुजेवोच्यतां लाघवादित्याशङ्क्य समाधानावसरे लिङ्गविशिष्टपरिभाषया

दक्षिणोत्तराशब्दाभ्यां स्त्रीलिङ्गाभ्यामतसुचि 'यचि भं' इति भसंज्ञायां 'यस्येति च' इत्याकारलोपे दक्षिणत उत्तरत इत्यभीष्टरूपसिद्धिः, तसुचि क्रियमाणे तु भसंज्ञाभावप्रयुक्तावर्णलोपायोगाद्दक्षिणात उत्तरात इत्यनिष्टरूपं स्यात् अतोऽतसुजेव यथासूत्रमस्त्वित्यभिधाय तसुचि क्रियमाणेऽपि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावादिष्टसिद्धिरिति भाषिता । तस्याश्च प्रयोजनानि सर्वमयः, सर्वकाम्यति, सर्वकभार्यः, सर्वप्रियः इत्यादीनि। पूर्वस्यैवेदं 'भस्त्रैषाद्धा' इति लिङ्गात्, तेनाकच्येकशेषवृत्तौ च न सर्विका सर्वा इति। इयं चेष्टिरनित्या 'भवतष्ठक्छसोः' इति विहितठगादिविषये भवत्याश्छात्राः भावत्का भवदीया इत्यत्र पुंवद्भावाय 'तसिलादिष्वा कृत्वसुच' इति सूत्रे 'ठक्छसोश्च' इति वार्तिकारम्भात्तस्य चानया भाष्यकारैरप्रत्याख्यानात्, इष्टेरेव नित्यताभिसन्धौ त्ववश्यमिदं प्रत्याख्यायेत अत एव दक्षिणापश्चात्सूत्रशेखरे 'आजन्तं' इति मूलप्रतीकमादाय "अव्ययसाहचर्यात् न तु टाबन्तो दक्षिणाशब्द इति भावः । अत एव दाक्षिणात्य इत्यत्र न पुंवत्त्वं, केचित्तु—'ठक्छसोश्च' इति वार्तिकारम्भेण भाष्यकृता सर्वनाम्न इतीष्ट्या तदप्रत्याख्यानेन चेष्टेरनित्यत्वादनव्ययस्य ग्रहणेऽपि न दोषः, अत एवानव्ययात्प्रत्ययान्तरेण रूपान्तरं नेत्याहुः" इति निरूपितं च संगच्छते। एतेन "एतद्वार्तिकं, एकतद्धिते च इति सूत्रं च न कर्तव्यं 'सर्वनाम्नो वृत्तिमात्रे' इति भाष्यकारेष्ट्या गतार्थत्वात्" इति कौमुदीग्रन्थपरि-

शीलनेन 'भवतीपादलाक्षारसाङ्कं' इत्याद्याचार्यपादप्रयोगेषु पुंवद्भावाभावादसाधुतां मन्यमाना अनादरणीयाः। अन्ये तु—'भातेर्ड वतुः' इति शाकटायनसूत्रव्युत्पादितो भवच्छब्दो न सर्वनामगणान्तर्गतः। न च तत्र गणे पठितस्य भवतु इत्युगन्तप्रातिपदिकस्य त्यदाद्यन्तर्गतस्य विशेषाभावाड्डवत्वन्तेनाभेद इति वाच्यं, तादृशप्रबलतरप्रमाणानुपलम्भाद्विशेषसद्भावाच्च। सर्वनामसंज्ञकभवच्छब्दो हि संबोध्यचेतनैकान्तवृत्तिर्न संबोधनविभक्त्यर्हः, न हि तस्य हे भवन्निति संबोधनं क्वचित्केनचिद्दृष्टमिष्टं वा कस्यचित्। अत एव 'त्यदादीनां संबोधनं नास्तीत्युत्सर्गः' इति प्राचां प्रवादोऽपि संगच्छते। ननूत्सर्गत्वादेव क्वचित्संबोधनसद्भावोऽवगम्यते, अत एव भाष्ये हे स इति तच्छब्दात्संबोधनप्रथमोदाहृतेति चेत् सत्यं, यद्यपि भाष्ये तच्छब्दात्संबोधनविभक्तिरुदाहृता तथाऽपि संबोध्यार्थकभवच्छब्दाद्युष्मच्छब्दादिव संबोधननिषेधरूपोत्सर्गप्रवृत्तिर्न विहन्यते। डवत्वन्तभवच्छब्दस्तु भासमानार्थकस्संबोधनविभक्त्यर्ह एव। अत एव 'परस्य पत्नी या स्त्री स्यादसंबन्धा च योनितः। तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च॥ कृतदारोऽस्मि भवति भार्येयं दयिता मम, भवति भवत्वसुहृज्जनस्स कामः, भवति मा विषीद सर्वं भद्रं भविष्यति, भवति भिक्षां देहि' इत्यादिमनुवाल्मीकिमाघमुरारिमिश्रादिसंबुद्ध्यन्तभवतीशब्दप्रयोगाः प्रामाणिकास्सङ्गच्छन्ते। अत एव भवतीत्यस्य सुभगे इति व्याचख्युर्मल्लिनाथादयः। किञ्च—भगवच्छब्दवड्डवत्वन्तो भवच्छब्दः पूज्यवाचकोऽपि दृश्यते 'अवाच्यो

दीक्षितो नाम्ना यवीयानपि यो भवेत् । भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित्' इति मनुना भोभवदन्यतरशब्देन पूज्यतमदीक्षिताभिभाषणस्य स्मरणात् । अत एव हि श्रुत्यादौ पूज्यताभिधायिभगवच्छब्दस्थाने भोश्शब्दप्रयोगश्च संगच्छते तथाहि—'अधीहि भगव इति होपससाद, अधीहि भगवो ब्रह्मेति' इत्यादौ श्रुतौ दृष्टस्य भगवत्पदस्य स्थाने 'अधीहि भो इत्युपसीदेत्, अधीहि भो आमन्त्रयेत गुरुं' इत्यादिसौत्रप्रयोगात्तयोः पर्यायत्वमवसीयते । भोश्शब्दश्च भवच्छब्दसमानार्थक एव 'विभाषा भवद्भगवदघवतामोच्चावस्य' इति वार्तिकेन तस्य भवच्छब्दनिष्पन्नत्वात् । अस्मिन्नेव काव्ये आचार्यैः 'भवतामाधिराज्याभिषेकात्' इति भवच्छब्दः पूज्यार्थकतया प्रयुक्तोऽग्रे । तस्मात् स भवांस्तत्रभवांस्ततोभवानित्यादिप्रसिद्धार्थकतच्छब्दसमभिव्याहृतभवच्छब्दवत्केवलभवच्छब्दोऽपि पूज्यवाचकोऽस्त्येवेति ध्येयम् । एवंच तादृशभवच्छब्दप्रकृतिकस्य ङ्यन्तस्य सर्वनामत्वाभावेन पुंवद्भावप्रसङ्ग एव नास्तीत्यपि वक्तुं शक्यमित्याहुः । 'देवः प्रमणं, यदाज्ञापयन्त्यार्यमिश्राः, यदभिरुचितं ताताय, भगवन्तावग्रे वदतां, भगवांस्त्वेवमेतद्ब्रवीतु' इत्यादाविव गौरवातिशयद्योतनाय समक्षमेवानामन्त्रणनिर्देश इति द्रष्टव्यम् । एतेनैव 'भवतीशेखरितं, भवत्यधीनैः, एकोऽहं भवतीसुतक्षयकरः, भवतीकचमण्डलेन, भवतीस्मितचन्द्रिकारमे' इत्यादयोऽपि व्याख्याताः 'पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति,

भवद्भिर्व्यापाङ्गलवस्य वर्णनविधौ' इत्यादिपुंवद्भावघटिताः प्रयोगा अप्युदाहृतभाष्यकारेष्टेरनित्यतयैव सिध्यन्तीत्यन्यत्र विस्तरः ॥३१॥

अथ संदेशकथनं प्रस्तुहीत्याह—

**यस्या यस्मिन्व्यवधिरभवद्भूषणालेपनादिः**
**नीतामेनां नियतिविभवादन्तरीपं दवीयः ।**
**प्रत्यासीदन्निव नयनयोर्वर्त्मनि स्थापयित्वा**
**स त्वामेवं वदति कुशली देवि सख्या मुखेन ॥**

हे देवि! यस्याः सीतायास्तव यस्मिन् श्रीरामचन्द्रे मयि विषये भूषणालेपनादिः हाराद्याभरणाङ्गरागादिकोद्दीपनसामग्रीविशेषोऽपि आदिशब्दात्पटवासकसौरभादेर्ग्रहणं। व्यवधीयतेऽनेनेति व्यवधिः व्यपूर्वकाद्दधातेः 'उपसर्गे घोः किः' इति करणे किप्रत्ययः। व्यवधायक इत्यर्थः। अभवत् आसीत् निरन्तरसर्वावयवसंस्पर्शसुखसौभाग्यसर्वस्वसंरोधविविघ्नतया सुसूक्ष्ममपि व्यवधानं दुस्सहमासीदिति भावः। केचित्तु—भूषणालेपनादिरित्यत्र 'आदिशब्दाद्वस्त्रधारणमपि संगृह्णाति' इति व्याचख्युः। तन्नातीव हृद्यं। उत्तरोत्तरं व्यवधायकसौक्ष्म्यविवक्षयैवादौ स्थूलस्य भूषणस्य ततस्तदपेक्षया सूक्ष्मस्याङ्गरागस्योपादानाल्लिङ्गात्ततोऽपि सूक्ष्मस्य सौरभस्यैवात्र व्यवधायकस्य विवक्षितुमुचितत्वेनाङ्गरागात् स्थवीयसो वस्त्रस्यादिशब्देन ग्रहीतुमयुक्तत्वात्। अङ्गरागसौरभस्य व्यवधायकत्वं च 'अलकामोदोऽपि भारायते' इतिवदतिशयोक्त्यवलम्बनमिति ध्येयम्। एनां एवं-

भूतां तामित्यर्थः। नियम्यतेऽनयेति नियतिर्दैवं तच्च 'न दैवं केशवात्परं' इत्युक्तस्सर्वेश्वर एव, तस्याः विभवात् 'नियतिः कारणं लोके नियतिः कर्मसाधनम्। नियतिस्सर्वभूतानां नियोगेष्विह कारणं' इत्युक्तादपर्यनुयोज्यात्स्वातन्त्र्याद्धेतोरित्यर्थः। रक्षसेति कर्तृपदमध्याहार्यम्। अतिशयेन दूरं दवीयः, गिरितरुसरिच्छतपारावारान्तरिततया द्रष्टुं गन्तुं वा अशक्यमिति भावः। दूरशब्दादीयसुनि, 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' इति यणादिपरलोपे पूर्वस्य गुणे अवादेशः, 'दवीयश्च दविष्ठं च सुदूरे' इत्यमरः। अन्तर्गता आपोऽस्मिन्नित्यन्तरीपं द्वीपमित्यर्थः। 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटं' इत्यमरः। ऋक्पूरब्धूःपथां' इति समासान्ते अप्रत्यये, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यन्तरशब्दात्परीभूतापशब्दाद्यवयवाकारस्य ईदादेशः। नीतां प्रापिताम्। नीतामेनामित्येव पाठस्सार्वत्रिकः, नीतामेवं नियतिविभवादिति तु क्वाचित्कः, तदा एवं नियतिविभवादिति योजना, एवमित्यनेन नियतिविभवस्य परिच्छिद्य वर्णयितुमशक्यत्वं द्योत्यते। यद्यप्यस्मिन् पाठेऽपि नार्थानुपपत्तिः। तथाऽपि पूर्ववाक्यनिर्दिष्टयच्छब्दप्रतिनिर्देशकतदेतदादिशब्दाभावेनाविमृष्टविधेयांशदोषस्तु प्रसजत्येव। तत्प्रपञ्चस्तु—'सा ते यावन्नयनपदवीं' इतिश्लोकव्याख्यानावसरे कृतोऽस्माभिः। तस्मात्प्राथमिकपाठ एव स्वच्छ इति वेदितव्यम्। अनेन च संदर्भेण 'हारोऽपि नार्पितः कण्ठे स्पर्शसंरोधभीरुणा। आवयोरन्तरे जाताः पर्वतास्सरितो द्रुमाः' इत्येतत् स्मार्यते। त्वां स रामः

कुशली सन्, अनेन पूर्वश्लोके अनघशब्देन सूचितं कुशलित्वं कण्ठतः प्रकाशितं। [1]प्रत्यासीदन्निव सन्निकर्षं प्राप्नुवन्निवेत्युत्प्रेक्षा। प्रत्याङ्पूर्वकात्सदेश्शतरि 'पाघ्राध्मा' इत्यादिना सीदादेशः। नयनयोः लोचनयोः वर्त्मनि अध्वनि स्थापयित्वा अनवरतभावनावशाल्लोचनगोचरीकृत्येवेति भावः। सख्या सुहृदा मया मुखेन द्वारेणेति व्यस्तरूपकं, सखिरूपमुखेनेत्यर्थः। एवं वक्ष्यमाणप्रकारेण, वदति ब्रवीति 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट्, अत्रोपपादितानामलंकाराणां संसृष्टिः, दवीयोऽन्तरीपं नीतामित्यत्र—

[1] प्रत्यासीदन्निव सन्निकर्षं प्राप्नुवन्निवेत्युत्प्रेक्षा इति रसास्वादिनी ॥ यत्तु—प्रत्यासीदन् प्रत्यासन्नो भवन्निव सन्निकर्षं प्राप्नुवन्निव प्रत्यासत्तिमिवेति यावत्। प्रत्यासत्त्यभावे मुखेन वदनस्यासंभवादिति भावः। लक्षणहेत्वोरिति शता। हेतुरत्र फलमिति—तन्न. प्रत्यासत्तिं विना मुखकरणकवदनासंभवस्य स्वयमेवोक्ततया प्रत्यासत्तेस्तादृशवदनं प्रति कारणत्वरूपमेव हेतुत्वमिति 'हेतुरत्र फलम्' इत्युक्तेरयुक्तेः। न च प्रत्यासीदन्नित्यस्य स्थापयित्वेत्यनेनान्वयाङ्गीकारात् स्थापनस्य च प्रत्यासत्त्यर्थत्वात् प्रत्यासत्तुं स्थापयित्वा इत्यर्थात्फलरूपहेतौ शतुर्नानुपपत्तिरिति वाच्यं, एवं सति प्रत्यासीदन्निति प्रथमाया अनुपपत्तेः स्थापनक्रियाकर्तुरनभिधानात्। न च प्रधानभूतवदनक्रियाशक्तेरत्र वदतीत्यनेनाभिधानात् ओदनः पक्त्वा भुज्यते इत्यादिवन्नात्र प्रथमानुपपत्तिरिति वाच्यं, एवं सति प्रत्यासीदन्नित्यस्य प्रधानभूतवदनक्रियासम्बन्धस्यावश्यकतया तत्क्रियां प्रति च प्रत्यासत्तेः कारणतया कारणरूपहेतावेव शतुः प्रवृत्तेः। न खलु एकेनैव शत्रा वदनं प्रति कारणत्वं स्थापनं प्रति फलत्वं चेत्युभयं विवक्षितुं शक्यम् ॥ एतेन—प्रत्यासीदन्निवेति फलोत्प्रेक्षा इत्यप्यसदिति वेदितव्यम्। तस्माद्धेतूत्प्रेक्षैवात्राचार्याभिमता युक्ता इत्यवधेयम् ॥ ३२ ॥

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च। द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः' इति भाषणान्नयतेर्द्विकर्मकत्वम्। तत्र सीतायाः प्राधान्यात्तस्यामेव पूर्वं क्रियाप्रवर्तनादन्तरङ्गत्वाच्च कर्मणि क्तप्रत्ययेन तस्या एवाभिधानं, तथाच भाष्यं—'प्रधानकर्मण्यभिधेये द्विकर्मणां धातूनां कर्मणि लादयो भवन्तीति वक्तव्यं अजां नयति ग्रामं, अजा नीयते ग्रामं, अजा नीता ग्राममिति' इति लादयइत्यत्रादिशब्देन कृत्यक्तखलर्थानां ग्रहणमित्यस्मिन्नेवाश्वासे 'युग्मं नेयैः' इत्यत्र निरूपितं विस्तरेण ॥ ३२ ॥

इतः प्रभृति 'अप्येतत्ते मनसि' इत्यतः प्राक्तनैश्चतुर्दशभिः श्लोकैस्संदेशप्रकारमेव कथयन्नादौ सर्वरात्रान् मयाऽनुभूयमानामवस्थां निवेदयेति संदिशति—

**वेलातीतप्रणयविवशं भावमासेदुषोर्नौ**
**भोगारम्भे क्षणमिव गता पूर्वमालिङ्गनाद्यैः।**
**संप्रत्येषा सुतनु शतशः कल्पनासंगमैस्ते**
**चिन्तादीर्घैरपि शकलिता शर्वरी नापयाति ॥३३॥**

हे सुतनु! शोभनविग्रहे! अनेन संभोगसर्वस्वसौभाग्योद्दीपकयौवनलावण्यसौकुमार्याद्यालम्बनगुणसमृद्धिस्सूचिता, शोभना तनुर्यस्यास्सा सुतनुः ततः 'ऊङुतः' इत्यनेन मनुष्यजातिलक्षणे ऊङि, संबुद्धौ 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः, तथाच वामनः—'मनुष्यजातेर्विवक्षाविवक्षे' इति। 'इतो मनुष्यजातेः, ऊङुतः' इत्यत्र "मनुष्य-

जातेर्विवक्षा अविवक्षा च लक्ष्यानुसारतः' इत्युपक्रम्य 'सुतनु जहिहि कोपं' इत्यत्र मनुष्यजातेर्विवक्षेति सुतनुशब्दात् 'ऊङुतः' इत्यूङि सति ह्रस्वत्वे सुतन्विति सिध्यति" इत्युक्तं तत्सूत्रवृत्तौ तेनैव। यद्वा—शोभना तनूर्यस्या इति बहुव्रीहौ समासान्तविधेरनित्यत्वात् 'नद्यृतश्च' इति कबभावे 'अतिचमु' इत्यादाविव संबुद्धिह्रस्वः 'समासान्तविधिरनित्यः' इति परिभाषायाश्च 'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तत्वायांश्वादिषु राजशब्दपाठो ज्ञापकः, अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन इति स्पष्टं परिभाषेन्दुशेखरे। न च 'गोस्त्रियोरुपसर्जनस्य' इत्युपसर्जनह्रस्वेन भवितव्यमिति भ्रमितव्यं, तनूशब्दस्योणादौ 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यूप्रत्ययान्ततया निष्पन्नत्वेन स्त्रीप्रत्ययान्तत्वाभावात्। या शर्वरी पूर्वं विश्लेषात्प्राक् संश्लेषावस्थायामित्यर्थः। वेलामतीतो वेलातीतः 'द्वितीयाश्रितातीत' इति समासः। उन्मर्याद इत्यर्थः। 'वेला कालमर्यादयोरपि' इत्यमरः। यः प्रणयः 'अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमतः। प्रेमा मानः प्रणयस्स्नेहो रागोऽनुराग इत्युक्ताः' इत्युक्तरतिभावावस्थाविशेषान्तर्गतः कलिकावस्थापन्न इच्छाविशेषः, स च 'स प्रेमा बन्धरहितं यूनोर्यद्भावबन्धनम्। यत्तु प्रेमानुबन्धेन स्वातन्त्र्यं हृदयङ्गमम्॥ बध्नाति भावकौटिल्यं स मान इति नीयते' इति प्रेममानौ लक्षयित्वा 'बाह्यान्तरोपचारैर्यैत्प्रेममानोपकल्पितैः। बध्नाति भावविस्रम्भं सोऽयं प्रणय उच्यते' इति लक्षितः। तस्य च वेलातीतत्वविशेष-

णेन विभावादिसामग्रीसविशेषपरिपोषितत्वद्योतकेन तदनन्तरभाविस्नेहरागानुरागावस्थापरिणामोद्दामत्वं द्योत्यते । तल्लक्षणानि तु ‘ विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । यत्र द्रवत्यन्तरङ्गं स स्नेह इति गीयते ॥ दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते । येन स्नेहप्रकर्षेण स राग इति कथ्यते ॥ राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः । यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ’ इति । तेन प्रणयेन विवशं परवशं परमां काष्ठामश्नुवानं रसत्वेन परिणममानमिति यावत् । भावं शृङ्गाररसस्थायिनं रतिनामानं भावं तदुक्तं—‘ प्रकृष्यमाणो यो भावो रसतां प्रतिपद्यते । स एव भावः स्थायीति भरतादिभिरुच्यते ’ इति । स्थायित्वं च सजातीयविजातीयानवधीरिततया यावदनुभवमवस्थानं, तथा चोक्तं दशरूपके—‘ सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् । यावद्रसं वर्तमानः स्थायीभाव उदाहृतः ’ इति । यावदनुभवमित्यस्य, संस्कारात्मनोऽस्य भावस्य सन्ततचिन्तनादिवशेन प्रबोधादुत्पद्यमानो विजातीयप्रत्ययासंवलितः प्रियतमादिस्मृतिसन्तानो विभावादिमहिम्ना यावत्तन्मयमिव करोति तावदवस्थानमित्यर्थः । तदुक्तं—‘ अवस्थिताश्चिरं चित्ते संबद्धाश्चानुबन्धिभिः । वर्धिता ये रसात्मानस्ते स्मृताः स्थायिनो बुधैः ’ इति । रतिर्नाम संभोगविषयक इच्छाविशेषः तदुक्तं ‘ यूनोरन्योन्यविषया स्थायिनीच्छा रतिर्भवेत् ’ इति अन्योन्यविषया अन्योन्यसंभोगविषयेत्यर्थः । संभोगश्च यूनोरन्योन्यानन्दकरं दर्शनालिङ्गनादिकं कर्म, तदुक्तं भावप्रकाशे ‘ कामो-

पचारस्संभोगः कामः स्त्रीपुंसयोस्सुखम् । सुखमानन्दसंभेदः परस्परविमर्दतः ॥ उपचारस्तदानन्दकारकं कर्म कथ्यते'—इति । तद्विषय इच्छाविशेषः स्पृहाद्यपरपर्यायः प्रमोदात्मा मनोवृत्तिविशेषो रतिरिति निष्कर्षः, तदुक्तं—'संपन्नैश्वर्यसुखयोरशेषगुणयुक्तयोः । नवयौवनयोः श्लाघ्यप्रकृत्योश्श्रेष्ठरूपयोः ॥ नारीपुरुषयोस्तुल्या परस्परविभाविका । स्पृहाह्वया चित्तवृत्ती रतिरित्यभिधीयते' इति । स्पृहालक्षणमपि तत्रैवोक्तं 'आत्मोपभोगकरणं स्पृशन्ती प्रियवर्तना । या जहातितिरान्भोगांत्सा स्पृहेत्यभिधीयते' इतीत्यलं पल्लवितेन । आसेदुषोः आसादितवतोः प्राप्तवतोरित्यर्थः । आसेदुषी चासेदिवांश्चेति विग्रहे 'पुमान् स्त्रिया' इति पुल्लिङ्गैकशेषः । आङ्पूर्वकात्सदेः 'भाषायां सदवसश्रुवः' इति भूतसामान्ये भाषायां लिड्वा, तस्य च नित्यं क्वसुः 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ । नौ त्वं चाहं चावां तयोः आवयोरित्यर्थः 'त्यदादीनां मिथस्सहोक्तौ यत्परं तच्छिष्यते' इति परशेषः 'त्यदादितश्शेषे पुंनपुंसकतो लिङ्गवचनानि' इति पुल्लिङ्गशेषश्च, अत एव आसेदुषोरिति विशेषणं संगच्छते, 'युष्मदस्मदोष्षष्ठीचतुर्थीद्वितीयास्थयोर्वां नावौ' इति नावादेशः । अत्रान्वादेशाविषयत्वेऽपि नावादेशो भवति 'एते वां नावादयोऽनन्वादेशे वा वक्तव्याः' इति वैकल्पिकत्वेनानुशासनात् । भोगस्य संभोगस्य आरम्भे उपक्रम एव आदौ भवं आद्यं दिगादित्वाद्यत् । आलिङ्गनं आद्यं येषां तैः परिरम्भादिसंरम्भैरेवेत्यर्थः । आद्यशब्देन चुम्बननखदन्तक्षतादीनां ग्रहणम् ।

क्षण इव त्रिंशत्कलात्मककाल इव गता 'किमपि किमपि मन्दं-मन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण । अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेव व्यरंसीत्' इत्युक्तरीत्या विरतेति भावः। गतेति कर्तरि प्रत्ययनिर्देशेन स्वयमेव गता न तु बलाद्गमितेति व्यज्यते। 'लघ्वक्षरोच्चारमात्रो निमेषः परिकीर्तितः । अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला। तास्तु त्रिंशत्क्षणः' इत्यमरः । त्रिंशद्घटिकात्मिकाऽपि रात्रिस्त्रिंशत्कलात्मिकेवातिक्षिप्रं प्रभातप्रायाऽऽसीदिति भावः । क्षणमिव गतेत्यपि पाठो दृश्यते । तदा क्षणमित्यत्यन्तसंयोगे द्वितीया। रात्रिः क्षणमात्रकाल इव गतेत्यर्थः । एषा सेयं शर्वरी रात्रिस्संप्रति इदानीं त्वद्विश्लेषदशायामित्यर्थः। चिन्तया 'इष्टानभिगमाद्ध्यानं चिन्ता शून्यत्वतापकृत्' इत्युक्तलक्षणेनाध्यानेन 'स्याच्चिन्ता स्मृतिराध्यानं' इत्यमरः । दीर्घैः आयतैः न त्वल्पकालिकैः 'दीर्घमायतं' इत्यमरः। शतशः अनन्तैरित्यर्थः। 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकं' इति नैघण्टुकाः। अनेकसहस्रवारमावर्तितैरिति यावत्। 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति शस् । ते तव कल्पनासंगमैरपि बुद्धिपरिकल्पितैस्त्वत्संभोगैरपीत्यर्थः । केचित्तु कल्पनासंगमैस्तैरिति पठित्वा 'तैः तादृग्विधैः कल्पनासंगमैः' इति व्याचक्षते। शकलिता खण्डिता सती नापयाति न व्यपैति शकलितेति साक्रोशोक्तिः, अत्र 'विनिद्रस्सततं रामः' इत्येतदनुसन्धेयम्। अपि शकलितेति पाठ एव स्वच्छः अपिशब्दस्याव-

श्यमपेक्षितत्वात् अन्यथा 'दुर्दशां प्रतिपन्नानामस्माकं जीवितं मतम्' इत्यत्रैव 'नोक्तं स्याद्यत्र वक्तव्यं तदाहुर्वाच्यवर्जितम्' इत्युक्तवाच्यवर्जितदोषप्रसङ्गात्। एतेन 'अविशकलितेति पठन्तस्तथैव 'अविशकलिता अशिथिला विघ्नरहिता' इति व्याचक्षाणा उपेक्षणीयाः। संश्लेषावस्थायां बाह्यसंभोगसंभ्रमसमारम्भ एव क्षणमात्रमिव गता रात्रिरधुना त्वद्विश्लेषदशायां तु सहस्रशः कल्पितैरप्यान्तरसंभोगैर्न विश्रान्तिमुपैत्यहो बत सुदुस्सहो विरहवेदनापरिणाम इति भावः। अत्रालिङ्गनाद्यैरित्यनेन कल्पनासंगमैरित्यनेन च 'बाह्यमाभ्यन्तरं चेति द्विविधं रतमुच्यते। तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम्॥ द्वितीयं तु रतं साक्षान्नानाकरणकं मतं' इति वात्स्यायनीयोक्तबाह्याभ्यन्तररतसंग्रहः। आन्तरं त्वत्र मानसमिति विशेषः। [1]अत्र रात्रेः क्षणतुल्यतया गतत्वासबन्धेऽपि तत्सम्बन्धोक्तेस्संबन्धातिशयोक्तिः पूर्वार्धे। उत्तरार्धे तु शर्वर्या अपयान

[1] अत्र रात्रेः क्षणतुल्यतयेत्यादिरतिशयोक्तिवर्णनपरा रसास्वादिनी॥ यत्तु- पूर्वोत्तरयो रात्र्योर्भेदेऽप्यभेदोक्तेरतिशयोक्तिश्चेति तन्न. पदार्थविवरणवेलायां 'या शर्वरी जातावेकवचनम्' इत्येवं शर्वरीपदे जात्येकत्वविवक्षोक्तेस्स्वकीयाया एव विरोधा त्॥ संभोगशृङ्गारो व्यज्यते पूर्वार्धे इत्यादि रसास्वादिनी॥ यत्तु—किमपि किमपि मन्दं मन्दमित्यादाविव अनुभावादिमुखेनैव रसभावप्रत्यायनमुचितं न प्रणयादिपदोपादानेन। तथाऽपि केषाञ्चिदनुभावानां रसान्तरसाधारण्येन झटित्यनुभावप्रतीतिर्न भवेदिति वा उन्मादावस्थस्य रामभद्रस्यायमुक्तिप्रकार इति वा न तदादृतमित्यवगन्तव्यम् इति शङ्कासमाधानयोः करणं तन्न. रसादेः स्वशब्दोपादानस्य प्राधान्येनास्वाद्यतायामेव दोषतायाः

संबन्धेऽपि तदसंबन्धोक्तेरसंबन्धातिशयोक्तिः 'योगेऽप्ययोगोऽसंबन्धातिशयोक्तिरितीष्यते' इति लक्षणात् अनयोस्संसृष्टिः, दयितासंश्लेषावसरेऽत्यन्तसुखहेतोरेव रात्रेस्तद्विश्लेषावसरेऽत्यन्तदुःखहेतुत्वस्यात्र गम्यमानतया व्याघातालङ्कारो व्यज्यत इति संक्षेपः। 'स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्' इति लक्षणात्। अत्र पूर्वानुभूतसीतासंभोगसंततानुस्मरणादनुस्मृतिर्नामावस्था व्यज्यते। 'अर्थानामनुभूतानां देशकालातिवर्तनात्। सातत्येन परामर्शो मानसस्स्यादनुस्मृतिः। तत्रानुभावा निश्वासो ध्यानं कृत्यविहस्तता। शयनासनादिविद्वेष इत्याद्याः स्मरकल्पिताः' इति तल्लक्षणम्। एवं शर्वरी नापयातीत्यनेन जागरावस्था च द्योत्यते। वेलातीतप्रणयविवशामित्यादिना गम्यमानैर्विविक्तदेशनिवासादिभिरुद्दीपनविभावैः भ्रूविक्षेपस्मितादिभिरनुभावैः हर्षादिभिस्संचारिभिश्च सीतारामयो रतिभावः परिपोष्यत इति संभोगशृङ्गारो

---

'गाढोन्मादः प्रणयपदवीम्' इत्यत्रैव प्रागस्माभिरावेदितत्वात्। प्रकृते च पूर्वार्धाभिव्यक्तसंभोगशृङ्गारस्योत्तरार्धाभिव्यक्तविप्रलम्भशृङ्गाराङ्गतयैवास्वाद्यत्वात्तद्दोषशङ्काया एवानुन्मेषात्। वस्तुतस्तु—प्रणयोऽत्र रतिभावावस्थाकलिकारूपो न शृङ्गाररसस्य व्यभिचारिभावः। तल्लक्षणानाक्रान्तत्वात्, निर्वेदादिष्वनन्तःपाताच्च। अतो न व्यभिचारिभावस्य स्वपदेनोपादानप्रयुक्तो दोषः। शृङ्गारादिरसवाचकपदाभावाच्च रसस्य स्वपदोपादानप्रयुक्तोपि न सः प्रणयपदस्य चात्र रतिभावावस्थाविशेषान्तर्गतकलिकावस्थावाचकतायाः रसास्वादिन्यामेवाचार्यैर्विवृततया न रतिपदपर्यायतेति स्थायिभावस्य स्वपदेनोपादानप्रयुक्तोपि दोषो न प्रसरतीति बोध्यम् ॥ ११ ॥

व्यज्यते । पूर्वार्धे स च 'भोगारम्भे क्षणमिव गता शर्वरी' इत्यनेन सर्वोपचारसम्पन्नत्वप्रतीतेस्सम्पन्नतराख्य इति व्यज्यते । तथाच रसार्णवसुधाकरे—'स्पर्शनालिङ्गनादीनामानुकूल्यनिषेवणम् । वटते यत्र यूनोस्स सम्भोगोऽयं चतुर्विधः । संक्षिप्तस्सङ्कीर्णस्सम्पन्नतरस्समृद्धिमानिति ते' इत्युपक्रम्य, संक्षिप्तादिलक्षणान्यभिधाय 'भयव्यळीकस्मरणाद्यभावात्प्राप्तवैभवः । प्रोषितागतयोर्यूनोर्भोगस्सम्पन्न ईरितः' इति सम्पन्नतरभोगलक्षणं दर्शितम् । अयमेव सम्भोगो विस्तृत इत्यप्युच्यते । तथा च साहित्यरत्नाकरकृत् "संक्षिप्तविस्तृतभेदेन सम्भोगं द्विधा विभज्य संक्षिप्तमपि त्रिधा विभज्य विस्तृतोऽपि त्रिविधः, मध्यप्रवासशापानन्तरजभेदादिति विस्तृतमपि त्रिधा विभज्य 'तत्र मध्यजो नाम नवीनविरहमानान्तरजेभ्योऽन्योऽनन्तरकालभावी । यथा—प्रौढालिङ्गनचुम्बनामितसुखप्रच्छन्नवेद्यान्तराः प्रायः क्लृप्तपरस्पराधरसुधापानप्रशान्तश्रमाः । प्रान्ताकूणितलोचनाः प्रतिमुहुः क्षामोक्तिसीत्कारिणोस्सीताराघवयोस्समग्रविभवाश्शृङ्गारलीला बभुः ॥ अयं सर्वोपचारसम्पन्नत्वाद्विस्तृतस्सम्भोगः । अयमेव प्रवासानन्तरं वर्ण्यमानः प्रवासानन्तरजोऽपि भवतीति तस्यापीदमेवोदाहरणम्" इत्यवोचत् । तथाच—'प्रोषितागतयोर्यूनोर्भोगस्सम्पन्न ईरितः' इति रसार्णवसुधाकरोक्तिरुपलक्षणार्थैव । नवीनानन्तरभाविमध्यजसम्भोगस्याप्युक्तरीत्या सम्पन्नतरत्वस्य शपथेनाप्यनिवार्यत्वात् तस्मादत्र भगवता जानकीजानिना स्मर्यमाणो विस्तृतसम्भोगोऽपि मध्यज इति ध्येयम् ।

विस्तरस्त्वन्यत्र । अयं च सम्भोगशृङ्गार उत्तरार्धाभिव्यज्यमानस्य विप्रलम्भशृङ्गारस्याङ्गमिति रसवन्नामापराङ्गव्यङ्ग्यम् ॥ ३३ ॥

अथ सीतावियोगप्रभृत्येतावता समयेन तत्तदृतुषु मयाऽनुभूतामवस्थां तस्यै निवेदयेति सन्दिशन्नादौ तद्विश्लेषारम्भसमनुप्राप्ते शिशिरेऽनुभूतामवस्थां तावदेकेनाह—

**उद्दामैस्ते कुचकलशयोरूष्मभिर्निर्जितेन**
**छिद्रं लब्ध्वा विरहसमये तत्क्षणादुन्नतेन ।**
**कुन्दामोदैस्सुरभितदिशा गन्धवाहेन दैन्यं**
**सम्प्राप्तोऽहं सह सरसिजैस्त्वन्मुखाम्भोजमित्रैः ॥**

[1] दामन् शब्दः 'डाबुभाभ्यामन्यतरस्याम्' इति डापि आकारान्तः स्त्रीलिङ्गः 'न पुंसि दाम सन्दानम्' इत्यमरः । उद्गताः दामायाः उद्दामाः 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । तैस्तथोक्तैः निष्प्रतिबन्धैरित्यर्थः । अतिभूमिभिरिति यावत् । उद्गता दाम्न इति तु न वि-

[1] दामन्शब्दः डापि आकारान्तः स्त्रीलिङ्गः । उद्गता दामाया उद्दामाः । उद्गता दाम्न इति तु न विग्रहः इति रसास्वादिनी ॥ यत्तु—'अच् प्रत्यन्ववपूर्वात्' इत्यत्राजिति योगविभागादुद्गता दाम्न इति विग्रहे समासान्तोऽच्प्रत्यय इति—तन्न. तथा योगविभागस्य भाष्यानारूढतायाः पद्मनाभादिसिद्धेः पृषोदरादितयैव संपाद्यतायाश्च शब्देन्दुशेखर एव व्यक्तत्वात् । न खल्विह सति गत्यन्तरे रसास्वादिनिदर्शिते पृषोदरादित्वकल्पनया साधनं युज्यत इति ॥ ३४ ॥

ग्रहः उक्तरूपासिद्धेः । अत एव 'अत्यङ्कुशमिवोद्दामं, उद्दामेन द्विरदपतिना' इत्यादयः प्रयोगास्सङ्गच्छन्ते । ते तव इदमुत्तरत्र विरहसमये इत्यत्राप्यन्वेति । कुचकलशयोः स्तनकुम्भयोः ऊष्मभिः उष्णैस्सहकारिभूतैः 'ग्रीष्मोष्मबाष्पा ऊष्माणः' इति रत्नमाला । 'कूपोदकं वटच्छाया ताम्बूलं तरुणीस्तनौ । शीतकाले भवेदुष्णमुष्णकाले तु शीतलम्' इत्याभाणकाद्धेमन्तस्येव शिशिरस्यापि शैत्याविशेषात् स्तनकलशयोरूष्मलत्वमिति बोध्यम् । उच्यते च माघेन शिशिरवर्णनावसरे—'शिशिरकालमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः । इति धियाऽस्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान्प्रियाः' इति । निर्जितेन त्वत्संश्लेषदशायां मया निश्शेषं पराभूतेन अत एव ते तव विरहसमये वियोगावसरे छिद्रं लब्ध्वा 'नित्यं छिद्रानुसार्यरेः, विद्याच्छिद्रं परस्य तु' इत्याद्युक्तरीत्या व्यसनेऽवकाशं प्राप्येत्यर्थः । तत्क्षणात् सद्य एव यदा त्वया विश्लिष्टोऽस्मि तदैव न तु छिद्रलाभोत्तरं मात्रयाऽपि विलम्बितं 'अप्रमत्तो भवेद्राजा छिद्रे बलवतो रिपोः' इत्युक्तेः । अन्यथा भूय एवंविधोऽनुकूलस्समयस्तस्य मन्ये दुर्घट इति भावः । उन्नतेन उन्नद्धेन गर्वितेनेत्यर्थः 'अन्येष्वपि च कालेषु यदा पश्येद्ध्रुवं जयम् । तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः' इत्युक्तरीत्या व्यसनिनं मां वीक्ष्य प्रहर्तुमुद्यतेनेति भावः । कुन्दानां विकाराः पुष्पाणि कुन्दानि 'तस्य विकारः' इति विहितस्य वैकारिकाणः 'पुष्पमूलेषु बहुळम्' इत्यत्र बहुळ-

ग्रहणाल्लुक् ‘ द्विहीनं प्रसवे सर्वम् ’ इत्यनुशासनात्क्लीबता। यद्वा— लुपि कृतेऽपि युक्तवद्भावेन क्लीबत्वमेव ‘ माघ्यं कुन्दम् ’ इत्यनुशासनेन कुन्दशब्दस्य क्लीबत्वात् कुन्दानां माघ्यकुसुमानां माघमासविकासित्वान्माघ्यसंज्ञा अत एव ‘अधिलवङ्गममी रजसाऽधिकं मलिनितास्सुमनोदलतालिनः, स्फुटमिति प्रसवेन पुरो हसत्सपदि कुन्दलतादलतालिनः’ इति कुन्दानां शिशिरविकासित्वमभिवर्णितं शिशुपालवधे। आमोदैः अतिनिर्हारिभिः परिमळैः सुरभयः कृताः सुरभिताः दिशो येन तथोक्तेन सुरभिशब्दात्तत्करोतीति णिजन्तात्कर्मणि क्तः ‘सुरभिर्घ्राणतर्पणः इत्यमरः। अनेन मां व्यसनिनं विज्ञाय मदग्रे निरङ्कुशं स्ववैभवं प्रकाशयतेति द्योत्यते। गन्धं वहतीति गन्धवाहः ‘कर्मण्यण्’ तेन शैशिरमारुतेन हेतुभूतेन ‘हेतौ’ इति तृतीया। अनेन निसर्गतोऽपि गर्वितत्वं सूचयता रिपोर्व्यसने तस्य गर्वातिभूमिगमनं कैमुत्येन दृढीकृतं ‘गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः’ इति विश्वः। अहं त्वया विश्लिष्ट इति भावः। तव मुखाम्भोजस्य वदनारविन्दस्य मित्रैः सुहृद्भिः तत्तुल्यैरिति यावत्। सरसिजैः अरविन्दैस्सह दैन्यं ‘न ह्यतो दुष्करतरं लोके किंचन विद्यते। यस्सपत्नश्रियं दीप्तां हीनश्रीः पर्युपासते॥ मरणं शोभनं तस्य इति विद्वज्जना विदुः’ इत्याद्युक्तप्रकारां दीनतां सम्प्राप्तः सम्यक्प्राप्तः दैन्यप्राप्तौ न किञ्चिदपि वैकल्यमिति भावः। यद्वा—प्राप्त इत्यन्तर्भावितण्यर्थः प्रापित इत्यर्थः। अस्मिन्पक्षे गन्धवाहेनेति कर्तरि तृतीयेति ध्येयम्। ‘जराझर्झरितैः पद्मैश्शीर्ण-

केसरकर्णिकैः । नाळशेषैर्हिमध्वस्तैर्न भान्ति कमलाकराः' इत्युक्तरीत्या हेमन्त इव शिशिरेऽपि प्रचुरप्रालेयप्राप्तप्रळयतया पद्मानां तदानीं दैन्यप्राप्तेस्सरसिजैस्सह दैन्यं प्राप्तोऽहमित्युक्तं, त्वत्कुचकुम्भोष्मसमधिगतसाहायकेन मयाऽभिभूतश्शैशिरस्समीरस्त्वद्विश्लेषच्छिद्रलाभेन प्राप्तप्रौढिर्मत्सराऽत्त्वद्वदनारविन्दसुहृद्भिररविन्दैस्सह मां दीनतरं विधत्त इति भावः । अनेन च 'यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरम्' इत्याद्युक्तरीत्या त्वद्वदनारविन्दसन्दर्शनभाग्यवैधुर्येऽपि 'पद्मकोशपलाशानि दृष्ट्वा दृष्टिर्हि मन्यते । सीतायाः नेत्रकोशाभ्यां सदृशानीति लक्ष्मण' इत्युक्ततद्बान्धवारविन्दसन्दर्शनविनोदोऽपि मम दूरितो मारुतेन शैशिरेणेति निर्वेदातिशयो द्योत्यते । अत्र केनचिद्वीरेण ससहायेनासकृत्पूर्वं निर्जितस्य तच्छिद्रावसरे तस्मिन्पराक्रममाणस्य कस्यचिद्विक्रान्तस्य वृत्तान्तः प्रतीयत इति समासोक्तिस्सारूप्यनिबन्धना । त्वन्मुखाम्भोजमित्रैरित्यत्र सरसिजानां प्रसिद्धोपमानभावानामुपमेयत्वकल्पनात्प्रतीपं नामालङ्कारः 'प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम्' इति लक्षणात् । सीताकुचकुम्भोष्मसहायेन रामभद्रेण निर्जितस्य शैशिरगन्धवाहस्य साक्षात्तस्मिन् सीतामुखारविन्दमित्रेषु पद्मेषु च परिभावयितृत्वोक्तेः प्रत्यनीकालङ्कारः । अयं च पूर्वोक्तसमासोक्तिप्रतीपाभ्यां सहसरसिजैरित्युक्तसहोक्त्या चोज्जीव्यत इति सङ्करः । शिशिरमारुतस्य साक्षाद्विपक्षभूतश्रीरामचन्द्रविषयकपराक्रमवर्णनेनैवोक्तालङ्कारस्य निष्प्रत्यूहत्वेऽपि तत्साह्यकारिकुचोष्मसीतामुखारविन्दसुहृद्-

ततया तत्पक्षीभूतेषु सरोजातेषु पराक्रमवर्णनमप्यभ्युच्चय इति ध्येयम्। बलवत्प्रतिपक्षपक्षबाधनमिव साक्षात्प्रतिपक्षबाधनमपि प्रत्यनीकमेव यथोक्तं कुवलयानन्दे—'प्रत्यनीकं बलवतश्शत्रोः पक्षे पराक्रमः' इत्यत्र "एवं बलवति प्रतिपक्षे प्रतिकर्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेन फलति। यथा—'मधुव्रतौघः कुपितस्स्वकीयमधुप्रपापद्मनिमीलनेन। बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के ध्रुवमातनोति" इति। अत एव 'प्रत्यनीकं बलवति शत्रौ तत्पक्षगेऽपि वा। प्रतीपाचरणं प्राहुरलङ्कारविशारदाः' इत्यलङ्कारकौस्तुभकृतां प्रत्यनीकलक्षणं च सङ्गच्छते। केचित्तु—'गन्धवाहेन वायुना त्वन्मुखाम्भोजमित्रैः तव मुखसहचरैः सरसिजैस्सह सरसिजसहायेन वायुना हेतुना धीरोऽप्यहं दैन्यं प्राप्तः' इति सहशब्दस्य हेतुसाहित्यपरतया व्याचक्षते। ततोऽप्युक्तरीत्या कर्तृसाहित्यपरतया कर्मसाहित्यपरतया वा व्याख्यानमेव स्वारसिकम्। सीतामुखारविन्दसुहृदामरविन्दानां श्रीरामचन्द्रदैन्यप्रापणं प्रति गन्धवाहसाह्यकरणवर्णनानौचित्यात्, शिशिरसमयावश्यंभाविना हिमेन विध्वस्तपर्णकर्णिकतया स्वयमेव दीनानां तेषामितरसाह्यकरणासामर्थ्याच्च। ननु नायं शिशिरसमयवर्णनपरः श्लोकः, इह तत्कण्ठोक्त्यभावात् श्रीरामायणे शिशिरऋतोरवर्णनाच्च येन पद्मानां हिमध्वस्ततावश्यंभावेन गन्धवहसाह्यकरणाशक्तता संभाव्येत, किन्तु वसन्तवर्णनपर एव स्यादग्रेतनश्लोके तस्यैव वर्णितत्वाद्वसन्ते च सरसिजा-

नामुल्लासस्य निरर्गळत्वादुक्तरीत्या गन्धवाहसाह्यकरणशक्तेरपि संभवात्, गन्धवाहोऽप्ययं न शैशिरः किंतु वासन्त एव अस्य च हेमन्तादौ सीताकुचकुम्भोष्मसहायेन श्रीरामचन्द्रेण निर्जिततया तद्वैरशुद्धिकृते सीताविरहावसरे बसन्ते तद्दैन्यप्रापणक्षमत्वमपि संभवत्येवेति चेन्न—तथा कण्ठोक्त्यभावेऽपि शिशिरकालभाविकुन्दविकासवर्णनाल्लिङ्गात्तत्कालवर्णनपरत्वस्यैवाभ्युपगन्तव्यत्वात् शैशिरमारुतस्यैव श्रीरामेणोक्तरीत्या पराभूततया तस्यैव तत्प्रतिकर्तृत्वस्य युक्तत्वात् श्रीरामायणे च पञ्चवटीनिवासवर्णनावसरे 'शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तते' इति हेमन्तमभिवर्ण्य तदनन्तरं सीताहरणमभिधाय पम्पादर्शनावसरे वसन्तस्य वर्णितत्वात्तन्मध्यवर्तिनः कालस्य शिशिररूपताया अवर्णितत्वेऽपि तथैव संभावयितुमुचितत्वात्, अत्राप्यग्रिमश्लोकेषु श्रीरामायणानुरोधेन वसन्तवर्षाशरदामेव क्रमेण वर्णितत्वाच्च, श्रीरामायणे हि किष्किन्धाकाण्डे पम्पादर्शनसमये वसन्तः, सुग्रीवाभिषेकान्तरं वर्षाशरदौ च क्रमेण वर्णिताः. ग्रीष्मस्यावर्णनं तु तस्मिन्नाद्यमासे प्रायेण वासन्तचिह्नानुवृत्तेरुत्तरमासे वर्षारम्भाच्चेति ध्येयम् । अत एव श्रीरामायणे वर्षावर्णनावसरे 'निवृत्तकर्मायतनो नूनं संचितसंचयः । आषाढीमभ्युपगतो भरतः कोसलाधिपः' इत्युक्तिश्च संगच्छते । तत्र हि 'आषाढीं आषाढसमाप्तिपौर्णमासीं अभ्युपगतः व्रताङ्गत्वेन स्वीकृतवान् अनेन 'चत्वारो वार्षिका मासाः' इति पूर्वोक्तमासानामाषाढः प्राथमिक इति सूचितमिति, 'प्रवृत्तास्सौम्य चत्वारो

मासा वार्षिकसंज्ञाकाः' इत्यत्रापि वार्षिकसंज्ञकाश्चत्वारो मासा इति, आश्वयुजाषाढाभ्यां चतुष्टं छत्रिन्यायात्' इति च श्रीगोविन्दराजैर्व्याख्यातम् । अत एव च 'आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुम्' इति कालिदासोक्तिश्च संगच्छते—तस्माच्छिशिरसमयवर्णनपर एवायं श्लोक इत्यवधेयम् । ननु च—गोविन्दराजादिभिर्युद्धकाण्डे 'पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः' इति श्लोकव्याख्यावसरे चैत्रमासे सीताहरणमिति निरणायि तत्कथं तदा शिशिरऋतुस्संभवेत्, येनाचार्यैस्तदा शिशिरऋतोर्वर्णनं युज्येत स हि ऋतुः फाल्गुनावधिक एव दृष्ट इति चेत्सत्यं—ऋतवो हि द्विविधाः चान्द्रास्सौराश्च तत्र चैत्रादयश्चान्द्राः 'मधुश्च माधवश्च वासन्तिकावृतू शुक्रश्च शुचिश्च ग्रैष्मावृतू' इत्यादिश्रवणात् । न च तत्रचैत्रादयो नोक्ता इति शङ्कनीयं मध्वादिशब्दानां चैत्रादिपर्यायत्वात् अत एवाहुः 'चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेत्' इत्यादिचैत्राद्यात्मकानां वसन्तादीनां चन्द्रगतिपरिकल्प्यत्वाच्चान्द्रत्वं अत एव होतृमन्त्रेष्वाम्नायते 'चन्द्रमाष्षड्ढोता । स ऋतून्कल्पयाति' इति । सौरेष्वृतुषु तु बोधायनेन—'मीनमेषयोर्मेषवृषभयोर्वा वसन्तः' इत्यभिधानान्मीनादित्वं मेषादित्वं च वैकल्पिकं वसन्तस्याङ्गीकृतम् । तत्र चान्द्ररीत्या चैत्रमासे शिशिरऋतोरसंभवेऽपि क्वचिच्चान्द्रचैत्रान्तेऽपि रवेर्मेषसङ्क्रमप्रवेशदर्शनाच्चैत्रेऽपिशिशिरऋतुस्संभवत्येव । यद्वा—चान्द्र एव मासो दर्शान्तः पौर्णमास्यन्तश्चेति द्वेधा विकल्प्यते । तथाच श्रूयते 'अमावास्यया मा-

सान् सम्पाद्याहरुत्सृजन्त्यमावास्यया हि मासान् संपश्यन्ति पौर्णमास्या मासान् सम्पाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान् संपश्यन्ति ' इति। तत्र फाल्गुन्यनन्तरभाविकृष्णपक्षे सीतापहारस्स्यात् तथा सति मासस्य पूर्णिमान्तत्वपक्षे तस्य पक्षस्य चैत्रत्वं दर्शान्तत्वपक्षे फाल्गुनत्वं च भवत्येवेति तस्य शैशिरत्वे न कश्चिद्विरोध इत्यलं बहुना ॥ ३४ ॥

अथ त्रिभिर्वसन्तकालानुभूतामवस्थां निवेदयेति संदिशति—

**माध्वीदिग्धैर्विरहिवनितास्वादलुब्धैरमोघैः**
**आवृण्वन्तं कुसुमधनुषश्चित्रपुङ्खैर्दिगन्तान् ।**
**सीतापार्श्वे न भवतु भवानित्यवोचद्वसन्तं**
**रामस्त्रासादनमितधनुर्मौळिना संनतेन ॥ ३५**

रामः अयमहमिति भावः। अहमिति निर्देष्टव्ये राम इति पारोक्ष्येण निर्देशो दैन्यातिशयख्यापनाय। यद्वा—रामः ' रामं सत्यपराक्रमं, अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे, जयत्यतिबलो रामः ' इत्यादिभिस्सर्वातिशायिबलपराक्रमत्वेन ' रहस्यं च प्रकाशं च ' इत्याद्युक्तरीत्या सर्ववस्तुतत्त्वसाक्षात्कारधुरन्धरेण भगवता वल्मीकजन्मना महर्षिणाऽनुपदमपि श्लाघित इति भावः। ईदृशस्यापि त्वद्विप्रयोगावसरे लब्धमदनमहावीरसाहायकस्य वसन्तस्याग्रे शौण्डीर्यमकिञ्चित्करमासीदित्यभिप्रयन्नाह—माध्वीत्यादिना। माध्व्या मकरन्देन दिग्धैः उपचितैः लिप्तैरित्यर्थः ' दिग्धं विषा-

क्तबाणे स्याद्दिग्धं लिप्तार्थकेऽन्यवत्' इति विश्वः। कुसुमरूपत्वविवक्षया माध्वीदिग्धैरिति विशेषणं 'दिह उपचये' कर्मणि क्तः 'दादेर्धातोर्घः' इति घत्वे 'झषस्तथोर्धोऽधः' इति धत्वे घस्य जश्त्वेन गः। अनेन सायकानां विषदिग्धत्वं द्योतयता 'न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून्। न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः' इति स्मरणादस्यान्याय्ययुद्धप्रवृत्तत्वं द्योत्यते, तेन दुर्जयत्वमपि ध्वन्यते। विषप्राया हि माध्वी वियोगिनां, अत एव विरहिण्यो दयितविश्लेषदूनाः याः वनिताः अतिमात्रवल्लभानुरक्ताः स्त्रियः 'वनिता जनितात्यर्थानुरागायां च योषिति' इत्यमरः। तासां न तु पुंसाम्। अनेन 'स्त्रियोऽनुकम्प्यास्सधूनां दीना मूढाश्च जन्तवः' इत्यतिमात्रानुकम्पनीयतया स्मृतललनाप्राणापहारैकाग्रतयाऽतिनृशंसत्वं 'स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपातकम्' इत्युक्तोपपातकभूयिष्ठत्वं तेनातितरां संवासानर्हत्वं च द्योत्यते। आस्वादे तत्प्राणानां कबळन इति यावत्, लुब्धैः अभिलाषुकैः 'लुभ गार्ध्ये' कर्तरि क्तः। यद्वा—माध्व्या अमृतवदास्वादनीयेन मकरन्देनैव न तु विषेण दिग्धैः अथापि विरहीणीनां वनितानां आस्वादने लुब्धैः मृगयुतुल्यैः 'लुब्धो मृगयुकाङ्क्षिणोः' इति विश्वः। स्वाद्यतममकरन्दलिप्ततायामेव मृगयव इव हरिणीर्विरहिणीरेव कबळयन्ति किमुत विषदिग्धतायामिति भावः। किममी लक्ष्येषु प्रयुक्ताः क्वचिदपराद्धा अपि भवेयुः येन कतिचिदपि जीवेयुरित्यत आह। अमोघैरिति—मोघा निरर्थका न भवन्तीत्यमोघाः

'मोघं निरर्थकम्' इत्यमरः। 'अमोघास्सूर्यसङ्काशा ममैते निशिताश्शराः' इत्युक्तेभ्यो मद्विशिखेभ्योऽप्यमोघाः कदाचिदपि नाभित्वा लक्ष्यं विनिवर्तन्त इति भावः। तैस्तथोक्तैः बाणानामेवममोघत्वे स कीदृशं धनुर्धारयिता स्यादित्यत आह—कुसुमधनुष इति। 'अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः' इत्याद्युक्तरीत्या सुकुमारशरशरासनाद्यस्त्रसामग्रीसत्तायामेवैवं वियोगिनीप्राणान् कबळयति किमुत तीक्ष्णतरास्त्रसामग्र्यां लब्धायामिति तत्क्रौर्यातिशयो व्यज्यते। कुसुमानि धनुर्यस्य सः कुसुमधनुः तस्य मन्मथस्येत्यर्थः। 'वा संज्ञायाम्' इति धनुश्शब्दान्तबहुव्रीहेरनङो वैकल्पिकत्वेनेह नानङ्। चित्राः पुङ्खाः कर्तर्याख्यमूलप्रदेशाः येषां तैस्तथोक्तैः 'कर्तरी पुङ्खे' इति यादवः। बाणैरित्यर्थः। 'स्थूलक्ष्वेडो विपाठश्च चित्रपुङ्खश्शरस्सरः' इति त्रिकाण्डशेषः। दिगन्तान् हरिदन्तराणि आवृण्वन्तं समन्ततोऽप्याच्छादयन्तं सकलदिगन्तवासिनामप्यतिवेलोद्दीपनमिति यावत्। अनेन वियोगिनीभिः क्वापि जीवितुं दुश्शकमिति द्योत्यते। वसन्तं वसन्तर्तुं त्रासात् पञ्चशरमहावीरसाहायकलब्धनिरङ्कुशतदीयविजृम्भणनिर्वर्णनजनितात्साध्वसादित्यर्थः, अनमितः अनम्रितः धनुः चापो येन स तथोक्तस्सन् 'बलिना विग्रहो राजन्न कदाचित्प्रशस्यते। बलिना विग्रहो यस्य कुतो राज्यं कुतस्सुखम्' इत्यापद्धर्मोक्तरीत्या न क्षमोऽनेन विरोधो बलवता सर्वपथीनोष्मायितेनेत्यनारोपितकार्मुक एवेति भावः। अत्र धनुरित्युदन्तः पुल्लिङ्गः 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः'

इति धनेशशब्दार्थकादौणादिक उप्रत्ययः, न तु 'अर्तिपॄवपि' इत्यादिना विहित उस्, तथा सति सान्तक्लीबता स्यात्। अत एव 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' इत्यादयष्टीकासर्वस्वाद्युदाहृताः, 'अवष्टब्धधनुं रामम्' इत्यादयश्च प्रयोगास्सङ्गच्छन्ते। उदन्तोऽप्ययमिति सुधायामप्युक्तं, अन्यथा असंज्ञायां 'धनुषश्च' इत्यनङ्स्समासान्तस्यावश्यंभावादनमितधन्वेति वक्तव्यं स्यात्। सूत्रितं च वामनेन 'न धृतधनुषीत्यसंज्ञायाम्' इति समासान्तविधेरनित्यताश्रयणेन निर्वाहस्तु संभवन्त्यामप्यन्यथैव स्वारसिकोपपत्तौ न युक्तः। न केवलं प्रतियोद्धुमनीशतया कार्मुकमनमितवान् किंतु तं शरणं गन्तुं शिरो नमितवांश्चेत्याह—मौळिनेति। संनतेन सम्यङ्नतेन 'शिरसा चावनिं स्पृशन्' इत्याद्युक्तप्रकारेण यथावन्नम्रेण न तु यथा कथंचिन्नमितेनेति भावः। मौळिना शिरसा 'मुण्डोत्तमाङ्गमस्तकमौळिशिरश्शीर्षमूर्धकानि स्युः' इति हलायुधः। पुंस्त्वं चास्य 'मौळिः किरीटे धम्मिल्ले चूडायामनपुंसकम्, मौळिस्संयतकेशेषु चूडायां मकुटे द्वयोः' इति मेदिनिरत्नमालादिष्वनुशिष्टम्। उपलक्षित इतिशेषः। 'सारासारं बलं वीर्यमात्मनो द्विषतश्च यः। जानन्विचरति प्राज्ञो न स याति पराभवम्॥ एवमेव यदा विद्वान्मन्यतेऽतिबलं रिपुम्। संश्रयेद्वैतसीं वृत्तिमेतत्प्रज्ञानलक्षणम्' इति श्रीभारतोक्तरीत्या वैतसीं वृत्तिमश्रित्यावनतशिरा इति भावः। वैतसी वृत्तिश्च तत्रैव महाभारते शान्तिपर्वणि सरित्सागरसंवादे—'समूलशाखान्पश्यामि निहतान्कायिनो द्रुमान्। युष्माभिरिह पूर्णाभिर्नद्यस्तत्र न वेतसम्।

अकायश्चाल्पसारश्च वेतसः कुलजश्च वः । अवज्ञया वा नानीतः किञ्च वा तेन वः कृतम् ॥ तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम् । यथा चेमानि कूलानि हित्वा नायाति वेतसः' । इति सागरेण पृष्टे गङ्गयोच्यते—'तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः । ते त्यजन्ति ततः स्थानं प्रातिलोम्यान्न वेतसः ॥ वेतसो वेगमायान्तं दृष्ट्वा नमति नापरे । सरिद्वेगेऽभ्यतिक्रान्ते स्थानमासाद्य तिष्ठति ॥ कालज्ञस्समयज्ञश्च सदावश्यश्च नोद्धतः । अनुलोमस्सदाऽस्तब्धस्तेन नाभ्येति वेतसः ॥ मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च । ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम्' इति । भवान् एवं वियोगिनीवधैकतानविषमायुधदत्तसाह्यो भवान् सीतायः विरहदीनाया इति भावः । पार्श्वे अभ्यर्णप्रदेशे न भवतु न स्थितिमुपैतु मत्पार्श्वे भवसि चेद्भव, न तु सीतापार्श्वं प्राप्नुहीति भावः । प्रार्थनायां लोट् । इति एवंप्रकारेण अवोचत् अवादीत् 'ब्रूञ् व्यक्तायां वाचि' अस्मादादादिकाल्लुङि 'अस्यति वक्ति' इत्यादिना च्लेरङि आर्धधातुकाधिकारस्थेन 'ब्रुवो वचिः' इत्यनेन वच्यादेशे 'वच उम्' इत्युम् । यदि सीतापार्श्वेऽपि भवेद्भवांस्तदा 'वसन्तो यदि तत्रापि यत्र मे वसति प्रिया । नूनं परवशा सीता साऽपि शोचत्यहं यथा ॥ श्यामा पद्मपलाशाक्षी मृदुपूर्वाभिभाषिणी । नूनं वसन्तमासाद्य परित्यक्ष्यति जीवितम्' इत्युक्तरीत्या शोचन्ती जीवितुमपि न शक्नुयात्, अतो मम दयमानमनास्त्वमेतावदुपकुरुष्वेति दैन्येनाभ्य-

र्थितवानेव न तु 'मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि। असेव्यस्ससततं चैव निस्तृणद्रुमपल्लवः' इतिवच्छौण्डीर्यगर्विततया चकत्थे, अतो महीयसी कालवैषम्यगतिरिति भावः। [1]अत्र कुसुमकार्मुकसायकैर्दिगन्तावरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। श्रीरामचन्द्रस्य सन्नतमौळितया वसन्तप्रार्थनाऽसम्बन्धेऽपि तत्सम्बन्धोकेरन्याऽप्यतिशयोक्तिः पूर्वोज्जीवितेति सङ्करः॥ विरहिवनितास्वादलुब्धैरित्यत्र लुब्धशब्दस्य मृगयुपरतया व्याख्यानपक्षे रूपकं ताभ्यां संसृष्टमित्यलम्॥ ३९॥

**पार्श्वे लोलैः परभृतकुलै(रवै)र्मुक्तकोलाहलानां**
**मल्लीरेणुस्थगितवपुषां मन्दरं निर्गतानाम्।**
**भीतेनाहं भ्रमरपटलीशङ्कया(ख)सङ्कुलानां**
**मार्गे तिष्ठन्मलयमरुतां वारितो लक्ष्मणेन॥३६**

पार्श्वे पक्षभागे लोलैः चञ्चूर्यमाणैरिति यावत्। परभृतानां कोकिलानां 'वनप्रियः परभृतः कोकिलः' इत्यमरः। कुलैः

[1] अत्र कुसुमकार्मुक—दिगन्तावरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यादि रसास्वादिनी यत्तु—वसन्तप्रार्थनां प्रति त्रासस्यहेतुत्वात्काव्यलिङ्गमिति तन्न. त्रासादिति पञ्चम्या हेतुत्वस्योक्ततया काव्यलिङ्गानवतारात्। न च त्रासादित्यस्यानमितपदार्थेऽनमन एवान्वयो न त्ववोचदित्यत्रेति वाच्यं प्रधानक्रियान्वयस्याभ्यर्हितत्वेन वच्यर्थ एवान्वयस्य युक्तत्वात्। अनमितधनुस्सन् सन्नतेन मौलिना अवोचदिति विशिष्टवच्यर्थे त्रासादित्यस्यान्वये विशेषणघटकयोर्धनुरनमनमौळिसन्नमनयोः विशेष्यभूतवचिक्रियायामिव त्रासहेतुकत्वस्य स्वरसत एव लाभात्॥ ३५॥

यूथैः 'सजातीयैः कुलं यूथम्' इत्यमरः। मुक्ताः विसृष्टाः कोलाहलाः कलकलाः येषु तेषां तथोक्तानां परभृतरवैरिति पाठे लोलैः प्रसृमरैः परभृतरवैः कोकिलरवैः मुक्तकोलाहलानां प्रकाशितपरभृतरुताभिन्नकोलाहलानामित्यर्थः। मल्लीनां विकाराः पुष्पाणि मल्लयः वैकारिकाणः 'पुष्पमूलेषु' इति लुपि युक्तवद्भावः। तासां 'मालतीमल्लिकाषण्डाः करवीराश्च पुष्पिताः' इत्युक्तरीत्या वसन्तसमयविकसितानां मल्लिकानां रेणुभिः परागैः स्तगितानि आच्छादितानि वपूंषि गात्राणि येषां तेषां तथोक्तानां मल्लिकाकुसुमधूळिधूसराणामित्यर्थः। भ्रमरपटली मधुव्रतसंहतिः शृङ्खला निगळ इवेत्युपमितसमासः 'अथ शृङ्खला। अन्दुको निगळोऽस्त्री स्यात्' इत्यमरः। तया सङ्कुलानां संकीर्णानां 'सङ्कीर्णे सङ्कुलाकीर्णे' इत्यमरः। अत एव मन्दरं मन्दं यथा स्यात्तथा 'मन्दरो मन्दरे शैले स्वर्गमन्दारयोरपि। मन्दरो बहुले मन्दे' इति विश्वः। निर्गतानां उदीर्णानां, मलयमरुतां चन्दनाचलमारुतानां, यद्वा—भ्रमरपटलीशृङ्खलाभिः सङ्कुलानां परस्पराहतध्वनीनामिति यावत्। व्याकुलानामिति वा 'अथ सङ्कुलम्। परस्पराहतवचस्युत्कीर्णे व्याकुलेऽपि च' इति रत्नमाला। अन्यत्तुल्यं, अनेन च सन्दर्भेण 'विक्षिपन्विविधाश्शाखा नगानां कुसुमोत्कटाः। मारुतश्चलितस्थानैष्षट्पदैरनुगीयते॥ मत्तकोकिलसन्नादैर्नर्तयन्निव पादपान्। शैलकन्दरनिष्क्रान्तः प्रगीत इव चानिलः' इत्यादिकं स्मार्यते। मार्गे आगमनवर्त्मनि तिष्ठन् विरहवेदनाविहस्तत्वेन इतिकर्तव्याप्रतिपत्तिमूढहृदय-

तथा निवृत्तगतिः स्तब्ध इति भावः । अहं 'मां ह्यद्य मृगशावाक्षी चिन्ताशोकबलात्कृतम् । सन्तापयति सौमित्रे क्रूरश्चैत्रो वनानिलः ॥ जीवेयं खलु सौमित्रे मया सह सुमध्यमा । सेवते यदि वैदेही पम्पायाः पवनं शुभम्' इति वासन्तमारुतावमर्शेन शोचन्निति भावः । भीतेन त्रस्तेन पथिकनिवहप्राणास्वादननिर्दयनिष्ठुरपटीरगिरिविसारिसमीरकिशोरप्रचारगोचरतायां प्रियाविश्लेषविक्लबोऽयं कथं भवेद्वेति सम्भ्रान्तेनेति भावः । लक्ष्मणेन सौमित्रिणा लक्ष्मीरस्यास्तीति लक्ष्मणः पामादिगणपठितेन 'लक्ष्म्या अच्च' इति सूत्रेण मत्वर्थीयो नप्रत्ययः, लक्ष्मीशब्देकारस्यात्वं 'अट्कुप्वाङ्' इति णत्वं च, अनेन 'एकतः क्रतवस्सर्वे समग्रवरदक्षिणाः । प्राणाभयप्रदानस्य कलां नार्हन्ति षोडशीम्' इत्युक्तरीत्या कृच्छ्रदशापन्नजनप्राणरक्षणलक्षणमहाभाग्यवत्ता सूच्यते । तेन च तद्भाग्यविशेषेणैवाहं कथंचिदुत्तीर्णस्तादृशीं विपदं न हि मन्दभाग्यस्य मम तस्यां दशायामन्तरेण तमेनं कश्चिदप्यासीदवलम्बनमिति द्योत्यते वारितः 'संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम' इति तस्मान्मार्गादपसारितः यदि लक्ष्मण एव तदा मां नावारयिष्यन्नाहमजीविष्यमेवेति भावः । अत्र उक्तविधेषु मलयमारुतेषु पार्श्वगामिभिराधोरणैरुपायतः स्ववशीकरणाय निवेद्यमानस्तुतिकोलाहलानां स्वतःकृतबृंहितानां वा धूळिधूसरितसकलावयवानां शृङ्खलासङ्कुलपदानां निरङ्कुशमुज्जिहानानां मदोत्कटतया मन्दगमनानामभिनवगृहीतमहागजानां वृत्तान्तस्सारूप्यात् प्रतियत इती समासोक्तिः भ्रमरपट-

लीशृङ्खलेत्युपमासङ्कीर्णा, भीतेनेति लक्ष्मणविशेषणस्य रामनिवारणहेतुत्वात्काव्यीलिङ्गमुक्तसमासोक्त्या संसृज्यते । 'कोकिलालापमाकन्दमन्दमारुतषट्पदाः' इत्याद्युक्ततटस्थोद्दीपनाविभावपौष्कल्येन चिन्तानिर्वेदादिभिरनुभावैश्च विप्रलम्भशृङ्गारसाम्राज्यं व्यज्यत इति संक्षेपः । अत्र मन्दरमित्यस्य निर्गमनक्रियाविशेषणत्वेन 'सामान्ये नपुंसकम्' इति नपुंसकत्वं 'इदं चानियतलिङ्गविषयं तेनादिं पचतीत्याद्येव, आदिशब्दोहि नित्यं पुमान् आद्यपाकानुकूला क्रियेत्यर्थः । न्यायसिद्धमेतत् । विशेष्यविशेषासन्निधाने लिङ्गसर्वनाम्नो नपुंसकस्य न्याय्यत्वात् लिङ्गसर्वनामनपुंसकमिति दाण्डिनायनेति सूत्रभाष्ये स्फष्टं, अनेनैव क्रियाविशेषणानां नपुंसकत्वे सिद्धे क्रियाविशेषणानां क्लीबत्वं द्वितीयान्तत्वं चेति नापूर्वं, धातूपात्तभावनां प्रति फलांशस्य कर्मतया तत्समानाधिकरणे क्रियाविशेषणे द्वितीयान्तत्वस्यापि सिद्धेः तस्य क्रियाजनकत्वमपि स्वज्ञानद्वारा बोध्यं तद्बुद्ध्या पूर्वमुद्दिश्य क्रियायां प्रवृत्तेः । वाचनिकत्वे तु यत्र धात्वर्थस्य करणत्वेनान्वयस्तत्रापि स्यात् यथा तृप्तिकामः स्तोकेनोदनं पचतीत्यादौ, तृप्तिविषयकामनावत्कर्तृकः स्तोकविक्लित्तिकरणक ओदनकर्मकः पाक इति बोधः तद्विषयकामनावत्कर्तृकत्वेन तस्या उद्देश्यत्वमर्थसिद्धं केषांचित्तृप्त्यादिषु कर्मत्वव्यवहारस्तूद्देश्यत्वसामान्यादिति दिक्' इति प्रकृकसूत्रशब्देन्दुशेखरे स्थितम् ॥ ३६ ॥

**मन्दो वक्ष्ये किमिव जनकं किं नु योगीश्वरो मां**
**इत्येवं मे सुतनु मनसो वर्तयन्ति स्म खेदम् ।**

**रक्ताशोके ज्वलति सविधे लाजवर्षाभिरामैः**
**पुष्पौघैस्त्वत्परिणयदशां व्यञ्जयन्तः करञ्जाः॥३७**

हे सुतनु! यथैतस्य शब्दस्य साधुता स्यात्तथा निरूपितमस्मिन्नेवाश्वासे वेलातीतेति त्रयस्त्रिंशश्लोके विस्तरेण। [1]रक्ते लोहितवर्णे अशोके वञ्जुलकुसुमे 'वञ्जुलोऽशोकः' इत्यमरः। सविधे उपकण्ठे ज्वलति दीप्यमाने सति ज्वलतीति विशेषणादशोकस्याग्नितौल्यं द्योत्यते। लाजानां वर्षाणीव अभिरामैः रमणीयैः पुष्पौघैः कुसुमसमुदयैः अशोकस्तबके निपतद्भिरिति भावः, तव सीतायास्ते परिणयदशां लाजहोमानुबद्धविवाहावस्थां 'तथा परिणयोद्वाहोपयमाः पाणिपीडनम्' इत्यमरः। व्यञ्जयन्तः स्मारयन्त इति यावत्, करञ्जाः चिरबिल्वाख्यास्तरवः 'चिरबिल्वो नक्त-

---

[1] रक्ते लोहितवर्णे अशोके वञ्जुलकुसुमे इति रसास्वादिनी॥ यत्तु—रक्ताशोके रक्तपुष्पे वञ्जुलवृक्षे। रक्ताशोकः पीताशोक इत्यशोकद्वैविध्यं पुष्पेषु रक्तत्वपीतत्वकृतं बोध्यम्। ज्वलति दीप्यमाने सति पुष्पैरिति भावः। ज्वलतीत्युक्तेस्तस्याग्नितुल्यत्वं व्यञ्जितमिति—तन्न. अशोकपदस्य कुसुमपरत्वे तत्र रक्तत्वस्य दीप्तिरूपज्वलनक्रियायाश्च साक्षादेवान्वयसंभवात् तदुपेक्ष्य अशोकपदस्य वृक्षपरतायास्तत्र तयोः पुष्पद्वारकान्वयस्वीकारस्य चायुक्तत्वात्। अशोकस्य भवदुक्तद्वैविध्यासिद्धेश्च। अशोके हि श्वेतो रक्त इति द्वैविध्यं प्रामाणिकम्। यथा मेघसन्देशसञ्जीविन्यां रक्ताशोकश्चलेत्यत्र 'रक्तविशेषणं तस्य स्मरोद्दीपकत्वादुक्तम्। प्रसूनैकरशोकस्तु श्वेतो रक्त इति द्विधा। बहुसिद्धिकरश्श्वेतो रक्तोऽपि स्मरदीपक इत्यशोककल्पे दर्शनात्' इति॥

मालः करजश्च करञ्जके' इत्यमरः। 'चिरबिल्वा मधूकाश्च वञ्जुला वकुलास्तथा। चम्पकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः' इत्यशोकानामिव करञ्जानामपि वसन्ते पुष्पितत्वमुक्तं श्रीरामायणे। मन्दः भाग्यविधुरोऽहं 'मूढाल्पापटुनिर्भाग्या मन्दा' इत्यमरः। कच्चित्कुशलं सीताया इत्यनुयुज्यमान इति भावः। जनकं सीतायाः पितरं मिथिलेश्वरमीदृशस्य मम श्वशुरं किमिव वक्ष्ये, इवशब्दो वाक्यालङ्कारे, किमिति वदिष्यामि जिह्वैव न स्फुरिष्यतीति भावः। ब्रूञो लृटि वच्यादेशः, अत्र 'किं नु वक्ष्यामि राजानं धर्मज्ञं सत्यवादिनम्। सीताया जनकं पृष्टः कुशलं जनसंसदि॥ या मामनुगता मन्दं पित्रा प्रव्राजितं वनम्' इति वसन्तवर्णनावसरे किष्किन्धाकाण्डोक्तं प्रत्यभिज्ञाप्यते। योगीश्वरो जनकः मां त्वामेवं विनाश्यागतमिति भावः। किं नु वक्ष्यत इति पुरुषविपरिणामेन योजना एवं मन्दभाग्याय तुभ्यं दत्ता त्वत्पौरुषसारमसमीक्ष्यैव जाल्मेन मया कन्यामणिः 'किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः। रामजामातरं प्राप्य स्त्रियं पुरुषविग्रहम्' इति सीतयोदीरितं मन्ये सत्यमेवेति किं सोपालम्भं वक्ष्यते, इत्येवमित्यनतिरिक्तार्थको निपातसमुदयः। इत्येवं उक्तेन प्रकारेणेत्यर्थः, मे मम, मनसः खेदं वर्तयन्ति स्म संपादयन्ति स्म 'लट् स्मे' इति भूते लट्। अत्र करञ्जकर्तृकसीतापरिणयदशाव्यञ्जनस्य श्रीरामचन्द्रमनःखेदसम्पादनहेतुत्वात्काव्यलिङ्गं, उक्तविधानां करञ्जानां लाजहोमाभिरामसीतापरिणयदशास्मारकत्वेन वर्णनात् स्मरणालङ्का-

रश्च 'सदृशानुभवादन्यस्मृतिः स्मरणमुच्यते' इति लक्षणात्। अन्यस्मृतिः सदृशवस्त्वन्तरस्मृतिः। 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य हेतवः' इति न्यायेन सदृशानुभवात्पूर्वानुभवजनितसंस्कारोद्बोधे सति सदृशवस्त्वन्तरस्मृतिः स्मरणालङ्कार इति तदर्थः। तेन च लाजवर्षाभिरामैरित्युपमोपस्कृतेनोक्तकाव्यलिङ्गमुज्जीव्यत इति सङ्करः॥ ३७॥

[1] अथ द्वाभ्यां वर्षासमयानुभूतामवस्थां संदिशति—

**चेतो नैव त्यजति चपलाहेमकोणाभिघातात्**
**धीरोदात्तस्तनितजलदात्ताण्डवारम्भमिच्छन्।**
**वातोन्मुक्तैः कुटजकुसुमैर्वासिते शैलशृङ्गे**
**रक्षःपीडारहितदयिताश्लेषधन्यो मयूरः॥३८॥**

वातोन्मुक्तैः वातेन 'मेघोदरविनिर्मुक्ताः कह्लारसुखशीतलाः। शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः' इत्युक्तप्रकारेण मारुतेन

---

[1] अथ द्वाभ्यां वर्षासमयानुभूतामवस्थां संदिशति—चेत इति—इति रसास्वादिनी॥ यत्तु—यद्यपि ऋत्वन्तरेष्विव ग्रीष्मेऽपि 'मलयमरुतां व्राता याता विकासितमल्लिकापरिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि। घन घटय तं त्वं निस्स्नेहं य एव निवर्तने प्रभवति गवां किं नश्छिन्नं स एव धनंजयः'। इत्यादिवद्विरहिभिर्वक्तव्यमस्त्येव—इत्याशङ्कनं—तन्न. उदाहृतपद्यतो मलयमरुतो वा मल्लिकाविकासस्य वा विरहिभिर्ग्रीष्मे वक्तव्यताया अवगमेऽपि तयोरुभयोरपि पार्श्वे लोलैरित्यस्मिन्नेकान्तरितपूर्वपद्य एवोक्ततया इह तदनुक्तिकृतन्यूनताशङ्काया एवानवतारात् तत्पद्योदाहरणासङ्गतेः॥ अथैवं सति

उन्मुक्तैः उत्कीर्णैः कुटजकुसुमैः गिरिमल्लिकाप्रसूनैः 'कुटजो गिरिमल्लिका' इत्यमरः। वर्षा हि तेषां कुसुमसमयः 'क्वचिद्वाष्पाभिसंरुद्धान्वर्षागमसमुत्सुकान्। कुटजान्पश्य सौमित्रे पुष्पितान्गिरिसानुषु' इति श्रीरामायणादौ वर्षावर्णनावसरे तथोक्तेः। वासिते परिमळिते शैलस्य माल्यवतः वर्षासु तत्रैवोषितत्वात्, शृङ्गे शिखरे धीरं स्वैरं 'धीरो धैर्यान्विते स्वैरे धीरस्स्यात्त्रिषु पण्डिते' इति मेदिनी। क्वचिदप्यकुण्ठितं यथा स्यात्तथेति यावत्। उदात्तं महत् हृद्यं वा स्तनितं गर्जितं येषां ते तथोक्ताः जलदाः यस्मात्सः धीरोदात्तस्तनि-

---

ग्रीष्मस्यात्रावर्णितत्वोक्तौ रसास्वादिनीस्था कथं सङ्गच्छतां पार्श्वे इत्यादेरेव तद्वर्णनपरत्वसंभवादिति चेत्—पार्श्वे इत्यादिपद्यद्वयस्य वसन्तवर्णनप्रकरणस्थश्रीमद्रामायणसन्दर्भसंवादितायाः रसास्वादिन्यामेव दर्शिततया ग्रीष्मर्तुवर्णनपरत्वासंभवादित्यवधेहि॥ एतेन—तथाऽपि ग्रीष्ममासयोराद्यस्य वसन्तेनान्त्यस्य वर्षाभिश्चैकीकृत्य श्रीमद्रामायण इवात्राप्याचार्यैर्वर्णनं कृतम्। अत एव आषाढस्य प्रथमदिवस इति कालिदासस्य वर्षाचिह्नवर्णनमपि संगच्छते—इति समाधानमप्यसमञ्जसमिति व्यक्तीकृतम्। ग्रीष्ममासयोर्वसन्तवर्षाभिरेकीकाराभ्युपगमे ग्रीष्मर्तोरेव लोपप्रसङ्गात्। न चेष्टापत्तिः। हेमन्तशिशिरयोरेकीकारेण पञ्चर्तुपक्षस्य वेदतद्भाष्ययोः प्रसिद्धत्वेऽपि ग्रीष्मर्तुपरिलोपस्य क्वचिदप्यनाश्रयणात्। श्रीमद्रामायणेऽपि नैवमेकीकारेण ग्रीष्मावर्णनम्। किंतु—ग्रीष्ममासयोः प्रायिकऋत्वन्तरीयस्फुटलिङ्गोपलब्धिमात्रेणैव ग्रीष्मर्तोः प्राधान्येनावर्णनम्। स्पष्टं चेदं रसास्वादिन्यामेव उद्दामैस्तैरिति पद्ये—"ग्रीष्मस्यावर्णनं तु तस्मिन्नाद्यमासे प्रायेण वासन्तिकचिह्नानुवृत्तेरुत्तरमासे वर्षालिङ्गारम्भाच्चेति ध्येयम्। अत एव श्रीरामायणे वर्षावर्णनावसरे—'निवृत्तकर्मायतनो नूनं सञ्चितसञ्चयः। आषाढीमभ्युपगतो भरतः कोसलाधिपः' इत्युक्तिश्च सङ्गच्छते। तत्र हि आषाढीं आ-

तजलदः तस्मात्तथोक्तात् 'स्यादुदात्तस्स्वरे पुंसि वदान्यमहतोस्त्रिषु' इति रत्नमाला 'उदात्तस्स्वरभेदेऽपि काव्यालङ्कारहृद्ययोः' इति विश्वश्च। यद्वा—धीरोदात्तं अतिगम्भीरं यथा स्यात्तथा स्तनिताः ध्वनिताः जलदाः येन तस्मात्तथोक्तात् ष्टनेर्भौवादिकात् कर्तरि क्तः, स्तनयतेश्चौरादिकाददन्तात्कर्मणि क्तो वा। स्वनितेति पाठे 'स्वन शब्दे' कर्तरि क्तः, स्वनयतेः कर्मणि क्तो वा, घटादिषु स्वनेः पाठान्मित्त्वेन ह्रस्वः इति व्याख्यानं त्वसंगतम्, अवतंसनार्थकस्यैव स्वनतेश्शित्वानुशासनात्। 'स्वनितं ध्वनितं समे' इति विशेष्यनिघ्नेष्वमरः। तटित्सु हेमकोणत्वस्य

षाढसमाप्तिपौर्णमासीं अभ्युपगतः व्रताङ्गत्वेन स्वीकृतवान्। अनेन चत्वारो वार्षिकामासा इति पूर्वोक्तमासानामाषाढः प्राथमिक इति सूचितमिति, प्रवृत्तास्सौम्य चत्वारो मासा वार्षिकसंज्ञिका इत्यत्रापि वार्षिकसंज्ञकाश्चत्वारो मासा इत्याश्वयुजाषाढाभ्यां चतुष्ट्वं छत्रिन्यायादिति च श्रीगोविन्दराजैर्व्याख्यातम्। अत एव च आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुमिति कालिदासोक्तिश्च संगच्छते" इति सन्दर्भे। अत्रोदाहृते गोविन्दराजीये छत्रिन्यायेन वार्षिकचतुष्ट्वोपपादनात् आषाढस्य वर्षाभिर्भेद एव श्रीरामायणे विवक्षित इति व्यक्तम्। महाकवेः कालिदासस्यापि मेघसन्देशे आषाढस्य वर्षाभिरभेदो नैवानुमतः। 'प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी' इति तदीयपद्ये श्रावणमास एव वर्षारम्भस्य तदभिमतत्वात्। तथा च तत्र तत्रभवान् मल्लिनाथः—'नभसि श्रावणे प्रत्यासन्ने सन्निकृष्टे प्राप्ते सतीत्यर्थः। दयिताजीवितालम्बनार्थी सन्। वर्षाकालस्य विरहिदुःखजनकत्वात् उत्पन्नानर्थप्रतीकारादनर्थोत्पत्तिप्रतिबन्ध एव वरमिति न्यायेन प्रागेव (वर्षारम्भात्प्रागेव) प्रियाप्राणधारणोपायं चिकीर्षुरित्यर्थः' इति। तस्मात्सर्वोऽप्ययं प्रमादस्सङ्ग्रहीताया रसास्वादिनीसूक्तेस्सुसूक्ष्माशयानाकलननिबन्धन इति सुधियो विदांकुर्वन्तु॥

रूपयिष्यमाणत्वादरूपितमपि जलदेषु दुन्दुभित्वं प्रतीयते। चपलाः तटित एव हेमकोणाः सुवर्णमयवादनदण्डाः 'चपला कमलाविद्युत्पुंश्चलिपिप्पलीषु च। नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरळे चले' इति मेदिनी। 'कोणो वीणादिवादन' इत्यमरः। तेषां अभिघातात् अभिघट्टनाद्धेतोः अत्र विषयभूतानां तटितां चपलाशब्देन निर्देशाद्विषयिभूतहेमकोणेषु लाघवातिशयव्यापारिततयाऽतिमात्रचाञ्चल्यं द्योत्यते। तेन च वादनचातुर्यातिभूम्ना जलदरूपवाद्यनादस्यास्खलिततालमाधुर्यादिमत्तयाऽतिश्राव्यतमत्वाच्छृण्वद्भिरनर्तित्वाऽवस्थातुमशक्यमिति ध्वन्यते। एतेन यत्कैश्चित् 'चपलाहेमकोणाभिघातात् विद्युद्रूपस्वर्णदण्डप्रहारात् धीरोदात्तस्तनितजलदात् गम्भीरोन्नतगर्जितमेघात् ताण्डवारम्भमिच्छन्' इति योजयित्वा व्याख्यातं, तदेतदसुन्दरमित्यनादरणीयम्। अभिघातादित्यस्य स्तनितेति समासैकदेशेनान्वयस्य क्लिष्टत्वात्तदभ्युपगमेऽपि तद्योजनापक्षे धीरोदात्तस्तनितजलदादित्यस्य कर्मधारयतायास्सुघटतया बहुव्रीहिप्रतिपत्तिकरस्य तस्य प्रयोक्तुमयुक्तत्वात्। यदाह वामनः—'न कर्मधारयो बहुव्रीहिप्रतिपत्तिकरः' इति, 'बहुव्रीहिप्रतिपत्तिं करोति यः कर्मधारयस्स न प्रयोक्तव्यः यथा अध्यासितश्चासौ तरुश्च अध्यासिततरुः' इति तत्सूत्रवृत्तिः। तस्मादस्मत्कृतैव योजना स्वारसिकीति सहृदयास्स्वयमेव व्यातिविद्रते। ताण्डवं नर्तनविशेषः तण्डुना प्रोक्तं ताण्डवं 'तेन प्रोक्तम्' इत्यण्। 'ताण्डवं तृणभिन्नाटद्यभेदयोः' इति हेममेदिन्यौ। यद्यपि 'ताण्डवं नटनं नाट्यं लास्यं नृत्तं च नर्तने' इति

पञ्चानामपि पर्यायत्वमेवामरसिंहेनोच्यते, तथाऽपि भरतशास्त्रे—'उद्ध तकरणाङ्गविक्षेपमारभटीवृत्तिप्रधानं ताण्डवं, कोमलकरणाङ्गविक्षेपं कैशिकीवृत्तिप्रधानं लास्यं, अङ्गविक्षेपमात्रं नृत्तं, विवाहाभ्युदयादौ सर्वरसप्रधानं नाट्यम्' इत्यादिपरस्परं भेदप्रदर्शनादुदाहृतहेममेदिन्योरुपपत्तिः। तस्य नाट्यविशेषस्य आरम्भं उपक्रमं इच्छन् अपेक्षमाणः मयूराणां हि वर्षासमयस्ताण्डवारम्भहेतुः 'जाता वनान्ताः शिखिसंप्रनृत्ताः' इति वर्षावर्णने तदुक्तेः। रक्षसो रावणस्य पीडा अपहारादिबाधा 'पीडा बाधा व्यथा दुःखम्' इत्यमरः। तया रहिताया दयितायाः स्ववल्लभाया मयूर्याः आश्लेषेण परिरम्भेण 'आलिङ्गनमुपगूहनमाहुः परिरम्भणं परिष्वङ्गम्। आश्लेषमङ्कपाळीं क्रोडीकरणं च तुल्यार्थम्' इति हलायुधः। धन्यः भाग्यवान् अश्रान्तकान्तापरिष्वङ्गमङ्गळहेतुभूतसुकृतशालीत्यर्थः। 'सुकृती पुण्यवान्धन्यः' इत्यमरः' 'धन्यः पुण्यवति त्रिषु' इति मेदिनी च। 'धनगणं लब्धा' इति यत्। मयूरः शिखावळः चेतः मम मनः नैव त्यजति विषयान्तरप्रसङ्गेऽपि न मुञ्चतीत्येवकाराभिप्रायः। अनारतं स्मरणगोचर एव भवतीति भावः। अनेन 'पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति। शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु॥ तामेव मन्मथाविष्टो मयूरोऽप्यभिधावति। वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव॥ मयूरस्य वने नूनं रक्षसा न हृता प्रिया। तस्मान्नृत्यति रम्येषु वनेषु सह कान्तया॥ मम त्वयं वने वासः पुष्पमासे सुदुस्सहः। पश्य लक्ष्मण सं-

रागं तिर्यग्योनिगतेष्वपि ॥ यद्येषा शिखिनी कामाद्भर्तारं रमतेऽन्तिके । ममाप्येवं विशालाक्षी जानकी जातसंभ्रमा ॥ मदनेनाभिवर्तेत यदि नापहृता भवेत्' इत्येतत्प्रत्यभिज्ञाप्यते । यद्यपीदं श्रीरामायणे वसन्तवर्णनावसरे राघवेणोक्तं तथाऽपि मयूरनृत्तादेर्वर्षासमयभावितया औचित्यातिशयादाचार्यैर्घनागमावसरे वर्णितमिति ध्येयम् । अत्र पूर्वार्धे एकदेशविवर्तिरूपकं, उत्तरार्धे तु रक्षःपीडारहितदयिताश्लेषधन्य इति [1]रामचन्द्रेण मयूरस्य स्तुत्या रावणापहरणपरिक्लिष्टदयिताविश्लेषनिर्विण्णस्यात्मनो निन्दाऽभिव्य-

---

[1] अत्र रामचन्द्रेण मयूरस्य स्तुत्या . . . निर्विण्णस्यात्मनो निन्दाऽभिव्यज्यत इति व्याजस्तुतिर्नामाऽलङ्कार इति रसास्वादिनी । यत्तु—चेतसस्त्यागाभावं प्रति इच्छन्नित्यस्य इच्छां प्रति आश्लेषधन्यत्वस्य च हेतुत्वात्काव्यलिङ्गद्वयमित्यलङ्कारान्तरस्यापि वर्णनम्—तन्न. रामभद्रसंबन्धिचेतःकर्मकत्यागाभावे मयूरकर्तृकताण्डवारम्भेच्छाया अहेतुत्वात् । दीना हि समृद्धिधन्यान् पश्यन्तः स्वकीयामधन्यतां निन्दन्तीति रामभद्रस्य स्वकीयदैन्यं तदितरमयूरसमृद्धिश्चेत्युभयोरेव हेतुत्वात् । एवं मयूरगतायामिच्छायामाश्लेषधन्यत्वस्य हेतुताकथनमपि न सत् । "आश्लेषविच्छेदभयाद्धि ताण्डवारम्भं केवलमिच्छति न तु ताण्डवमारभते' इत्याशयस्य स्वयमेव विवृतत्वात् । आश्लेषधन्यत्वस्याश्लेषविरोधिव्यापारान्तरानारम्भ एव हेतुत्वेन तादृशव्यापारान्तरारम्भेच्छायामहेतुत्वात् । यदपि—रसास्वादिनीगतव्याक्रियाप्रक्रियामेव सर्वामनूद्य 'अथ वा दयिताश्लेषधन्यः अत एव वर्षासमयारम्भजनितात्प्राथमिकाच्चपलामेघकोणाभिघाताद्धेतोर्दयितया सह करिष्यमाणस्य महतस्ताण्डवस्यारम्भमिच्छन् मयूर इति वाक्यार्थः"—इति पक्षान्तरं वर्णितं तत्तु पूर्वकथितात्पक्षात् पक्षान्तरेऽत्र कस्यचिदपि विशेषस्याप्रदर्शनादयुक्तं वेदितव्यम् ॥ ३८ ॥

ज्यत इति व्याजस्तुतिर्नामालङ्कारः ।—'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः' इति लक्षणात् । इयमप्रस्तुतप्रशंसाविशेष इत्यलङ्कारसर्वस्वकारः । तेन हि "सारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणानन्तरं वैधर्म्येणापि दृश्यते, यथा—'धन्याः खलु वने वाताः कह्लारसुखशीतलाः । राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः' अत्र वाता धन्या इत्यप्रस्तुतार्थादहमधन्य इति वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयते" इति व्युत्पादितम् । इयमेवाप्रस्तुतप्रशंसा न तु कार्यकारणनिबन्धनेति दण्डी । यदाह—'अप्रस्तुतप्रशंसा स्यादप्रकाण्डे तु या स्तुतिः । सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ॥ अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः । सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ॥ राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना' इति । वस्तुतस्त्वत्र व्याजस्तुतिरित्येव युक्तं स्तुत्या निन्दाभिव्यक्तिरित्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषसद्भावात् । अन्यथा प्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यां निन्दास्तुतिभ्यां प्रस्तुते स्तुतिनिन्दे गम्येते इत्येतावता व्याजस्तुतिमात्रमप्रस्तुतप्रशंसा स्यादिति प्रळय एव स्याद्व्याजस्तुतेरिति दिक् । किंच—दयिताश्लिष्टमयूरस्मरणवर्णनेऽत्र विच्छित्तिविशेषस्य सहृदयहृदयैकसाक्षितया वैद्यनाथमते स्मृतिमदलङ्कारो भवत्येव । स हि सादृश्यामूलकानामपि स्मृत्यादीनां चमत्कारित्वेऽलंकारताया अनिवार्यतामाह । प्रपञ्चितं चैतत्पूर्वस्मिन्नाश्वासे 'चेतो ग्रावत्युपहितभुजं' इत्यत्र । विद्यानाथादीनां मते तु स्मृतेस्सादृश्यमूलकत्वाभावेन नायमलङ्कारः । ते हि 'सदृशानुभवादन्यस्मृ

तिस्स्मरणमुच्यते' इति तल्लक्षणमाहुः। उक्तानामलंकाराणामन्योन्यं संसृष्टिः। वर्षासमयसमृद्धिवर्णनात्समृद्धिमद्वस्तुवर्णनात्मकोदात्तं चेत्युक्तानामलङ्काराणामेकवाचकानुप्रवेशसंकर इति दिक् ॥ ३८ ॥

**शैलव्यक्तप्रतिविलपितां सान्द्रतापानुविद्धां**
**तन्वानानां नयनसलिलैर्मातरं ते सबाष्पाम्।**
**पश्यन्तीनां प्रबलमदनोन्मादपर्याकुलं मां**
**प्रायो जातं किमपि रुदितं व्योम्नि कादम्बिनीनाम् ॥३९॥**

प्रबलः बलीयान् उपायान्तरैश्शिथिलयितुमशक्य इति भावः। यः मदनेन मन्मथेन अत्यारूढेनेति भावः। उन्मादः चित्तविभ्रमः 'तृतीया तत्कृतार्थेन गुणवचनेन' इति समासः, तेन पर्याकुलं व्याकुलं 'व्यग्रो व्यासक्त आकुलः' इत्यमरः। परीत्यनेनाकुलताया अपरिच्छिन्नता द्योत्यते। न हि मदनोन्मादस्य दौर्बल्ये एवं वैयाकुली संपद्येतेति भावः। मां त्वया विप्रयुक्तमिति भावः। पश्यन्तीनां 'निरीक्ष्य विद्युन्नयनैः' इत्युक्तरीत्या विद्युद्रूपविलोचनैर्विलोकमानानामिति भावः। अत एव नयनसलिलैः अश्रुत्वेनाध्यवसितैर्नववारिबिन्दुभिरिति यावत्। सान्द्रः निरन्तरः यः तापः मद्दुरवस्थालोकनजनितस्संज्वरः अन्यत्र निदाघागमव्यतिकरप्रयुक्तस्संतापः। तेन अनुविद्धां आहतां विषाक्तबाणेनैवेति भावः। प्रथममेव तथाविधसान्द्रसंतापपराभूतामित्यर्थः। ते मैथिल्यास्तव

मातरं जननीं मेदिनीं सबाष्पां साश्रुजलां पक्षे सोष्माणं च 'बाष्पो नेत्रजलोष्मणोः' इति रत्नमाला। तप्तायसफलकादौ सलिलावोक्षणेन य उष्मा प्रतिप्लवते स बाष्प इत्युच्यते प्रथमतरजलधरोदबिन्दुनिपाते भूमेरूष्मा समुज्जिहीत इति नयनसलिलैस्ते मातरं सबाष्पामित्युक्तम्। अनेन च संदर्भेण 'एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता। सीतेव शोकसंतप्ता मही बाष्पं विमुञ्चति' इति वर्षारम्भवर्णनावसरे श्रीरामायणोक्तं स्मार्यते। शैलेषु गिरिषु व्यक्तं स्फुटं प्रतिविलपितं विलापत्वेनाध्यवसितस्य स्वगर्जितस्य प्रतिविलापत्वेनाध्यवसितं प्रतिध्वनितं यस्यास्तां तथोक्तां च तन्वानानां कुर्वाणानां कादम्बिनीनां मेघमालानां 'कादम्बिनी मेघमाला' इत्यमरः। [1]व्योम्नि नभसि किमपि इदमित्थमिति परिच्छिद्य वर्णयितुमशक्यं रुदितं रोदनं 'रुदिर् अश्रुमोचने' भावे क्तः, जातं आविर्भूतं प्राय इत्युत्प्रेक्षाव्यञ्जकम्। अत्राशक्यवर्णनकरुणतमान्यदीयशोकवैक्लव्यनिर्वर्णनसमधिगतदैन्यतया स्वयं रुदन्तीनामन्यामपि तदनुबन्धिनीं कां चिन्निजशोचनदर्शनाक्षमतया रोदयन्तीनां

[1] व्योम्नि नभसि किमपि इत्यादि रसास्वादिनी॥ यत्तु—'व्योम्नि गगने विद्यमानानामिति शेषः। अत एव कादम्बिनीनां मेघमालानाम्' इति विवरणं तन्न. व्योमावच्छेदेन रुदितं जातं इत्यर्थे 'व्योम्नि जातम्' इत्यन्वयेऽनध्याहारेणैवोपपत्तेः शेषपूरणवैफल्यात्। व्योम्नि विद्यमानतायाः क्वचिदपीह हेतुत्वायोगेन 'अत एव' इत्यस्याप्ययुक्तत्वाच्च। शैलशिखरादिभूस्थितानामपि कादम्बिनीनां सबाष्पत्वादिसम्भवात्। एवं कादम्बिनीनां पश्यन्तीनां तन्वानानां च सतीनामिति विधेयविशेषणतया षष्ठ्यन्तद्वयविवरणमपि विफलमिति ध्येयम्॥३९॥

कासांचिद्दयाळुकुटुम्बिनीनां वृत्तान्तोऽप्रस्तुतः प्रस्तुते कादम्बिनीवर्णने प्रतीयत इति समासोक्तिः, किंच—बाष्पादिशब्दवाच्यार्थद्वयश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्या नयनसलिलैरित्यादिरूपकातिशयोक्त्या चाङ्गभूतया उत्तम्भ्यमाना मदनोन्मादपर्याकुलश्रीरामचन्द्रसंदर्शननिमित्तिका कादम्बिनीकर्तृकवर्षणे तत्कर्तृकरोदनक्रियास्वरूपोत्प्रेक्षा उक्तसमासोक्तिगर्भैवोत्तम्भ्यते, उपपादितश्लेषमूलकातिशयोक्तिरूपकातिशयोक्त्योरुभयोपकारकत्वात्समासोक्तिगर्भतां विना रोदनक्रियास्वरूपोत्प्रेक्षाया निरवलम्बनत्वेन तयोरैककालिकत्वाच्च समप्राधान्यसङ्कर इति संक्षेपः ॥ ३९ ॥

एवं सुदुस्सहविरहवेदनातिशयकबळिततया 'ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम्' इत्युक्तरीत्या सुखलेशासंभवेन कथंकारं कालं क्षिपसीत्यत्र तद्धेतुः परंपरया त्वदुपभोग एवेतीममर्थं संदिशति—

**देहस्पर्शं मलयपवने दृष्टिसंभेदमिन्दौ**
**धामैकत्वं जगति भुवि चाभिन्नपर्यङ्कयोगम् ।**
**ताराचित्रे वियति विततिं श्रीवितानस्य पश्यन्**
**दूरीभूतां सुतनु विधिना त्वामहं निर्विशामि ॥४०॥**

हे सुतनु ! अनेन परिरम्भौपयिकसौकुमार्यादिकं द्योत्यते । मलयपवने चन्दनाचलमारुते, देहस्पर्शं त्वद्गात्रावमर्शं पश्यन्नित्येतत्सर्वत्रान्वेति । त्वदङ्गसंस्पर्शिमलयमारुतावमर्शं त्वदङ्गसंस्पर्शमेव जानन्नित्यर्थः । 'पश्यार्थैश्चानालोचने' इत्यत्रानालोचन इति पर्युदासात्

ज्ञापकाद्दृशोर्ज्ञानार्थकत्वं, सीताया मलयसंनिहितलङ्कायामवस्थानान्मलयपवने देहस्पर्शमित्युक्तम्। इन्दौ पूर्णचन्द्र इति यावत्, दृष्टिसंभेदं 'संभेदस्स्फुटने सङ्गे' इति हलायुधः। पश्यन् दृक्सङ्गं पश्यन् त्वद्दृष्टचन्द्रदर्शनं त्वद्दर्शनमेव जानन्निति भावः। अनेन 'वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश। त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः' इत्येतत्प्रत्यभिज्ञाप्यते। जगति लोके धाम्नः गृहस्य एकत्वं अभिन्नत्वं पश्यन् एकस्मिन्नेव जगत्युभयोरवस्थानादभिन्नगृहावस्थितत्वं जानन्निति भावः। [1]भुवि भूमौ चकारो भिन्नक्रम उत्तरत्रान्वेति। अभिन्नः यः पर्यङ्कः शयनं 'शयनं मञ्चपर्यङ्कपल्यङ्काः' इत्यमरः। तस्य योगं संबन्धं पश्यन् एकधरण्याश्रितत्वमेवैकशय्यावस्थानं जानन्निति भावः। अनेन 'बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम्। यदहं सा च वामोरूरेकां धरणिमाश्रितौ' इत्येतत् स्मार्यते। कामिनः कामिन्येकशय्याश्रयणवेदकधरण्याश्रितत्वमपि किञ्चिदाश्वासहेतुर्भवतीति भावः। ताराभिः नक्षत्रैः चित्रे शबले वियति नभसि श्रीवितानस्य नानावर्णलक्ष्मीयुक्तवितानस्य 'अस्त्री वितानमुल्लोचः' इत्य-

[1] भुवि भूमौ आभिन्नः इत्यादिरसास्वादिनी ॥ यत्तु—भुवि चासन्नेति पाठे भुवि भूप्रदेशयोरित्यर्थः। आसन्नयोः निकटवर्तिनोः पर्यङ्कयोर्योगं सम्बन्धमित्यर्थः। लङ्काभुवस्स्वस्थानभूसन्निकृष्टत्वादिति भावः। उपभोगात्परं पृथक्शयनमेव हि दम्पत्योर्विहितम्—इति तन्न. भुवीत्येकवचनासङ्गतेः। विरहिणः स्वचित्तसमाधानार्थस्य निर्वेशौपयिकसामग्रीकल्पनस्य प्रस्तावे निर्वेशानन्तरकालिकोपकरणकल्पनकथाया अत्यन्तास्वरसत्वाच्च ॥

मरः । वितन्यत इति वितानं ऊर्ध्वप्रदेशे वितत्य निबद्धं वास इत्यर्थः । श्रीयुक्तं च तद्वितानं च श्रीवितानमिति मध्यमपदलोपी समासः । विततिं विस्तृतिं च पश्यन् 'वितानं जीवलोकस्य वितते ब्रह्मनिर्मिते' इत्युक्तरीत्या नानावर्णोदारतारानिकुरुम्बकिर्मीरितमन्तरिक्षमेव भूरूपपर्यङ्कोपरि निबद्धं वितानं जानन्निति भावः । पश्यन्नित्यत्र 'लक्षणहेत्वोः' इति शता । उक्तरीत्या भावनेन हेतुनेत्यर्थः । अहं दूरस्थितोऽप्यहं विधिना दैवेन हेतुना दूरीभूतां पूर्वमासन्नवर्तिनीमेवेदानीं सुदूरव्यवहितामपीति भावः । अभूततद्भावे च्विः । त्वां निर्विशामि उपभुञ्जे 'निर्वेश उपभोगस्स्यात्' इत्यमरः । दवीयसीमपि भवतीमुक्तरीत्या सामग्रीं कल्पयन्नासन्नवर्तिनीमिवानुभवन् सुख्यामि ईदृशकाल्पनिकसुखभावनयैव समयं विनोदयामि । अन्यथा 'शोकेनाभिप्रपन्नस्य जीविते चापि संशयः' इत्युक्तरीत्या जीवितुमशक्यमेवेति भावः । [1]अत्र मलयमारुतादौ देहस्पर्शादिज्ञानस्य दूरीभूतसीतोपभोगं प्रति हेतुत्वात्काव्यलिङ्गं, तच्च जगदादावेकस्थानत्वाद्यारोपरूपरूपकेण दूरीभूतायास्तस्या

[1] अत्र मलयमारुतादौ देहस्पर्शादिज्ञानस्य दूरभूतसीतोपभोगं प्रति हेतुत्वात्काव्यलिङ्गमिति रसास्वादिनी ॥ यत्तु—सीतानिर्वेशरूपकार्यस्य तद्धेतुभिर्मलयपवनादौ देहस्पर्शादिज्ञानैस्सह वर्णनाद्धेत्वलङ्कार इति—तन्न. हेतुहेतुमद्भावस्य वाच्यतायामेव हेत्वलङ्कारप्रवृत्तेः । अत एव 'प्रणयसखीसलीलपरिहासरसाधिगतैर्ललितशिरीषपुष्पहननैरपि ताम्यति यत् । वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः पततु शिरस्यकाण्डयमदण्ड इवैष भुजः' ॥ इत्यत्र उपक्षिपत इति शत्रन्ते शस्त्रोपक्षेपभुजपातयोर्हेतुहेतुमद्भावस्याभिधया प्रतीतिविरहमभिसन्धा-

उपभोगासम्भवेऽपि तत्सम्बन्धकल्पनरूपातिशयोक्त्या चोन्नह्यत इति सङ्करः। केचित्तु—'मलयपवने देहस्पर्शं निर्विशामि इन्दौ दृष्टिसंभेदं निर्विशामि जगति धार्मिकत्वं निर्विशामि भुवि चाभिन्नपर्यङ्कयोगं निर्विशामि ताराचित्रे वियति श्रीवितानस्य विततिं पश्यन् विधिना दूरीभूतां त्वां निर्विशामि' इति योजयित्वा व्याचक्षते तन्नातिव हृद्यम्। मलयपवनादिषु देहस्पर्शादिदर्शनस्यैव दूरस्थितसीतोपभोगनिमित्ततया देहस्पर्शादिषु सर्वत्र पश्यन्नित्येतदन्वयस्य स्वारसिकत्वेऽपि तद्विहाय श्रीवितानस्य विततिमित्यत्रैव तदन्वयकल्पने विनिगमकादर्शनात् सम्भवत्येकवाक्यत्वे स्वारसिके वाक्यभेदकल्पनस्यान्याय्यत्वादस्वरसत्वसाच्चेति दिक्॥ ४०॥

एवं शिशिरादिऋतुषु वितपमानस्य ममेदानीं त्वत्प्राप्त्यौपयिकयात्रासन्नाहमुद्दीपयन्ती शरदियं मां त्वरयतीति सन्दिशति—

**प्राप्तैस्सख्यं तव नयनयोः पद्मकोशैः प्रबुद्धैः**
**सन्नाहं नस्समयनियतं साधु सन्धुक्षयन्ती।**
**सेनायोग्यां सरणिमधुना दर्शयन्ती शुभाशा**
**सीते नूनं त्वरयति शरत्त्वत्समीपं निनीषुः॥४१**

हे सीते! तव नयनयोः लोचनयोः सख्यं मैत्रीं 'सख्युर्यः'

---

यव काव्यलिङ्गमुदाहृतं काव्यप्रकाशे। किं बहुना 'आरक्तानां नवमधु शनैरापिबन्' इत्यत्र 'आमोदानामहमहमिकादेशं प्रति आपिबन्नित्यादीनां विशेषणानां हेतुत्वात्काव्यलिङ्गम्' इति स्वयमेव काव्यलिङ्गविवरणात्तत्तुल्येऽत्र पद्ये हेत्वलङ्कारवर्णनं स्ववचनव्याहतमेवेति बोध्यम्॥ ४०॥

इति भावार्थे यप्रत्ययः । प्राप्तैः कर्तरि क्तः । प्रबुद्धैः विस्रस्तजल-धरावरोधतया निष्प्रत्यूहत्वाद्रविकरप्रसरस्यातिमात्रं प्रफुल्लैरित्यर्थः । पद्मकोशैः अरविन्दकुड्मलैः 'पद्मकोशपलाशानि दृष्ट्वा दृष्टिर्हि मन्यते । सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण' इत्युक्तरीत्या सीताविलोचनसादृश्यं प्राप्तैरित्यर्थः । नेत्रस्थानीयैरित्याकूतम् । नः अस्माकं अनन्वादेशविषयत्वेनात्र नसादेशो वैकल्पिक इति बोध्यम् । 'अस्मदो द्वयोश्च' इत्येकत्व एव बहुवचनं लक्ष्मणसुग्रीवाद्यभिप्रायेण वा । समयः अवसरः नियतः शास्त्रे निश्चितो यस्य तं तथोक्तं 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' इति निष्ठायाः परनिपातः । यद्वा—समये नियतमिति विग्रहः 'अन्योन्याबद्ध-वैराणां जिगीषूणां नृपात्मज । उद्योगसमयस्सौम्य पार्थिवानामुपस्थितः' इत्याद्युक्तरीत्या शरत्समये नियमेन कर्तव्यतया विहितमिति भावः । सन्नाहं अमित्रनिर्मूलनार्थविजययात्रोद्योगं, साधु अस्खलितं यथा स्यात्तथा सन्धुक्षयन्ती उद्दीपयन्ती धुक्षतेस्सन्दीपनार्थकाण्णिजन्ताच्छतरि उगिल्लक्षणो ङीप् । न तु यथाकथञ्चित्सूचयन्तीति भावः । इदमेव हि पद्मानां त्वन्नयनसख्यप्राप्तेः प्रयोजनं यत्त्वदसन्निधानावसरे त्वन्नयनविभ्रमसाध्ये ममेदृशसमयनियतसन्नाहोद्दीपने स्वयं साधनतां भजन्त इति । न केवलमियमीदृशोद्योगोद्दीपनमात्रकारिणी अपितु सेनाप्रस्थानानुगुणसरणिदर्शिन्यपीत्याह—सेनेति । सेनायाः ध्वजिन्याः योग्यां अनुरूपां सरणिं पद्धतिं अधुना इदानीं 'अधुना' इति सूत्रेण इदमस्स-

सम्यन्तात्कालवाचिनस्स्वार्थे अधुनाप्रत्ययो निपातितः 'इदम इश्' 'यस्येति च' इति लोपः। दर्शयन्ती प्रकाशयन्ती च सतीति यावत्, 'मार्गाश्च भृशदुर्गमान्' इत्युक्तरीत्या वर्षासु कूलमुद्वहनदीप्रवाहपङ्का-दिभिरवरुद्धान्मार्गास्तदपगमे 'सूर्यातपक्रामणनष्टपङ्काभूमिस्समुत्पादित-सान्द्ररेणुः। अन्योन्यवैरामर्षायुतानामुद्योगकालोऽद्य नराधिपानाम्' इत्युक्तरीत्या निर्निरोधसहस्रभानुमयूखमालोपमर्दितकर्दमतया वरूथि-नीप्रस्थानार्हां पदवीं विशदयन्तीत्यर्थः। शुभाः शोभमानाः 'शुभ शो-भायां' 'इगुपध' इति कः। शु पूजितं भाति 'आतः' इति को वा। 'अन्येभ्योऽपि' इति डो वा। आशाः दिशः यस्यां सा तथोक्ता 'व्यभ्रं नभश्शस्त्रविधौतवर्णं' इत्युपक्रम्य 'तमोविमुक्ताश्च दिशः प्रका-शाः' इत्युक्तरीत्या विगळितजलधरावरणतया विशदतरदिग्भागेत्यर्थः। शुभे विश्लिष्टदम्पतिसंयोजनरूपकल्याणे 'कल्याणं मङ्गळं शुभम्' इत्य-मरः। आशा तृष्णा यस्यास्सा तथोक्तेत्यर्थोऽपि गम्यते। शरत्, न इत्येतदत्राप्यनुषज्यते। स च द्वितीयान्तः अस्मानित्यर्थः। त्वत्स-मीपं निनीषुः प्रापयितुमिच्छुस्सती त्वरयति संभ्रमयति नूनमिति निश्चये 'ञि त्वरासम्भ्रमे' अस्माद्भौवादिकाण्ण्यन्ताल्लट्। अस्य घटादिषु पाठान्मित्त्वेन ह्रस्वः। इतःपरमविलम्बितमेव त्वद्दर्शनावश्यं-भावादाश्वसितव्यामिति भावः। नूनमित्यनेन 'उपस्थितं प्रयुञ्जानस्त्व-यि सान्त्वमनर्थकम्' इत्युक्तरीत्या न केवलमश्रुप्रमार्जनाय निरर्थक-सान्त्वनोक्तिरियामिति व्यज्यते। अत्र प्रसिद्धोपमानभूतानां जल-जातानां सीतानयनोपमेयत्ववर्णनात्प्रतीपालंकारः 'प्रतीपमुपमानस्योपमे-

यत्नप्रकल्पनम् । त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः' इति लक्ष्यलक्षणसंग्रहात्, प्रस्तुते शरद्वर्णने प्रियाविश्लेषविक्लबं श्रीरामचन्द्रं नयनानुभावेन प्रोत्साह्य प्रस्थानानुकूलमार्गप्रदर्शनेन तत्सदेशगमनाय त्वरयन्त्याः कस्याश्चित्करुणहृदयायास्सख्या वृत्तान्तोऽप्रस्तुतः प्रतीयत इति समासोक्तिरुक्तप्रतीपस्तहस्तावलम्बेति संकरः । सकारादिवर्णपौनरुक्त्यलक्षणवृत्त्यनुप्रासेनेयमेकवाचकानुप्रविष्टेन संकीर्यते च । अत्र शरत्कालेनोद्दीपनविभावेन भीतसीताऽभयप्रदानादिभिरनुभावैर्हर्षादिभिस्संचारिभिश्श्रीरामभद्रगतस्योत्साहाख्यस्य स्थायिनः परिपोषणाद्युद्धवीररसो व्यज्यते। तथा चोक्तं भूपालेन—'विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः । नीतस्सदस्यरस्यत्वमुत्साहो वीर उच्यते ॥ एष त्रिधा समासेन दानयुद्धदयोद्भवः' इत्युपक्रम्य, 'युद्धवीरे हर्षगर्वामर्षाद्या व्यभिचारिणः। सहायेषणयुद्धेच्छासमरोदयपालनम् ॥ भीताभयप्रदानाद्या विकारास्तत्र कीर्तिताः' इति । उत्साहलक्षणं च तेनैवोक्तं 'शक्तिधैर्यसहायाद्यैश्शीलश्लाघ्येषु कर्मसु । सत्वरा मानसी वृत्तिरुत्साहः' इति । अयं च विप्रलम्भशृङ्गारस्याङ्गमिति रसवन्नामापराङ्गव्यङ्ग्यमिति संक्षेपः ॥ ४१ ॥

अथ 'चत्वारो वार्षिका मासा गता वर्षशतोपमाः । मम शोकाभिभूतस्य सौम्य सीतामपश्यतः ॥ चक्रवाकीव भर्तारं पृष्ठतोऽनुगता वनम् । विषमं दण्डकारण्यमुद्यानमिव चागता' इत्युक्तं स्वपरितापं निवेदयेति संदिशति—

**तातादेशात्सपदि भरते न्यस्तराज्याभिषेकं**
**या मामेका वनमनुगता राजधानीं विहाय ।**
**तामेव त्वामुचितशयनां बाहुमध्ये मदीये**
**दूरे कर्तुर्गु(कृत्वा गु)णवति मुहुर्दूयते जीवितं मे ॥४२॥**

तातस्य पितुः दशरथस्य 'तातस्तु जनकः पिता' इत्यमरः । आदेशात् शासनात् सपदि तत्क्षणमेव न तु क्षणमपि विलम्ब्येति भावः । भरते कैकेयीनन्दने [1]न्यस्तो निक्षिप्तो राज्याभिषेकः साम्राज्याभिषेचनं येन तं तथोक्तम् । अनेन च संदर्भेण 'पुरा दैवासुरे युद्धे पित्रा ते मम राघव । रक्षितेन वरौ दत्तौ सशल्येन महारणे ॥ तत्र मे याचितो राजा भरतस्याभिषेचनम् । गमनं दण्डकारण्ये तव चाद्यैव राघव ॥ यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि । आत्मानं च नरश्रेष्ठ मम वाक्यमिदं शृणु ॥ संनिदेशे पितुस्तिष्ठ यथा तेन प्रतिश्रुतम् । त्वयाऽरण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥ भरतश्चाभिषिच्येत यदेतदभिषेचनम् । त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव' इति कैकेय्योक्ते 'एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः । जटाजिनधरो राज्ञः प्रतिज्ञामनुपालयन्' इत्युपक्र-

---

[1] न्यस्तो निक्षिप्तो राज्याभिषेकः . . . येन तं तथोक्तम् । अनेन च सन्दर्भेण पुरा दैवासुरे इति कैकेय्योक्ते 'एवमस्तु गमिष्यामि' इति स्वेनोक्तं स्मारितमिति रसास्वादिनी ॥ यत्तु—' अनेन स्त्रीणामननुगम्यत्वं व्यञ्जितम्' इति—तदभिप्रायं त एव जानन्ति ॥

म्य 'अहं हि सीतां राज्यं च प्राणानिष्टान् धनानि च। हृष्टो भ्रात्रे स्वयं दद्यां भरतायाप्रचोदितः ॥ किं पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदितः। तव च प्रियकामार्थं प्रतिज्ञामनुपालयन् ॥ गच्छन्तु चैवानयितुं दूताश्शीघ्रजवैर्हयैः। भरतं मातुलकुलादद्यैव नृपशासनात् ॥ दण्डकारण्यमेषोऽहमितो गच्छामि सत्वरः। अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश' इति स्वेनोक्तं स्मारितम्। अनुगतेत्यत्र अन्विति व्यस्तं पदं भिन्नक्रमं मामित्यत्रान्वेति मामनु भरतन्यस्तराज्येन मया सहेत्यर्थः। अत्र 'नदीमन्ववसिता सेना' इत्यत्रेव 'तृतीयार्थे' इत्यनेनानोः कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया। "तृतीयार्थे' इति सूत्रे तृतीयाशब्देन तन्निमित्तशब्दः 'सहयुक्ते' इत्यत्रोपात्तोऽनन्तरत्वात्सहशब्दो लक्ष्यते। तदर्थे साहित्ये द्योत्ये इत्यर्थः। साहित्यरूपस्संबन्धोऽनुद्योत्यो द्वितीयार्थः" इति शब्देन्दुशेखरे स्थितम्। या त्वं एका 'यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव। अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्' इत्याद्युक्तप्रकारेणानपेक्षितदासीदासादिपरिजनसाहायकेति भावः। राजानो धीयन्तेऽस्यामिति राजधानी 'करणाधिकरणयोश्च' इति ल्युटि टित्त्वलक्षणो ङीप्। तां अयोध्यां 'रम्यचत्वरसंस्थानां सुविभक्तमहापथाम्। हर्म्यप्रासादसंपन्नां गणिकावरशोभिताम् ॥ रथाश्वगजसंबाधां तूर्यनादविनादिताम्। सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ आरामोद्यानसंपन्नां समाजोत्सवशालिनीम्। सुखिता विचरिष्यन्ति राजधानीं

पितुर्मम' इत्याद्युक्तप्रकारेण साम्राज्योपभोगौपयिकविविधविचित्रभोग्यभोगोपकरणभोगस्थानादिसमृद्धिमत्त्वां द्योतयताऽनेन महत्युपनतेऽपि त्यागनिमित्ते अपरित्याज्यत्वं द्योत्यते। विहाय त्यक्त्वा 'ओ हाक् त्यागे' अस्मात् क्त्वायां समासे ल्यप्। वीत्युपसर्गेण मदेकानुरक्ततया राजधान्यां नैस्पृह्यातिभारो द्योत्यते। यथोक्तं त्वयैव—'ईर्ष्यामोहौ परित्यज्य भुक्तशेषमिवोदकम्। नय मां वीर विस्रब्धः पापं मयि न विद्यते॥ प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा। सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते॥ सुखं वने निवत्स्यामि यथैव भवने पितुः। अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतम्॥ एवं वर्षसहस्राणां शतं वाऽहं त्वया सह। व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि न हि मे मतः॥ न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः। आर्तवान्युपभुञ्जाना मूलानि च फलानि च॥ यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना। इति जानन्परां प्रीतिं गच्छ राम मया सह' इत्यादि। वनं दण्डकारण्यं म त्वयोध्यायास्तुल्यां ततो न्यूनां वा राजधानीमिति भावः। गता प्राप्ता अनेन 'चक्रवाकीव भर्तारं पृष्ठतोऽनुगता वनम्' इत्युदाहृतश्लोकगतपदानि प्रत्यभिज्ञाप्यन्ते। ये तु—'भरते न्यस्तराज्याभिषेकं मां या एका राजधानीं विहाय वनमनुगता' इति योजयित्वा 'वनमनुगता अरण्यमनुसृत्य गता' इति व्याचक्षते ते तु मामिति द्वितीयायाः क्वान्वय इति न पर्यालोचयन्ति, अनुगतेत्यस्य मामित्यनेनैवान्वय इति चेत्तर्हि वन-

दूरीकरणपरितापयोरेककर्तृकत्वायोगेन क्त्वाप्रत्ययप्रयोगस्यासांगत्यापत्तेः, स हि 'समानकर्तृकयोः पूर्वकाले' इत्यनुशिष्यते। दूरे कर्तुरिति पाठे तु न काचिदनुपपत्तिः, मे मम जीवितं जीवनं जीवनहेतुभूतः प्राणो वा, मुहुः शश्वत् न तु यदा कदाचित् दूयते परितपति। 'दूञ् परितापे' अस्माद्दैवादिकाल्लट्। स्वपरि-

ल्पोऽयं विधीयत इति पक्षेऽपि नात्र कश्चिद्दोषः। अत्रान्वादेशप्रसक्तेरेवाभावात्। अन्वादेशो हि नाम किञ्चित्कार्यं विधातुं पुनरुपादानमित्युच्यते। प्रकृते पूर्वार्धस्य यच्छब्दयोगेन तस्यार्थस्य सीताविदितत्वेन च अनुवादत्वेन तत्रैवादेशाभावेऽन्वादेशस्य प्रसक्त्यभावात्। अत एव 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' इत्यत्र एतमित्युक्तम्। न त्वेनमिति। एवमेव 'नक्तं भीरुरयं त्वमेव तादिमं राधे गृहं प्रापय' इत्यत्रापि इममित्येवोक्तम्। न त्वेनमिति। नक्तं भीरुरयमित्यस्य राधाविदितत्वाभिमानेन अनुवाद्यत्वसिद्धेः। एतेन तां त्वां दास इतीत्यादिषु त्वामित्यस्यासाधुतां शङ्कमाना उपेक्षणीयाः। यस्यास्त इत्यादिपूर्वार्धस्य यच्छब्दयोगेन श्रीविदितार्थकत्वेन च अनुवाद्यत्वे आदेशकथाया एवाभावेन अन्वादेशप्रसक्तेर्दूरोत्सारितत्वादित्यलं पल्लवितेन"—इति समाधानान्तरं—तदपि न—'धाता तव भक्तोऽस्ति। तस्मै ते नमः' इत्यस्मिन् सर्वानुमते अन्वादेशोदाहरणे भगवन्तं प्रति कस्यचिद्भक्तस्य वाक्ये पूर्वोत्तरवाक्यार्थयोरेकस्यापि सर्वज्ञेन भगवता अज्ञातत्वासंभवेन नमस्कार्ये भगवति सर्वज्ञे किञ्चिदर्थाज्ञत्वविवक्षणानौचित्येन च अन्वादेशशरीरे अज्ञातज्ञापनरूपविधेयत्वनिवेशनासङ्गतेः। तस्मादिहान्वादेशघटकं विधेयत्वं विलक्षणविषयतारूपमेव यथा पर्वतो वह्निमानित्यादौ पर्वते वह्निरित्यत्र च वह्नेर्विधेयत्वं पर्वतस्योद्देश्यत्वम्। सति तु तात्पर्ये पर्वते वह्निरित्यत्र वह्नेरुद्देश्यत्वं पर्वतस्यैवाधेयतासंबन्धेन विधेयत्वम्। तथा च यत्र वाक्यद्वयस्याप्येकस्यैवार्थस्य विधेयतया एकविधिरूपत्वं विवक्षितं, तत्र ना-

तापस्यैव जीविते आरोपः। कुतो मदर्थमेतावान्परिताप इत्यतस्संबोधयति—गुणवतीति । गुणाः अत्रैव सूचिताः पतिपाराथ्र्यवाल्लभ्यसौशील्यादयस्सौन्दर्यसौकुमार्यलावण्यादयश्चास्यास्सन्तीति तथोक्ता तस्यास्संबुद्धिः। भूम्नि प्रशंसायां नित्ययोगे अतिशायने वा मतुप् 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति वत्वम्। एवं लो-

---

न्वादेशः। यत्र तु पूर्वोत्तरवाक्ययोः विधिद्वयरूपत्वं तत्र भवत्यन्वादेशः। तथा च काशिकायां—'इह कस्मान्न भवति। अयं दण्डो हरानेन, एतमातं ङितं विद्यादिति। यत्र किञ्चिद्विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोऽन्वादेशः। इह तु वस्तुनिर्देशमात्रं कृत्वा एकमेव विधानं' इति। तत्रैव पदमञ्जर्यां च 'एकमेव विधानमिति॥ अयं दण्ड इत्यनेन दण्डस्य सत्तामात्रमुपलक्ष्यते। न तु किञ्चिद्विधीयते। एवमीषदर्थ इत्यादौ अकारस्य स्वरूपमात्रं निर्दिश्यते न तु किञ्चिद्विधीयते' इति। तस्मात्पूर्ववाक्ये विधेयत्वविवक्षातद्विरहाभ्यामेव सर्वे प्रयोगा उपपन्ना वेदितव्याः। अत एव 'वेदाहमेतम्' इत्यत्र अन्वादेशविरह उपपद्यते। 'तमेवं विद्वानमृत इह भवति' इत्युत्तरत्रैव विधेर्विवक्षितत्वात्। एवं 'काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥' इत्युपक्रम्य 'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा' इत्यन्तरान्वादेशकरणम् 'तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ। पाप्मानं प्रजहि ह्येनम्' इत्यत्रैव विधेयतया विवक्षितत्वादित्यवधेयम्॥ वस्तुतस्तु—पूर्वोत्तरवाक्ययोरेकस्यैवोद्देश्यतया विवक्षणमन्वादेशः। ईषदर्थ इत्यादौ पूर्वार्धस्य उत्तरार्धविवक्षितविध्युद्देशमात्रसमर्पणपरताया विवक्षिततया विधिद्वयाभावान्न दोषः। 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय' इत्यत्र तु पूर्ववाक्ये नक्तं भीरुः इत्यस्य उद्देश्यपरत्वं अयमित्यस्य विधेयपरत्वं च विवक्षितम्। तथा च सति तत्र उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयविवक्षया एतदन्यस्य नक्तभीरुत्वं नास्तीति

कोत्तरगुणोत्तरायास्तव विश्लेषेऽपि कथं न परितप्येयमिति भावः। अत्र श्रीरामचन्द्रजीवितपरितापस्य गुणवत्सीतादूरीकरणहेतुकत्वात्काव्यलिङ्गभेदः। अत्र या मामेका वनमनुगतेत्यनेन, मुहुर्दूयते जीवितं मे इत्यनेन च यथायथं निर्वेदविषाददैन्यस्मृतिचिन्ताख्यास्संचारिणो व्यज्यन्ते। तल्लक्षणानि तु—'तत्त्वज्ञानाच्च दौर्गत्यादापदो विप्रयोगतः। ईर्ष्यादेरपि संजातं निर्वेदस्स्वावमाननम्॥ प्रारब्धकार्यानिर्वाहादिष्टानाप्तेर्विपत्तितः। अपराधपरिज्ञानादनुतापस्तु यो भवेत्॥ विषादस्स त्रिधा ज्येष्ठमध्यमाधमसंश्रयात्। दुःखापदुर्गतत्वाद्यैरनौद्धत्यं हि दीनता॥ स्वास्थ्यचिन्तादृढाभ्याससदृशालोकनादिभिः। स्मृतिः पूर्वानुभूतार्थप्रतीतिस्तत्र विक्रियाः॥ कम्पनोद्वेपने मूर्ध्नो भ्रूविक्षेपादयोऽपि च। इष्टवस्त्वपरिप्राप्तेरैश्वर्यभ्रंशनादिभिः॥ चिन्ता ध्यानात्मिका तस्यामनुभावा मता इमे। कार्श्याधोमुख्यसंतापनिश्वासो-

---

लाभात् अतिमात्रभस्य नक्तभीरुत्वमिति लभ्यते। उत्तरवाक्ये वा राधोद्देशेन एतत्कर्मकगृहप्रापणस्य विधेयत्वं विवक्षितम्। उभयथाऽपि पूर्वोत्तरवाक्ययोरेकस्योद्देश्यत्वाभावान्नानुपपत्तिः। 'धाता तव' इत्यादौ तु पूर्वोत्तरवाक्ययोः युष्मत्पदार्थोद्देशेनैव धातृरूपभक्तसद्भावनमःपदार्थयोर्विधेयत्वविवक्षणादन्वादेशोपपत्तिः॥ 'स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसमये। त्वमासीर्मातश्श्रीः कमितुरिदमित्थंत्वविभवस्तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि।' इत्यादावपि पूर्वोत्तरवाक्ययोरुद्देश्यभेदाविवक्षयाऽन्वादेशविरहोपपत्तिरवगन्तव्या। तां त्वां दास इत्यत्रापि पूर्वार्धे त्वद्वल्लभपदार्थस्यैवोद्देश्यतया उत्तरवाक्ये च तदन्यस्य पदार्थस्यैवोद्देश्यतयाऽन्वादेशविरहोपपत्तिरीति सुधियो विदांकुर्वन्तु ॥ ४२ ॥

च्छ्वसनादयः' इति। सर्वेषामेषामन्योन्यानुपमर्देन सम्भूयवृत्तेर्भावसन्धिः ॥ ४२ ॥

एवं शिशिरादौ स्वानुभूतावस्थादिकं संदिश्याथ 'अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः। सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम्। तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ त्रयाणामेव भूतानां सागरस्यास्य लङ्घने। शक्तिस्स्याद्वैनतेयस्य तव वा मारुतस्य वा। तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे। किं पश्यसि समाधानं ब्रूहि कार्यविदां वर' इति हनूमते सीतया निवेदितं सपरिवारस्य स्वस्य सागरतरणविषयकं संदेहं निवारयन् संदिशति—

**सेतुं बध्वा विपुलमचलैस्सायकैर्वा पयोधौ**
**कृत्वा लङ्कां स्रजमिव करे खेलता वानराणाम्।**
**अल्पीयोभिस्सुमुखि दिवसैर्योधयन्यातुधानान्**
**कर्णे शीधुं तव रचयिता लक्ष्मणश्चापघोषैः॥ ४३**

हे सुमुखि ! शोभनं मुखं यस्यास्सा तथोक्ता तस्यास्संबुद्धिः। पयोधौ दुष्पारे पारावारे अचलैः शैलैः सायकैः बाणैर्वा विपुलं यावता ससैन्यस्य मम प्रस्थानायावकाशो भवेत्तावद्विशालमित्यर्थः। सेतुं बध्वा शैलकरणकसेतुबन्धने स्वस्येव लक्ष्मणस्यापि प्रयोजककर्तृतां संभाव्याचलैस्सेतुं बध्वेत्युक्तम्। अचलकरणकसेतुबन्धनस्य कालसहायादिसामग्रीभूयस्त्वसाध्यतया तावच्चिरविश्लेषो दुस्स-

होऽस्त्युत्सुकाया ममेत्यत्र क्षिप्रं तन्निर्वर्तनोपायान्तरमभिप्रयन्नाह—साय-कैर्वेति। अक्षयतूणीरस्थैर्बाणैर्वेति भावः। लक्ष्मणे सायककरण-कसेतुबन्धकर्तृत्वोक्तिस्तु 'विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालय-म्। करिष्यति पुरीं लङ्कां काकुत्स्थश्शान्तराक्षसाम्' इत्युक्त-रीत्या स्वस्मिन्निव तादृशशक्त्यतिशयसंभावनयेति ध्येयम्। यथा चायं प्रशस्यते श्रीरामचन्द्रेणैव युद्धकाण्डे—'विससर्जैकवेगेन पञ्च बाणशतानि यः। इष्वस्त्रेऽभ्यधिकस्तस्मात्कार्तवीर्याच्च लक्ष्मणः॥ अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः' इति। लङ्कां खेलतां विहरतां वानराणां खेलतामिति विशेषणेन 'शिखरैर्विकिरा-मैनां लङ्कां मुष्टिभिरेव वा। इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः' इत्याद्युक्तरीत्या महोत्साहवतां तेषां लङ्काविध्वंसनं लीलामात्रमिति द्योत्यते। करे पाणौ स्रजमिव कुसुममालामिव 'माल्यं मालास्रजौ' इत्यमरः। कृत्वा यथा कपिकरसमर्पिता कुसु-ममाला शतशस्त्रुटिता निष्पीडिता च कदर्थीक्रियते एवं लङ्का-ऽप्येतैर्वानरवीरैः कदर्थीकरिष्यत इति भावः। निदर्शयन्ति हि तत्र तत्र सर्वात्मना कदर्थीकृतत्वे शाखामृगकरार्पितां मालां 'कपिक-रमालेव शिथिलिता साऽभूत्, सृजेद्वा वानरे मालाम्' इत्यादि। ईदृश उद्योगः कियता कालेन निष्पद्येत वेत्यत्राह—अल्पीयो-भिरिति। अतिशयेनाल्पे अल्पीयांसः 'द्विवचनविभज्य' इत्यादिना ईयसुन्। अत्र विभज्योपपदाप्रयोगेऽपि बौद्धं तदादाय प्रत्ययो-पपत्तिः। यथाऽऽह वामनः—'बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः'

इति। ईयसुनि सत्यप्यल्पशब्दस्यात्र कनादेशाभावस्तु 'युवाऽल्पयोः कनन्यतरस्याम्' इति तस्य वैकल्पिकत्वेनानुशासनात्। तैस्तथोक्तैः दिवसैः, अल्पीयोभिरित्यनेन द्वित्रैरेवेति द्योत्यते। यातुधानान् निशाचरान् योधयन् संप्रहारयन् सन् स्वचापघोषश्रावणेन तान् सङ्ग्रामोद्यतान्कारयन्निति भावः। 'युध संप्रहारे' अस्माद्दैवादिकाण्णिजन्ताच्छता। अस्याकर्मकत्वादण्यन्ते कर्तॄणां यातुधानानां ण्यन्तावस्थायां कर्मत्वं 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इत्यनुशासनात्। लक्ष्मणः सौमित्रिः 'लक्ष्मणो लक्ष्मिसंपन्नः' इत्युक्तरीत्या विजयलक्ष्मीसंपन्नः अतोऽयं शत्रून्विजेष्यते वा न वेति न सन्देग्धव्यमिति भावः। लक्ष्मीशब्दस्य षामादिषु पाठात् 'लक्ष्म्या अच्च' इति नत्वात्वे। चापघोषैः धनुर्विष्फारैः तव 'रामस्य धनुषश्शब्दं श्रोष्यसि त्वं महास्वनम्। शतक्रतुविसृष्टस्य निर्घोषमशनेरिव॥ इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः। इषवो निपतिष्यन्ति रामलक्ष्मणलक्षणाः' इति रावणं प्रत्यस्मत्पराक्रमप्रभावं वर्णितवत्या अस्मद्विजयवृत्तान्तश्रवणोत्सुकायाश्चेति भावः। कर्णे श्रोत्रे शीधुं मधु 'मैरेयमासवश्शीधुः' इत्यमरः। अनद्यतनभविष्यदर्थकलुट्प्रयोगेणागामिरात्रिपूर्वार्धपर्यन्तमेव विलम्बस्सोढव्यस्ततः परश्च एव श्रवणानन्दं रचयिष्यतीति द्योतितम्। आत्मनः पराक्रममप्रशस्य रामेण लक्ष्मणपराक्रमस्य प्रशंसनं तु 'कौसल्या लोकभर्तारं सुषुवे यं मनस्विनी। तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय' इत्येता-

वदेव संदिश्य 'स्रजश्च सर्वरत्नानि प्रिया याश्च वराङ्गनाः। ऐश्वर्यं च विशालायां पृथिव्यामपि दुर्लभम् ॥ पितरं मातरं चैव संमान्याभिप्रसाद्य च। अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः ॥ आनुकूल्येन धर्मात्मा त्यक्त्वा सुखमनुत्तमम्। अनुगच्छति काकुत्स्थं भ्रातरं पालयन्वने ॥ सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः। पितृवद्वर्तते रामे मातृवन्मां समाचरन् ॥ ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः। वृद्धोपसेवी लक्ष्मीवान् शक्तो न बहुभाषिता ॥ राजपुत्रः प्रियश्श्रेष्ठस्सदृशश्श्वशुरस्य मे। मम प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः ॥ नियुक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान्। यं दृष्ट्वा राघवो नैव वृत्तमार्यमनुस्मरेत् ॥ स ममार्थाय कुशलं प्रष्टव्यो वचनान्मम' इति महता प्रबन्धेन विशेषतः प्रशस्य हनूमन्मुखेन यस्य कुशलमनुयुक्तवती 'भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परन्तपः। कस्य हेतोर्न मां वीरः परित्राति महाबलः' इति। यस्मिन्विस्रम्भवती च त्वं स लक्ष्मण एव तव कर्णानन्दं रचयितेत्यभिप्रायेण, तस्मात् 'तां दीनां दीनवदनाम्' इत्युक्तप्रक्रियया रक्षोऽवरोधनिरोधबाधादौर्मनस्यप्रयुक्तदीनवदनतां दूरेऽपहाय 'अदीनां भर्तृतेजसा' इत्युक्तप्रकारेणास्मद्विक्रमपरिचिन्तनप्रयुक्तसौमनस्येन सौमुख्यमेव भजस्वेत्यभिप्रायेणादावेव सुमुखीत्यामन्त्रणमिति ध्येयम्। [1]अत्र प्रथमे पादे

[1]अत्र प्रथमे पादे सेतुबन्धकरणत्वेन युगपत्तुल्यतयोपस्थितयोरचलसायकयोर्विरोधात् 'दिवि वा भुवि वा स्थले जले वा भुजदण्डैरथवा प्रचण्ड-

सेतुबन्धनकरणत्वेन युगपत्तुल्यतयोपस्थितयोरचलसायकयोर्विरोधात् 'दिवि वा भुवि वा स्थले जले वा भुजदण्डैरथवा प्रचण्डकाण्डैः। तव राम यथाऽस्ति यत्र शिक्षा वद तत्रैव मृधं तथा विधास्ये' इत्यत्रेव विकल्पालङ्कारः। तथाच तल्लक्षणं साहित्यरत्नाकरे—'तुल्यप्रमाणवैशिष्ट्याद्युगपत्प्राप्तयोः क्वचित्। विरोधश्चेत्सदृशयोर्विकल्पस्तत्र जल्प्यते' इति। 'तुल्यं हि विरुद्धद्वयं युगपदुपस्थितं विकल्पार्हं तेन यत्र तुल्यप्रमाणवैशिष्ट्या-

काण्डैः। तव राम यथाऽस्ति यत्र शिक्षा वद तत्रैव मृधं तथा विधास्ये' इत्यत्रेव विकल्पालङ्कार इति रसास्वादिनी ॥ यत्तु—अचलैस्सेतुबन्धने तस्य बहुकालसामग्रीसाध्यतया विलम्बस्स्यादिति शङ्कया कल्पान्तरानुधावनस्यादरणे तु तुल्यबलविरोधाभावान्न विकल्पालङ्कारः इति—तन्न. वैदेह्यास्तथाविधाशङ्कायां संभावितायामपि तदाशङ्कोपजनितकातर्यनिराचिकीर्षया सायकैरित्यस्यावतारेऽपि वक्त्रा भगवद्दाशरथिना अचलानां सायकानां च समबलताया एवाभिसंहितत्वात्। सायकैस्सेतुबन्धनं हि शक्त्यतिशयोपयोगसापेक्षम्। अचलैस्तद्बन्धनं तु सहायातिशयोपयोगसापेक्षम्। तयोरेकं यावता कालेन निष्पादयितुमिष्यते अपरमपि तावतैव कालेनेति हि भगवतोऽभिसन्धिः। असन्निकर्षात् अनध्यक्षितवानरसेनासहायातिशयतया तु वैदेह्यास्तथाऽऽशङ्कां संभाव्य साक्षात्कृतलक्ष्मणशक्त्यतिशयां तामाश्वासयितुं सायकैरित्युक्तं केवलम्। अन्यथा पूर्वोत्तरकल्पयोरिह कालभूयस्त्वाल्पीयस्त्वयोर्वस्तुतो भगवताऽभिसंहितत्वे उत्तरकल्प एव नैर्भयातिशयस्यावश्यकतया अचिरनिष्पाद्यं सायकसेतुबन्धं सन्दिश्य चिरनिष्पाद्ये अचलसेतुबन्ध एव प्रवर्तमानस्य दाशरथेर्वचनमिदं बालोपच्छन्दनादिवचनतुल्यमेव स्यात्। तथा वर्णयितॄणामाचार्याणां वा 'रामो द्विर्नाभिभाषते' इत्यादिप्रतिजानानस्य नायकस्य भगवतोऽत्र स्वभावविपर्ययनिबन्धनप्रयुक्तमनवधानं प्रसज्येतेति। तस्मात् प्रथमपक्षे सहायानां संभूय संह-

त्समबलयोर्द्वयोरेकत्र युगपत्प्राप्तौ विरोधस्स्फुरति तत्र विकल्पालङ्कारः' इति तदर्थश्च तत्रैवोक्तः, द्वितीयपादे लङ्कां स्रजमिवेत्यत्र धर्मलुप्तोपमा, तृतीयपादे सुमुखीति विशेष्यस्योक्तरीत्या सौमनस्यभजनाभिप्रायगर्भत्वात्परिकराङ्कुरः, चतुर्थपादे विषयभूतमानन्दं निगीर्य विषयिवाचकेन शीधुपदेन तदुल्लेखनाद्रूपकातिशयोक्तिरित्येतेषां संसृष्टिः। अत्र सेतुं बध्वेत्यादिना गम्यमानैः पराक्रमशक्तिप्रतापादिभिरुद्दीपनविभावैः धृत्यारम्भादिभिरनुभावैः हर्षगर्वाम-

---

तानां यावती शक्तिः तावती लक्ष्मणस्यैकस्य शक्तिरितीयती भिदा। तत्र तत्र चिकीर्षितसेतुबन्धसमययोः तारतम्यं तु न मात्रयाऽपीत्येव भगवताऽभिसंहितमित्येवाश्रयणीयम्। अत एव 'अचलकरणकसेतुबन्धनस्य कालसहायादिसामग्रीभूयस्त्वसाध्यतया तावच्चिरविश्लेषो दुस्सहोऽत्युत्सुकाया ममेत्यत्र क्षिप्रं तन्निर्वर्तनोपायान्तरमभिप्रयन्नाह सायकैर्वेति' इति रसास्वादिन्यां वैदेह्याशङ्कोत्तरकल्पावतारहेतुत्वेन वर्णिता। अस्तु वाऽत्र पूर्वोत्तरकल्पयोः कालभूयस्त्वाल्पीयस्त्वकृतं तारतम्यम्। तथाऽपि न विकल्पालङ्कारस्यानुपपत्तिः। दिवि वा भुवि वेत्यादिपद्ये पूर्वोत्तरकल्पयोश्शक्तिभूयस्त्वेनापेक्षत्वतदनपेक्षत्वादिकृततारतम्ये सत्यपि क्रियायामेकस्यां कारकयोर्युगपदुपसंहारासंभवमात्रेण विरुद्धयोर्विकल्पालङ्कारस्य साहित्यरत्नाकर एव वर्णितत्वात्। एतत्सूचनायैव रसास्वादिन्यां साहित्यरत्नाकरपद्यस्य दृष्टान्ततयाऽभिधानमिति बोध्यम्। प्रसिद्धश्च भक्तिप्रपत्त्योः कालभूयस्त्वसापेक्षत्वतद्विरहादिभिस्तारतम्ये सत्यपि विकल्पस्सिद्धान्ते। यथोक्तं मूलकृद्भिरेवाचार्यैः—'विश्वासायासभूम्नोर्व्यसनभजनयोर्गौरवे को विशेषस्तत्सद्भावेऽपि धर्मान्तर इव घटते कर्तृभेदाद्विकल्पः। तद्भेदो रङ्गशायिन्ननितरगतिताद्युत्थशोकातिरेकात्सद्विद्यादौ विकल्पस्त्वभिमतिभिदया तेन तत्रैकराश्यम्' इति। तस्मादत्रोक्तशङ्कासंभावनयोत्तरकल्पावतारणादरणपक्षेऽपि विकल्पालङ्कारस्साधुः कल्पते इति विदांकुर्वन्तु विचक्षणाः ॥ ४३ ॥

र्षादिभिस्सञ्चारिभिर्लक्ष्मणगतस्योत्साहस्य स्थायिनः परिपोषणाद्वीररसो व्यज्यते। तदुक्तं भरतेन—'उत्साहाध्यवसायादविषादित्वाच्च संम्मोहात्। विविधादर्थविशेषाद्वीररसो नाम संभवति' इति। सञ्चारिणस्तु—'अमर्षः प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः। क्रोधोऽसूयाऽथ संमोह आवेगश्चोपमर्षणम्॥ गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी' इति। अन्यत्सर्वमेकान्तशितपूर्वश्लोके निरूपितमित्यलम्॥ ४३॥

लक्ष्मणस्ते कर्णानन्दं रचयितेत्यनेन क्वचिदयं मां रावणगात्रावमर्शदूषितेत्युपेक्षेतापीति मा शङ्किष्ठा इति सान्त्वयन् सन्दिशति—

**रक्षोमौळिस्तबकलवनाद्वैरबन्धे विमुक्ते**
**गत्वा चोर्वीं गगनपदवीस्वैरिणा पुष्पकेण।**
**सिद्धारम्भौ सपदि भवतामाधिराज्याभिषेकात्**
**संप्राप्स्यावश्चिरविरहतस्सञ्चितान्देवि भोगान्॥ ४४**

रक्षसो रावणस्य। क्लीबतया निर्देशस्तु—'जनस्थाने हतस्थाने निहते रक्षसा बले। अशक्तेन त्वया रक्षः कृतमेतदसाधु वै॥ आश्रमं तु तयोश्शून्यं प्रविश्य नरसिंहयोः। गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम॥ न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया। शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव' इति त्वयैवास्मत्तो रावणस्यात्यल्पवीर्यतामुपपादयन्त्या रक्ष इति निर्दिष्टस्येति द्योतयितुम्।

मौळयः शिरांसि स्तबका इवेत्युपमितसमासः। कुसुमगुच्छप्रतीकाशानां शिरसामित्यर्थः। 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः। 'स्तबक इति विकासोन्मुखकलिका नाम' इति मुकुटः। कलिका कदम्बस्येत्यन्ये, अत एव टीकासर्वस्वे—'एकप्ररोहे पुष्पाणि पृथग्यत्र बहूनि च। पुष्पगुच्छस्स विज्ञेयो यथा स्यात्करवीरकः' इति स्तबकपर्यायगुच्छशब्दार्थविवरणं च संगच्छते। एतेन 'रक्षोमौळिस्तबकलवनात् रावणशिरोमञ्जरीकर्तनात्' इति केषांचिद्व्याख्यानमनादर्तव्यम्। मञ्जर्याः स्तबकादर्थान्तरत्वात्। अत एव 'वल्लरी मञ्जरी स्त्रीयौ' इति स्तबकापर्यायतया मञ्जरी नाम पृथगेवामरसिंहेनानुशिष्यते। यद्वा—मौळय एव स्तबक इति मयूरव्यंसकादिसमासः। तस्य लवनात् छेदनाद्धेतोः स्तबकदृष्टान्तेन रावणशिरसां लवनं शस्त्रादिनिरपेक्षं नखाग्रेणापि सुकरमिति द्योतयता 'पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान्। अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर' इत्युक्तं स्वस्य शक्त्यतिशयवैभवं व्यञ्जितम्। वैरस्य विरोधस्य बन्धे प्रतिबन्धे इति यावत्। विमुक्ते कर्तरि क्तः, मोचनं प्राप्ते 'मरणन्तानि वैराणि' इत्युक्तरीत्या व्यपगते सतीत्यर्थः। बन्धशब्दस्वारस्याद्वैरे पाशतौल्यं द्योत्यते। सिद्धः निष्पन्नः आरम्भः रावणवधोद्योगो ययोस्तौ तथाभूतौ सन्तौ, 'आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः' इति विश्वमेदिन्यौ। यद्वा—एतदुत्तरत्र आधिराज्याभिषेकादित्यस्यानन्तरं संबध्यते। गगनपदव्यां अन्तरिक्षसरणौ स्वेन ईरितुं शीलमस्येति

स्वैरि 'स्वादीरेरिणोः' इति वृद्धिः। तेन तथोक्तेन स्वच्छन्दसंचरण शीलेन अप्रतिहतगतिनेति यावत्। यथोच्यते विभीषणेन—'अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज। पुष्पकं नाम भद्रं ते विमानं सूर्यसन्निभम्॥ मम भ्रातुः कुबेरस्य रावणेनाहृतं बलात्। हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम्' इति। पुष्पकेण कुबेरविमानेन 'वि· मानं तु पुष्पकं' इत्यमरः। [1] उर्वीं भूमिं च गत्वा, न केवलं पुष्पकेणान्तरिक्षं गत्वा अपि तु भूमिमपीति चकारार्थः। सपदि तत्क्षणमेव पुष्पकावतरणानुपपदमेव न तु स्तोकमपि कालविलम्ब इति भावः। भवतां पूज्यानां वसिष्ठादीनां कर्तरि षष्ठी। अत्र भवान् सभवांस्तत्रभवांस्ततोभवानितिवत्केवलभवच्छब्दोऽपि पूज्यवाची दृश्यत इत्यस्मिन्नेवाश्वासे—'पश्चादेवं कथय भवतभागधेयेन' इत्येक त्रिंशश्लोकेऽवोचाम, तन्न विस्मर्तव्यम्। अधिकश्चासौ राजा च अ·

[1] उर्वीं भूमिं च गत्वा, न केवलं पुष्पकेणान्तरिक्षं गत्वा अपि तु भूमिमपीति चकारार्थः इति रसास्वादिनी॥ यत्तु—चकारः पादपूरणे लवन-समुच्चये वा इति—तन्न, तथा सति पादपूरणमात्रप्रयोजनकरूपनिरर्थकप-दोपादानकृतकाव्यदोषप्रसङ्गात्। लवनक्रियायाः पूर्ववाक्ये गुणभूतत्वेन तत्समुच्च-यपरत्वायोगाच्च। तस्माद्रसास्वादिन्यामाचार्यप्रदर्शितमनुक्तसमुच्चायकत्वमेव युक्त-मत्र चकारस्येति॥ सञ्चितान् संपादितान् मनसा सङ्कल्पितानिति यावदिति रसास्वादिनी यत्तु—चिरविरहतः सञ्चितान् संपादितान् चिरविरहाभावे वक्ष्य-माणभोगासंभवादिति भाव इति · तन्न, भगवतोर्वैदेहीरघुनन्दनयोः विरहपू-र्वोत्तरकालयोरपि भोगस्य समानतया तयोः विरहानन्तरभोगेऽपि विरहहेतु-कत्वासंभवात्। न चात्र भोगानिति बहुवचनविवक्षितस्संपन्ननामा भोगः वि-

धिराजः 'राजाहस्सखिभ्यष्टच्' इति टच्। तस्य भावः कर्म वा आधिराज्यं 'गुणवचन' इत्यादिना ष्यञ्। तस्मिन् योऽभिषेकः अभिषेचनं तस्मात् ल्यब्लोपे पञ्चमी। वसिष्ठादिपूज्यजनकर्तृकाधिराज्याभिषेकं प्राप्येत्यर्थः। यथोच्यते—'वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः। कात्यायनो गौतमश्च सुयज्ञो विजयस्तथा॥ अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना। सलिलेन सहस्राक्षं वसवो वासवं यथा' इति। यद्वा—सपदिभवताभिति समस्तं पदं 'सुप्सुपा' इति समासः। इदानींतनानामृत्विगादीनां पूर्वं मम यौवराज्याभिषेकमारब्धवतस्तानस्येदानीमतीतत्वात्सपदि विद्यमानानामिति भावः। आधिराज्याभिषेकात् तत्कृतमाधिराज्याभिषेकं प्राप्येत्यर्थः। सिद्धः निष्पन्नः आरम्भः उद्यमः ययोस्तौ तथोक्तौ सन्तौ कोशस्तूकः, सफलाधिराज्यलाभपूर्वकान्योन्याश्लेषसौभाग्यलाभो

---

रहानन्तरमेव भवति 'प्रोषितागतयोर्यूनोर्भोगस्संपन्न ईरितः' इति सुधाकरोक्तेरिति वाच्यं प्रवासात्पूर्वमपि संपन्ननामकभोगसंभवस्य 'वेलातीतप्रणयविवशम्' इत्यादिपद्य एव साहित्यरत्नाकरसन्दर्भोदाहरणपुरस्सरमाचार्यैरेव स्थापितत्वात्। तस्मात् सञ्चितपदस्य अनुक्षणं संगृह्य संगृह्य स्थापितेऽर्थे प्रसिद्धेः प्रकृतेऽपि प्रतिक्षणं मनसा सङ्कल्प्य सङ्कल्प्य स्थापितानित्येव सञ्चितानित्यस्यार्थो युक्ततरः। 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ शेषान्मासान्गमय चतुरो लोचने मीलयित्वा। पश्चादावां विरहगणितं तं तमात्माभिलाषं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु' इति मेघसन्देशपद्यं, 'विरहे गणितं एवमेवं करिष्यामीति मनस्यावर्तितम्' इति तत्रत्यमल्लिनाथविवरणं चास्मत्पक्ष एवानुकूलमित्यवधेयम् ॥ ४४ ॥

द्योगौ सन्तावित्यर्थः। यद्वा—सिद्धः आरम्भः त्वरा सर्वोपकरणवैभव-साहित्येन संभोगविषयकसंभ्रमो ययोस्तौ तथोक्तौ सन्तावित्यर्थः। अनेन कालाक्षमत्वलक्षणमौत्सुक्यं सूचितम्। चिरं विरहश्चिरविरहः अत्र वक्तव्यं सर्वमस्मिन्नेवाश्वासे द्वादशे श्लोके चिरविरहितानित्यत्र निरूपितमधस्तात्। तस्मात् चिरविरहत आद्यादित्वात्तसिः। सञ्चितान् संपादितान् मनसा संकल्पितानिति यावत्। भोगान् संभोगान् बहुवचनेन भोगस्य सर्वोपचारसंपन्नतया विस्तृतत्वं गम्यते, अयमेव संपन्नतर इति व्यवह्रियते। यथोक्तं रसार्णवसुधाकरे—'भयव्यळीकस्मरणाद्यभावात्प्राप्तवैभवः। प्रोषितागतयोर्यूनोर्भोगस्संपन्न ईरितः' इति। गतमन्यत्, संप्राप्स्यावः सम्यक् विगळितवेद्यान्तरं यथा स्यात्तथा लप्स्यावहे इत्यर्थः। उक्तसंभोगौपयिकक्रीडामोदकान्त्यादिसमृद्धिमत्ताद्योतनाय देवीति संबोधनं दीव्यतेस्तथाऽर्थकत्वात्। अत्र बन्धमोक्षलवनयोः कार्यकारणयोर्भिन्नदेशत्ववर्णनादसंगतिर्नामालङ्कारः 'कार्यकारणयोर्भिन्नदेशत्वे सत्यसंगतिः' इति लक्षणात्। मौळिस्तबकेत्यत्रोपन्यस्तसमासभेदनिबन्धनयोरुपमारूपकयोस्सन्देहसङ्करः, अस्य चोक्तासंगत्यलङ्कारेणैकवाचकानुप्रवेशसंकरः। गगनपदवीस्वैरिणा पुष्पकेणोर्वीं गत्वेति विरोधप्रतीतेर्विरोधाभासः, सिद्धारम्भत्वस्य विशेषणगत्या चिरकालसंभृतसंभोगप्राप्तिहेतुत्वात्काव्यलिङ्गं चेत्येतानि संसृज्यन्ते। किंच—वर्णनीये श्रीरामवृत्तान्ते कर्मकृतशरीरबन्धविमोक्षे व्योमयानेन देशविशेषं प्राप्य, तत्र 'स स्वराड्भवति' इत्याद्युक्तरीत्या मुक्ताधिराज्यलाभात् 'सोऽश्नुते सर्वा-

न्कामान्सह । ब्रह्मणा विपश्चिता ' इति श्रुतान्ब्रह्मणा सह भोगाननुभवितुमभिलष्यतो मुमुक्षोर्वृत्तान्तोऽप्रस्तुतः प्रतीयत इति समासोक्तिरुक्तालङ्कारैरेकवाचकानुप्रविष्टैस्सङ्कीर्यते ॥ ४४ ॥

उक्तेऽर्थे प्रत्ययमुत्पादयितुं 'ततो रामस्तु विजयी पूज्यमानो महर्षिभिः । प्रविवेशाश्रमं वीरो लक्ष्मणेनाभिपूजितः ॥ तं दृष्ट्वा शत्रुहन्तारं महार्षीणां सुखावहम् । बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ ततस्तु तं राक्षससङ्घमर्दनं सभाज्यमानं मुदितैर्महर्षिभिः । पुनः परिष्वज्य शशिप्रभानना बभूव हृष्टा जनकात्मजा तदा ' इत्युक्तं प्राक्तनं वृत्तान्तं स्मारयन्संदिशति—

**चित्ते कुर्यात्तदपि भवती यज्जनस्थानयुद्धात्**
**संप्राप्तं मां दशमुखसमान्पारयित्वा खरादीन् ।**
**शस्त्राघातं स्तनकलशयोरूष्मणा रोपयद्भिः**
**गाढाश्लेषैरपिहितवती गद्गदा हर्षबाष्पैः ॥ ४५**

दशमुखसमान् रावणेन तुल्यान् 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ' इति तृतीयासमासः । अनेन क्षोदिष्ठखरादिनिरासेऽपि प्रबलतरदशानननिरसनं कथङ्कारं सुशकमिति स्ववचने सीतायाश्श्रद्धामान्द्यसंभावना व्युदस्यते । खरः आदिः प्रमुखो येषां तान्, आदिशब्देन दूषणत्रिशिरःप्रभृतीनां ग्रहणम् । पारयित्वा समाप्य 'पार तीर कर्मसमाप्तौ ' इत्यस्माच्चौरादिकात् क्त्वाप्रत्ययः संहृत्येत्यर्थः। पारयित्वेति निर्देशेन 'तत्त्वनीकं महावेगं रामं समुपसर्पति । धृत-

नानाप्रहरणं गम्भीरं सागरोपमम्' इत्युक्तरीत्या तेषां पारावारवदतिदुस्तरत्वं द्योतयता तदतिलङ्घनेन स्वस्य बलपराक्रमादिप्रभावो निरवधिक इति द्योतितम्। जनस्थानयुद्धात् जनस्थाननिर्वृत्तादायोधनात् संप्राप्तं संमुखतयाऽऽगतं मां 'ततस्तत्प्रहतं बाणैः खरमुक्तैस्सुपर्वभिः। पपात कवचं भूमौ रामस्यादित्यवर्चसः॥ स रामो बहुभिर्बाणैः खरकार्मुकनिस्सृतैः। विद्धो रुधिरसिक्ताङ्गः' इत्याद्युक्तप्रक्रियया खरविध्वंसितकवचतया तदीयबाणाभिहतसर्वमर्माणमिति भावः। हर्षबाष्पैः आनन्दाश्रुभिः गद्गदा विकृतस्वरा भवती त्वं स्तनकलशयोः कुम्भसदृशयोः कुचयोः कुचरूपयोः कुम्भयोर्वा ऊष्मणा सुखस्पर्शेन बाष्पेण शस्त्राणां खरादिप्रयुक्तानामस्त्राणां आघातं क्षतं रोपयद्भिः 'वैनतेयेन संस्पृष्टास्तयोस्संरुरुहुर्व्रणाः' इत्युक्तरीत्या स्पर्शमात्रेण संरोहयद्भिः शस्त्राघातक्षतमविदितसंस्थानतया समादधद्भिरित्यभिप्रायः। 'रुह बीजजन्मनि प्रादुर्भावे च' अस्माद्भौवादिकाण्णिचि 'रुहः पोऽन्यतरस्याम्' इति वैकल्पिको हस्य पादेशः ततश्शता। संपूर्वकस्य रोहयतेरीदृशार्थकत्वमन्यत्रापि दृश्यते यथाऽऽह मुरारिमिश्रः—'हृन्मर्मव्रणरोपणौषधमिमौ बाहू बहूत्ताम्यतः' इति, 'तत्तादृक्फणिराजरज्जुकषणं संरूढपक्षच्छिदाघातारुंतुदमप्यहो कथमयं मन्थाचलस्सोढवान्' इति च। [1]यथा क्वथितौषधीसलिलपूरितकुम्भमुखनिस्सरदूष्मार्पणेन

[1] यथा क्वथितौषधीसलिलपूरितकुम्भमुखनिस्सरदूष्मार्पणेन वेदनामपनयन्तो भिषजः क्षतादिकं समादधते तथेति भावः इति रसास्वादिनी॥ यत्तु—

वेदनामपनयन्तो भिषजः क्षतादिकं समादधते तथेति भावः। गाढा-श्लेषैः दृढपरिष्वङ्गैः 'गाढबाढदृढानि च' इत्यमरः। अपिहितवती आच्छादितवती, उक्तविधैर्गाढपरीरम्भैरेव संरोपितक्षततया मां तिरोहिततदीयवैकृतं कृतवतीति भावः' इति यत् तदपि न त्विदानीमाश्वासनार्थं संदिश्यमानमिदमेव येन 'उपस्थितं प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम्' इत्युक्तरीत्या चाटूक्तिमात्रमिदमिति शङ्केथाः, अपि तु प्रत्येतव्यमुक्तविधं प्राक्तनं वृत्तमपीति भावः। चित्ते कुर्यात् मनसि वितनुयात्। स्मृतिपथमधिरोपयेदिति भावः। भवतीशब्दप्रयोगात् 'शेषे प्रथमः' इति प्रथमपुरुषः भवच्छब्दस्य युष्मदस्मदपेक्षया शेषत्वात्, यथाहि पुरा खरादिसुरारिपराभवानन्तरं गाढपरिष्वङ्गप्रदानेन मां प्रमुषितरिपुशस्त्रप्रहारक्षतिवेदनमकार्षीस्तथेदानीमपि करिष्यस्येव नात्र मात्रयाऽपि संदेग्धव्यं अत इदानीं संदिश्यमानोऽर्थस्सर्वोऽपि प्रत्येतव्य एवेति भावः। अत्र स्तनकलशयोरित्यत्रोपमारूपकयोस्संदेहसंकरः स्तनकलशोष्मणा शस्त्रक्षतरोपणासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिभेद इत्यनयोरेकवाचकानुप्रवेशसंकरः। अत्र पूर्वार्धेऽभिव्यज्यमानो वीररस उत्तरार्धाभिव्यज्यमानस्य संभोगशृङ्गारस्याङ्गमिति रसवन्नामापराङ्गव्यङ्ग्यमिति संक्षेपः ॥ ४९ ॥

एवं मत्सन्देशमभिज्ञाय दैवपरिणतेरुपनतां मद्विश्लेषवेदनां श-

यथा क्वथितौषधिजलपूर्णकुम्भोष्मणा भिषजः क्षतान्युपक्रमन्ते तथेति भाव इति—तन्न. 'क्षतानि चिकित्सितुमुपक्रमन्ते' इत्येवं हि भाव्यम् ॥ ४५ ॥

च्यादिनिदर्शनेन सोढ्वा कतिपयदिवसान्कथंचिदात्मा रक्षितव्यः न तु 'सा जीवितं क्षिप्रमहं त्यजामि' इत्युक्तरीत्या सहसा जीवितं जिहासितव्यमित्याश्वासयन्सन्देशमुपसंहरति—

**शच्याः क्लेशं क्वचन समये तादृशं चिन्तयित्वा**
**स्मृत्वा देवीमचलतनयां विप्रयुक्तां शिवेन।**
**रक्षात्मानं कथमपि शुभे जीविताल्म्बनं मे**
**पत्युश्छन्दाद्व्यसनमपि हि श्लाघनीयं वधू-**
**नाम् ॥ ४६ ॥**

क्वचन समये कस्मिंश्चिद्दैवप्रातिकूल्यावसरे वृत्रहननलक्षणब्रह्महत्यया मूर्तिमत्या सर्वतो विद्रुततया भयान्महेन्द्रे भूयसो दैववत्सरान्कमलनाळान्तस्सूक्ष्मतन्तुविलीने, नहुषे चेन्द्रपदमध्यासीने इति भावः। तादृशं वाङ्मनसापरिच्छेद्यं शच्याः पौलोम्याः क्लेशं स्ववल्लभविश्लेषनहुषप्रधर्षणमुखभयजनितदौर्मनस्यलक्षणं दुःखं 'क्लेशो दुःखेऽपि रागादौ व्यवसायेऽपि च क्वचित्' इति विश्वः। चिन्तयित्वा पर्यालोच्य, अत्र 'त्रैशीर्षयाऽभिभूतश्च स पूर्वं ब्रह्महत्यया। सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः॥ न प्राज्ञायत देवेन्द्रस्त्वभिभूतस्स्वकल्मषैः। प्रतिच्छन्नोऽवसच्चाप्सु चेष्टमान इवोरगः' इत्यारभ्य 'एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्यया। अज्ञातवासश्च कृतश्शत्रूणां वधकाङ्क्षया' इत्यन्ता उद्योगपर्वगता महती वृत्रवधकथाऽनुसन्धेया। न केवलं शच्या एवेदृशः क्लेशस्स्मर्तव्यः किन्तु

बाढयोः ' इत्युत्पलमाला । आत्मानं शरीरं 'आत्मा यत्नो धृतिर्बुद्धि-स्स्वभावो ब्रह्म वर्ष्म च ' इत्यमरः । रक्ष त्रायस्व पार्वतीवच्छरीरं मा त्याक्षीः किन्तु शचीवत् ' सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । सुखदुःखे मनुष्याणां चक्रवत्परिवर्ततः ॥ सुखात्त्वं दुःखमापन्नः पुनराप-त्स्यसे सुखम् । न नित्यं लभते दुःखं न नित्यं लभते सु-खम् ॥ शरीरमेवायतनं दुःखस्य च सुखस्य च ' इति मोक्षधर्मो-क्तरीत्या दुःखस्य सुखान्ततां निश्चित्य सर्वप्रकारेण शरीरं धारय तथा सति 'ऐश्वर्यधनरत्नानां प्रत्यमित्रेषु वर्तताम् । दृष्टा हि पुन-रावृत्तिर्जीवतामिति नश्श्रुतम् ' इति राजधर्मोक्तरीत्या मत्प्राप्तचैश्व-र्याद्यानन्दोऽवश्यंभावी, अत एव हि ' मा रुदो देवि शोकेन मा भूत्ते मनसो भयम् । शचीव पत्या शक्रेण भर्त्रा नाथवती ह्यसि ' इति शचीदृष्टान्तप्रदर्शनेनैव त्वामाश्वासितवान् हनूमानिति भावः । सर्वस्मादपि कर्मणोऽभ्यर्हितं ह्यात्मरक्षणं, यथात्र स्मर्यते—' आ-त्मानं सर्वदा रक्षेद्दारैरपि धनैरपि ' इति दारैर्धनैः परित्यक्तैरपी-त्यर्थः । ' येन केनाप्युपायेन मृदुना दारुणेन वा । उद्धरेद्दीन-मात्मानं समर्थो धर्ममाचरेत् ॥ आत्मार्थे सन्ततिस्त्याज्या राज्यं रत्नं धनानि च । अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मना ' इति । नन्वेवं प्रियविश्लेषदीन आत्मा किमर्थं मया रक्षणीय इत्यत आह—जीवितालम्बनं मे इति । यद्वा—त्वया कृतमात्मधारणं न केवलं त्वत्सुखायैव कल्पते अपि तु मत्प्राणधारणायापीत्यभिप्रयन्नाह—जी-वितालम्बनं मे इति । मे मम, त्वां विना शरीरधारणानीश्वर-

स्येति भावः। जीवितालम्बनं प्राणधारणनिदानमिति यावत्। अत आत्माऽवश्यं रक्षितव्यः, अन्यथा अहमपि न भविष्याम्येव, त्वं चैवमात्मानमरक्षन्ती न केवलमात्मने द्रुह्यसि अपि तु मह्यमपीति भावः। ननु—'अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा। मोघं चरित्वाऽथ तपो व्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्या' इत्याद्युक्तप्रक्रियया मुधाकृततपोव्रता त्वत्संश्लेषभाग्यदवीयसी किमिति त्वज्जीवितालम्बनं भवेयमित्यतस्सम्बोधयति—शुभे इति। अनुपाधिकानिर्देशादसंकुचितकल्याणशीले! इत्यर्थः। 'शुभां निमित्तानि शुभानि भेजिरे' इति भगवता वल्मीकजन्मना तादृश्यामपि दुरवस्थायां शुभामिति विशेषितत्वात्तव शुभत्वमनौपाधिकमव्याहतं च। न हि दुःखासहिष्णुतयाऽल्पभाग्येति त्वयाऽऽत्मनि निन्दितेऽपि तदेव निरचिनोत्स भगवान्सर्वदर्शी महर्षिः, अतो न सन्देग्धव्यं तव मज्जीवितालम्बनतायामिति भावः। अत्र 'आनीदवातꣳ स्वधया तदेकम्' इति श्रुतं परस्य ब्रह्मणस्स्वस्य श्रीसीतायत्तप्राणनत्वरूपरहस्यं सूचितम्। ननु यद्यपि स्यात्त्वज्जीवितालम्बनं मदात्मा तथाऽपि 'व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते। व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः' इति स्मरणान्मृत्योरपि पापिष्ठं व्यसनं कथं नु नाम सहेय येनाधःपातहेतुना मन्ये नैहिकमामुष्मिकं वा फलम्। यथोक्तं जटायुना—'यत्कृत्वा न भवेद्धर्मो न कीर्तिर्न यशो भुवि। शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत्' इतीत्यत्र 'न मामसज्जने-

नार्या समानयितुमर्हति। धर्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा॥ नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः। नापतिस्सुखमेधेत या स्यादपि शतात्मजा॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः। अमितस्य हि दातारं भर्तारं का न पूजयेत्' इति स्वपातिव्रत्यनैर्भर्यं श्वश्रूसमक्षं प्रतिश्रुतवत्याः 'भर्तृवात्सल्यभूषणाम्' इत्याद्युक्तशीलायास्तवैवं मच्छन्दाद्व्यसनमपि सर्वलोकप्रशंसनीयमेव स्यादित्यभिप्रयन्नर्थान्तरं न्यस्यति—पत्युरिति। वधूनां 'पतिं या नाभिचरति मनोवाग्देहसंयता। सा भर्तृलोकानाप्नोति सद्भिस्साध्वीति चोच्यते' इत्याद्युक्तलक्षणानां साध्वीनां पत्युः भर्तुः छन्दात् दैवादुपनतं सुमहदपि सोढ्वा व्यसनं मत्कृते कथंचिज्जीवतादियमित्येवंरूपादभिप्रायात्। हेतौ पञ्चमी। 'अभिप्रायवशौ छन्दौ' इत्यमरः। यद्वा—स्वविषयं तथाविधं भर्त्रभिप्रायमनुरुध्येत्यर्थः। 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी। व्यसनं अनुभूयमाना विपत्तिः अशुभं भ्रंशः पापं कामजादिदोषो वाऽपि 'व्यसनं त्वशुभे भ्रंशे विपत्तौ निष्फलोद्यमे। दैवानिष्टफले पापे दोषे कामजकोपजे' इति रत्नमाला। यद्वा—पत्युरिति संबन्धसामान्ये षष्ठी सप्तम्यर्थे। पत्यौ भर्तरि विषये इत्यर्थः। छन्दात् तदाश्लेषसुखलाभोत्कण्ठारूपादभिप्रायादित्यर्थः। व्यसनमपि उक्तोऽर्थः। श्लाघनीयं लोकद्वयेऽपि श्लाघितुमर्हं पतिव्रतानां भर्त्रभिप्रायानुरोधेन व्यसनानुभवोऽपि नीराजनार्ह एव भवति न तु क्वचित्केनचिदपि निन्दनीयः। अत एव हि 'तथा गतां

तां व्यथितामनिन्दिताम्' इति प्राशंसद्भगवान्प्राचेतसस्त्वामिति भावः। 'प्रोषिते मलिना कृशा' इत्याद्युक्तरीत्या भर्तृविरहावसरे यथाऽवस्थातव्यं तथाऽवस्थितत्वेनानिन्दितामिति तदर्थः। अस्य एवं कथयेत्यनेन 'पश्चादेवं' इत्येकत्रिंशश्लोकस्थेनान्वयः। अत्र सीतायास्स्वतुल्यशचीव्यसनादिस्मरणस्य निबद्धत्वात् स्मृत्यलंकारः। जीवितालम्बनमित्यस्य सीताविग्रहावश्यरक्षणीयताभिप्रायगर्भत्वात्परिकरः। सामान्येन विशेषसमर्थनादर्थान्तरन्यासश्चेत्येते संसृज्यन्ते ॥ ४६ ॥

एवं सीताविषयकं संदेशं परिसमाप्य कर्तव्यं संदेशप्रापणरूपसाहायकमिदं कच्चित्सम्यग्भवता व्यवसितमिति प्रश्नव्याजेन द्रढयन् हंसं प्रशंसति भगवान् श्रीरघुनन्दनः—

**अप्येतत्ते मनसि निहितं साह्यमव्याजबन्धोः(न्धो)**
**प्रत्याख्यातुं प्रभवति न खल्वानृशंस्यं त्वदीयम् ।**
**प्रागप्येवं परिणतगुणां नैषधे वीक्ष्य वार्तां**
**आर्तत्राणं व्रतमिति विदुर्हंस(त)शुद्धात्मनां वः ॥ ४७ ॥**

हे हंस! अव्याजबन्धोः निष्कारणसुहृदः निष्कारणबान्धवस्य वा 'बन्धुस्स्यात्पुंसि बन्धूके मित्रे भ्रातरि बान्धवे' इति मेदिनी। ते तव सोपाधिकमेव हि प्रायो लौकिकानां बान्धव्यम्। यथोच्यते शान्तिपर्वणि राजधर्मेषु—'अर्थयुक्त्या हि जायन्ते पिता माता सुतस्तथा। मातुला भागिनेयाश्च ज्ञातिसंबन्धिबान्धवाः॥ कारणात्प्रियता-

मेति द्वेष्यो भवति कारणात् । अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥ सख्यं सोदर्ययोर्भ्रात्रोर्दंपत्योर्वा परस्परम् । कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह ॥ यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे । स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः ॥ प्रियो भवति दानेन प्रियवादेन चापरः । मन्त्रहोमजपैरन्यः कार्यार्थे प्रीयते नरः ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्य चित्सुहृत् । अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा' इति । त्वं तु निरुपाधिकबान्धवो लोकोत्तरगुणोऽसीति भावः । मनसि चित्ते एतत् मया प्रार्थितं साह्यांसंदेशप्रापणरूपसाहायकं, सहशब्दो वृत्तिविषये सहायवाची, सहभावस्साह्यं ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । अपिनिहितं कच्चिन्निक्षिप्तं कर्तव्यतया किमध्यवसितमित्यर्थः । अपिरत्र प्रश्नार्थकः 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः । अव्याजबन्धुना भवता कर्तुमध्यवसितमेवेदं किमस्मत्प्रश्नचापलेनेति स्वयमेव स्वप्रश्नं प्रतिक्षिपन्नाह—प्रत्याख्यातुमिति । त्वदीयं त्वत्संबन्धि अनृशंसस्य भावः आनृशंस्यं स्वार्थनिरपेक्षा परदुःखनिराकरणेच्छा 'आनृशंस्यं परो धर्मः' इति यन्मया परमधर्मत्वेन निर्णीतामिति भावः । प्रत्याख्यातुं साह्यमित्येतदत्रापि विभक्तिविपरिणामेन कर्मतयाऽन्वेति । अध्यवसितं सन्देशप्रापणरूपं साह्यं निराकर्तुमित्यर्थः । न प्रभवति नेष्टे खलु [1] खल्वित्येतदनुनये । जिज्ञासायां वा 'निषेधवा-

[1] खल्वित्येतदनुनये इति रसास्वादिनी ॥ यत्तु—न प्रभवति खलु न समर्थं भवत्येव । खल्विति नियमे—इति—तन्न. खल्वित्यस्य नियमार्थकतायां कोशाद्यनुदाहरणात् ॥ ४७ ॥

क्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः। जिज्ञासार्थकत्वपक्षे 'अप्येतत्ते' इति प्राथमिकवाक्येन साह्याध्यवसायप्रश्नः, प्रत्याख्यातुमिति द्वैतीयीकवाक्येन तदप्रत्याख्यानजिज्ञासा च स्वविवक्षितार्थाभ्युपगमनदार्ढ्यापादनायेति ध्येयम्। त्वदानृशंस्यमेव न कदाऽपि प्रत्याख्यास्यति त्वं कथं प्रत्याख्यातुं प्रभवसीति भावः। अनेनानृशंस्यप्रशंसनेन हंसस्यातिमात्रपूजिततया नित्यसंवासार्होत्तममित्रत्वं सूचितम्। यथोच्यते शान्तिपर्वणि—'यस्य वृद्ध्या न तृप्येत क्षये दीनतरो भवेत्। एतदुत्तममित्रस्य निमित्तमिति चक्षते' इत्युपक्रम्य 'मेधावी स्मृतिमान् दक्षः प्रकृत्या चानृशंस्यवान्। यो मानितोऽमानितो वा न च दुष्येत्कदा चन॥ ऋत्विग्वा यदि वाऽऽचार्यस्सखा वाऽत्यन्तसंस्तुतः। गृहे वसेदमात्यस्ते स स्यात्परमपूजितः' इति। निमित्तमित्यस्य लक्षणमित्यर्थः। कुतो न प्रत्यादिशेदित्यत्र प्रेक्षावतां निश्चयं प्रमाणयति—प्रागिति। प्रागपि पूर्वमपि न त्वधुनैव एवं अधुना यादृशो भवतस्साह्ये प्रवृत्तिप्रकारः प्रागप्यनेन प्रकारेणैवेत्यर्थः। परिणतः परिपक्वः गुणः आनृशंस्यरूपो गुणः यस्यां सा तां तथोक्तां 'पक्वं परिणते' इत्यमरः। [1]नैषधे नले 'स नैषधस्यार्थपतेः' इत्यादाविव शैषिकः 'तस्येदम्' इत्यण्। निषधानामयं नैषध इति विग्रहः। न तु

[1]नैषधे नले। स नैषधस्यार्थपतेरित्यादाविव शैषिकः तस्येदमित्यण्। निषधानामयं नैषध इति विग्रहः। न तु निषधानां राजेति। तथा सति 'कुरुनादिभ्यो ण्यः' इति तद्राजसंज्ञके ण्यप्रत्यये नैषध्य इति स्यात् इति रसास्वादिनी॥ यत्पुनः—कुरुनादिभ्य इति सूत्रकौमुदीसन्दर्भमप्यनवलोक्य

निषधानां राजेति । तथा सति 'कुरुनादिभ्यो ण्यः' इति तद्राजसंज्ञके ण्यप्रत्यये नैषध्य इति स्यात् । [1]वार्तां हंसवृत्तान्तं 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । वीक्ष्य सम्यगालोच्येत्यर्थः । दमयन्तीं प्रति स्वगुणानुवर्णनरूपं साह्यं हंसेन नळस्य कृतमिति प्रसिध्यति नैषधीयचरिते । शुद्धात्मनां निर्मलमनस्कानां स्वच्छविग्रहाणामित्यपि व्यज्यते । वः युष्माकं आर्तानां मादृशां दीनानां त्राणं रक्षणमेव व्रतं नियम इति 'नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्' इत्यमरः । विदुः विदन्ति जानन्तीत्यर्थः 'विद ज्ञाने' लट् 'विदो लटो वा' इति वैकल्पिको झेरुस् । अतो

---

अवलोकितामप्युपदर्शितरसास्वादिनीसूक्तिमतिलङ्घ्य 'निषधानां राजा नैषधो नलः । जनपदशब्दात्क्षत्रियादञ्' इति विवृतं—तदिदमतिसाहसमिति विदाङ्कुर्वन्तु विद्वांसः । जनपदशब्दादित्यनुशासनापेक्षया कुरुनादिभ्य इत्यस्य परत्वे सापवादत्वेन च नादौ निषधशब्दे उत्सर्गभूतपूर्वशास्त्रप्रवृत्तेरसंभवात् ॥

[1] वार्तां हंसवृत्तान्तमिति रसास्वादिनी ॥ यत्तु -परिणतगुणां ते वार्तां वृत्तान्तं वीक्ष्य सम्यगालोच्येत्यर्थः । निर्व्याजबन्धुना त्वयैव पूर्वं नलेऽपि दमयन्तीसंयोजने साह्यमाचरितमिति प्रसिद्धमेवेति भावः । इति—तन्न. प्रकृतहंसव्यक्तेरेव दमयन्तीसंयोजनसाह्यकारित्वे मानाभावेन 'ते' इत्यस्य वार्तामित्यत्रानुकर्षासङ्गतेः । व इत्यनेन व्यक्तिभेदस्यैवेह स्फुटप्रतीत्या तदैक्यविवक्षाया अपीह्ययोगाच्च । 'विदुः जानन्ति निश्चिन्वन्ति भूयोदर्शनसत्त्वादिति भावः । ये शुद्धात्मानः ते आर्तत्राणव्रता इति निश्चितत्वेन तवानृशंस्यं साह्यं प्रत्याख्यातुं न प्रभवत्येवेति भावः' इत्युदीच्येन स्वग्रन्थेनैव व्याहतेश्च । ये शुद्धात्मान इत्यादिव्याप्तिग्रहौपयिकस्य वीक्ष्येति सन्दर्भनिबद्धस्य सहचारदर्शनस्य प्रकृतपक्षभूतहंसातिरिक्तहंसव्यक्त्यन्तर्भावेणैव विवक्षणावश्यकत्वात् ॥ ४७ ॥

भवतामार्तत्राणपरायणत्वादानृशंस्यमध्यवसितं साह्यं न प्रत्याख्यातुमर्हतीति भावः। हंस शुद्धात्मनामिति पाठ एव स्वारसिकः॥ पूर्वस्मिन् श्लोके सीताविशयकसन्देशस्य परिसमापितत्वेनास्य श्लोकस्य हंसं प्रत्येव प्रवृत्ततया तदामन्त्रणावश्यंभावात्। ये तु— 'हन्त शुद्धात्मनाम्' इति पठित्वा 'हन्तेत्याश्चर्ये' इति व्याचक्षते तेषां पक्षे अव्याजबन्धोरित्यस्य संबुद्ध्यन्ततया पाठे आवश्यकहंसामन्त्रणस्यापि लाभेन हन्तेत्यस्य तिरश्चामपि भवतामेवं नियमेन देवादिदुश्शकार्तत्राणव्रतधारणमाश्चर्यमित्यभिप्रायः कल्पनीयः। अत्र अव्याजबन्धोरित्यस्य विशेषणगत्या साह्यमनस्कारतदप्रत्याख्याने प्रति हेतुत्वात्काव्यलिङ्गभेदः। अप्येतत्ते इति हंसं प्रति प्रार्थितस्यार्थस्य तदीयाव्याजबन्धुत्वपर्यालोचनया वैयर्थ्यं विचिन्त्य प्रत्याख्यातुमित्यादिना प्रतिषेधादाक्षेपालङ्कारः 'आक्षेपस्स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति लक्षणात्। अनयोरेकवाचकानुप्रवेशसङ्करः। अयं चार्थान्तरन्यासेनाङ्गेन सङ्कीर्यते। ये तु—अव्याजबन्धोस्ते मनसि निहितं एतत्साह्यमपि एष सहायभावोऽपि त्वदीयमानृशंस्यं प्रत्याख्यातुं न प्रभवति खल्विति योजयित्वा व्याचक्षते तत्स्वारस्यं त एव विदाङ्कुर्वन्त्विति किमस्मद्विमर्शेनेति संक्षेपः॥ ४७॥

इयदेव कर्तव्यमिदानीं त्वया यदस्मत्सन्देशप्रापणेन जानक्या उज्जीवनमिति ततःपरस्तात्सर्वेषु लोकेषु सहजानेस्तव स्वैरचङ्क्रमणं न निर्बध्नीम इत्याह भगवान्—

इत्थं हृद्यैर्जनकतनयां जीवयित्वा वचोभिः
सख्यं पुष्यन्दिनकरकुले दीप्यमानैर्नरेन्द्रैः ।
स्वैरं लोकान्विचर निखिलान् सौम्य लक्ष्म्येव विष्णुः
सर्वाकारैस्त्वदनुगुणया सेवितो राजहंस्या ॥ ४८

इत्थं उक्तप्रकारेण हृदयस्य प्रियाणि हृद्यानि तैस्तथोक्तैः 'हृदयस्य प्रियः' इति यति 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयशब्दस्य हृदादेशः। वचोभिः सन्देशवाग्भिः जनकतनयां जानकीं जीवयित्वा धृतप्राणां कृत्वा दिनं करोतीति दिनकरः सूर्यः 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः। तस्य कुले वंशे दीप्यमानैः प्रकाशमानैः। अनेन 'वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिह' इत्युक्तरीत्या तेजश्शौर्यादिभिरभिजनानुरूप्यद्योतकेन तेषां सख्यार्हता द्योत्यते। यथोच्यते शान्तिपर्वणि राजधर्मेषु—'कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः। प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः' इति, 'रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः। कुलीनः कुलसंपन्नस्स सख्यार्हो भवेन्नृप' इति च। अनेनैव नास्मत्कुले कश्चिदपि तेजश्शौर्यवीर्यादिहीनोऽभूद्भवति भविष्यति वेति व्यज्यते। नरेन्द्रैः पार्थिवैः, इन्द्रशब्देन परमैश्वर्यवाचिना निर्देशस्सर्वेषामपि सार्वभौमत्वं द्योतयति। यथोक्तं—'सर्वा पूर्वमियं येषामासीत्कृत्स्ना

वसुन्धरा। प्रजापतिमुपादाय नृपाणां जयशालिनाम्' इति, 'इक्ष्वाकूणामियं भूमिस्सशैलवनकानना' इत्यादि च। सख्युर्भावः सख्यं मैत्री 'सख्युर्यः' इति भावार्थे यप्रत्ययः। पुष्यन् वर्धयन् सन्नित्यर्थः। इदं च तव मयि समुत्पन्नं सख्यं मा भून्मन्मात्रविश्रान्तमिति भावः। पुष्यते र्दैवादिकाच्छता। निसर्गत एव त्वमीदृशो नास्मत्प्रार्थनमभिलष्यसीत्यभिप्रयन्संबोधयति—सौम्येति। हे सौम्य! दयासौहार्दादिभिर्नित्यप्रसन्नेत्यर्थः। न हि सौम्यानाममित्रेष्वपि दृष्टिर्दृश्यते विषमा किमु सखिसंबन्ध्यादिष्विति भावः। यथोच्यते—'समदृष्टेर्हि सौम्यस्य न क्वापि विषमा मतिः' इति। लक्ष्म्या श्रिया 'तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्' इत्युक्तप्रकारेण सर्वाकारैरनुगुणयेति भावः। विष्णुः भगवानिव, सर्वाकारैः सर्वाभिराकृतिभिः शीलरूपवयःप्रभृतिभिः त्वदनुगुणया तवानुरूपया राजहंस्या त्वद्दयितया। जातिलक्षणो ङीष्। सेवितः अनुबद्धस्सन् स्वैरं स्वच्छन्दं यथा स्यात्तथा निखिलान् सर्वान् लोकान् भुवनानि विचर सञ्चर 'अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी' इत्युक्तरीत्या यथा भगवान् सर्वेषु लोकेषु स्वेच्छया संचरते, तथा त्वमपि विचरेति भावः। 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति लोकानित्यस्य कर्मत्वं चरतेरामन्त्रणार्थे लोण्मध्यमपुरुषैकवचनं, आमन्त्रणं कामचारानुज्ञा। अत्र ईदृशसन्देशप्रापणरूपान्तरङ्गवाचिककैङ्कर्येण त्वं लक्ष्मीसहचरेण परब्रह्मभूतेन मया सह सर्वलोकानुसञ्चरणलक्षणमुक्तैश्वर्यभाग्भविष्यसीति हार्दोऽ-

भिप्रायोऽपि भगवता सूचित इति गम्यते। स्वैरं लोकान्विचर निखिलानित्यनेन 'एतमानन्दमयमात्मानमुमसङ्क्रम्य। इमान्लोकान्कामान्नी कामरूप्यनुसञ्चरन्, स स्वराङ्भवति तस्य सर्वेषु लोकेषु कामाचरो भवति' इति श्रुत्यर्थप्रत्यभिज्ञापनात् मुक्तस्येव परस्य ब्रह्मणोऽपि सर्वलोकसञ्चरणं 'आत्मानमुपसङ्क्रम्य, अनुसञ्चरन्' इत्यनुशब्देन श्रौतेनैव सूच्यते। इदं च 'भवन्तमेवानुचरन्' इति श्लोके, 'अमर्याद' इति श्लोके च स्तोत्रभाष्येऽपि सूचितम्। अत एवैतच्छ्रुत्युपबृंह्मणरूपं 'स च सर्वेषु लोकेषु तमेव ह्यनुसञ्चरन्। सम्मोदते समगुणः कामान्नी कामरूपधृत्' इति भरद्वाजसंहितावचनं च सङ्गच्छते 'यत्र कामगमो वशी' इत्युदाहृतवचनमप्यमुमेवार्थमुपोद्बलयति 'येन येन धाता गच्छति तेन तेन सह गच्छति तद्यथा तरुणवत्सा वत्सं वत्सो वा मातरं छाया वा सत्वमनुगच्छेत्' इति मुक्तस्य परमात्मानुविधानश्रुतिः, 'यादृग्रूपस्तु भगवान्यत्र' यत्रावतिष्ठते। मुक्तश्च पञ्चकालज्ञस्तादृशस्सह मोदते' इति तादृशशाण्डिल्यस्मृतिरप्यत्रैवानुकूले। अत्र काव्यारम्भे 'वंशे जातः' इति श्लोके स देवश्श्रीमानित्यनेन भगवतः 'यतो वा इमानि, सोऽकामयत, स ईक्षत' इत्यादिश्रुतिप्रसिद्धजगज्जन्मादिकारणत्वसूचनात् जन्माद्यधिकरणार्थस्सूचितः, अनेन श्लोकेन तु जगद्व्यापारवर्जाधिकरणार्थः। एवमाद्यन्तयोर्ब्रह्ममीमांसाद्यन्ताधिकरणार्थसूचनाद्भगवतो रघुनन्दनस्यैव परब्रह्मत्वं, तच्चरितस्य ब्रह्ममीमांसातुल्यकक्ष्यतया मुमुक्षूपादेयतमत्वं

च सूचितमाचार्यैरिति रहस्यम्। अत्र हृद्यैरित्यस्य विशेषणगत्या सीताजीवनहेतुत्वात्काव्यलिङ्गं लक्ष्म्येव विष्णुरित्युपमा च संसृज्येते। हार्दाभिप्रायद्योतनपक्षे भगवतो हंसस्य च सर्वलोकसंचरणरूपधर्मैक्यात्तुल्ययोगिता उपमामात्रसारेति ध्येयम् ॥ ४८ ॥

अथ हंसगमनाभ्यनुज्ञानन्तरभावीतिवृत्तं संगृह्णानः काव्यं परिसमापयति भगवानाचार्यः—

**सन्दिश्यैवं सह कपिकुलैस्सेतुना लङ्घिताब्धिः**
**पङ्क्तिग्रीवे युधि विनिहते प्राप्य सीतां प्रतीतः।**
**राज्यं भूयस्स्वयमनुभवन् रक्षितं पादुकाभ्यां**
**रामश्श्रीमानतनुत निजां राजधानीं सनाथाम् ॥४९॥**

एवं पूर्वोक्तप्रकारेण [1]संदिश्य जानकीं प्रति प्रापणीयां स्व-

[1] सान्दिश्य जानकीं प्रति प्रापणीयां स्ववार्तां हंसायावेद्य इति रसास्वादिनी ॥ यत्तु—सन्दिश्य जानकीं प्रति हंस सन्दिश्य तां प्रति प्रापणीयां स्ववार्तां हंसाय कथयित्वेत्यर्थः। 'अथ विश्वात्मने गौरी सन्दिदेश मिथस्सखीम्। दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति' इति कालिदासप्रयोगादीदृशार्थलाभ इति—तन्न. उदाहृतकालिदासपद्ये सन्दिशतेरीदृशार्थकत्वविरहेण तदुपष्टम्भकथनासङ्गतेः। 'सखीं सन्दिदेश अतिससर्ज' इति हि तत्र तत्रभवता मल्लिनाथेन विवृतमिति ॥ यदपि—यद्यपि प्रापणीयवार्ताकथनमेव सन्देश इति मार्गकथनवार्ताप्रापणप्रकारकथनादिर्न सन्देशः—इत्याशङ्कनम्—तन्न. मूले क्वचिदपि मार्गकथनादेस्सन्देशरूपत्वाकथनेन तदाशङ्काया अनुक्तोपालम्भरूपत्वात्। न च 'एवं सन्दिश्य' इत्यत्रैव सन्देशस्यैवंरूपत्वाभिधानात्।

वार्तां हंसाय निवेद्य कपिकुलैः प्लवङ्गनिवहैस्सह सेतुना नलनिबद्धेनेति भावः। करणे तृतीया। लङ्घितः तीर्णः अब्धिः सागरः येन स तथोक्तस्सन् युधि युद्धे 'समित्याजिसमिद्युधः' इत्यमरः। पङ्क्तिग्रीवे दशकन्धरे 'पङ्क्तिविंशति' इति सूत्रेण निपातनाद्दशार्थकः पङ्क्तिशब्दस्साधुः नात्रावयवार्थे विशेषतोऽभिनिवेष्टव्यम्। विनिहते आत्मना विशेषतः परिवारैस्सह संहृते सतीत्यर्थः। सीतां जानकीं प्राप्य लब्ध्वा प्रतीतः हृष्टः ख्यातश्च सन् दुराधर्षदशाननविनिर्मूलनेन सीतालाभात् हर्षख्याती इति भावः। 'ख्याते हृष्टे प्रतीत' इत्यमरः। पादुकाभ्यां पूर्वं भरताय चित्रकूटे प्रदत्ताभ्यां स्वपादुकाभ्यां भूयः अतिशयेन बहु यथा स्यात्तथा रक्षितं 'पादुके ते तु रामस्य गृहीत्वा भरतस्स्वयम्।

---

'वेदोदन्वद्विभजन' इत्यादेस्सर्वस्यैव सन्देशरूपत्वं प्रतीयत इति वाच्यं एवंपदेन 'भवतीभागधेयेन' इत्यादिसन्दर्भमात्रस्यैव विवक्षितत्वात्। स्पष्टं चेदं तन्मात्रस्यैव सन्देशरूपत्वं 'मत्सन्देशे तदनु सुमुखी सावधाना भवित्री' इति त्रिंशे पद्येऽत्रैव 'पश्चादेवं कथय भवतीभागधेयेन' इत्यस्मादव्यवहितपूर्वस्मिन्॥ एतेन—तथाऽपीदृशसन्देशौपयिकत्वात्तस्यापि सन्देशत्वमिति सर्वमिदं काव्यं हंससन्देश इति न दोषः—इति समाधानमप्यसदिति वेदितव्यम्। मार्गकथनादेस्सन्देशरूपतासमर्थनस्योपदर्शितमूलकृदाचार्यसूक्तिविरुद्धत्वात्। सर्वस्यैव काव्यस्य हंससन्देशव्यपदेशस्तु 'पश्चादेवं कथय भवतीभागधेयन जीवन्' इत्याद्यात्मकः प्रोषितोद्देश्यकवार्ताप्रेषणरूपो यो हंसकर्मकसन्देशः तमधिकृत्य कविना कृतत्वादेवोपपद्यते इति स्पष्टमेव समनन्तरपद्ये पूर्वाश्वासोपसंहारे च रसास्वादिन्यामेव॥ ४९॥

चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥ अब्रवीत्स तदा रामं भरतस्स कृताञ्जलिः । एतत्त रक्षितं राज्यं न्यासं निर्यातितं मया ॥ अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ॥ यस्त्वां पश्यामि राजानमयोध्यापुरवासिनम् । अवेक्षतां भवान्कोशं कोष्ठागारं पुरं बलम् ॥ भवतस्तेजसा सर्वं कृतं दशगुणं मया' । इत्युक्तरीत्या दशगुणतया वर्धयित्वा पालितमित्यर्थः । यद्यप्यत्र श्रीरामायणे राज्यस्य भरतेनैव रक्षितत्वमुच्यते, तथाऽपि भरतेनापि पादुकाधीनतयैव रक्षितत्वात्पादुकाभ्यां रक्षितमित्युक्तिर्न विरुध्यते । तदेतदुक्तमयोध्याकाण्डे—'अधिरोहार्य पादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यतः' इति भरतप्रार्थनानन्तरं 'सोऽधिरुह्य नरव्याघ्रः पादुके ह्यवरुह्य सः । प्रायच्छत्सुमहातेजा भरताय महात्मने ॥ स पादुके संप्रगृह्य रामं वचनमब्रवित् । चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥ फलमूलाशनो वीर भवेयं रघुनन्दन । तवागमनमाकाङ्क्षन्वसन्वै नगराद्बहिः ॥ तव पादुकयोर्न्यस्तराज्यतन्त्रः परंतप' इति । बहुतरार्थकस्य भूय इत्यस्यानुभूतिक्रियाविशेषणत्वेन केषांचिद्व्याख्यानं तु नातीव हृद्यम् । तस्य पुनरर्थकत्वमपि नेह युक्तं पूर्वं साक्षादननुभूतत्वाद्राज्यस्य तस्मादस्मदुक्तरीत्या रक्षणक्रियाविशेषणत्वेनार्थवर्णनमेवोदाहृतप्रमाणानुगुणतया स्वरसतमम् । यद्वा—पादुकाभ्यां रक्षितं भूयः राज्यमिति राज्यविशेणतया योजना । तदा पादुकाभ्यां रक्षितमिति हेतुगर्भं विशेषणं, पादुकापालितत्वादेवेत्यर्थः । भूयः

दशगुणतया प्राज्यमित्यर्थः 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुळं बहु। पुरुभूः पुरु भूयिष्ठं स्फीतं भूयश्च भूरि च' इत्यमरः। राज्ञः कर्म भावो वा राज्यं 'पत्यन्तपुरोहितादिभ्यः' इति यक्, पुरोहितादिगणे 'राजाऽसे' इति पाठात् राजशब्दोऽसमासे यकं लभत इति तदर्थः। ब्राह्मणादिषु राजशब्दपाठात् ष्यञ् वा, स्वरे विशेषः 'स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा। सप्त प्रकृतयो ह्येतास्सप्ताङ्गं राज्यमुच्यते' इत्युक्तरीत्या सप्ताङ्गसम्पन्नं राज्यमित्यर्थः। स्वयं अनुभवन् सन् पूर्वं पादुकाद्वारेणानुभूतमधुना साक्षादेवानुभवन्नित्यर्थः। श्रीमान् अप्रतिहतैश्वर्यशाली रामः दाशरथिर्भगवान् निजां स्वकीयां राजधानीं अयोध्यानाम्नीं महानगरीं सनाथां नाथसहितां अतनुत अकुरुत तावदवधि भरतेनापि नन्दिग्राम एवोषितत्वादनाथामिव स्थितामयोध्यां प्रविश्य तत्राभिषिक्तस्स्वयं नाथवतीमतनोदिति भावः। प्रबन्धाद्यन्तश्लोकयोश्श्रीमच्छब्दप्रयोगाद्वैचित्र्यविशेषः प्रदर्शितः 'मङ्गळादीनि मङ्गळमध्यानि मङ्गळान्तानि च प्रथन्ते' इति भाष्योक्तरीत्याऽन्ते मङ्गळं च कृतमित्यनुसंधेयम्। समृद्धिमद्वस्तुवर्णनात्मकमुदात्तम् ॥ ४९ ॥

एवं कथां परिसमाप्य स्वकीर्त्यनुवर्तनाय स्वनामकथनपूर्वकं स्वकाव्यस्य सत्कटाक्षगोचरतामभ्यर्थयते शिष्यशिक्षणाय भगवानाचार्यः—

**विद्याशिल्पप्रगुणमतिना(नसा)वेङ्कटेशेन क्लृप्तं**
**चिन्ताशाणोल्लिखितमसकृच्छ्रेयसां प्राप्तिहेतुम्।**

**सीताहंस(राम)व्यतिकरसखं राम (हंस)संदेशरत्नं**
**पश्यन्त्वन्तश्श्रवणमनघं चक्षुरुज्जीव्य सन्तः॥५०॥**

विद्याः 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाको वाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्याम्' इति, 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥ आयुर्वेदो धनुर्वेदो वेदो गान्धर्व इत्यपि। अर्थशास्त्रमिति प्रोक्तमुपवेदचतुष्टयम्' इति चोक्ताः विद्याः तासां शिल्पं परिशीलनपरिष्करणादिरूपव्यापारः तदेव शिल्पं रत्नोल्लेखनादिकर्म 'शिल्पं स्रुवे क्रियादिके' इति हेमचन्द्रः, 'शिल्पं कर्म कलादिकम्' इत्यमरश्च। वात्स्यायनोक्तचतुष्षष्टिबाह्यक्रियाः, आलिङ्गनादिचतुष्षष्ट्याभ्यन्तरक्रियाश्च कलाः आदिशब्देन स्वर्णकारादिक्रियाश्च शिल्पशब्देनाभिधीयन्त इति कोशार्थः। रत्नपरिष्करणस्य शिल्पसाध्यत्वाद्विद्यापरिशीलनादिक्रियायां शिल्पत्वरूपणं, तस्मिन् प्रगुणा ऋज्वी मतिः यस्य तेन तथोक्तेन 'ऋजावजिह्मप्रगुणौ' इत्यमरः। अनेन सर्वास्वपि विद्यासु भ्रमविप्रलम्भादिदोषरूपानार्जवक्लेशवैधुर्येण मतेः प्रसृमरत्वं द्योत्यते। यद्वा—प्रकृष्टाः गुणाः 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' इत्युक्ता अष्टौ गुणाः यस्यास्सा तथोक्ता, मतिः आगामिगोचरज्ञानविशेषो यस्य सः यथोच्यते—

'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा' इति। तेन तथोक्तेन यद्यपि विद्याश्च शिल्पानि च तेषु प्रगुणमतिनेति विगृह्य उदाहृतकोशेनैव शिल्पशब्देनात्र चतुष्षष्टिकला अपि शक्या ग्रहीतुं तास्वपि सर्वतन्त्रस्वतन्त्राणामाचार्याणां नैपुणस्याप्रतिहतत्वात् तथाऽपि चिन्तादिषु वक्ष्यमाणशाणादिरूपणानुगुण्याय विद्यापरिशीलने उक्तरीत्या रत्नकारक्रियात्वेन रूपकस्यावश्यकतया तादृशार्थविवक्षैव युक्ता प्रगुणमनसेति पाठोऽप्यनतिरिक्तार्थः। अनेनास्य काव्यग्रथनानुकूलसामग्रीपौष्कल्येन तन्नैपुणमनवधिकमतिसुलभमतिसरळमित्यादि द्योत्यते। इदमपि स्वप्रबन्धे प्रेक्षावतां प्रवृत्तिमुत्पादयितुं न ह्येवं विद्यास्थानादीन्यपरिशीलयतो यस्य कस्यचित्काव्याभासमालुलोकिषन्ते गुणदोषपरीक्षादीक्षावन्तः प्रेक्षावन्तः। ननु—'आत्मनिन्दाऽऽत्मपूजा च' इत्यात्मस्तुतिर्निषिध्यते तत्कथमात्मस्तुतिस्सर्वविदामप्याचार्याणामिति चेत्सत्यं, न तु सर्वत्र सा निषिद्धा क्वचिद्गुणत्वेनापि दर्शनात्तस्याः। तथाहि यथा—'दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः। हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः॥ न रावणसहस्रं मे युद्धे प्रतिबलं भवेत्। शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः' इत्यादौ विपक्षहृदयनिर्भेदनाद्यर्थतया गुणायैवात्मस्तुतिर्हनूमतः। तथा स्वप्रबन्धे निर्दोषतागुणवत्तादिप्रत्यायनार्थतयाऽत्रात्मप्रशंसनं गुणायैव कल्पते। तथाचान्वगृह्यनाचार्यैरेव रहस्यरक्षायां 'धिगशुचिम्' इति श्लोकविवरणावसरे—'यथा खल्वाञ्जनेयादेस्स्वप्रशंसा क्वचिद्गुणः' इति। अत

एव—'अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे' इत्यादौ धीरोदात्तगुणोत्तरस्यापि भगवतो दाशरथेरात्मश्लाघाऽपि युज्यते ॥ अवश्यं च स्वप्रशंसा काव्यकृता कर्तव्या स्वकाव्ये 'कविकाव्यप्रशंसा च काव्ये सर्वत्र शस्यते। तदवश्यं प्रशंसेत कविकाव्ये विचक्षणः' इति कल्पतरूक्तेः। एवं लोकोत्तरप्रबन्धनिर्माणौपयिकपरिकरवत्तामात्मनो विद्याशिल्पेतिविशेषणेन प्रदर्श्याथात्मनाम प्रकाशयति—वेङ्कटेशेनेति। वेङ्कटेशेन तन्नाम्ना 'वेङ्कटेशावतारोऽयम्' इत्युक्तरीत्या तदवतारत्वेन वा, वेङ्कटेशतीर्थदिनावतीर्णत्वेन वाऽस्य वेङ्कटेश इति सांस्कारिकं नाम, वेदान्ताचार्येणेत्यर्थः। न च 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकळत्रयोः' इति निषेधात्कथमात्मनामग्रहणमिति शङ्क्यं 'असौ नामाऽहमस्मीति स्वं नाम परिकीर्तयेत्' इतिवत् 'स्वनाम कीर्तयेत्काव्ये कविः काव्यविचक्षणः' इति विधिबलात्तस्य विहितेतरविषयतया लब्धलक्ष्यत्वेनादोषात्, एतच्चास्मत्प्रणीताचार्यवेदपादस्तवव्याख्यायां लक्ष्मीसहस्ररत्नप्रकाशिकायां चोदैरिराम। असकृत् वारंवारं, चिन्तैव शाणः रत्नादिनिघर्षणोपलः 'शाणस्तु निकषः कषः' इत्यमरः। चिन्ता नाम चित्तैकाग्र्यमवधानापरपर्यायं, सा च काव्यस्याङ्गं, यथाच वामनः—'लोको विद्याः प्रकीर्णकं च काव्याङ्गानि' इत्युक्त्वा लोकादिस्वरूपं निरूप्य 'लक्ष्यज्ञत्वमभियोगो वृद्धसेवाऽवेक्षणं प्रतिभानमवधानं च प्रकीर्णकम्' इति प्रकीर्णकं विभज्य 'चित्तैकाग्र्यमवधानम्' इत्यवधानलक्षणमसूत्र-

यत्। 'चित्तस्यैकाग्र्यं बाह्यार्थनिवृत्तिः तदवधानं अवहितं हि चित्तमर्थान्पश्यति' इति तद्वृत्तिः। चिन्ताशाणेन उल्लिखितं उत्प्रेक्षितं उत्तेजितं च सत् क्लप्तं सन्दब्धं धारणार्हतया निष्पादितं च असकृच्चिन्ताशाणोल्लिखितमित्यनेन काव्यरत्नस्यात्यन्तसावधानपरिष्कृततयाऽतिवेलशोभातिशयो द्योत्यते। असकृदित्येतन्मध्यमणिन्यायादुत्तरत्राप्यन्वेति। असकृत् पुनःपुनः न तु यदाकदाचिदिति भावः। श्रेयसां कल्याणानां भूयस्त्वस्य स्फुटप्रतिपत्तये श्रेयसामिति व्यस्ततया निर्देशः। प्राप्तिहेतुं लाभकारणं 'रक्षन्महामणिं यत्नाच्छ्रेयांसि लभते नरः। अलक्ष्मीर्दूरतो याति नास्य दैन्यं क्वचिद्भवेत्' इति रत्नशास्त्रात्। स्कान्दे च रत्नपरीक्षाध्याये—'धारयेत्कुरुविन्दं यस्स सम्राड्भवति ध्रुवम्। यस्तु सौगन्धिकं धत्ते संपदा यशसाऽतुलः' इत्युपक्रम्य 'दोषहीनमथ लक्षणैर्युतं पद्मरागमणिमुद्वहन्ति ये। ते तु रत्नमधिकं प्रयान्ति च स्थायिनीं च कमलां सरस्वतीम्' इति पद्मरागप्रभेदगुणवर्णनावसरे निरूपितम्। हेतुशब्दस्य 'हेतुर्ना कारणम्' इति नियतपुल्लिङ्गतानुशासनाद्रत्नविशेषणत्वेऽपि न लिङ्गव्यभिचारः। [1]सीतारामयोः

[1] सीतारामयोर्व्यतिकरस्सम्मेलनं तस्य सखि . . . विश्लिष्टसीतारामसम्मेलनविधायीत्यर्थ इत्यादि रसास्वादिनी॥ यत्तु—यद्यपि पूर्वं हंसस्य वार्तानभिज्ञलोक्त्या संप्रति सन्देशस्य सीतारामव्यतिकरसखत्वमुच्यमानं न संगच्छत इतीव। यतो व्यतिकरसखत्वं तस्य सीतयाऽऽत्मधारणे कृते पश्चाद्व्यतिकरसंपादनेन भवति। तत्तु न संभवति। वार्तानभिज्ञे सन्देशकथनशक्त्यभावात्। तथाऽपि व्यतिकरसंपादनशक्तिमत्त्वमेव तस्य तत्सखत्वमुच्यत इति न दोषः

व्यतिकरः संमळेनं तस्य सखि सीतारामव्यतिकरसखं 'राजाहस्सखिभ्यः' इति टच्। सखिशब्दो विशेष्यनिघ्न इत्याहुः विश्लिष्टसीतारामसम्मेळनविधायीत्यर्थः। यथोच्यते रत्नशास्त्रे—'धान्याभिवृद्धिदाः केचिद्धनवृद्धिप्रदाः परे। अग्नेर्दाहं निरुन्धन्ति केचिद्विषहराः परे॥ स्त्रीवशीकरणाः केचित्पुंवशीकरणाः परे। मित्र-

इति शङ्कासमाधानयोः प्रवर्तनम्—तत्र. सीतारामव्यतिकरसखत्वस्य सन्देशे कविकल्पिते कविकल्पिततयैवोपपत्तेरीदृशशङ्काया एवानवतारात्। कदाचिदपि तद्व्यतिकरसंपादनाहेतौ तद्व्यतिकरसंपादनौपयिक्याश्शक्तेः सिकतास्विव तैलशक्तेस्सद्भावे मानाभावेन तथा—समाधानस्याप्यनुपपन्नत्वाच्च। यदि तु—उन्मादावस्थेन रामभद्रेण कृतस्सन्देशो वास्तव एव हंसेन तु वार्तानभिज्ञतया न तद्वार्ताप्रापणं कृतमिति कथं हंससन्देशस्य सीतारामव्यतिकरसाधनत्वमित्युच्यते तदाऽपि विरहिकृतानामीदृशसन्देशादिव्यापाराणां तात्कालिकविरहवेदनातिवहनतन्मूलकचित्तसमाधानजीवितधारणादिहेतुताया निर्विवादतया सन्देशानन्तरसंपन्नचित्तसमाधिरामभद्रसंपादिते स्वप्रियासमागमे परंपरया हेतुत्वमस्त्येवेति तावतैव सीतारामव्यतिकरसखत्वं हंससन्देशे उपपन्नमित्यवधार्यताम्। एतेन—अत एव मेघसन्देशे 'तत्सन्देशं जलधरवरो दिव्यवाचाऽऽचचक्षे' इतिवदत्र हंस आचचक्ष इत्याच्यार्यैर्नोक्तमिति बोध्यमिति—स्वोक्तसमाधाने उपष्टम्भकप्रदर्शनमपि निरस्तं वेदितव्यम्। तत्सन्देशमित्यादिपद्यानां प्रक्षिप्तत्वात्। 'एतत्कृत्वा प्रियमनुचितं प्रार्थनादात्मनो मे सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या। इष्टान् देशान् जलद विचर प्रावृषा संभृतश्रीर्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः' इतीदमेव हि पद्यं मेघसन्देशस्यान्तिमं 'काव्यान्ते नायकेच्छानुरूपोऽयमाशीर्वादः प्रयुक्त इत्यवधेयम्' इत्येवं मल्लिनाथेन तत्रैवोपसंहारकरणात्। प्राचीनकोशेषु कलिकातादिमुद्रितकोशेषु च तथैवाध्यक्षणात्। स्पष्टं चेदं मुम्बानगर्यां नन्दर्गिकरमुद्रिते मेघसन्देशकोश इति दिक्॥

सङ्ग्राहिणः केचिद्राजसङ्ग्राहिणोऽपरे ॥ केचित् स्त्रीपुंसविश्लेषविनिवारणदक्षिणाः । दानाभिवृद्धिदाः केचित्केचिद्गोधनदायिनः ॥ अश्वयानप्रदाः केचित्केचिदानन्ददायिनः । एवं नानाविधास्सन्ति मणयो लक्षणान्विताः ॥ तत्तत्कामास्सम्परीक्ष्य बिभृयुस्तान्मणीन् शुभान् । मणिमन्त्रौषधीनां तु प्रभावस्सर्वतोमुखः ॥ केन शक्यः परिज्ञातुमिति शास्त्रविदो विदुः' इति । [1]हंसस्य सन्देशो हंससन्देशः सीतां प्रति प्रापणीयतया रामचन्द्रेण हंसायोक्तस्सन्देश इत्यर्थः । तमधिकृत्य कृतो ग्रन्थः हंससन्देशः स एव रत्नं महामणिः रत्नत्वरूपणेनास्य काव्यस्य स्थिरत्वभोग्यत्वप्रकाशकत्वमहार्घत्वमङ्गळत्वमान्यत्वसुरक्षत्वसुग्रहत्वादीनि व्यज्यन्ते । यदाहू रत्नपरीक्षाभिज्ञाः—'अत्रासं मानदं मान्यं स्थिरं भोग्यं प्रकाशकम् । महार्घं मङ्गळं रत्नं सुरक्षं सुग्रहं नृणाम्' इति । 'सीताहंसव्यतिकरसखं रामसन्देशरत्नम्' इति पाठे उदाहृतवचनानुसारेण केषांचिद्रत्नानां मित्रसङ्ग्रा-

[1] हंसस्य सन्देशो हंससन्देशः । सीतां प्रति प्रापणीयतया रामचन्द्रेणोक्तस्सन्देश इत्यर्थः । तमधिकृत्य कृतो ग्रन्थः हंससन्देश इत्यादि रसास्वादिनी ॥ यत्तु—हंसस्य सन्देशः वाचिककथनं तत्प्रतिपादकं काव्यमपि 'हंससन्देशः' इति व्याख्याय 'अत्र हंसं प्रति रामेणोक्तस्य सन्देशस्याचार्यप्रणीतकाव्यस्य च वस्तुतो भेदेऽपि अभेदोपचाराद्वा अर्थैक्याद्वा अभेदो बोध्यः । लोकेऽप्यर्थैक्यादेव सन्देशहरत्वादिसंभवादिति भावः'—इत्युपपत्तिवर्णनमप्यसदिति वेदितव्यम्—हंससन्देशपदस्य हंससन्देशाधिकारपूर्वककृतग्रन्थपरतया काव्यपरतोपपत्तेर्वर्णितत्वात् अभेदोपचारविवक्षाया अनादरणीयत्वात् । सन्देशमाधिकृत्य कृतस्य ग्रन्थस्य सन्देशस्य च अर्थैक्यस्य सुतरामयोगाच्चेति ॥

हकत्वप्रसिद्धेस्सीताहंसयोरन्योन्यमैत्रीसंपादकं रामकर्तृकसन्देशरत्नमिति व्याख्येयम्। इतोऽपि पूर्वोक्तपाठ एव स्वारसिकः हंसमुखेन प्रेरितस्य सन्देशस्य सीतारामेळनसाधनत्ववर्णनस्यैवौचित्यात्। मेघसन्देश इतिवद्धंससन्देश इत्येव काव्यनामप्रसिद्धेश्च। [1]सन्तः सहृदयास्सुधियः ते हि सदसद्विवेचनचतुरा गुणग्राहिणश्च भवन्ति यथोच्यते—'तं सन्तश्श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः। हेम्नस्संलक्ष्यते ह्यग्नौ विशुद्धिश्श्यामिकाऽपि वा' इति, श्रीमहाभारते आपद्धर्मेषु 'गुणानेव हि वक्तारस्सन्तस्सत्सु नराधिप' इति, अन्यत्र च—'सन्तो गुणेष्वेव निविष्टदृष्टयो न कश्चन प्रत्यवजानते क्वचित्। दोषस्य लेशोपि विशेन्न तन्मनो विशंस्तु तत्रैव विलीयतेतराम्' इति। सन्त इत्यनेन 'अथ यत्सत्तदमृतम्' इति श्रुत्युक्तरीत्या सच्छब्दवाच्या मुक्ताः 'अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः' इति श्रुतिनिरुक्ताः 'य ऐकान्त्यं गता विष्णौ भगवत्यात्मभावने। ते वैष्णवा भागवतास्सन्त इत्यपि ते स्मृताः' इति भरद्वाजपरिशिष्टोक्तलक्षणा मुमुक्षवो ब्रह्मविदश्च गृह्यन्ते। ते-

---

[1] सन्तः सहृदया . . . न त्वनीदृशाः यथाऽऽहुः—अन्धीभूयगुणागुणेषु तरवो वातावधूता इव श्लाघन्ते यदि साहितीं रसवतीमज्ञास्ततः किं फलम्। जानन्व्यङ्ग्यचमत्कृती रसगतीरौचितीरादरादन्तश्शर्म यदश्नुते सहृदयस्सा जीवनाडीकवेः॥ इतीति रसास्वादिनी॥ यत्तु—असतः प्रति यद्वक्तव्यं तदुक्तं हारावलीशेषे पुरुषोत्तमेन—'काव्यादीनामनन्तत्वाच्छब्ददीनां विशेषतः। क्व कदा केन किं दृष्टमिति को वेदितुं क्षमः॥ अतश्शब्दः क्व दृष्टोऽयमर्थतश्चापि कीदृशः। इति काव्यमलीकं स्यान्मात्सर्यमलिनात्मनाम्' इतीति, तत्सम्बद्धं

नेदं काव्यं 'निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात्' इत्युक्तप्रकारेण मुक्तैस्स्वयंपुरुषार्थतयाऽनुसन्धेयं, मुमुक्षुभिरपि प्रतिबन्धकपापनिवर्तनद्वारा उपायनिष्पादकत्वेन संसारनिवर्तकतयोपादेयं, बद्धैरप्यतिमनोहारिविषयतयाऽऽदर्तव्यमिति ध्वन्यते। श्रवणे अन्तश्श्रवणं वेश्मनि अन्तर्वेश्ममितिवद्विभक्त्यर्थेऽव्ययीभावः। श्रोत्रान्तर्विद्यमानं न तु सर्वसाधारणं न हि तादृशेन चक्षुषा भूयोभूयस्सहस्रवारं दृश्यमानस्याप्येतस्य स्वरूपयाथात्म्यं ज्ञायत इति भावः। अनघं कदाचिदपि काचकामिलादिदोषगन्धानभिज्ञमित्यर्थः। चक्षुः लोकविलक्षणं चक्षुरिन्द्रियं ज्ञानमिति यावत्। उज्जीव्य उपजीव्य अवलम्ब्येत्यर्थः। पश्यन्तु विलोकन्तां शृण्वन्त्विति भावः। दृशेः कर्तरि लोटि 'पाघ्राध्मा' इत्यादिना पश्यादेशः। सन्तः पश्यन्तु सारग्राहिणस्ते यदृच्छया सकृत्पश्यन्तोऽप्यस्मान्निन्वन्ति न त्वनीदृशाः परार्धवारं सावधानं पश्यन्तः

---

इह काव्ये कविसरणिसुप्रसिद्धशब्दार्थसम्बन्धानामेव निबन्धनेन तदुदाहरणस्य प्रकृतानुपयुक्तत्वात्। रसास्वादिन्युदाहृतपद्यस्यैवात्यन्तप्रकृतोपयुक्तत्वादिति ॥ तस्माद्रसास्वादिन्यामाचार्योक्तमेवाखिलं समञ्जसम् ॥५०॥

इति धृतविततावधानभूम्ना यतिनृपतेः कृतिशेखरस्य कल्प्ता।
अतिविरसविरूढकण्टकानां हृतिकृतये विजयेत पादुकैषा ॥
प्रत्यज्ञायि गुरूदितार्थदधिकं यद्वा प्रतीपं परैः।
उक्तं तन्निखिलं न संगतमिति प्रौढ्या महत्या पुरः ॥
निर्व्यूढं तदहो तथैव तु मयेतीदं रसास्वादिनी।
माहात्म्यात्किम तन्निबन्धृगुरुराट्सङ्कल्पकल्पद्रुमात् ॥

प्रशंसन्तोऽपि वा यथाजाताः। यथाऽऽहुः—'अन्धीभूय गुणागुणेषु तरवो वातावधूता इव श्लाघन्ते यदि साहितीं रसवतीमज्ञास्ततः किं फलम्। जानन्व्यङ्ग्यचमत्कृती रसगतीरर्थौचितीरादरादन्तश्शर्म यदश्नुते सहृदयस्सा जीवनाडी कवेः' इति। अत्र समस्तवस्तुवृत्ति सावयवमधिकताद्रूप्यरूपकं, प्रसिद्धरत्नापेक्षयाऽस्य सन्देशरत्नस्यान्तश्श्रवणचक्षुर्ग्राह्यत्वेनाधिक्यवर्णनात् ज्ञानरूपं विषयं निगीर्य तस्मिंश्चक्षुष्ट्वाध्यवसानाद्रूपकातिशयोक्तिश्च। अनया चोक्तरूपकमुज्जीव्यत इति सङ्करः। अनेन च प्रसिद्धरत्नापेक्षयाऽस्य रत्नस्य वैलक्षण्यप्रतीतेर्व्यतिरेकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। काव्यस्यास्य रत्नत्वेन रूपणात्पूर्वोक्तरीत्या भोग्यत्वादिप्रतीतेर्वस्तुध्वनिः। आचार्यगतसद्विषयकभावाभिव्यञ्जनाद्भावध्वनिरिति त्रिविधोऽ-

---

प्रायस्सन्त्येव तत्तत्कृतिविरचयितुर्ये परोक्षं महत्या।
व्याकृत्या प्रौढिमानं प्रचिकटयिषवस्सर्वथा तत्कृतीनाम्॥
यो जाग्रत्येव नित्यं निरुपमगरिमग्रन्थनिर्माणधुर्ये।
तद्ग्रन्थव्याकृतेस्तं गुरुवरमिह सम्मोदयेत्सैष धन्यः॥

इति श्री वाधूलकुलजलधिकौस्तुभशेषाचार्ययोगिवरतनुजस्य
श्रीशेषाम्बागर्भशुक्तिमुक्ताफलस्य श्री कस्तूरिरङ्गाचार्यस्य
सन्ततसमुपासितसदाचार्यस्य कृतिषु
श्री रसास्वादिनीपादुकानामिकायां
हंससन्देशटिप्पणिकायां
द्वितीयाश्वासः.

पि ध्वनिरत्रानुसन्धेयः । अन्ते सन्त इति कीर्तनमपि मङ्गळभूयस्त्वायेति ध्येयम् । यथोक्तं—' सतां सङ्कीर्तनाद्ध्यानात्प्रणामादपि मानवः । व्यपोह्य सकलं पापं सर्वकल्याणमश्नुते ' इति ॥ ९०

## इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु हंससन्देशे महाकाव्ये द्वितीय आश्वासः ॥५१॥

इतीति ॥ महाकाव्ये इति ' नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥ विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि ॥ अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् । सर्गैरनतिविस्तीर्णैश्श्राव्यवृत्तैस्सुसन्धिभिः ॥ सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम् । काव्यं कल्पान्तरस्थायि कल्पतेऽनल्पभूतये ॥ महाकाव्यमिदं प्रोक्तं मुनिभिः काव्यवेदिभिः । यत्किञ्चिद्वर्णनन्यूनमपि काव्यं महद्विदुः ' इत्युक्तलक्षणवत्तया महत्त्वेन विशेषितं ग्रथनरूपं कविकर्म तस्मिन्नित्यर्थः । अत्र ' नानारत्नैरुपचितगुणां, अध्यासीना बहुमणिमयम् ' इत्यादौ नगरस्य, ' यत्रारण्यं वरुणवसतेः ' इत्यादावर्णवस्य, ' त्रिष्णोर्वासादवनिवहनात् ' इत्यादौ शैलस्य, ' उद्दामैस्ते कुचकलशयोः ' इत्यादौ ऋतूनां, काले यस्यां व्यपगतघने ' इत्यादौ चन्द्रोदयस्य, ' सूक्ष्माकारैर्दिनकरकरैः ' इत्यादौ सूर्योदयस्य, ' स्निग्धच्छायं तदनु विततम् ' इत्या-

दावुद्यानस्य, 'तीर्थे पुंसां शमितकलुषे' इत्यादौ सलिलक्रीडायाः, 'आरक्तानां नवमधु शनैः' इत्यादौ मधुपानस्य, 'वेलातीतप्रणयविवशम्' इत्यादौ रतोत्सवस्य, 'शून्या दृष्टिश्श्वसितमधिकम्' इत्यादौ विप्रलम्भस्य, 'रक्ताशोके ज्वलति सविधे लाजवर्षाभिरामैः' इत्यादौ विवाहस्य, 'वंशे जातः' इत्यादौ कुमारोदयस्य, 'काल्ये सेनाम्' इत्यादौ मन्त्रस्य, 'इच्छामात्राज्जगदपरथा' इत्यादौ प्रयाणस्य, 'संदिश्यैवम्' इत्यादौ युद्धस्य नायकाभ्युदयस्य च यथोचितं लेशतो वर्णनात्, द्यूतस्य लेशतोऽप्यवर्णितत्वेऽपि महाकाव्यत्वमस्याक्षतमेवेति वेदितव्यम्। व्याख्यातमन्यत्सर्वं पूर्वाश्वासान्त इति सर्वं समञ्जसम् ॥

भगवान् श्रीहयवदनो निगमान्तगुरूत्तमाकृतिस्समया। जगदाचार्यो दिव्यं सुगुणं व्याचिख्यपन्निजं काव्यम् ॥ १ ॥ अनवीनगवशिखरदेशिकवर्यात्मना समवतीर्णः। अनया व्याख्याक्रियया घनया संप्रीयतां हयग्रीवः ॥ २ ॥ निगमाञ्चलगुरुविरचितनिजचरितव्याख्याया मया कृतया। सीतानन्दविधाता प्रसीदतात्कोऽपि धन्विनां नेता ॥ ३ ॥ यावद्बुद्धिबलोदयमेषा रचिता मयाऽधुना व्याख्य। को वेद निगमशेखरगुरुसूक्तेर्भावमतिगभीरतमम् ॥ ४ ॥ मनुव्यासप्राचेतसमुखमनोहारिसुगणां महोदारामेतां कृतिमपि विवृण्वन्मितमतिः। कदर्थीचक्रेऽसाविति कलुषितं माऽस्तु हृदयं दयासिन्धोश्श्रीमन्निगममकुटीदेशिकमणेः ॥ ५ ॥ क्षमेत टीकाकृतिसाहसं महद्दयानिधिर्मे निगमान्तदेशिकः। सुदुस्सहं किं नु सतां महा-

त्मनां सर्वं हि सर्वंसहया विषह्यते ॥ ६ ॥ प्रवृत्ता व्याख्यातुं कतिचिद्समीक्ष्यैव तदिदं गभीरार्थं काव्यं स्वयमिह झडित्येव विरताः। समग्रं व्याख्यायाप्यलमविदिताचार्यहृदयाः परे हास्या जाता मयि तु कियती देशिककृपा ॥ ७ ॥ अज्ञानाद्यदनुक्तं चापल्याद्यदिह किञ्चिदधिकोक्तम्। भ्रान्त्या यच्च दुरुक्तं तत्सर्वं क्षन्तुमर्हथ सुधीन्द्राः ॥ ८ ॥ सिन्धुमिवास्मद्ग्रन्थं मन्थानेनेव चेतसा मथ्नन्। विषमिव दोषं हित्वा मणिमिव गुणमाददाति विबुधेन्द्रः ॥ ९ ॥ सालंकारां रसगुणवनां साधुहृद्यानवद्यां प्रौढां व्याख्यां ललितनयनां वीक्ष्य कान्तामिवैनाम्। दोषोदग्रामपरसगुणालंक्रियां प्रौढिदूरामिच्छेद्द्रष्टुं परुषनयनां को विरूपामिवान्याम् ॥ १० ॥ नृत्यत्काण्डप्रकाण्डक्षपितनिशिचरव्रातदावाग्निजातो निर्व्याव्रातप्रचारप्रचुरतरशरद्भानुभानूच्चतेजाः। देयाच्छ्रेयांसि भूयांस्यनुपमदिनकृद्गोत्रविख्यातिदाता सीतानेता नतार्तिक्षपणनिपुणहृत्पङ्कजः पङ्कजाक्षः ॥ ११ ॥ जिह्वासिंहासनाग्रस्फुटनटनतुरङ्गास्यमञ्जीरशिञ्जास्पर्धानिर्धार्यवाचानिचयचुलकितप्रत्यनीकप्रचारः। श्रीमान् रामानुजार्यप्रथिततममतश्रीललामार्कधामाऽक्षय्यं त्रय्यन्तविद्यागुरुरिह जगतां भद्रवत्तां विधत्ताम् ॥ १२ ॥ संसाराटोपतापक्षपणनिपुणवाग्घोरणीसारणीश्रीवाणीसंपूज्यपादादिमतुरगमहामन्दुराऽऽनन्दराशिः। सङ्ख्यातीतप्रबन्धप्रशमितविमतातङ्कशङ्काकलङ्को मोदान्वेदान्तसूरिर्दिशतु गुरुवरस्सर्वतन्त्रस्वतन्त्रः ॥ १३ ॥ आदिश्रीवण्शठारिर्यतिपतिरभवद्यत्पदाब्जोपजीव्यस्सोऽयं श्रीवत्सवंश्यो वरदगुरुरपिच्छात्रतां यत्र भेजे। द्वै-

तीयीकावतारो य इह यतिपतेर्ब्रह्म यश्च द्वितीयं छात्रो वेदा-
न्तसूरेस्स खलु विजयतां ब्रह्मतन्त्रस्वतन्त्रः ॥१४॥ ढिल्लीशाना-
र्चिताङ्घ्रिर्यतिकुलनृपतेर्यस्तृतीयोऽवतारो दिव्ये देशे समग्रेऽकृत नि-
गमशिरोदेशिकार्चाप्रतिष्ठाम् । यश्श्रीमद्ब्रह्मतन्त्रोत्तमयतितिलकास्थान-
लक्ष्मीनिधानं कुर्वन्नार्तप्रपत्तिं स्फुटनिजमहिमां न्यासविद्यामतानीत् ॥
१५॥ यश्श्रीकर्णाटसिंहासनविदितमहीशूरसद्राजधानीसम्राजो वैष्ण-
वाग्र्याचान्व्यतनुत कृपया शङ्खचक्राङ्कनाद्यैः । व्याख्यां भाष्यस्य
तद्वत्परमुपनिषदां द्रामिडीनां च चक्रे विख्यातोदात्तभूमा स ज-
यतु परकालाभिधानो यतीन्द्रः ॥१६॥श्री श्रीनिवासनिगमान्तर-
मानिवासरामानुजाख्यपरकालमहायतीन्द्राः । व्यूहा इवात्तवपुषो ज-
गतां हिताय चत्वार ऊर्जितसमग्रगुणा जयन्तु ॥१७॥ घण्टावता-
रनिगमान्तरमानिवासश्रीदेशिकेन्द्रयतिपुङ्गवरङ्गनाथाः । श्रीब्रह्मत-
न्त्रपरकालपदावतंसा जीयासुरुज्ज्वलगुणा गुरुसार्वभौमाः ॥ १८ ॥
श्रीवासब्रह्मतन्त्राग्रिमपदकलिजिद्देशिकेन्द्रानघाङ्घ्रिद्वन्द्वाब्जानुग्रहात्तप्र-
तिपदविविधग्रन्थनिर्माणशक्तिः । श्री कृष्णब्रह्मतन्त्रादिमपदपरकालाभि-
धानो यतीन्द्रो व्याख्यामेतामतानीच्छ्रुतिमकुटगुरूत्तंसदत्तान्तरङ्गः॥१९॥
यामेतां परकालो व्यतनोदधिकृत्य हंससन्देशम् । आचन्द्रार्कं सैषा
जगति रसास्वादिनी विजयिनी स्यात् ॥ २० ॥ त्रिनवत्युत्तरनव
शतचतुस्सहस्रेषु कलियुगशरत्सु । यातेषु नन्दनाब्दे व्यरचि रसा-
स्वादिनी किल व्याख्या ॥२१॥ जयतु जगति नित्यं लक्ष्मणा-
र्यस्य पक्षो जयतु निगमविद्यादेशिकेन्द्रस्य सूक्तिः । जयतु हय-

मुखी सा देवतासार्वभौमी जयतु च वृषशैले श्रीनिवासस्थिरश्रीः ॥२२॥

इति श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यपरमहंसपरिव्राजकाचार्यसर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्यश्रीमत्कविकथककण्ठीरवचरणनळिनयुगळविन्यस्तसमस्तात्मभरश्रीमद्रामानुजसिद्धान्तनिर्धारणसार्वभौमश्रीमद्ब्रह्मतन्त्रपरकालदिव्यास्थानमूर्धाभिषिक्तश्रीमच्छ्रीनिवासब्रह्मतन्त्रपरकालसंयमिसार्वभौमकरुणाकटाक्षवीक्षितस्य तत्कृपासमधिगतनिगमान्तद्वितयतात्पर्यस्य तादृशश्रीमच्छ्रीनिवासदेशिकेन्द्रब्रह्मतन्त्रपरकालगुरुवरचरणारविन्दसमर्पितात्मभरस्य तादृशश्रीश्रीरङ्गनाथब्रह्मतन्त्रपरकालमुनिवरकृपासंप्राप्तमोक्षाश्रमस्य श्रीमद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपितिबिरुदोन्मत्ततत्तद्राजमण्डलखण्डनशौण्डलोकैकवीरयदुकुलपयःपारावारकलानिधिशङ्खचक्राङ्कुशकुठारमकरमत्स्याद्यनेककनकमयबिरुदङ्कितश्रीमत्कर्णाटमहीमण्डलमण्डनायमानमहीशूरपुरवरमध्यविद्योतमानसर्वतोभद्रदिव्यरत्नसिंहासनाधीश्वरश्रीमच्चामराजेन्द्रसार्वभौमसन्ततिसन्ततदेशिकस्य श्रीश्रीकृष्णब्रह्मतन्त्रपरकालयतीन्द्रस्य कृतिषु

श्रीहंससन्देशव्याख्यायां रसास्वादिन्याख्यायां

द्वितीय आश्वासः

समाप्तश्चायं प्रबन्धः.



श्री हयग्रीवाय नमः.

श्री श्रीकृष्णब्रह्मतन्त्रपरकालस्वामिभिः
पूर्वाश्रमे स्वाचार्यविषये कृता

# सव्याख्या नवरत्नहारस्तुतिः.



श्रीमद्विभातु नश्चित्ते धाम तद्धीमतां वरम् ।
रङ्गनाथब्रह्मतन्त्रकलिजिन्नाम कोमलम् ॥ १ ॥

स्वकृतनवरत्नहारस्तवभावग्रहणरचितकुतुकानाम् ।
लोकानां प्रीतिकृते स्तोकां रचयाम्यहं टीकाम् ॥ २ ॥

अथ तत्रभवतस्स्वाचार्यस्य श्रीमद्रङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकस्य वाचिकं कैङ्कर्यं चिकीर्षुस्तावन्नवरत्नहाराख्यस्तवमारभमाणः कविर्हयवदनाचार्यविषयकनमस्क्रियारूपं मङ्गळमादौ श्रेयसे निबध्नाति—

**द्विजराजमण्डलान्त-**
**श्लाघ्यं निगमोद्दिधीर्षुनिजभावम् ।**
**हयवदनं नमिकर्मी-**
**कुर्मस्तं चापि रङ्गनाथगुरुम् ॥ १ ॥**

द्विजेति ॥ द्विजराजमण्डलान्ते चन्द्रबिम्बान्ते ब्राह्मणोत्तंससमुदयाभ्यन्तरे च श्लाघ्यम् । उद्धर्तुमिच्छुः उद्दीधीर्षुः निगममुद्दिधीर्षुः । गम्यादित्वाद्द्वितीयासमासः । निजो भावोऽवतारो यस्य तं तथोक्तं वेदोद्धरणहेतुत्वात्तदवतारस्येति भावः । अन्यत्र—वेदतत्त्वार्थनिरूपणक्षमनिजाभिप्रायमित्यर्थः । “ भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्म-

सु' इत्यमरः। हयवदनं तं सर्वलोकप्रथितवैभवं रङ्गनाथगुरुं चापि नमिधातोः कर्मीकुर्मः प्रणमाम इत्यर्थः। तुल्ययोगिताऽलङ्कारः। वृत्तं गीतिः॥ १॥

**अभुजङ्गनाथसङ्गत-**
**मविभीषणवशगमविदितविमानम्।**
**श्रीरङ्गनाथमन्यं श्रयाम्यहं ब्रह्मतन्त्रगुरुम्॥ २**

अभुजङ्गेति॥ भुजङ्गश्शेषो धूर्तश्च। तेन सङ्गतो न भवतीति तथोक्तम्। विभीषणस्य रावणानुजस्य। पक्षे—विभीषणानां शठानां वशगो न भवतीति तथोक्तम्। अविदितः विमानः व्योमयानम्। पक्षे—अवमानः स्वकर्तृक इति यावत्। अवमाननमित्यर्थः। येन तं तथोक्तं "न चावमन्ता भूतानाम्" इत्युक्तरीत्या न कस्यचिदप्यवमन्तेत्यर्थः। ब्रह्म परब्रह्मभूतं तन्त्राणां वेदादिशास्त्राणां "तन्त्रं शास्त्रे च सिद्धान्ते" इति वैजयन्ती। गुरुं प्रथमाचार्यम्। अन्यं श्रीरङ्गनाथं श्रीरङ्गेन्द्रम्। पक्षे—श्रीरङ्गनाथं तन्नामानं ब्रह्मतन्त्रगुरुं श्रयामीति योजना॥ श्लेषाश्लिष्टमधिकताद्रूप्यरूपकमलङ्कारः। पथ्यार्या॥ २॥

**प्रायो मदीयकवने बहवो हि दोषाः**
**भक्तिस्तु चापलवती स्तवने गुरूणाम्।**
**दोषाननुपेक्ष्य कवनं प्रथयत्यशङ्कं**
**किं कार्यमस्य करुणैव गतिर्हि तेषाम्॥**

प्राय इति ॥ निगदव्याख्यान (त)मेतत् ॥ ३ ॥

**परकालकृतसपर्याचर्याऽपर्याप्तहर्षविवशमनाः।**
**श्रीरङ्गनाथ एव हि परकालत्वं स्वयं प्रपेदे किम्॥**

परकालेति ॥ परकालेन तिरुमङ्गयाळ्वारिति प्रथितेनाचार्येण कृतया सपर्याचर्यया श्रीरङ्गसप्तप्राकारीनिर्माणादिकैङ्कर्येणेत्यर्थः । अपर्याप्तेन अनवधिकेन हर्षेण विवशमनाः परवशान्तरङ्गस्सन् तत्कैङ्कर्यपर्याप्तफलवितरणस्य निपुणनिरूपणतोऽपि "न हि पश्यामि सदृशं चिन्तयन्ती प्लवङ्गम। मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम्" इत्याद्युक्तरीत्या स्वबुद्ध्यगोचरतया किमप्यविदन्निति यावत्। श्रीरङ्गनाथः स्वयमेव परकालत्वं पूर्वोक्ताचार्यत्वं प्रपेदे किमित्युत्प्रेक्षा। ताद्रूप्यपरिग्रहमन्तरा तत्कैङ्कर्यनिष्क्रियस्यान्यस्यासंभाव्यमानत्वादिति भावः। एवं श्रीरङ्गनाथस्याद्यत्वे तदवतारालम्बनादेव श्रीरङ्गनाथपरकाल इत्यमुष्याचार्यस्य समाख्येति ध्येयम्। अत्र भार्गवपुराणस्था पूर्वाचार्यकथाऽनुसन्धेया। वृत्तं गीतिः ॥ ४ ॥

**के नाम नाद्रियन्ते नामैतद्रङ्गनाथकलिवैरिगुरोः।**
**त्यक्त्वा सर्वं स्थितमपि**
**पारिव्राज्ये जहाति यन्न गुरुममुम् ॥**

अथामुष्य नामवैभवमाह—क इति ॥ एतत् रङ्गनाथकलिवैरिगुरोः नाम के नाम नाद्रियन्ते। सर्वेऽप्याद्रियन्त एवेत्यर्थः। तत्र हेतुमाह—त्यक्त्वेति ॥ सर्वं त्यक्त्वा पारिव्राज्ये तुरीयाश्रमे स्थि-

तमपि, अमुं गुरुं यन्नाम कर्तृ न जहाति। अतोऽस्य नाम्नो निरतिशयवैभवत्वात्सर्वोपजीव्यत्वमिति भावः। अस्याचार्यस्य श्रीरङ्गनाथ इत्येव प्राचीनाश्रमनामधेयमिति ध्येयम्। वृत्तमार्यागीतिः ॥ ५ ॥

**सर्वस्मादप्यधिकं नामैव हि रङ्गनाथ इत्यस्य।**
**गुरुरेतद्यन्न जहावपि सर्वपरिग्रहत्यागे॥**

उक्तमेवार्थं भङ्ग्यन्तरेणाह—सर्वस्मादिति॥ सर्वपरिग्रहत्यागेऽप्यस्य नाम्न आचार्येणापरित्यागादस्यैव लोकोत्तरत्वमिति भावः। पथ्यार्या ॥ ६ ॥

**योऽयोध्यां पुरमध्युवास सुचिरं रामावनीशार्चितः**
**प्राक्सोऽयं मुखभेदतः कलियुगे रीमावनी-**
**शाऽर्चितः।**
**तामेवाध्यवसत्पुरीमथ गतस्सह्यात्मजायास्तटं**
**कश्चित्पुण्यजनं परं व्यपदिशञ्छ्रीरङ्गनाथोऽ-**
**धुना॥ ७॥**

अथास्याचार्यस्य प्राचीनाश्रमवैभवानुवर्णनपूर्वकं पारिव्राज्यस्थितिवैभवं सङ्ग्रहेण वर्णयंस्तन्महिम्नोऽनाधेयातिशयतामाह—य इति॥ अत्र श्रीरङ्गनाथस्याचार्यस्य चाभेदाध्यवसायः। यः श्रीरङ्गनाथः प्राक् त्रेतायां कृते वा रामावनीशेन दाशरथिना रामान्वयपृथिवीपालैरिक्ष्वाकुप्रभृतिभिर्वा अर्चितस्सन् सुचिरं अयोध्यां पुरं अध्युवास "उपान्वध्याङ्वसः" इति कर्मसंज्ञायां द्वितीया। सोऽयं

श्रीरङ्गनाथः अधुना कलियुगे मुखभेदतः प्रकारान्तरेण रूपान्तरेणेति यावत्। रीमावनीशा रीमेति काचिदौत्तरा हि नगरी तदधीशेन महाराजेन अर्चितस्सन्। मुखवर्णमात्रभेदो रामावनीशार्चितरीमावनीशार्चितशब्दयोरन्यवर्णानुपूर्व्यास्तुल्यत्वादिति च हृदयम्। तामेव पुरीं अयोध्यां पुरीमेव, रीमां पुरीमेवेति वा। योद्धुमशक्या अयोध्येति विगृह्य रीमाविशेषणतयाऽप्ययोध्याशब्दो योजयितुं शक्यः। सुचिरं अध्यवसत् उभयत्राप्यनेन पूर्वाश्रमे उषितत्वादिति भावः॥ अथ किञ्चित्कालानन्तरं कंचित् पुण्यजनं विभीषणं नाम निशाचरं परं व्यपदिशन् व्याजीकुर्वन् अद्यत्वे तु पुण्यजनं भाग्यवन्तं जनमित्यर्थः। अत्रत्यजनानां मादृशां तादृशभाग्याभावे ईदृशाचार्यो दुर्लभ एवेति भावः। परं अतिशयेन व्यपदिशन् व्यपदिष्टं कुर्वन्। श्रुताभिजनादिप्रयुक्तव्यपदेशवैभवमस्य जनस्येदृशाचार्यलाभादेवेति भावः। सह्यजायास्तटं कावेर्यास्तीरं गतः प्राप्तः पूर्वं श्रीरङ्गं इदानीं श्रीरङ्गपत्तनं प्राप्त इति भावः। श्लेषावलम्ब्यभेदरूपकम्। शार्दूलविक्रीडितं वृत्तम्॥७॥

**तत्तादृक्क्षुद्रपद्यग्रथनगहनभूनित्यसञ्चारखिन्नः**
**संभिन्नः कण्टकौघैरपि विपुलभवग्रीष्मभानूष्मतप्तः।**
**रङ्गेन्द्रब्रह्मतन्त्रादिमपदपरकालार्यपादारविन्दे**
**छत्रे कृत्वा त्यजामि श्रुतिशिखरयुगारोहणे श्रान्तिशङ्काम्॥ ८॥**

अथेदृशाचार्यचरणारविन्दाश्रयणात्स्वस्य ब्रह्मविद्यासौलभ्यमनुसन्धत्ते—तदिति ॥ तत्तादृक्क्षुद्रपद्यग्रथनं अविद्यमानगुणारोपेण तत्तद्राजादिविषयकपद्यनिर्माणमेव गहनभूः तस्यां नित्यसञ्चारेण खिन्नः अनेन तदेकायत्तता स्फुटीकृता। कण्टकाः क्षुद्रशत्रवः त एव प्रसिद्धकण्टका इति श्लिष्टरूपकम्। तेषां ओघैः निवहैः संभिन्नः वितुन्नः, अपि च विपुलमत्र एव ग्रीष्मभानूष्म तेन तप्तः। एतावता प्रबन्धेनेयन्तं कालमसत्कल्पता स्वस्य द्योतिता। इदानीं रङ्गेन्द्रब्रह्मतन्त्रादिमपदपरकालार्यपादारविन्दे छत्रे कृत्वा श्रुतिशिखरयोरेव गिरिशिखरयोः युगस्य आरोहणे पारीणतायाम्। अन्यत्र ऊर्ध्वदेशसंयोगानुकूलव्यापारे श्रान्तेश्शङ्कां कथमियता कालेनैवं श्रान्तश्श्रुतिशिखरयुगमारोढुं पारयेयमिति सन्देहं त्यजामि सर्वतापोन्मूलनश्रीमदाचार्यश्रीपादारविन्दच्छत्रद्वयच्छायाश्रितस्य मम का पुनश्श्रुतिशिखरयुगारोहणेऽपि श्रान्तिरिति भावः। समस्तवस्तुवृत्ति सावयवरूपकम्। स्रग्धरावृत्तम् ॥ ८ ॥

**श्रुत्यभ्यासात्स आनन्दमय इह परं ब्रह्मत-**
**न्त्राभिधेयः**
**प्राचुर्यार्थाभिधायी न च विकृतिगतः प्र-**
**त्ययो ह्यत्र जातु।**
**तद्धेतुर्मन्त्रवर्णोदितनिजमहिमा नेदृशोऽ-**
**न्यो विपश्चित्**
**भेदी चान्यानपेक्षः कृतिषु रसघनः प्राप्य**
**चानन्द्यमुं स्याम् ॥ ९ ॥**

इत्थमाचार्यस्य श्रीरङ्गनाथनामधारणेनार्चावतारभगवत्स्वरूपतां प्रकाश्येदानीं 'गुरुरेव परं ब्रह्म' इत्याद्युक्तरीत्या साक्षात्परब्रह्मतां च प्रपञ्चयितुमस्मिन् श्लेषभित्तिकाभेदाध्यवसायेनानन्दमयाधिकरणसमन्वयं वितन्वंस्तदाश्रयणात्स्वस्य कृतार्थतामाशास्ते—श्रुतीति ॥

परब्रह्मपक्षे—सः 'तस्माद्वा एतस्मात्' इत्युपक्रम्य जगत्कारणत्वेन प्रस्तुतः। आनन्दमयः परं ब्रह्म। कुतः? श्रुत्यभ्यासात् श्रुत्या अभ्यासात्। 'स एको मानुष आनन्दः' इत्यारभ्य 'यतो वाचः' इत्येवमन्तेन श्रुतिवाक्येन निरतिशयदशाशिरस्कतयाऽभ्यस्यमानादानन्दादित्यर्थः। अनेन—'आनन्दमयोऽभ्यासात्' इति सूत्राक्षरार्थो वर्णितः। इह लोके तन्त्राभिधेयः तन्त्रैः वेदान्तशास्त्रैः वेदान्तसिद्धान्तैर्वा 'तन्त्रं कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे। प्रधाने तन्तुवाये च शास्त्रे चापि परिच्छदे॥ श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजने' इति मेदिनी। अभिधेयः जगत्कारणत्वेन प्रतिपाद्यः। एतेन सर्वकारणवाक्यानामैककण्ठ्यं व्यञ्जितम्। तन्त्राभिधेयः सः आनन्दमयः श्रुत्यभ्यासात् परं ब्रह्मेति योजना। नन्वानन्दमय इति विकारार्थकमयट्प्रत्ययश्रवणान्नायमविकृतः परमात्मा किंतु जीवस्स्यात् तस्य चानन्दविकारत्वं संभवत्येव स्वत आनन्दरूपस्य सततसंसारित्वावस्था तद्विकार एवेति चेत्तत्राह—प्राचुर्येत्यादिना। अत्र आनन्दमयशब्दे प्रत्ययः मयट्प्रत्ययः प्राचुर्यार्थाभिधायी 'तत्प्रकृतवचने मयट्' इति सूत्रोक्तप्राचुर्यार्थाभिधायी भवतीति शेषः। 'यतो वाचो निवर्तन्ते' इत्या-

दावानन्दप्राचुर्यस्य श्रूयमाणत्वात्। जातु कदाचिदपि। विकृति गतः 'मयड्वैतयोर्भाषायाम्' इत्युपक्रम्य 'नित्यं वृद्धशरादिभ्यः' इति सूत्रोपात्तविकाररूपार्थं प्राप्तः न च, चोऽवधारणे। नैव भवतीत्यर्थः। ततश्च प्रत्यगात्मनो 'न जायते म्रियते' इति विकारप्रतिषेधे सिद्धे 'अन्नमयः' इत्युपक्रमानुरोधेन विकाररूपार्थोऽत्र नादर्तव्य इति भावः। हीत्युक्तार्थस्य शास्त्रप्रसिद्धिं द्योतयति। एतेन—'विकारशब्दान्नेति चेन्न प्राचुर्यात्' इति सूत्रार्थ उक्तः। किंच तद्धेतुः तस्यानन्दस्य हेतुः कारणं 'एष ह्येवानन्दयाति' इत्यानन्दमयस्य जीवान्प्रत्यानन्दयितृत्वव्यपदेशात् अनेन 'तद्धेतुव्यपदेशाच्च' इति सूत्रार्थस्सङ्गृहीतः। हेत्वन्तराणि चाह—मन्त्रेत्यादिना। मन्त्रवर्णैः 'सत्यं ज्ञानं' इत्यादिमन्त्रवर्णैः उदितः प्रतिपादितः निजस्स्वकीयो महिमा निरुपाधिकसत्तायोगित्वनित्यासंकुचितज्ञानैकाकारत्वत्रिविधपरिच्छेदशून्यत्वलक्षणो यस्य स तथोक्तः। अनेन—'मान्त्रवर्णिकमेव च गीयते' इति सूत्रार्थः प्रकाशितः। ननु प्रत्यगात्मनः परिशुद्धं स्वरूपमेव सत्यं ज्ञानमित्यादिमन्त्रवर्णोदितं स्यात्तत्राह—नेदृश इत्यादिना। ईदृशः परमात्मसदृशः अन्यः इतरः जीवः मुक्तावस्थोऽपीति भावः। विपश्चित् विविधं पश्यच्चित्त्वं हि विपश्चित्त्वं तथाच 'सोऽकामयत' इत्यादिवाक्योदितनिरुपाधिकबहुभवनरूपसर्वज्ञत्वविशिष्टः न न भवतीत्यर्थः। यद्यपि मुक्तस्य विपश्चित्त्वं संभवति, तथाऽपि तस्यैव संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकविपश्चित्त्वं नोपपद्यत

इति श्रीभाष्याभिप्रायस्स्मारितः 'नेतरोऽनुपपत्तेः' इति सूत्रार्थोऽप्युक्तः । किंच—भेदी विज्ञानमयाज्जीवाद्भेदवान् 'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः' इति भेदेन व्यपदेशादिति भावः । अनेन 'भेदव्यपदेशाच्च' इति सूत्रार्थः प्रकटितः । किञ्च—कृतिषु जगत्सृष्टिषु बहुवचनं सृष्टिभेदाभिप्रायं, अन्यानपेक्षः अन्यस्मिन् प्रधाने अनपेक्षः अपेक्षारहितः 'सोऽकामयत । बहु स्याम्' इति कामादेव जगत्सर्गश्रवणाच्चतुर्मुखादेरिव नानुमानिकप्रधानादिशब्दाभिधेया चिद्वस्तुसंसर्गापेक्षाऽस्यास्तीति भावः । अनेन 'कामाच्च नानुमानापेक्षा' इति सूत्रार्थो निगदितः । उक्तमर्थं निगमयति—रसघन इति । रसघनः तस्मादानन्दमयः परमात्मेति भावः । विज्ञानघन इतिवद्यं व्यपदेशः । अमुं उक्तप्रकारविशिष्टमानन्दमयशब्दवाच्यं परमात्मानं प्राप्य च चशब्दोऽवधारणार्थः लब्ध्वैवेत्यर्थः । यद्वा—चकारोऽमुमित्यत्र संबध्यते, अमुमेवेत्यर्थः । आनन्दी प्रशस्तानन्दवान् स्यां भूयासं 'रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति श्रुतेः । अनेन 'अस्मिन्नस्य च तद्योगं शास्ति' इति सूत्रार्थोऽभिहित इत्यानन्दमयाधिकरणार्थसंक्षेपः ॥ आचार्यपक्षे तु इह कलौ आश्चर्यमेतदिति भावः । सः आशैशवान्निरतिशयप्रतिभाप्रभाववत्त्वेन प्रसिद्धः । ब्रह्मतन्त्राभिधेय इति समस्तं पदम्, ब्रह्मतन्त्र इत्यभिधातुं योग्यः श्रीरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिक इति यावत् । 'नामोक्तावर्धोक्तिः पूर्णोक्तेः कार्यकरी' इति न्यायात् । श्रुत्यभ्यासात् श्रुतीनां पूर्वोत्तरभागद्वयात्मकानां वेदानां, अत्र श्रुतिश-

ब्देन तदर्थनिर्णायककर्मब्रह्ममीमांसयोरपि संग्रहः। अभ्यासात् पौन·पुन्येनाम्नानात्, अनेन 'परीक्ष्य लोकान्' इत्यत्र श्रोत्रियपदार्थः 'आचिनोति हि शास्त्रार्थान्' इत्यादिस्मृत्यर्थश्च संगृहीतः। परं असंकोचं यथा स्यात्तथा आनन्दमयः प्रचुरानन्द इत्यर्थः। अत्र 'सर्वं वाक्यं सावधारणम्' इति न्यायेन श्रुत्यभ्यासादेवानन्दमय इत्यर्थो लभ्यते, तेन क्षोदिष्ठवैषयिकानन्दानुभवव्यवच्छेदः फलति, अतः 'निर्विष्टं यतिसार्वभौमवचसामावृत्तिभिर्यौवनम्' इत्युक्तः प्रकारोऽस्मिन्नेव चरितार्थ इति द्योतितम्। ननु—'यस्य नास्ति निजा प्रज्ञा केवलं तु बहुश्रुतः। न स जानाति शास्त्रार्थं दर्वी सूपरसानिव' इत्याद्युक्तरीत्या कस्यचित्सकलशास्त्रालोडनक्षुभितमतेरपि पण्डितमानिनश्शास्त्रतत्त्वनिष्कर्षो नोदियादेव, अस्य तु न कदाचिदपि तथा। किंतु—तत्त्वहितपुरुषार्थनिष्कर्षकमेव ज्ञानवैभवं देदीप्यत इत्याह—प्राचुर्येत्यादिना। अत्र आचार्ये विद्यमान इत्यर्थः। प्रत्ययः ज्ञानं 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। प्राचुर्यार्थाभिधायी प्राचुर्येण अतिशयेन अर्थानां तत्त्वहितपुरुषार्थलक्षणानां अभिधायी प्रकाशक इत्यर्थः। अनेन शरणागतोद्दिधीर्षौपयिकं परमकारुणिकत्वं व्यञ्जितम्। जातु कदाचिदपि न च विकृतिगतः विकृतिं संशयविपर्ययादिलक्षणं विकारं न च गतः चोऽवधारणे। कदाचिदप्यदसीयज्ञानवैभवस्य विकारस्पर्शो नैवेति भावः। हीत्युक्तार्थस्य सार्वलौकिकतां द्योतयति। आश्रयणीयश्चेदृशज्ञानवानेवाचार्यश्श्रेयस्कामैः 'भिन्नना-

वाश्रितस्स्तब्धो यथा पारं न गच्छति। ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयात्' इति व्यतिरेकानिन्दनात्। अथ 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादि 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यन्तश्रुत्युक्तरीत्या आचार्यस्य प्रवक्तृतामूलकोपसन्नजनज्ञानोदयनिदानतामाह—तद्धेतुरिति। तद्धेतुः तच्छब्देनपूर्वप्रस्तुतं ज्ञानं परामृश्यते, तस्य ज्ञानस्य हेतुः कारणं इति मन्त्रवर्णोदितः श्रुत्यक्षरोक्तः निजो महिमा यस्य स तथोक्तः 'त्रय्यन्तप्रतिनन्दनीयविविधोदन्ता' इत्युक्तरीत्याऽखिलशिष्यजनज्ञानोदयनिदानतया श्रुतिप्रथित इत्यर्थः। अत्र 'आचार्यवान् पुरुषो वेद, नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इत्यादिश्रुतयोऽप्यनुसंधेयाः। यद्वा—तद्धेतुः उक्त एवार्थः। अत एव मन्त्रवर्णैः मूलमन्त्राक्षरैः उदितः उक्तः निजानां नित्यानां चिदचिदीश्वराणाम् 'स्वके नित्ये निजं त्रिषु' इत्यमरः। महिमा शरीरशरीरिभावादिवैभवं येन स तथोक्तः। यद्वा—मन्त्रवर्णैः 'बृहति बृह्मयति' इत्वादिश्रुतिवर्णैः उदितः, निजस्य नित्यस्य परब्रह्मणः 'नित्यो नित्यानाम्' इति श्रुतेः। महिमा स्वरूपेण बृहत्त्वं 'स चानन्त्याय कल्पते' इत्यादिश्रुतिप्रसिद्धसकलसंकोचनिवृत्तिपूर्वकनिरवधिकज्ञानविकासलक्षणानन्त्यावहत्वरूपबृह्मणत्वादिश्च येन स तथोक्तः। यद्वा—मन्त्रवर्णैः रहस्यत्रयवर्णैरित्यर्थः। उदितः उत्पन्नः निजमहिमा 'शाखानामुपरिस्थितेन मनुना' इति श्लोकोक्तलब्धात्मकत्वादिरूपस्ववैभवं यस्य स तथोक्तः। नन्वेव-

मपीदृशोऽन्योऽप्याचार्य आश्रीयतामित्यत आह—नेति । ईदृशः उक्तप्रकारकल्याणगुणविशिष्टः अन्यः भेदी भेदोऽस्यास्तीति भेदी 'ईदृशः परमात्माऽयं प्रत्यगात्मा तथेदृशः' इत्याद्युक्तरीत्या आत्मपरमात्मशेषशेषिभावादिवैलक्षण्यानुसन्धानवानिति भावः । जीवब्रह्मभेदसमर्थनप्रवीण इति वा । भेदकातिशयोक्तिन्यायेन सकललोकविलक्षणसौशील्यवात्सल्यादिगुणवानिति वा, विपश्चित् सर्वज्ञः स न दृश्यत इत्यर्थः । जम्बूद्वीपेऽस्मिन्नयमेक एवेदृश इति भावः । यद्वा—नेदृशोऽन्यः अविपश्चिद्भेदीति छेदः तदैवमर्थः—ईदृशः अन्यो नास्ति अतोऽयमेवाश्रयणीय इति भावः । वैदुष्यानुरूपं दुर्मतकथकनिरासपटीयस्त्वमाह—अविपश्चिद्भेदीति । अविपश्चितः अयथावस्थिततत्त्ववेदिनः विप्रलम्भकांस्तथागतादीन् भिनत्ति सच्छास्त्रप्रमाणबाणगणैरिति तथोक्त इति । ताच्छील्ये णिनिः । किंच—न केवलं वादजल्पधौरेयतैवास्य । किंतु—विशिष्टाद्वैतसिद्धान्तनिर्धारणप्रबन्धरचनाधौरंधर्यमप्यस्तीत्याह—अन्येत्यादिना ॥ कृतिषु स्वप्रणीतपुरुषसूक्तभाष्यरहस्यत्रयार्थसंग्रहादिप्रबन्धेषु, बहुवचनात्कृतीनामानन्त्यं सूचितम् । अन्यानपेक्षः सहायान्तरनिरपेक्षः सर्वतन्त्रस्वतन्त्रत्वात् । असमर्थो हि कृतिरचनायामपेक्षेत कदाचित्सहायान्तरम्, किमु सर्वशक्तिर्भगवानपि चतुर्मुखादिवद्विचित्रजगद्रचनायां प्रधानाद्यपेक्षते सहायान्तरम् । ननु—'जन्मान्तरसहस्रेषु या बुद्धिर्भाविता पुरा । तामेव भजते जन्तुरुपदेशो निरर्थकः ॥ न गाथा गाथिनं शास्ति बहु चेदपि गायतु । प्रकृतिं यान्ति भूतानि

भूलिङ्गशकुनिर्यथा' इत्याद्युक्तरीत्या बहुश्रुतत्वेऽपि रुचिभेदात्कश्चिद्ब्रह्मानन्दानुभववद्वयानपि स्यात् अयं तु न कदाचिदपि तथेत्याह—रसघन इति। रसघनः 'एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम्' इत्युक्तरीत्या ब्रह्मानन्दानुभवपरिपूर्ण इत्यर्थः। अनेन—'परीक्ष्य लोकान्' इत्यत्र ब्रह्मनिष्ठमिति पदस्यार्थस्संगृहीतः। अथवा कृतिष्विति मध्यमणिन्यायेन रसघन इत्यत्राप्यन्वेति। तदा चायमर्थः—कृतिषु विद्वत्सु 'धीमान् सूरिः कृती कृष्टिः' इत्यमरः। रसघनः प्रेमपरिपूर्णः, एतेन मात्सर्यादिदोषगन्धाभावस्सूचितः। 'सर्वदाऽभिगतस्सद्भिस्समुद्र इव सिन्धुभिः' इत्यादिकमिह स्मर्तव्यम्। ईदृशाचार्यप्रपदनेन स्वस्य कृतार्थतामाशास्ते—प्राप्य चेत्यादिना। चकारोऽवधारणार्थः। स च प्राप्येत्यादिपदत्रयेऽप्यन्वेति। तेन अमुमेव प्राप्तचैव आनन्द्येवेति लभ्यते। अमुं च उक्तप्रकारकल्याणगुणविशिष्टमाचार्यमेव। अनेन शरण्यान्तरनैरपेक्ष्यं प्रागुपक्षिप्तं विशदीकृतम्। प्राप्य च शरण्यत्वेन प्रपद्यैवेत्यर्थः। अनेन—'प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदम्' इत्युक्तरीत्या प्रपदनमन्तरा वक्ष्यमाणपरमानन्दप्राप्तिर्न स्यादिति व्यञ्जितम्। आनन्दी च अनन्दोऽस्यास्तीत्यानन्दी प्रशंसायां मत्वर्थीय इनिः। प्रशस्तानन्द एव स्यां भूयासम्। प्रशस्तानन्दवत्त्वं च निश्शेषाविद्यानिवृत्तिपूर्वकपरब्रह्मानन्दवत्त्वमेव 'आचार्यवान् पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यसे' इति 'पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च

पुण्यकृत्। आचार्यवत्तया मुक्तौ तस्मदाचार्यवान् भवेत्' इत्यादिकमिहानुसन्धेयम् । वक्तव्यान्तरं चात्र वेदपादस्तवव्याख्याने प्रपञ्चितमस्माभिः। आनन्द्येवेत्यवधारणेन 'सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्। न संशयोऽस्ति तद्भक्तपरिचर्यारतात्मनाम्' इत्युक्तरीत्या आचार्यनिष्ठया निरतिशयब्रह्मानन्दावाप्तेरव्यभिचरितत्वं व्यञ्जितम्। अत्र ब्रह्ममीमांसाप्रसिद्धक्रमेणानन्दमयाधिकरणसूत्रार्थनिवेशेनाचार्यस्य वर्णनाद्रत्नावल्यलङ्कारः 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावळीं विदुः' इति लक्षणात्। यद्यप्यत्राचार्यवर्णनप्रस्तावे ब्रह्मणः प्रकृतत्वं नास्ति, येनानन्दमयाधिकरणक्रमविन्यासेन लक्षणसङ्गतिस्स्यात्। तथाऽपि वर्णनीयस्याचार्यस्य परब्रह्मरूपतावर्णनाभिसन्धिना तस्यापि प्रकृतत्वमेव। यथा—'चतुरास्यः पतिर्लक्ष्म्यास्सर्वज्ञस्त्वं महीपते' इत्यादौ ब्रह्मादीनामप्रकृतत्वेऽपि वर्णनीयराजत्रिमूर्त्यात्मकतावर्णनाभिसन्धिना प्रकृतत्वं तथेति ध्येयम्। विस्तरस्तु रसिकरञ्जन्यादौ द्रष्टव्यः। स चोक्तश्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्त्युत्तम्भितः। प्रस्तुताप्रस्तुताचार्यपरब्रह्मगोचरार्थवर्णनात्प्रकृताप्रकृतश्लेषः, श्रुत्यभ्यासादानन्दमय इत्यत्र हेतुहेतुमतोस्सहवर्णनाद्धेत्वलङ्कारः 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति लक्षणात्। नेदृशोऽन्यो विपश्चिदित्यत्र वर्ण्यस्याचार्यस्योपमाया अनिष्पत्तिवचनात्प्रतीपभेदः 'वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत्' इति लक्षणात्। भेदीत्यचार्यस्य जगद्विलक्षणत्ववर्णनपरवर्णकान्तरे भेदकातिशयोक्तिः 'भेदकातिशयोक्ति-

स्यात्तस्यैवान्यत्ववर्णनम्' इति लक्षणात्। रत्नावळीश्लेषयोर्हेत्वाद्यलङ्काराणां चैकवाचकानुप्रवेशलक्षणस्संकरः। हेत्वादीनामन्योन्यं संसृष्टिः स्वानन्दलाभस्य पूर्वविशिष्टवाक्यार्थेन समर्थनात्काव्यलिङ्गमिति दिक्॥ स्रग्धरावृत्तम्॥ ९॥

अथ स्वप्रणीतस्तवस्य महत्परिग्राह्यतामर्थयते—

**लोकगुरुनायकाढ्यः**
**सरळान्तरभाव्यसरसतमसुगुणः।**
**स्फुरतु नवरत्नहारः**
**सुदृशां कण्ठेषु चिरतरं श्रीमान्॥ १०॥**

**नवरत्नहारमेनं समर्पितं नूत्नदुर्गकृष्णेन।**
**अनुगृह्णात्वाचार्यो रङ्गेन्द्रब्रह्मतन्त्रकलिमथनः॥**

लोकेति। लोकगुरुनायकाढ्यः जगदाचार्यरूपनेतृसुन्दरः लोकोत्तरमध्यमणिसुभगश्च। सरळान्तरैः रसैकतानहृदयैः भाव्याः अनुसन्धेयाः सरसतमाः सुगुणाः श्लेषप्रसादादयो यस्य स तथोक्तः। पक्षे—सरळं सूचीवेधेन निरर्गळं यत् अन्तरं विवरं तस्मिन् भाव्याः प्रवेशार्हाः सरसतमाः अग्रन्थिलास्सुगुणाः यस्य स तथोक्तः। श्रीमान् आचार्यकैङ्कर्यलक्ष्मीविशिष्टः प्रशस्तप्रकाशवांश्च। नवरत्नहारः नवविधरत्नहारत्वेनाध्यवसितनवसंख्याकपद्यहृद्यस्तव इत्यर्थः। नवविधमणिहारश्च, सुदृशां आचार्यमहिमयाथात्म्यवेदिनाम्, पक्षे—शोभनाक्षीणां कण्ठेषु वाक्षु, पक्षे—कन्धरासु चिरतरं आकल्पं स्फुरतु प्रकाशताम्। प्रकृताप्रकृतश्लेषः॥ १०॥

स्वकृतेराचार्यकृपाविषयतामभ्यर्थयते । न वेति निगदव्याख्या(न)तमेतत् ॥ ११ ॥

## इति श्रीमच्छ्रीशैलकुलकलशाकूपारराकाचन्द्रमसः श्रीमत्तातार्यनन्दनस्य नवदुर्गपुराभिजनस्य श्रीकृष्णकवेः कृतिषु श्रीमदाचार्यनवरत्नहारस्तवस्संपूर्णः ॥

नैकविधतन्त्रतत्त्वप्रकटनजामित्वमिह गुरोर्हर्तुम् । परिहासकथेवैषा रचिता स्वदतां हृदेऽस्य विवृतिरियम् ॥ दोषशतगर्भितमपि व्याख्यानमिदं मया कृतं बाल्यात् । अनुगृह्णातु श्रीमानाचार्यशिखामणिः कृपया ॥ श्रीब्रह्मतन्त्रकलिजिद्गुरुवरचरणाब्जपांसुपरमाणोः । नवदुर्गकृष्णसुकवेष्षड्विंशी कृतिरियं चिरात्प्रथताम् ॥

इति श्रीमद्ब्रह्मतन्त्रपरकालगुरुपरंपराकरुणाकटाक्षसमासादितज्ञानवैभवस्य श्रीमच्छ्रीशैलकुलतिलकश्रीमत्तातार्यकृष्णाम्बानन्दनस्य प्रत्यग्रदुर्गपुराभिजनस्य कविसार्वभौमकविगण्डभेरुण्डादिबिरुदाभिरामस्य श्रीकृष्णकवेः कृतिषु नवरत्नहारस्तवव्याख्या प्रसन्नाभरणाभिख्या षड्विंशतितमा कृतिस्समाप्तिमगमत्.

श्रीमद्ब्रह्मतन्त्रपरकालगुरुपरंपरायै नमो नमः.



श्रीरस्तु.

---

श्री ॥ श्रीरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकचरणारविन्दयोस्स्व-प्रणीतामिमां सव्याख्यां श्रीनवरत्नहारस्तुतिं समर्प्य तत्प्रणीतमति-गभीरमनोहरं श्रीपुरुषसूक्तभाष्यमभ्यर्थयमानेभ्यश्श्रीश्रीकृष्णब्रह्मतन्त्र-परकालमहादेशिकेभ्यः तत्स्तुतिनिशमनजनितामन्दानन्दमरन्दतुन्दिल-हृदयारविन्दैः षट्तन्त्रीपारदृश्वविद्वन्मणिमकुटायमानैरनितरसाधारण-सर्वतन्त्रस्वातन्त्र्यैः तैरेवाचार्यवर्यैस्स्वश्रीहस्तेन लिखित्वा एतत्पूर्वा-श्रमेऽनुगृहीतस्य श्रीमुखस्येयमानुपूर्वी यथाहि—श्री श्रीरङ्गनाथब्र-ह्मतन्त्रपरकालगुरुवर्यानुगृहीतार्याश्लोकाः—

श्रीमत्सैन्धववदनो लक्ष्मीनारायणश्च विजयेते ।
जहदहमन्यत्सर्वं यत्पदपङ्केरुहाश्रयोऽभूवम् ॥ १ ॥

नारायणस्मृतिः स्ताद्राङ्गेशब्रह्मतन्त्रपरकाली ।
नूतनदुर्गनिवासिश्रीकृष्णार्याभिधानसत्कविषु ॥ २ ॥

यौष्माकीणं पत्रं ताताचार्योऽनयन्ममाभ्यर्णम् ।
तत्प्रेक्षणेन विदितोदन्तोऽभूवं प्रहृष्टचित्तश्च ॥ ३ ॥

या पौंसूक्तीव्याख्या मया कृतोदीच्यबालबोधाय ।
भवतां निकटं प्रति सा न चार्हति प्रेषणं कवीशानाम् ॥ ४ ॥

धुरि कविताया भवतां शोभामाप्नोति नान्यदीयकृतिः ।
प्रत्युत भजेत परिहासास्पदभावं न चात्र विशयोऽस्ति ॥ ५ ॥

प्रेष्यत एव तथाऽपि ज्ञात्वा भवतो गुणैकदृष्टिमतः ।
रीमानगरे साऽऽस्ते तत आनैषं न किंचिदत्राहम् ॥ ६ ॥

सा तन्नगरादानाय्यैतद्देशाक्षरैर्विलेख्याशु ।
प्रेष्यत एष प्रेषणविलम्बहेतुर्न चान्यथा भाव्यम् ॥ ७ ॥

किं च नवरत्नहारस्तवस्वरूपो भवत्सुमनउत्थः ।
मधुझर आगादिह तं पायंपायं बुधाळयो हृष्टाः ॥ ८ ॥

मम तूपभोगयोग्यो यद्यपि नासीत्तथाऽपि तल्लिङ्गात् ।
भवतां कविताकौशलमनुमायानन्दभरितहृदभूवम् ॥ ९ ॥

टी ॥ मम त्वित्यादि ॥ अहं संन्यासी स्तवस्तु मधुझरः कथं भोग्यः स्यात् । आत्मस्तुतिश्रवणादौ रुचिर्नास्तीति भावः ॥

न हि वर्णयितुं प्रभवेत्फणीऽपि भवत्कवित्वचातुर्यम् ।
अन्ये न मादृशजनाः प्रभवन्तीत्यत्र किं नु वक्तव्यम् ॥ १० ॥

समये समीचि सविधे श्रीमद्वेङ्कोबनायकमणिनाम् ।
सफलाखिलकालानां मामकनारायणस्मृतिर्वाच्या ॥ ११ ॥

राज्ञ्या अपि कथनीयं मदीयनारायणानुसंधानम् ।
प्राज्ञेषु को विशेषः पत्रद्वाराऽवबोधनीयोऽस्ति ॥ १२ ॥

शक्त्यादिहेतुविरहेऽप्येषु निबद्धेषु बुद्धिचापल्यात् ।
दोषा अपि प्रतीताः पद्याभासेषु सदसि नोद्भाव्याः ॥ १२ ॥

---

श्रीपुरुषसूक्तभाष्यप्रेषणावसरे आचार्यैरनुगृहीताविमौ श्लोकौ—

तत्तद्ग्रन्थोक्तार्थान् लिखिता संगृह्य पुरुषसूक्तस्य ।
विवृतिर्नूतनदुर्गश्रीकृष्णार्यस्य सविधमुपयातु ॥ १ ॥
आधुनिकाल्पज्ञकृतौ दोषास्तित्त्वे न संशयोऽथापि ।
दोषज्ञनाम नैजं विदुषाऽन्वर्थं न चात्र करणीयम् ॥ २ ॥

# अशुद्धसंशोधनम्.

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ३ | स्वान्दिन्या | स्वादिन्या |
| ८८ | २० | आमोदो | आमोदे |
| १२० | १५ | यवतीनां | युवतीनां |
| १५९ | २१ | योजन | प्रयोजन |
| २६० | २० | निर्दशे | निर्देशे |
| ३५० | १७ | पश्च | पश्चा |
| ३५१ | ७ | ज्यानिषे । | ज्यौतिषे |
| ३६८ | १६ | तथा | तनया |
| ३९९ | १८ | निहिते | । निहिते |
| ४०८ | ११ | यूयं | । यूयं |
| ४१६ | १४ | संस्काराः, । | संस्काराः । |
| ५२६ | १३ | व्ववधानं | व्यवधानं |
| ५४६ | १२ | चोपातकम् | चोपपातकम् |
| ५५६ | १८ | प्रयिक | प्रायिक |
| ६०० | २२ | ॥ ४७ ॥ | ॥ |
| ६१७ | २० | च्छन्ददीनां | च्छन्दादिनां |
| ६१८ | २२ | त्कि तीन्न | त्किमु तान्नि |
| ६२१ | १९ | व्याख्याया | व्याख्यया |
| ,, | १७ | व्याख्य | व्याख्या |
| ६२४ | १० | पीतीबिरु | पतीविरु |
| ,, | ११ | विरुद | विरुदा |
| ६३२ | २१ | नापेपद्यत | नोपपद्यत |

